श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दण्डपात्राभ्यामिति । जलपवित्रादिपात्रान्तराणामपि प्रदर्शनार्थमुक्तं वस्त्रपूतं जलं पिबेदिति ह्यनन्तरमुच्यते ॥ १५ ॥

मनःपूतत्वं रागद्वेषविरहः ॥ १६-२० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्रादौ कृत्यमाह । इष्ट्वेति । यथोपदेशं यथाविधि आद्यष्टकपूर्वकं प्राजापत्येष्ट्या मामिष्ट्वा आराध्य सर्वस्वमृत्विजे दत्त्वा अग्नीन् स्वप्राणे आत्मन्यावेश्य निरपेक्षः मदतिरिक्तेष्वपेक्षारहितः परिव्रजेत् ॥ १३ ॥

कुतोऽयं तुर्याश्रम इत्यभिप्रायेणाह । विप्रस्येति । दारादीत्यादिशब्देनात्मजबन्ध्वादिसङ्ग्रहः दारादिमुखेन विघ्नं कुर्वन्तीत्यर्थः । कस्तर्हि तेषामन्तरायाचरणेऽभिप्राय इत्यतस्तमाह । अयमिति अयं परिगृहीततुर्याश्रमः अस्मानाक्रम्योल्लङ्घ्य परं परमपदं समियाद्गमिष्यतीति ॥ १४ ॥

अथ परिव्राजो धर्मानाह । बिभृयादित्यादिना । मुनिश्चेदिति सम्बन्धः यतिश्चेदित्यर्थः । अनेन कुटीचकबहूदकहंसपरमहंसानां चतुर्णामपि यतीनां साधारणा वक्ष्यमाणा धर्मा इत्यभिप्रेतं कूपपतनमर्हतीति कौपीनं पापं तत्साधनत्वात्पुरुषलिङ्गमपि कौपीनं तदाच्छादनमपि कौपीनमन्तरीयमुत्तरीयं च वासो बिभृयादित्यर्थः । परं केवलमेतावदेव न त्वन्यद्वासः शिरःप्रावरणकञ्चुकादिकमित्यर्थः । असौ यतिर्यत्किञ्चिदाश्रमपरिग्रहणार्थं त्यक्तं दण्डपात्राभ्यामन्यत्तत्र किञ्चिदपि बिभृयात् दण्डपात्राभ्यामित्येतदावश्यकजलपवित्रादेरप्युपलक्षणम् अत्र दण्डशब्देन त्रिदण्डं विवक्षितं तस्यैव विहितत्वात् तथा हि स्मर्यते दक्षबृहस्पतिभ्याम्—

मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ।
गृहस्थो यज्ञवेदाद्यैर्नखरोमैर्वनाश्रमी ॥
त्रिदण्डेन यतिश्चेति लक्षणानि पृथक् पृथगिति ।

याज्ञवल्क्यः

दण्डानि त्रीणि सम्भृत्य धारयेद्विधिपूर्वकम् ।
अत्रिः लिङ्गं च वैष्णवं तेषां त्रिदण्डं सपवित्रकम् ॥
त्रिदण्डेन यतिश्चैव लक्षणं वै श्रुतं श्रुतौ ।

दत्तात्रेयः "त्रिदण्डरूपधृग्विप्रः साक्षान्नारायणः स्मृतः । त्रिदण्डी पूजितो येन विष्णुस्तेन प्रपूजितः । अष्टाक्षरेण मन्त्रेण नित्यं नारायणात्मना । नमस्यो भक्तिभावेन विष्णुरूपी त्रिदण्डधृत् । त्रिदण्डं लिङ्गमाश्रित्य जीवन्ति बहवो द्विजाः यो हि ब्रह्म न जानाति त्रिदण्डाद्यैः न स स्मृतः । अत्रिदत्तात्रेयौ काषायशुक्लवस्त्रदण्डैस्त्रयी धर्मो विशोषितः । त्रिदण्डधारिणां पूर्वं विष्णुना रचिता त्रयी।"—

हारीतः विष्णुरूपं त्रिदण्डाख्यं सर्वदा धारयेद्यतिः ।
कुर्यात्त्रिदण्डमहिमा कालत्रयं न कारयेत् ॥
कशमात्रान् समग्रन्थींस्त्रिदण्डान् वैणवान् यतिः ।

धारयेदिति शेषः । इत्थं परः शताः स्मृतयो विस्तरभयान्न लिख्यन्ते अत्रापि सूचयिष्यति वेणुभिर्न भवेद्यतिरिति बहुवचनेन ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवतीति इत्यनेन च ननु नात ऊर्ध्वं शुक्लमम्बरं बिभृयादेकदण्डी त्रिदण्डी वेति बौधायनादिवचनात्त्रिदण्डैकदण्डधारणयोर्विकल्प इति चेन्न गुरुलघुनोस्तुल्यविकल्पासम्भवात् बौधायनादिसामान्यवचनाधिकोदितैकदण्डधारणस्य त्रिदण्डालाभरूपापद्विषयतां हारीतमेधातिथी व्यवस्थापयतः—

त्रिदण्डं वैष्णवं सौम्यं सत्वचं समपर्वकम् ।
वेष्टितं कृष्णगोवालरज्ज्वा तु चतुरङ्गुलम् ॥
नष्टे जलपवित्रे वा त्रिदण्डे वा प्रमादतः ।
एकं तु वैणवं दण्डं पालशं बैल्वमेव वा ॥
गृहीत्वा विचरेत्तावद्यावन्न स्यात्त्रिदण्डकम् ।

मेधातिथिस्तु ॥

यावन्न स्युस्त्रयो दण्डास्तावदेकेन पर्यटेदिति
एवं च यावन्त्येकदण्डधारणविधायकवचनानि
तान्यापद्विषयकदण्डधारणपराणीति व्यवस्थाप्यम्
शाट्यायनीयोपनिषदि अथ ह दद्बुद्धिपरमं सना—
तनमित्युपक्रम्य पारमहंस्यमाश्रमं सम्प्रविश्य
यथोपपत्ति पञ्चमात्रा दधानः अत्र श्लोकौ भवतः

"त्रिदण्डमुपवीतं च वासः कौपीनवेष्टनम् । शिक्यं कवचमित्येतद्बिभृयाद्यावदायुषम् । त्रिदण्डं वैष्णवं लिङ्गं विप्राणां मुक्तिसाधनं निर्वाणं सर्वधर्माणामिति वेदानुशासन"मित्याम्नायते तदेवं त्रिदण्डधारणस्य प्रत्यक्षश्रुतिसिद्धत्वादानन्तमबहुस्मृत्युपबृंहितत्वात्त्रिदण्डधारणमेव चतुर्णां परिव्राजकानामविशेषेण मुख्यमेकदण्डधारणं त्वमुख्यमापद्विषयं चेति सिद्धम् एवमुपवीतधारणमपि तथैव श्रुत्या सिद्धं स्मृतं च यथाह वसिष्ठः यज्ञोपवीत्युदककमण्डलुहस्त इति आङ्गिराश्च—

यतीनां त्रीणि शुक्लानि भवन्त्येतानि नित्यशः ।
यज्ञोपवीतं दण्डाश्च तथा जन्तुनिवारणम् ॥

इति शौनकोऽपि युवा सुवासा इति काषायं वासः सखा मे गोपायेति त्रिदण्डं गृहाणेति तच्छं योरावृणीमहे इति यज्ञोपवीतमिति—

मोक्षाश्रमे स्मृतं वस्त्रं रक्तं यद्धातुरञ्जितम् ।
कार्यं यज्ञोपवीतं तु सितं नवगुणान्वितमिति ॥

सामान्यतस्तु यज्ञोपवीतत्यागं निषेधन्ति यदाह मेधातिथिः—

गृहीतं यतिस्त्रिदण्डादि अविनष्टं न तु त्यजेत् ।
समुद्रगच्छ स्थाने विनष्टं प्रक्षिपेज्जले ॥
प्रक्षिप्य चान्यदादद्याद्गणाद्वा प्रणवेन वा ।
तच्छंयोरित्युपवीतमलिङ्गाद्वै कमण्डलुमिति ॥

आङ्गिराश्च—

यतेर्लिङ्गं प्रवक्ष्यामि येनासौ लक्ष्यते यतिः ॥
ब्रह्मसूत्रं त्रिदण्डं च वस्त्रं जन्तुनिवारणमिति ॥
उपवीतपरित्यागे प्रत्यवायं स्मरन्ति च यथाहात्रिः ।
ब्रह्मसूत्रं त्रिदैवत्यं ब्रह्मविष्णुशिवात्मकम् ॥
परित्यजन्ति ये विप्रा मोहात्सर्वोपजीविनः ।
ब्रह्मोपवीतरूपाख्यं प्रच्युतास्ते न संशयः ॥ इति

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परिव्राजमधिकृत्यास्य वचनस्य प्रवृत्तत्वात्सामान्यवचनोऽपि विप्रशब्दः परिव्राड्विप्रपरः सामान्यतो निर्देशस्तु सर्वेषां प्रत्यवायसामान्यात् तथाह्युशनास्तत्परित्यागे सर्वेषामाश्रमिणां पतनमेवाह—

ब्रह्मसूत्रपरित्यागाद्ब्रह्मचारी गृही वनी ।
परिव्राड् वापि पतति तस्मात्सूत्रं तु न त्यजेदिति—

तत्परित्यागे प्रायश्चित्तानि बहूनि सस्मरुः यथाहात्रिः त्यक्त्वा यज्ञोपवीतं तु षट्कृच्छ्राणि समाचरेदिति ननु नखानि निकृत्य यज्ञोपवीतं विसृजेदिति तत्यागो दृश्यते इतिचेन्न नखानि निकृत्य पुराणवस्त्रयज्ञोपवीतकमण्डलुदण्डं सन्त्यज्य नवान् संगृह्याश्रमं प्रविशेदिति श्रुत्यैव त्यागग्रहणयोः पुरातननूतनविषयत्वापादनादन्योऽन्यापेक्षव्यवस्थापनेन विरोधाभावात् सामान्ययज्ञोपवीतशब्दस्य पुराणत्वविशेषितं पर्यवसितुमुचितत्वात्सामान्यनिषेधस्य नूतनविशेषविधिनास्पर्द्धितुमशक्तेः न छिन्द्यादित्यादिवत् एवं च यावन्ति ब्रह्मसूत्रत्यागविधिपराणि वचांसि तानि पुराणब्रह्मसूत्रत्यागपराणीति व्यवस्थाप्यं यत्तु विज्ञानेश्वरेणोक्तं यज्ञोपवीतधारणं वैकल्पिकं यज्ञोपवीतं विसृजेदिति श्रुतेरिति तदपि त्यागे प्रायश्चित्तस्मरणाद्विकल्पासम्भवात्स्वपक्षरक्षणाभिनिवेशकारितमित्यनादरणीयम् अनेन न्यायेन शिखावर्जनमप्यनुपपन्नं तद्वपननिषेधस्मरणात् यथाह लिखितः—

ऋतुसन्धिषु सर्वत्र चातुर्मास्यान्तरं विना ॥
पौर्णमास्यां शिखावर्जं मुण्डयेत शिरो यतिरिति ।

मेधातिथिः—

कक्षोपस्थशिखावर्जं मुण्डयेत शिरो यतिः ॥

अत्रिः न प्रयायाच्चतुर्मासान्वपनं कारयेन्न च—

आरम्भादूर्ध्वापदिनयोर्वापयेद्वपनेऽपि तु ।

अधःकर्णशिखाश्मश्रुरोमाणि नहि जातुचिदिति शिखावपने प्रायश्चित्तं स्मरति गालवः त्रिस्थानलोमवपनं कृत्वा प्राजापत्यं कृत्वा प्राणायामशतं कुर्यादिति ननु मुण्डः शिखी वेति विकल्पस्मरणात् सशिखवपनं कृत्वेति विशेषस्मरणाच्च शिखावपनसिद्धिरितिचेन्मैवं मुण्डः शिखी वेत्यादिविकल्पस्यापि त्रिदण्डैकदण्डधारणाविकल्पवन्मुख्यामुख्यविषयतयैव निर्वाह्यत्वात् सम्भवति हि केषांचिद्व्याध्यादिना शिरसि केशानुत्पत्तिः अन्यथोदाहृतबहुस्मृतिवचनविरोधापत्तेः शिखावपने गालवेन प्रायश्चित्तस्मरणात् तथा च विकल्पवाक्यस्यायमर्थः वाशब्दश्चार्थः मुण्डो भवेच्छिखी च भवेच्छिखावर्जलुप्तकेशो भवेदित्यर्थः । शिखावपनमन्तरेणापि वपने मुण्डशब्दः स्मृतिकारैरेव प्रयुक्तः—

पौर्णमास्यां शिखावर्जं मुण्डयेत शिरो यतिः इति ।
कक्षोपस्थशिखावर्जमृतुसन्धिषु वापयेत्

न तु मुण्डत्वमतिक्रामेद्भिक्षुः संवत्सरे क्वचित् इत्यादिषु शिखाव्यतिरिक्तांशवपनेऽपि मुण्डशब्दप्रयोगात् मुण्डवपनशब्दयोः पर्यायवद्विशेषत्वोपपादनाच्च सामान्यो मुण्डशब्दः शिखाव्यतिरिक्तविषय इति व्यवस्थाप्यं सशिखं वपनं कृत्वेत्यदपि सविस्तरमन्नं भुञ्जीतेत्यादिवत्कर्तव्यसाहित्येनान्वयः न पुनः सघृतमन्नं भुञ्जीतेत्यादिवत्तथा चायमर्थः यथा सशिखं शिरो भवति तथा वपनं कुर्यादिति अतश्चतुर्भिरपि परिव्राजकैरेकमुपवीतमवश्यं धार्यं त्रिदण्डशिखे च मुख्यतया परिग्राह्ये इति सिद्धमिति दिक् विस्तरस्तु प्रमेयमालाशतदूषण्यादिषु द्रष्टव्यः ॥ १५ ॥

दृष्टिपूतमिति । दृष्ट्या सम्यग्विशुद्धे देशे पादं न्यसेदित्यर्थः वस्त्रेण पूतं शोधितं जन्तुमालिन्यादिरहितं जलं पिबेत्सत्येन भूतहितेन पूतां शुद्धामनृतादिरहितां वाचं वदेत् मनः पूतं मनसा सम्यक् हेयोपादेयविभागं कृत्वा तत्र यदुपादेयं तदाचरेत् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

प्रव्रजने इत्थं भावमाह । इष्ट्वेति । प्राणे अन्तर्यामिणि ॥ १३ ॥

देवान् सम्यक् सम्पूज्य तेभ्योऽनुज्ञामादायैव संन्यासः कार्योऽन्यथा ते दारादिषु सन्निधाय विघ्नं विधायाधः पातयन्तीत्याशयेनाह । विप्रस्येति । वै इत्यनेन असम्पूज्य*न्यासिष्णुं तं देवा वै पातयन्त्यधः सुसंपूज्य न्यासिष्णुं तं देवा एवानुजानते इति वाक्यं सूचयति । हिशब्देन अथवा तद्वशो वृक्षवै विघ्नन्तीव पुनः पुनः । तात्पर्याद्विघ्नितो देवैर्नोत्थातुं शक्नुयात्कदाचिदिति मानं सूचयति ॥ १४ ॥

मौनेन वाग्दण्डः अनीहया निषिद्धाचरणत्यागेन देहदण्डः प्राणायामेन चेतोदण्डः ॥ १५—१९ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परं ब्रह्मलोकम् ॥ १४ ॥

यस्मात्प्रैषोच्चारात्पूर्वमेव सर्वं त्यक्तं तस्माद्दण्डपात्राभ्यामन्यत् किञ्चिदपि न गृह्णीयात् ॥ १५—१७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

इष्ट्वा यथोपदेशं श्राद्धाष्टकपूर्वकं प्राजापत्येष्ट्या मामिष्ट्वा ॥ १३ ॥

तत्र विघ्नान्न गणयेदित्याह । विप्रस्येति । दारादिरूपिणः दारादिष्वाविष्टाः केनाभिप्रायेण कुर्वन्तीति तमाह । अयमिति आक्रम्य अतिक्रम्य परं परं ब्रह्म ॥ १४ ॥

तस्य धर्मानाह । बिभृयादिति । परं कौपीनादन्यद्वासो धारयितुमिच्छति तर्हि कौपीनमाच्छाद्यते यावता तावन्मात्रमेव त्यक्तं प्रैषोच्चारात् पूर्वमेव दण्डपात्राभ्यामन्यत् किमपि न बिभृयात् ॥ १५—१६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किंविधाय प्रव्रजेदित्याकाङ्क्षायामाह । इष्ट्वेति । यथोपदेशं यथाविधि प्राजापत्येष्ट्या मामिष्ट्वा अग्नीन् स्व प्राणे आत्मनि आवेश्य निरपेक्षः मदितरपदार्थापेक्षारहितः परिव्रजेदिति ॥ १३ ॥

परं पूर्णं पुरुषोत्तमम् ॥ १४ ॥

---

* न्यासीन्नितस्य यज्ञादेरभावान्निष्कर्मणा इदि संपूज्यास्मानतिक्रम्य परमेश्वरमियासीति बुद्ध्या देवा विघ्नं कुर्वन्तीत्यर्थः

मौनानीहानिलायामा दण्डा वाग्देहचेतसाम् ।
न ह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद्यतिः ॥ १७ ॥
भिक्षां चतुर्षु वर्णेषु विगर्ह्यान् वर्जयंश्चरेत् ।
सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता ॥ १८ ॥
बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः ।
विभज्य[1] पावितं शेषं भुञ्जीताशेषमाहृतम् ॥ १९ ॥
एकश्चरेन्महीमेतां निःसंगः संयतेन्द्रियः ।
आत्मक्रीड आत्मरत आत्मवान् समदर्शनः ॥ २० ॥
विविक्तक्षेमशरणो मद्भावविमलाशयः ।
आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥ २१ ॥
अन्वीक्षेताऽऽत्मनो बन्धं मोक्षं च ज्ञाननिष्ठया ।
बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥ २२ ॥
तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ।
विरक्तः क्षुल्लकामेभ्यो लब्ध्वाऽऽत्मनि सुखं महत् ॥ २३ ॥
पुरग्रामव्रजान् सार्थान् भिक्षार्थं प्रविशंश्चरेत् ।
पुण्यदेशसरिच्छैलवनाश्रमवतीं महीम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वनित्वाश्रमोत्तरमाह । बिभृयादित्यादिना । कौपीनं गुह्यस्थानाच्छादकं वस्त्रं, परमन्यदपि यदि वाञ्छति चेत्तर्हि कौपीनमाच्छाद्यते यावता तावन्मात्रं वासो बिभृयात् दण्डपात्राभ्यामन्यत् किंचिदपि न बिभृयात् यतः आश्रमस्वीकरणवेलायां सर्वं त्यक्तम् अतोऽन्यस्य परिग्रहे हीनप्रतिज्ञः स्यात् ॥ १५—१६ ॥

भाषा टीका ।

जैसे शास्त्रों का उपदेश है तैसे मेरा यजन करके सर्वस्व ऋत्विजों को देकर अग्नियों को अपने प्राण में स्थापन करके निरपेक्ष होकर संन्यास ग्रहण करै ॥ १३ ॥

इस प्रकार से जो ब्राह्मण संन्यासी होता है तिसके लिये देवता जानते हैं कि यह संन्यासी हमारे भी ऊपर बोझ को चला जावेगा तब स्त्री आदि रूप से उसके व्रत में विघ्न करते हैं ॥ १४ ॥

वह संन्यासी मुनि यदि वस्त्र धारण करै तो केवल कौपीन और एक वस्त्र धारण करै और जब तक कोई देह कष्ट न पड़े तब तक दंड और कमंडल छोड़कर कुछ भी न रखै क्योंकि इन सबों को तो उसने त्याग किया है ॥ १५ ॥

नेत्रों से अच्छे देखकर पैर रखै वस्त्र से छान कर जल को पीवै सत्य से पवित्र वचन बोले मन से जिस मे धर्म से अच्छा होवै सो कार्य करै ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मौनं वाचो दण्डः अनीहा काम्यकर्मत्यागो देहस्य प्राणायामश्चेतसः एते अन्तरङ्गाः दण्डा यस्य न सन्ति अङ्ग हे उद्धव ! अङ्ग धृतैर्वेणुभिरिति वा ॥ १७ ॥

चतुर्ष्विति । ब्राह्मणोऽपेक्ष्य वृत्तिभेदेन चतुर्विधेषु पूर्वपूर्वासम्भवे वा विगर्ह्यानभिशस्तपतितान् असंक्लृप्तान् अस्मार्थं लाभो भविष्यतीति पूर्वमनुद्दिष्टान् ॥ १८ ॥

बहिर्ग्रामात् पावितं प्रोक्षणादिभिः शोधितम् विभज्य विष्णुब्रह्मार्कभूतेभ्यः अशेषमित्यधिकाहरणं निरस्तम् याचितमिति पाठे माधुकरेण याचितमन्नं चेत्तर्हि विभज्य भुञ्जीत न त्वयाचितादि भैक्ष्यचतुष्टयमित्यर्थः ।

"माधूकरे तु नैवेद्यं भैक्ष्ये नान्येषु विद्यते ।
नैवेद्यकं क्षिपेदप्सु त्रितयं भौतिकं बहिः" ॥

इति स्मृतेः यद्वा तदानीं केनापि याचितं चेत्तन्मध्ये तस्मै किंचिद्विभज्य दद्यादित्यर्थः ॥ १९ ॥

किंच एकश्चरेदिति । आत्मन्येव क्रीडा कौतुकं यस्य सः आत्मन्येव च रतस्तुष्टः आत्मवान् धीरः ॥ २० ॥

[1] याचित इति वि० पाठः ।

### श्रीधरस्वामिकृतभावार्थदीपिका।

विविक्तं विजनं क्षेमं निर्भयं शरणं स्थानं यस्य सः मद्भावेन विमल आशयो यस्य सः ॥ २१ ॥

बन्धं मोक्षं च केन बन्धः केन वा मोक्ष इति तावाह। बन्ध इति ॥ २२ ॥ २३ ॥

पुराणि हट्टादिमन्ति ग्रामास्तद्रहिताः व्रजा गोष्ठानि तान् सार्थान् यात्रिकजनसमूहान् ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

वेणुभिस्त्रिभिर्दण्डैः। वेणूभिरिति तु लेखकभ्रम एव ॥१७॥

वृत्तिभेदेन प्रतिग्रहाध्यापनयाजनशिलोञ्छरूपेणात्रयः। अत्र विप्रायामेव चतुःसंख्या वर्णा आरोपितस्यार्थान्तरं तत्र वर्णाः अयाभावे प्राणरक्षार्थं शूद्रोऽप्युपेतः आहारार्थं समीहेतेति वक्ष्यमाणत्वात्। अभिशस्तपतितान् कलङ्कदूषितान्। अग्न्याशिमशागारे ॥ १८ ॥

अयाचितादीति। माधूकरमसंक्लृप्तं प्राक् प्रणीतमयाचितम्। तात्कालिकोपपन्नं च भैक्ष्यं पञ्चविधं स्मृतमिति भिक्षापञ्चकं ज्ञेयम्। माधूकरे भैक्ष्ये। नैवेद्यं विभागेन निवेदनीयत्वं विद्यते अन्येषु चतुर्विधभैक्ष्येषु न विद्यते। तत्र भितयं विष्णुब्रह्मार्कसम्बन्धि। नैवेद्यमप्सु क्षिपेत्। भौतिकं भूतेभ्यो देयं तु बहिः क्षिपेत्। पूर्वार्धे माधुकरीयोऽयाचितप्रबन्धमतो यद्धति। वेलायां विसकशेषभोजनकाले। तन्मध्ये स्वभोज्यशेषमध्ये ॥१९॥

निःसङ्गः सर्वत्र चरन्नपि न कुत्राप्यासक्तः ॥ २० ॥

अभेदेन तत्त्वमस्यादियुक्तानिर्दिष्टकपेन ॥ २१ ॥

अन्वीक्षेत विचारयेत् तत्रासिनः केन बन्ध इत्यादिः ॥२२॥

तस्मादिन्द्रियविक्षेपस्य बन्धत्वात्। मद्भावेन सर्वत्र मद्भावनया ॥ २३ ॥

पुरादीन् प्रति भिक्षार्थं प्रविशन् महीं चरेदित्यन्वयः ॥२४॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अभेदेनेति अब्रह्मात्मकस्वनिष्ठात्मभेदनिरासः तेन सांख्यमतव्यावृत्तिः ॥ २१—२२ ॥

क्षुल्लकामेभ्यः क्षुद्रकामेभ्यः ॥ २३—२४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मौनेति। मौनं वाचो दण्डः अनीहा काम्यकर्मत्यागो देहस्य अनिलायामः प्राणायामश्चेतसः एते त्रयो दण्डा यस्य तुरीयाश्रमिणो न सन्ति अङ्ग हे उद्धव! अङ्गीकृतैर्वेणुभिर्यतिर्न भवत् ॥ १७ ॥

भिक्षामिमि। विगर्ह्यानभिशस्तपतितादीन् वर्जयित्वा चतुर्षु वर्णेषु असंकल्पितान् अत्राप्यं लाभो भविष्यतीति पूर्वमननुसंहितान् सप्तागारान् गृहान् प्रति भिक्षां चरेत्तावतैव लब्धेन तुष्येच्च पूर्वपूर्ववर्णेषु भिक्षाया अलाभे उत्तरोत्तरवर्णानुमतिरिति केचिद्व्याचक्षते प्राणात्ययदशायामेव वर्णान्तरभिक्षानुमतिरिति तु युक्तं तथा च सूत्रम् "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" इति चतुर्णामपि परिव्राजकानां विप्रकुलभिक्षामेव भगवान् पराशरः स्मरति तत्र परिव्राजकाश्चतुर्विधा भवन्ति कुटीचका बहूदका हंसाः परमहंसाश्चेति तत्र कुटीचका नाम पुत्रादिभिः कुटीं कारयित्वा कामक्रोधलोभमोहमदमात्सर्यादीन् परित्यज्य विधिवत्सन्यासं कृत्वा त्रिदण्डजलपात्रशिखायज्ञोपवीतकाषायवस्त्रधारिणः स्नानशौचाचमनजपस्वाध्यायब्रह्मचर्यध्यानतत्पराः पुत्रादेरेव भिक्षाकालेऽन्नं मात्रामात्रमुपयुञ्जानास्तस्यां कुट्यां नित्यं वसन्त आत्मानं मोचयन्ते बहूदका नाम त्रिदण्डकमण्डलुजलपवित्रशिखायज्ञोपवीतिनः कौपीनोत्तरीयवसनकाः वेदान्तार्थबोधकाः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्ष्यचर्यां चरन्त आत्मानं मोचयन्ते हंसा नाम त्रिदण्डजलपवित्रशिखायज्ञोपवीतरक्तकाषायवाससो गोमूत्रगोमयाहारा एकरात्रद्विरात्रत्रिरात्रषड्रात्रमासोपवासकृच्छ्रातिकृच्छ्रचान्द्रायणसान्तपनपराकतुलापुरुषादीनि चरन्तो गोष्ठिलाद्रुमेषु देशेषु वसन्त आत्मानं मोचयन्ते परमहंसा नाम त्रिदण्डजलपवित्रशिखायज्ञोपवीतिनोऽन्तर्वसनबहिर्वसनविधारिणो ग्रामैकरात्रवासिनो नगरतीर्थप्रदेशेषु पञ्चरात्रं क्षारलवणवर्जं भिक्षाकाले शीर्णपर्णकुटीं कृत्वा ब्राह्मणकुलादेव भैक्ष्यं गृहीत्वाष्टौ ग्रासानेव भुञ्जानाः संध्योपासनतत्परा नित्यं वृक्षमूले वसन्त आत्मानं मोचयन्ते इति ॥ १८ ॥

बहिरिति। किञ्च बहिर्ग्रामस्य ग्रामादिस्थादिः उपस्पृश्याचम्य वाग्यतो मौनी भूत्वा तथा कर्म विद्याचिन्त्य चक्षुस्मै आहृतं भैक्ष्यमन्नं विभज्य दत्त्वा शेषं भुञ्जीत अशेषमित्यात्मिकाहरणं निरस्तम् ॥१९॥

एक इति। एकोऽसहायः निःसङ्गः क्वचनासक्तः नियमितवाह्यान्तरिन्द्रियः आत्मन्येव क्रीडा कौतुकं यस्य सः आत्मनि परस्मिन्नेव रतः सन्तुष्ट आत्मवान् धीरः समदर्शनः सर्वस्य ब्रह्मात्मकत्वं पश्यन् ॥ २० ॥

विविक्तः निर्जनः क्षेमो निर्भयश्च देशः शरणं वासस्थानं यस्य मद्भावेन मद्भक्त्या निर्मल आशयो मनो यस्य सः मयाभेदेनात्मानमर्कं ध्यानैकरूपं चिन्तयेत् मयाऽभेदेनात्यनेन अब्रह्मात्मकस्वनिष्ठात्मभेदव्युदासः तेन सांख्यमतव्यावृत्तिः ॥ २१ ॥

अन्वीक्षेतेति। बन्धमोक्षशब्दौ तत्कारणपरौ आत्मनः स्वस्य बन्धहेतुं मोक्षहेतुं च ज्ञाननिष्ठया तत्त्वयाथात्म्यज्ञाननिष्ठयाऽन्वीक्षेत पर्यालोचयेत तावेव दर्शयति। बन्ध इति। एषामिन्द्रियाणाम् ॥२२॥

तस्मादिति। यत इन्द्रियविक्षेपसंयमौ बन्धमोक्षहेतू तस्मात् षण्णां समनस्कानां ज्ञानेन्द्रियाणां वर्गं नियम्य मद्येव यो भावोऽभिप्रायविशेषः भक्त्यात्मकस्तेन युक्तः क्षुल्लकामेभ्यः क्षुद्रकामेभ्यः शब्दादिविषयेभ्यो विरक्तः मद्रूपात्मात्मनि सुखं लब्ध्वा चरेदिति सम्बन्धः ॥ २३ ॥

पुरेति। पुराणि वीथीमन्ति ग्रामास्तद्रहिताः व्रजा गोष्ठाः सार्थाः सांयात्रिकजनसमूहाः तान् भिक्षार्थं प्रविशन्नेव पुण्यदेशादिमतीं महीं चरेदिति सम्बन्धः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मना परमात्मना क्रीडा यस्य स तथा आत्मनो रतं सुखं यस्य स तथा आत्मवान् वशीकृतमनाः विविक्तं क्षेमं क्षेत्रं शरणं यस्य स तथा यद्वा पुरुषार्थोत्तममोक्षशरण्यः मद्भावेन मद्भक्त्या विमलाशयः विशुद्धबुद्धिः ॥ २० ॥

तस्योपासितप्रकारमाह । आत्मानमिति । मुनिर्यतिरात्मानं परमात्मानमेकं प्रधानं सर्वोत्तमं चिन्तयेत् किञ्च मया अभेदेन उपलक्षणमेतत् मत्स्यकूर्मवराहाद्यभिन्नत्वेन ज्ञानभेदराहित्येन मया लक्ष्म्या सहेति वा अत्र किम्मानमत्राप्युत्तरं मयेति । "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते" इति श्रुतिप्रमाणेन क्षेत्रज्ञः पुरुषो ह्यात्मेति मया सिद्धमात्मानं समभेदेन चिन्तयेत् किन्तु एकमन्यं चिन्तयेत् एके मुख्यार्थकेनवा इति अन्यमीशमस्य महिमानमिति वीतशोक इति मया हेतुना यद्वा आत्मा वा इदमेक एवाग्र आसीदिति श्रुत्या मया सिद्धमात्मानमेकं मुख्यं चिन्तयेत् १ अभेदेन जीवैनैक्यं न चिन्तयेदित्यर्थः । सत्यं भिदा सत्यं भिदेति श्रुत्याद्यमया सिद्धत्वात् ब्रह्मप्रमाणानां स्यान्निषेधे चापि कीर्त्यते इत्यभिधानम् ॥ २१ ॥

भगवदुपासनाविद्यमन्तरङ्गमित्याह । अन्वीक्षेतेति । ज्ञाननिष्ठ आत्मनः स्वस्य बन्धं मोक्षं चात्मनो हरेः सकाशादन्वीक्षेत ननु कथं हरिरस्य बन्धमोक्षौ कथमापादयतीति तत्राह । बन्ध इति । इन्द्रियाणां विषयेषु विक्षेपः प्रसारणं च बन्धः स्यादेषामिन्द्रियाणां संयमो निग्रहो विषयेभ्य आहृत्य मयि स्थापनलक्षणो मोक्ष इति ॥ २२ ॥

यत एवं तस्मादित्थं विधेयमित्याह । तस्मादिति । कर्मेन्द्रियाणामेकत्वेन मनसा सह षट् ज्ञानेन्द्रियाणि आत्मनि भावमहत्सुखं लब्ध्वा तुच्छकामेभ्यो विरक्तो भूत्वा विषये निरपेक्षत्वेनात्मनि सुखं प्राप्नोति वा ॥ २३ ॥

पुण्यपरः देशादिभिः प्रत्येकं संबध्यते ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भिक्षामिति तैः तत्र वृत्तिभेदेनेति प्रतिग्रहाध्यापनयाजनशिलोञ्छरूपेणेत्यर्थः ॥ १८ ॥

बहिरिति तैः तत्र माधुकरमसंकॢप्तं प्राक् प्रणीतमयाचितम् । तात्कालिकं चोपपन्नं भैक्ष्यं पञ्चविधं स्मृतमिति भिक्षापञ्चकमिति ज्ञेयम् ॥ १९ ॥

निःसङ्गश्चरन्नपि न कुत्र चिदासक्तः ॥ २०-२५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मौनं वाचो दण्डः अनीहा कर्मत्यागो देहस्य प्राणायामश्चेतसः एते अन्तस्त्रयो दण्डा यस्य न सन्ति अङ्ग हे उद्धव ! ॥ १७ ॥

चतुर्ष्विति । ब्राह्मणेष्वेव प्रतिग्रहाध्यापनयाजनशिलोञ्छलक्षणा- जीविकाचातुर्विध्याच्चतुर्विधेषु विगर्ह्यान् अभिशस्तपतितान् असंकॢप्तान् अत्राद्य लाभो भविष्यतीति पूर्वमनुद्दिष्टान् ॥ १८ ॥

विभज्य विष्णुब्रह्मार्कभूतेभ्यो अशेषमिति भोजनपात्रेऽवशिष्टं न रक्षणीयमित्यर्थः ॥ १९ ॥

आत्मरतः परमात्मनि अनुभवगोचरीकृते सति तुष्टः तेनैवात्मना सह क्रीडा यस्य सः आत्मवान् धृतियुक्तः ॥ २० ॥

आत्मानं जीवं मया परमात्मना अभेदेनेति सायुज्यार्थम् ॥ २१ ॥

अन्वीक्षेत पुनः पुनर्विचारयेत् ॥ २२ ॥

षड्वर्गं षडिन्द्रियवृन्दम् ॥ २३।२४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आन्तरीयदण्डत्रयाभावे बाह्यैस्त्रिभिर्वेणुभिर्न कृतार्थो भवतीत्याह । मौनेति । अन्तःकरणशुद्ध्यभावे सर्वाश्रमधर्माणामकिञ्चित्करत्वमित्युक्तं महाभारते वनपर्वणि—

त्रिदण्डधारणं मौनं जटाभारोऽथ मुण्डनम् ।
वल्कलाजिनसंवेष्टं व्रतचर्याभिषेचनम् ॥
अग्निहोत्रं वनवासः शरीरपरिशोषणम् ।
सर्वाण्येतानि मिथ्या स्युर्यदि भावो न निर्मल इति ॥ १७ ॥

चतुर्षु वर्णेषु भिक्षां चरेत् तत्र विगर्ह्यान् निन्द्यान् वर्जयन्नेव असंकॢप्तानुद्दिष्टान् ॥ १८ ॥

ग्रामाद्बहिर्जलाशयं गत्वा तत्रोपस्पृश्य स्नानाचमनादिकं कृत्वा प्रथमतस्तु अष्टम आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिरिति वचनात् शुद्धमवाहृतं दुग्धफलादिकम् कवलाग्निपक्वगोधूमादितच्चूर्णादिकम् पुनः पवित्रं प्रोक्षणादिना शोधितम् मन्निवेदनपूर्वकं मद्भक्तादिभ्यो विभज्य शेषं वाग्यतः भुञ्जीत ॥ १९ ॥

एतां प्रसिद्धां पुण्यतीर्थवर्तीं मत्पादाङ्कितामेकः एकाकी निःसङ्गः अनासक्तः संयतेन्द्रियः वशीकृतेन्द्रियः आत्मना परमात्मना ध्येयेन क्रीडा यस्य सः यतः आत्मनि तस्मिन्नेव रतः आत्मा परमात्मा यद्विज्ञानेन सर्वविज्ञानं भवति स एव रसादिना विद्यते यस्य सः समदर्शनः शत्रुमित्रादिदोषवर्जितश्चरेत् ॥ २० ॥

भिक्षाटनाशक्तौ विविक्तक्षेमशरणो भवेत् विविक्तं प्रतिकूलजनवर्जितम् क्षेमं निरुपद्रवं च शरणं पुण्यादौ वासस्थानं यस्य सः भुवि पुण्यपुण्यतीर्थसदनान्यृषयो विमदा इति प्रागुक्तेः मयि यो भावो भक्तिस्तेन विमल आशयो यस्य सः मया अंशिना सह ममैवांशो जीवलोके जीवभूतः सनातन इत्युक्तमात्मानं मदंशम् अभेदेन चिन्तयेत् अंशित्वेनांशत्वेन भिन्नत्वेऽपि अंशस्यांशिनिरपेक्षस्थित्यभावादभिन्नत्वेनापि ध्यायेदित्यर्थः क्षेत्रज्ञं चापि मां विद्धीति श्रीगीतायां च ननु स आत्मा कतमः देहरूप उत चक्षुरादिष्वेकतम आहोस्विन्मनोबुद्ध्यादिरूपः किं वा प्राणः इत्यत आह । एकमिति । देहेन्द्रियमनोबुद्धिप्राणादीनां सर्वेषां प्रकाशकमेव कूटस्थत्वादिशब्दवाच्यम् ॥ २१ ॥

तयोरन्यः पिप्पलं स्वाद्वत्तीति श्रुतिप्रोक्त इन्द्रियविक्षेपः स्वपरस्वरूपविस्मृतिपूर्वकमनादिमायावृतजीवकरणानां स्वकर्मफलप्रापणं बन्धहेतुः एषामिन्द्रियाणाम् अन्यो निरन्नोऽभिचाकशी-

१ अभेदेन चिन्तयेदिति पाठद्वयम् ।

वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् ।
संसिध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलान्धसा ॥ २५ ॥
नैतद्वस्तुतया पश्येद्दृश्यमानं विनश्यति ।
असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥ २६ ॥
यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् ।
सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत् ॥ २७ ॥
ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥ २८ ॥
बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत् ॥ २९ ॥
वेदवादरतो न स्यान्न पाखण्डी न हैतुकः ।
शुष्कवादविवादेन कंचित्पक्षं समाश्रयेत् ॥ ३० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तीति श्रुतिप्रोक्तकर्मफलानिरपेक्षे परमात्मनि संयमः ऐकात्म्यं परमात्मध्यानं मोक्षो मोक्षहेतुः इत्येवमात्मपरमात्मविषयकज्ञाननिष्ठया आत्मनः बन्धं मोक्षं चान्वीक्षेताबोधयेत् ॥ २२ ॥

यस्मादिन्द्रियविक्षेपो बन्धहेतुर्मद्ध्यानं मोक्षहेतुस्तस्मात् क्षुल्लकामेभ्यः कर्मफलेभ्यो विरक्तः मद्भावेन मद्ध्यानात्मको भावेन यो भावस्तेन महत् ध्यानजन्यसुखं लब्ध्वा चरेत् ॥ २३ ॥

किंकुर्वन् कुत्र चरेदित्याकाङ्क्षायामाह । पुरग्रामव्रजानिति पुराणि हट्टादियुक्तानि तद्वर्जिताः ग्रामाः व्रजान् गोष्ठानि सार्थान् यात्रिकव्यूहान् भिक्षार्थमेव न तु लौल्येन पुरापदेशादियुक्तामेव न तु विपरीताम् ॥ २४ ॥

---

### भाषा टीका ।

मौन होना चेष्टा से रहित होना प्राणायाम करना ये तीन वचन के देह के चित्त के दंड हैं हे उद्धव ! जिसके ये तीन नहीं हैं वह पुरुष केवल तीन बांसों के रखने मात्र से सन्यासी नहीं होता है ॥ १७ ॥

निंदितों को छोड़कर चारों वर्णों में भिक्षा करे पहिले विना विचारे हुवे सात घरों में जावे उनमें जो मिले तिस से सन्तोष कर लेवे ॥ १८ ॥

भिक्षा को लेके गाम के बाहर जलके किनारे जाकर आचमन करके मौन होकर जो कोई आवे तिसको कुछ देकर बाकी जो बचे तिसको जल सींच कर पवित्र करे फिर जितना अन्न होवे सब भोजन करै ॥ १९ ॥

निःसंग होकर जितेन्द्रिय होकर इस पृथिवी में अकेला विचरे आत्माही मे क्रीड़ा करै आत्माही में रत रहे आत्मज्ञानी होवे समदृष्टि रखै ॥ २० ॥

एकांत कल्याण स्थल में रहे मेरी भक्ति करने से अंतःकरण को शुद्ध रखै मुनि जो है अभेद रूप से मेरे साथ आत्मा का व्याप्यव्यापकभाव चिन्तन करै ॥ २१ ॥

और ज्ञान निष्ठा से आत्माके बंध और मोक्ष को देखै इंद्रियों का विक्षेप बंध है इनका संयम मोक्ष है ॥ २२ ॥

तिससे मुनि इंद्रिय षड्वर्ग को नियमन करके मेरे भाव से विचरे आत्मा में महान् सुखको प्राप्त होकर क्षुद्र कामों से विरक्त होजावै ॥ २३ ॥

पुर ग्राम गोष्ठ यात्रि समूह इनमें भिक्षाके वास्ते विचरता प्रवेश करै पवित्र देश नदी पर्वत वन आश्रम वाली पृथिवी में विचारता रहै ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यतः शिलवृत्त्या प्राप्तेन तदीयेनान्नसाऽन्नेन शुद्धसत्त्वः सन्निवृत्तमोहः संसिध्यति मुच्यते ॥ २५ ॥

ननु मिष्टान्नं विहाय कथं शिलान्ने प्रवृत्तिः स्यादत आह । नैतदिति । एतत् दृश्यमानं मिष्टान्नादि वस्तुतया न पश्येत् यतो विनश्यति अत इहामुत्र च लोके असक्तचित्तः संचिकीर्षितात्तदर्थकृत्याद्विरमेत् ॥ २६ ॥

ननु तथापि यावद्विनाशं सुखहेतुत्वात्तच्चिन्तावतः कुतो विरागः स्यात्तत्राह । यदेतदिति । एतज्जगन्ममतास्पदं मनोवाक्प्राणैः संहतं सहितमहंकारास्पदं शरीरं सर्वं तत्सर्वं

नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु ।
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
देहमुद्दिश्य पशुवद्वैरं कुर्यान्न केनचित् ॥ ३१ ॥
एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ।
यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सुखं चाऽऽत्मनि मायामात्रमिति तर्कया स्वप्नादिदृष्टान्तेन त्यक्त्वा स्वस्थ आत्मनिष्ठः संस्तन्न स्मरेन्न चिन्तयेत् ॥ २७ ॥

एवं बहूदकादिधर्मानुक्त्वा परमहंसधर्मानाह । ज्ञाननिष्ठ इति सार्धैस्त्रिभिः । बहिर्विरक्तो मुमुक्षुः सन् ज्ञाननिष्ठो वा मोक्षेऽप्यनपेक्षो मद्भक्तो वा सलिङ्गांस्त्रिदण्डादिसहितानाश्रमांस्त-द्धर्मांस्त्यक्त्वा तदासक्तिं त्यक्त्वा यथोचितं धर्मं चरेदित्यर्थः । न पुनरत्यन्तत्याग एव विवक्षितः पुनर्धर्मविधानात् भक्तियत्व-योरुत्तराध्याये वक्ष्यमाणत्वाच्च तर्हि पूर्वस्मात्को विशेषस्तमाह । अविधिगोचरो विधिकिंकरो न स्यादिति एतदेव स्फुटीकरि-ष्यति "शौचमाचमनं स्नानं न तु चोदनया चरेदि"त्यादिना ॥ २८ ॥

कथं चरेत्तदाह । बुधो विवेकवानपि बालकवन्मानावमान-विवेकशून्यः कुशलो निपुणोऽपि जडवत्फलानुसंधानाभावेन विद्वान् पण्डितोऽप्युन्मत्तवल्लोकरञ्जनाभावेन नैगमो वेदार्थनि-ष्ठोऽपि गोचर्यामनियताचारमिव ॥ २९ ॥

वेदवादरतः कर्मकाण्डव्याख्यानादिनिष्ठः पाखण्डी श्रुतिस्मृ-तिविरुद्धधर्मानुष्ठानवान् हैतुकः केवलतर्कनिष्ठः शुष्कवादे निष्प्रयोजनगोष्ठ्यां यो विवादस्तस्मिन् ॥ ३० ॥

अतिवादान् दुरुक्तानि ॥ ३१ ॥

आत्मदृष्ट्या तावद्वैरकारणं नास्तीत्युक्तमेक एवेति देहदृ-ष्ट्यापि नास्तीत्याह । भूतानि च देहा अपि कारणरूपेणैकात्म-कानि ॥ ३२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तदीयेन वानप्रस्थसम्बन्धिना ॥ २५ ॥

दृश्यमानम् नतु लब्धम् इत्यलब्धं निःसङ्गत्वविवरणम् । अतो नश्वरत्वात् । तदर्थंकृत्यात् मिष्टान्नाद्यर्थपरिश्रमात् ॥ २६ ॥

यावद्विनाशं विनाशादर्वाक् तावत्तावत्तः मिष्टान्नादिचि-न्तावतः मायामात्रं प्रतीतिमात्रं तद्वर्तमानमतीतं च मिष्टान्नादि भुक्त्वापि पुनर्न चिन्तयेत् इत्यतीते वर्तमाने च निःसङ्ग-त्वमुक्तम् ॥ २७ ॥

तदासक्तिं धर्मासक्तिमिति धर्मशब्दस्य तदासक्तौ लक्षणा पूर्वस्माद्बहूदकादेः को विशेषम् । एतदेव अविधिगोचरत्व-मेव ॥ २८ ॥

विवेकवानपि मानापमानज्ञानवानपि ॥ २९ ॥

पाखण्डी न स्यात् पूर्वपक्षज्ञानार्थमपि पाखण्डशास्त्रं नाभ्य-सेदित्यर्थः । निष्प्रयोजनगोष्ठ्यामिति वैष्णवमतप्रवृत्तिप्रयोजनगो-ष्ठ्यां तु पक्षमपि समाश्रयेत् ॥ ३० ॥

तुशब्दः संसारादुद्वेगं विधत्ते त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्रसंसारचक्रकदनादित्यादि प्रह्लादोक्तेः ॥ ३१ ॥

देहमिति युग्मकम् । आत्मा परमात्मा भूतेष्वन्येषु आत्मनि च स्वस्मिन् जीवे यथेन्दुरुदपात्रेष्वित्येकस्यैव वैभवमात्रे दृष्टान्तः नतु प्रतिबिम्बत्वे "अम्बुवदग्रहणात्तु न तथात्वं वृद्धिह्रास-भाक्त्वमन्तर्भावात्" इति पूर्वोत्तरन्यायाभ्यां तथा निर्णीतत्वात् ३२

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शिलान्धसा शिलोञ्छवृत्तिवानप्रस्थस्य भिक्षान्नेन ॥ २५ २६ ॥

सर्वं माया सर्वमिदं प्रकृतिपरिणामः ॥ २७ ॥

सलिङ्गान् गृहस्थादिलिङ्गोपेतान् अविधिगोचरः शास्त्रविधि-रगोचरः ॥ २८ ॥

गोचर्यामज्ञवदिति भावः नैगमः निगमनिष्ठः वेदवादरतः वेद-पूर्वभागरतो न स्यात् ॥ ३० ॥ ३१ ॥

वैराग्यकरणे हेतुमाह । एक एवेति । यथेन्दुरिति लोकप्रसिद्धं दृष्टान्तमाह । अन्यथा आकाशमेकं पृथगिति दृष्टान्तविरोधात् ॥ ३२—३५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च वानप्रस्थेति । अभीक्ष्णं पुनः पुनः तत्र हेतुः संसि-ध्यतीत्यादि शिलान्धसा शिलवृत्त्या प्राप्तेन तदीयेनान्धसा अन्नेनापि शुद्धसत्त्वः सन् निवृत्तमोहः संसिध्यति मुच्यते अत एतेष्वेवाभीक्ष्णं भैक्षमाचरेदित्यर्थः ॥ २५ ॥

ननु कामेभ्यः कथं विरक्तः स्यादित्यत उपायमाह । नेति । एतत्परिदृश्यमानं शब्दादिविषयजालं वस्तुतया न पश्येत् कुतः यतस्तद्विनश्यति एतद्दृष्टान्तेन पारलौकिकविषयेष्वप्यसक्तचित्त इहामुत्र चिकीर्षितात् ऐहलौकिककामसाधनतया कर्तुमिष्टात्कृत्याद्विरमेत् इत्थं स्वरूपविवेकेन विरक्तो भवेदित्यर्थः ॥ २६ ॥

किञ्च मनोवाक्प्राणसंहतं वाग्ग्रहणं कर्मेन्द्रियाणामप्युप-लक्षणं मनोग्रहणं ज्ञानेन्द्रियाणां प्राणग्रहणं भूतपञ्चकस्य बुद्धीन्द्रियमनःप्राणभूतसंघातात्मकमेतज्जगज्जङ्गमं शरीरं माया प्रकृतिपरिणामकमित्येवं विधेन तर्केण नश्वरत्वादिभिः प्रकृति-कार्यत्वानुमानेनेत्यर्थः । स्वस्थः स्वस्मिन्नेव ब्रह्मात्मके स्थितः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्मात्मकस्यात्मस्वरूपसंशीलनपरः त्यक्त्वा उक्तविधे शरीरे आत्माभिमानं त्यक्त्वा पुनस्तच्छरीरमात्मतया नाभिमन्येत ॥२७॥

इत्थं वर्णाश्रमधर्मानभिधायाथेत्थमाश्रमधर्माननुतिष्ठतः सञ्जातज्ञानवैराग्यभगवद्भक्तियोगस्याचारभेदं विदधाति । ज्ञाननिष्ठ इति सार्द्धैकादशभिः । विरक्त इति ज्ञाननिष्ठस्य विशेषणम् अनपेक्षक इति मद्भक्त इत्यस्य विरक्तो ज्ञाननिष्ठो वा अनपेक्षको मद्भक्तो वा स्यादिति सम्बन्धः । वैराग्ययुक्तं ज्ञानं चात्र भगवच्छेषतैकरसोऽहं तदायत्तस्वरूपस्थितिप्रवृत्तिश्च स चासंख्येयैः कल्याणगुणैः परतरः अतो मम भगवानेव परमप्राप्यः प्रापकश्च अन्यदपि मन्मनोरथवर्त्ति स एव मम सर्वमित्यध्यवसायात्मकं एतच्च समनन्तराध्याये ज्ञानिनस्त्वहमेवेष्ट इत्यादिना स्वयमेव स्फुटीकरिष्यति भक्तियोगस्यानपेक्षत्वं नामानभिसंहितफलत्वं भक्तिप्रपत्त्यन्यतरनिष्ठश्चेदित्यर्थः । स चतुर्थाश्रमनिष्ठ एवेति न सङ्कोचः किन्तु चत्वारोऽप्याश्रमिणः सलिङ्गानाश्रमानिति बहुवचनदर्शनात् सलिङ्गान् गृहस्थादिलिङ्गोपेतानाश्रमांस्त्यक्त्वाऽविधिगोचरश्चरेत् विधिग्रहणं प्रतिषेधस्याप्युपलक्षणम् । अविधिगोचरः विधिनिषेधानियोज्यः विधिर्मां प्रवर्त्तयति निषेधस्तु निवर्त्तयतीति बुद्धिं त्यक्त्वा भगवच्छेषतैकरसस्य मम तत्कैङ्कर्यं मत्स्वरूपानुबन्धीति बुद्ध्या चरेत् यथाशक्ति वर्णाश्रमधर्मान् भगवत्कैङ्कर्यवेषेणाचरेत् सलिङ्गानामाश्रमाणां त्यागो नाम निष्पन्नोपायत्वेन तेषूपायानुग्राहकत्वबुद्ध्यभावात्मकः अनेन यावदुपायनिष्पत्तिस्तावत्तदनुग्राहकत्वबुद्ध्यानुतिष्ठेदिति सूचितं स्वीकृतसिद्धोपायस्य निष्पन्नोपायस्य च वर्णाश्रमधर्मानुष्ठानस्योपायोपकारकत्वाभावात्तद्बुद्ध्यानुष्ठेयत्वं न तु स्वरूपेणानुष्ठेयत्वं निष्पन्नस्याप्युपायस्याप्रयाणादनुवर्त्तनीयत्वात्प्रतिबन्धकशान्त्यप्रच्युतिसम्भवतया स्वरूपानुबन्धितया वा लोकजिघृक्षया वाऽनुष्ठेयत्वमास्थेयमेव अन्यथा—

> नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
> नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयादिति ॥

श्रुत्युक्तरीत्यार्थं स्वरूपतो वर्णाश्रमधर्मत्यागः प्रत्यवायहेतुरनुपायत्वेनापि कैङ्कर्यरूपत्वाच्छेषतापि न सिद्ध्येल्लोकश्चोत्सीदेत् अतो यथोक्त एवार्थः आश्रमलिङ्गानि—

> मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ।
> गृहस्थो यज्ञवेदाद्यैर्नखरोमैर्वनाश्रमी ॥

त्रिदण्डेन यतिश्चेत्याद्युक्तानि द्रष्टव्यानि ॥ २८ ॥

किञ्च बुध इति । बुधो विवेकवानपि मानावमानरहितः क्रीडेद्बालवत् कुशलो निपुणोऽपि जडवत् विद्वानप्युन्मत्तवद्वदेत् नैगमः वेदार्थनिष्ठोऽपि गोचर्यां पशुचर्यां चरेत् अज इव वर्त्तेत देहात्माभिमानविषयानुसन्धानपरत्वमाहात्म्याविष्कारणामभावादिति भावः ॥ २९ ॥

वेदवादरतः वेदपूर्वभागरतो न स्यात् पाषण्डी वेदविरुद्धाचारवान् हैतुकः केवलतर्कनिष्ठश्च न स्यात् शुष्कवादेन निष्प्रयोजनगोष्ठ्यां यो विवादस्तेन तन्मूलकं कञ्चित्पक्षञ्च न समाश्रयेत् न संश्रयेत ॥ ३० ॥

जनान्नोद्विजेत न भीतो भवेन्नापि जनं चोद्वेजयेत् अतिवादान् दुरुक्तानि तितिक्षेत ॥ ३१ ॥

देहमिति । वैराकरणे हेतुमाह । एक एवेति । भूतेषु भूतसंघातपरिणामरूपेषु देवमनुष्यादिदेहेषु य आत्मा प्रत्यगात्मा तस्मिन्नात्मनीत्येकवचनं जात्यभिप्रायकं तस्मिन्नवस्थितः परमात्मा एक एव यथेन्दुरुदपात्रेष्विति व्यापकगतदोषास्पर्शे दृष्टान्तः ततः किमत आह । भूतान्येकात्मकानीति । एकः परमपुरुष आत्मा येषां तानि हि यस्मादेवं तस्मान्न वैरं कुर्यादिति सम्बन्धः सर्वभूतानां भगवच्छरीरत्वात्क्वापि भूते कृतं वैरं तदात्मभूतपरमपुरुषपर्यन्तगामीति न तत्कुर्यादित्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पदं स्थानम् अभीक्ष्णमित्यनेन पुरादिषु विकल्प इति ज्ञायते वानप्रस्थाश्रमस्थेषु नित्यं भैक्षचरणस्य किं क्षिप्रफलमित्यत आह । संसिध्यतीति । भिक्षान्धसा भिक्षाविहितान्नेन शुद्धं सत्त्वमन्तःकरणं यस्य स तथा असंमोहो मिथ्याज्ञानरहितः आशु संसिध्यति अपरोक्षज्ञानमाप्नोति ॥ २५ ॥

संसिद्धस्य दर्शनप्रकारं विधत्ते । नेति । एतज्जगद्वस्तुतया परब्रह्मत्वेन अत्र हेतुः विनश्वरं दृश्यमानमिति एवं पश्यता वैराग्यानुसन्धानं कर्त्तव्यमित्याह । असक्तेति । इहामुत्रासक्तचित्तः स्यात् ततः किमत आह । विरमेदिति । चिकीर्षितात् कर्त्तुमिष्टात् कर्मणो विरमेत् कृतकृत्यो भवेदित्यन्वयः ॥ २६ ॥

एतदेव स्पष्टयति । यदेतदिति । मनोवाक्प्राणैः संभृतं सम्पन्नमात्मनि हरौ स्थितम् ऋचो अक्षरे परमे व्योमन्नित्यादिश्रुतेः यदेतत्प्रत्यक्षं जगत्सर्वं मायेति तर्केणाचेतनप्रकृतिकृतत्वेन अनुष्ठितानुगुणमायातीत्यायः फलं तन्मा लेति मायाशब्दो निषेधार्थः तथा च मायेति निष्फलमुच्यते मायामिति वचनपे मायेति स्वीकृत्वेन वचनमत्यन्तास्वातन्त्र्यप्रकटनायेत्यतोऽस्य ज्ञानेन प्रयोजनाभावान्नैतत्सुखाय स्यादिति त्यक्त्वा स्वतन्त्रत्वात्स्वो विष्णुरन्यसंभावनाद्दिव्येन मुक्तिफलप्रदत्वात् तत्स्थः तदेकशरणो भूत्वा तज्जगन्न स्मरेद्विष्णुमेव प्रयोजकं स्मरेदित्यन्वयः यदि विष्णुः स्वतन्त्रो न स्यात्सर्वतज्जगदन्तिर्गतं न स्यात् तर्ह्यन्नित्यसुखं स्यान्नैवं तस्मात्स एव तथैवेत्यादितर्केण विश्वं मिथ्या दृश्यत्वादित्यादितर्केण मायामयत्वं प्रपञ्चस्योच्यत इत्येतत्पूर्वोत्तरग्रन्थाविरोधात् विश्वं सत्यमित्यादिश्रुतिप्रामाण्यादस्मदुक्तार्थं—

> त्रिगुणा प्रकृतिर्माया तज्जत्वाद्विश्वमीदृशम् ।
> अनाद्यनन्तकालेषु मायेत्याहुर्विपश्चितः ॥
> अचेतनत्वान्नैवैतत्प्रयोजकतया स्मरेत् ।
> चेतनत्वं स्वतन्त्रत्वं स चैको विष्णुरेव तु ॥
> मायस्तु फलमादिष्टं प्रोक्तं मायेति निष्फलम् ।
> फलाल्पत्वात्तु मायैषा सम्प्रोक्ता त्रिगुणात्मिका ॥
> महाफलप्रदत्वात्तु विष्णुराय इतीरित इति ।

प्रमाणसद्भावाच्चेत्युपेक्षणीयम् ॥ २७ ॥

ज्ञानपरिपाकप्राप्तस्य यतेर्वृत्तिप्रकारं विधत्ते ज्ञाननिष्ठ इति ज्ञानस्य निष्ठोत्कर्षो यस्य स तथा वाच्यशब्दौ समुच्चयार्थौ नविकल्पार्थौ अन्योऽन्यनियमार्थौ वा अनपेक्षकः शिष्यसङ्ग्रहाद्यनपेक्षः सलिङ्गान् दण्डादिलक्षणसहितान् मुक्त्वा विधिगोचरः अयं यतिस्त्वं ब्रह्मत्यादिरूपस्वरूपगोचरश्चरेद्विविक्ते अरण्ये वर्तेत एव इत्यर्थः अत्र वेदोक्तविधिविधायकत्वेन सन्ध्योपासनादि

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न करोति किन्तु जलस्रोतोवत् स्वत एव करोति ॥ २८ ॥

तं प्रकारं वक्ति । बुध इति । गोचर्यां गोवच्चर्याम् अज्ञवच्चरणा-मित्यर्थः । नैगमः वेदोक्तविधिना वर्तमानः इत्यनेनाविधिगोचर इत्यत्र विध्यतिक्रमो नार्थ इति निरणायि ॥ २९ ॥

नैगम इत्युक्तं विशदयति । वेदेति । वेदेन सह वादो विवादः विप्रतिपत्तिस्तत्र रतो न स्यात् कुतर्केण वेदस्य जीवब्रह्म-णोरैकत्वार्थकथनपरो न स्यादित्यर्थः—

> वेदेन सह वादो यो वेदवाद इतीरितः ।
> तर्केण वेदस्यान्यार्थकल्पनं तद्विदो विदुः ॥
> तन्न कुर्यात्कदाचिच्च तत्कुर्वन्वेदहा भवेदिति ।

वचनादुक्त एवार्थः । वेदविचारविधुर इत्यर्थो नैव किञ्च पाखण्डी पाशुपतादिदर्शनाभिमानी च न स्यात् हैतुकी अक्षपादादि दर्शनाभिमानी च न स्यात् शुष्कवादविवादेन प्रसक्तः प्राप्त-निरर्थवादकलहेन—

> योगसाङ्ख्यकणादाक्षपादा वै हेतुवादिनः ।
> पञ्चरात्रशाक्तबौद्धाद्याः पाखण्डा इति कीर्तिताः ॥

इति वचनाच्च ॥ ३० ॥

नोद्विजेत दुर्जनान्नोद्विग्नः स्यात् ॥ ३१—३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

पूर्वं निःसङ्ग इत्युक्तं तदेव विवृणोति । नैतदिति द्वाभ्याम् । तत्रालब्धत्वे निःसङ्गत्वं प्रथमेन ॥ २६ ॥

वर्तमानेऽतीते च निःसङ्गत्वमाह । यदेतदिति । सर्वं मायेति माय न चैव शुद्ध आत्मनि अध्यासितं तत्तत्स्वकार्यं स्वकरोति पुनर्न स्मरेदित्यर्थः ॥ २७ ॥

अन्योऽप्येवं कुर्यादिति प्रसङ्गेन विवक्षितं स्त्रीणां निरीक्ष-णस्यादिवत् टीका च नान्यथा मत्परश्चरेदित्यत्र यथेति ॥ २८ ॥ २९ ॥

पाषण्डी न स्यादिति पूर्वपक्षज्ञानार्थमपि पाषण्डमतं नाभ्यसे-दित्यर्थः ॥ ३० ३१ ॥

देहमिति युग्मकम् । आत्मा परमात्मा भूतेष्वन्येषु जीवेषु आत्मनि च स्वस्मिन् जीवे यथेन्दुरुदपात्रेष्विवेत्येकत्वेन वैभवमात्रे दृष्टान्तः नतु प्रतिबिम्बतामात्रांशे परमात्मसंदर्भादौ निर्णीत-त्वात् ॥ ३२ ॥ ३३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यतः शिलान्धसा शिलवृत्त्या प्राप्तेन तदीयेनान्धसा अन्नेन शुद्धसत्त्वः शुद्धान्तः करणः ॥ २५ ॥

ननु मधुरमिष्टान्नं विहाय कथं रूक्षे शिलान्ने प्रवृत्तिः स्यात् अत आह । नेति । एतत् स्वाद्वन्नादि वस्तुतया न पश्येत् यतो विनश्यति अत इहामुत्र लोके असक्तचित्तः सन् चिकीर्षि-तस्वर्थकृत्याद्विरमेत् ॥ २६ ॥

माया मायागुणकार्यमित्यर्थः । तर्केण कार्याणां कारणा-त्मकत्वात् परमात्मैक्यमेवैतस्येति न्यायेन इदं कारणपदं न स्मरेत् ॥ २७ ॥

परिपक्वज्ञानिनो निष्कामस्वभक्तस्य च वर्णाश्रमनियमाभाव-माह । ज्ञानेति । ज्ञाननिष्ठः परिपक्वज्ञानवान् अनपेक्षकः प्रतिष्ठाप-र्यन्तापेक्षारहितः अत्र सर्वथा निरपेक्षमजातप्रेम्णो भक्तस्य न सम्भवेदत उत्पन्नप्रेम्णैव भक्तः सलिङ्गानाश्रमांस्त्यजेत् उत्पन्नप्रेमा तु निर्लिङ्गाश्रमधर्मांस्त्यजेदित्यर्थो लभ्यते स्वधर्मत्यागस्तु तावत् कर्माणि कुर्वीतेति वाक्यात् भक्तानामारम्भत एवावगम्यते तयोः शुद्धान्तःकरणत्वादेव पापे प्रवृत्त्यभावात् दुराचारत्वं नाशङ्क्यम् तेनाविधिगोचरः ॥ २८ ॥

लोकप्रतिष्ठोत्थविक्षेपभयात् क्वापि स्वं न प्रकाशयेदित्याह । बुध इति । नैगमः वेदार्थविज्ञोऽपि गोचर्याम् अनियताचारः ॥ २९ ॥

किन्त्वात्मगोपनार्थमेवं भूतस्तु न भवेदित्याह । वेदवाद-रतः कर्मकाण्डादिव्याख्यारतः पाषण्डी बौद्धादिचिह्नधारी हैतुकः केवलतर्कनिष्ठः शुष्को यो वादो वितण्डादिलक्षणस्तत्र विवादे सति ॥ ३० ॥

अतिवादान् दुरुक्तानि ॥ ३१ ॥

वैराग्यविचारमाह । एक इति एको ह्यात्मा परमात्मा भूतेषु मनु-ष्यादिषु आत्मनि जीवे च यथा उदपात्रेषु उदकपात्रस्थप्रतिबिम्बा-त्मकेषु किरणेषु इन्दुः स्वकार्येषु कारणस्य सत्त्वादित्यात्मदृष्ट्या वैकारिकभावः देहदृष्ट्या तु भूतान्येकात्मकानीति क्व वैरं कार्यमिति भावः ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथाश्रमोत्तमां भिक्षामाह । वानप्रस्थेति । अभीक्ष्णं पौनःपुन्येन भैक्ष्य-माचरेत् यतः शिलान्धसेरयुपलक्षणम् शिलोञ्छवृत्त्यार्जितेनान्न-सानेन शुद्धसत्त्वः शुद्धान्तःकरणः सन् असंमोहः गतमोहः आशु शीघ्रं सिद्ध्यति मुक्तिं प्राप्नोति ॥ २५ ॥

ननु शिलान्धसा कथमात्मा पुष्टः स्यादित्यत आह । एतच्चात्म-भूतं वस्तुतया आत्मतया न पश्येत् यतः स्थौल्यकार्श्यादिध-र्मकं दृश्यमानं शरीरं विनश्यति अतो मनुष्यादिशरीरस्थसुख-स्वादिस्थानेषु इहामुत्र च असक्तचित्तः सन् चिकीर्षितात् उभय-लोकसाधनकृत्याद्विरमेत् ॥ २६ ॥

ननु दृश्यमानं पाञ्चभौतिकमात्मा मास्तु अदृश्यमानं मनोवागा-दीन्द्रियं वा प्राणो वात्मास्त्वित्यत आह । यदिति । आत्मनि जीवे सुख-दुःखादिभोक्तरि पुण्यापुण्यकर्तरि यदेतद्भोगायतनं शरीरं तत्र मनोऽन्तःकरणं वागुपलक्षितं बाह्यं करणजालं प्राणोपलक्षिताः सर्वे वायवश्च तैः सहितं स्थूलसूक्ष्मरूपं शरीरद्वयं किंबहुना सर्वं जगत् ब्रह्माण्डरूपं माया मच्छक्तिरूपा प्रकृतिः तत्कार्यम् इत्येवं मदुपदेशेन तर्केण च शरीरं नात्मा जडत्वात् घटादिवत् मनोवा-गादिकं च नात्मा करणत्वात् वास्यादिवत् प्राणो नात्मा वायुवि-शेषत्वात् व्यजनजन्यवायुवत् इत्थंभूतेन प्रयोगेण च मनोवाक्प्रा-णसंहितमात्मत्वेन त्यक्त्वा स्वस्थः देहेन्द्रियमनोबुद्धिप्राणादिभ्यो विलक्षणे स्वरूपे तिष्ठतीति स्वस्थः सन् तत्स्मरेत् देहादिकमात्म-त्वेन न स्मरेत् अत्र वैदिकानां अनन्यभक्तानां सर्वलोक-वेदहेतुभूतस्य भगवतो वचनमेव प्रमाणम् ये तु नैरपेक्ष्याः

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तर्कप्रमाणाः देहमनप्राणात्ममात्रवादिनस्ते तर्केणैव निराकर्तव्या इत्यतस्तर्केणोत्युक्तियुक्तैव ॥ २७ ॥

कर्मज्ञानवैराग्यभक्तिरूपाणि गुर्वनुग्रहलब्धानि मोक्षसाधनानि तत्र वर्णाश्रमधर्माणामन्तःकरणशुद्धिद्वारा ज्ञानसाधनत्वं वक्ष्यत्यस्मिन्नेवाध्याये "इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिरिति वैराग्यसहितस्य भक्तिसाधनत्वं च वक्ष्यत्युत्तराध्याये—

ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः ।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥
ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम ।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥
तपस्तीर्थजपोदानपवित्राणीतराणि च ॥
नालं कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥
तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः इति ॥

भक्त्या स्वप्राप्तिं च वक्ष्यत्यस्मिन्नेवाध्याये——

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥

तत्र सर्वसाधनैः—

जन्मान्तरसहस्रेषु तपोदानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥

इत्यादिवाक्येभ्योऽनेकजन्मसञ्चितैर्जातया भक्तेरावेशेन ग्रहग्रस्त इव मम भक्तः सर्वाश्रमधर्माणां तल्लिङ्गानां च विस्मरणं करोतीति कैमुतिकन्यायेनाह सर्वेश्वरः । ज्ञाननिष्ठ इति सार्द्धदशभिः । स्वर्गादिसत्यलोकपर्यन्तसुखकामानां तत्तदाश्रमेषु तल्लिङ्गेषु प्रवृत्तियुक्तैव हृदयशुद्धिपूर्वकतत्त्वविविदिषुणापि यावद्विद्योदयस्तावत्तद्ग्रहणं कर्तव्यमेव यस्तु विरक्तः उक्तलोकप्राप्तिवासनारहितः ज्ञाननिष्ठः ज्ञाततत्त्वः सलिङ्गानाश्रमांस्त्यक्त्वा चरेत् मदितरपदार्थरागत्यागपूर्वकं मज्ज्ञानग्रहगृहीतो यथेच्छं विचरेदेव यदि तदा "स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः" इति मयोक्तविधिनिषेधगोचरः अविधिगोचरः तत्तदाश्रमतल्लिङ्गविध्यविषयः अनपेक्षः सर्वसाधनतत्तत्फलनिरपेक्षः मद्भक्तो वा सलिङ्गानाश्रमांस्त्यक्त्वा चरेदिति किमवक्तव्यम् द्वितीयो वाशब्दः कैमुतिकन्यायसूचकः आश्रमलिङ्गानि

मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ॥
गृहस्थो यज्ञवेदाद्यैर्नखलोमैर्वनाश्रमी ॥
त्रिदण्डेन यतिश्चेति लक्षणानि पृथक् पृथक् ॥

इत्यादिभिर्दक्षादिभिरुक्तानि मोक्षधर्मे नारायणीयोपाख्याने

या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये ।
तया विना तदाप्नोति नरो नारायणाश्रयः ॥ इति

अत्रैवोक्तम्—

न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ।
सज्जतेऽस्मिन्नहम्भावो देहे वै स हरेः प्रियः ॥ इति

कर्मज्ञानवैराग्यभक्तिरसः तद्भावग्रहगृहीतः सर्वतो निवृत्ताभिमानो भवेदिति भावः ॥ २८ ॥

एतदेव विवृणोति । बुध इत्यादिना । बुधोऽपि सिद्धान्ताभिज्ञोऽपि लौकिकव्यवहारे बालकवदनभिज्ञवत् कुशलोऽपि ध्यानादौ निपुणोऽपि जडवत् लौकिके कार्येऽकुशलवत् विद्वान् स निमित्तवक्तयाविदपि उन्मत्तवन्निर्निमित्तप्रियाप्रियवागिव नैगमोऽपि निगमानुसार्यपि गोचर्यां वृषभाचरणं चरेत् ॥ २९ ॥

वेदवादः कथाविस्तरो यस्य कर्मकाण्डस्य तत्र रतो न स्यात् पाषण्डी अशिष्टाचरणरतो न स्यात् हैतुकस्तर्कमूलाचरणरतो न स्यात् शुष्कवादविवादे निरर्थकवचनप्रतिवचनसंवादे कञ्चिदपि पक्षं न समाश्रयेत् ॥ ३० ॥

किञ्च जनादुद्वेजनकारिणो नोद्विजेत तं जनं च नोद्वेजयेत् किं तु धीरः स्यात् श्रीमद्भगवद्गीतायामपि यस्मान्नोद्विजते लोकः लोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः इति अतिवादान् दुरुक्तितोमरान् तितिक्षेत सहेत कञ्चन कमपि नावमन्येत दुरुक्तितोमरैर्न पीडयेत् नारुन्तुदः स्यान्नानृशंसवादी न हीनतः परमभ्याददीत ययास्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्यामिति वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि परस्य नाममर्मसु ते पतन्ति तान् पण्डितो नावसृजेत्परेष्विति च महाभारते ॥ ३१ ॥

देहमुद्दिश्य एते गन्निकृष्टाः मत्पादमूले कुतो न पतन्ति एतेऽत्यन्ततो निकृष्टाः दूरतः कुतो नापगताः अत एते द्वेष्या इत्येवं शरीरनिमित्तं वैरं न कुर्यात् हि यतः भूतेषु देहादिषु आत्मनि जीवात्मसु जातावेकवचनम् नित्यो नित्यानामिति श्रुतेरात्मनां बहुत्वात् एक एव निःसमानातिशयः पर आत्मा परमेश्वरः अवस्थितः ननु एकस्मिन् देहेऽवस्थित आत्मा तापैरभिभूयते सर्वदेहेष्ववस्थितः परमात्मापि क्लेशापैर्युज्यते इत्याशङ्क्याह । यथेन्दुरुदपात्रेष्विति इन्दोः परिच्छिन्नत्वेन सर्वेषूदपात्रेषु स्वरूपतोऽवस्थित्यसम्भवात्प्रतिबिम्बरूपेणात्ययं स यथा सर्वोदपात्राणि प्रकाशयति निस्तापानि च करोति न तद्गतदोषवातगन्धेनापि युज्यते तद्वदित्यर्थः । भूतानि देहरूपाण्यप्येकात्मकानि एकोपादानकानि देहानामप्येकत्वं चिन्तयेन् वैरं नैव कुर्यादिति सम्बन्धः ॥ ३२ ॥

---

भाषा टीका ।

प्रति दिन वानप्रस्थों के आश्रम में भिक्षा मांगे ऐसे भिक्षा के अन्न से मोहरहित होने से अन्तःकरण के शुद्ध होने से जल्दी सिद्ध होजाता है ॥ २५ ॥

इस लौकिक पदार्थ को वस्तु रूप न देखे क्योंकि जो प्राकृत दृश्यमान पदार्थ है वे नष्ट होजाते हैं इस लोक पर लोक के लोभ से आसक्त न होकर विचरा करै ॥ २६ ॥

यह जो आत्मा में जगत् है मन वाणी प्राण से संयुक्त है यह सब भगवान् माया सङ्कल्प रचित है ऐसा जानकर स्वस्थ होकर इस से हटकर फिर स्मरण न करै ॥ २७ ॥

ज्ञान निष्ठावाला होवै अथवा विरक्त होवै अथवा मेरा

अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ।
लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम् ॥ ३३ ॥
आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ।
तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ॥ ३४ ॥
यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ।
तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥ ३५ ॥
शौचमाचमनं स्नानं न तु चोदनयाचरेत् ।
अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३६ ॥
न हि तस्य विकल्पाख्या या च मद्वीक्षया हता ।
आदेहान्तात्क्वचित् ख्यातिस्ततः संपद्यते मया ॥ ३७ ॥
दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ।
अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३८ ॥
तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ।
यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥ ३९ ॥
यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ।
ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥ ४० ॥

---

भाषा टीका ।

भक्त होवै सो अनपेक्ष होकर आश्रमों के सब चिह्नों को छोड़कर विधि के परतन्त्र न होकर विचरा करै ॥ २८ ॥

पण्डित होकर बालक सरीखी क्रीडा करै कुशल होकर भी जड़ सरीखा विचरै विद्वान् होकर उन्मत्त के बराबर बोलै वैदिक होकर भी गऊ सरीखा विचरै ॥ २९ ॥

वेद के वाद विवाद न करै पाखंडी न होवै हेतुवादी न होवै शुष्कवाद से किसी पक्ष का आश्रय न करै ॥ ३० ॥

धीर रहै मनुष्यों से उद्वेग न पावै आप भी किसी को उद्विग्न न करै खोटे वचनों को सह लेवै किसी का अपमान न करै इस देह के पीछे किसी के साथ पशु सरीखा वैर नहीं करै ॥ ३१ ॥

एक ही परमात्मा सब जीवों के भीतर व्याप्त है जैसे कि जल पात्रों में चन्द्रमा दीखता है इस दृष्टि से सब देही को परमात्मा के साथ देखै तब वैर नहीं करै ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दैवतन्त्रितं दैवाधीनं यतः ॥ ३३ ॥

अलं तर्हि भिक्षाप्रयत्नेनापि तत्राऽऽह । आहारमात्रार्थं समीहेतैव यतः तस्य प्राणधारणम् युक्तं सत्यम् कथम् तेन प्राणधारणेन तत्त्वं विचार्यते किं तेनापि तत्राह । तद्विज्ञायेति ॥ ३४ ॥

तर्हि किं मिष्टान्नादिकमग्राह्यमेव केनैवमुक्तमित्याह । यदृच्छयेति ॥ ३५ ॥

यथाहमीश्वरो लीलया चरामि तथा ज्ञानी ज्ञाननिष्ठोऽनासक्तः कुर्यान्न तु विधिकिङ्करत्वेन तस्य ज्ञाननिष्ठाविरोधादित्यर्थः ॥ ३६ ॥

कुतो विधिकिङ्करत्वाभावस्तस्य तत्राऽऽह । नहि तस्य विकल्पाख्या भेदप्रतीतिः नन्वस्ति सा सत्यम् या चाऽसौ साऽपि मद्वीक्षया ज्ञानेन हता ननु न हता पुनर्दृश्यमानत्वात्तत्राऽऽह । आदेहान्तात्क्वचित्कदाचिद्बाधितैव ख्यातिर्भवति ॥ ३७ ॥

तदेवं विरक्तस्य परोक्षज्ञानवतः संन्यासं तद्धर्मांश्चोक्त्वा केवलं वैराग्यवन्तं विविदिषुं प्रत्याह । दुःखोदर्केष्विति । न जिज्ञासितो मद्धर्मो मत्प्राप्तिसाधनं येन सः ॥ ३८ ॥

मामेव मद्बुद्ध्यैव गुरुं परिचरेत् ततः परमेकश्चरेदित्याश्रममेवैतेति भावः ॥ ३९ ॥

अनधिकारिणः संन्यासं निन्दति द्वाभ्याम् । यस्त्विति । प्रचण्डोऽसाधक इन्द्रियसारथिर्बुद्धिर्यस्य सः ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

योगाभ्यासजन्यं ताभ्यां रहितश्च यः स केवलं त्रिदण्डमुपजीवति त्रिदण्डग्रहणमाश्रमान्तरलिङ्गानामुपलक्षणम् आश्रमलिङ्गानि तद्धर्माश्चाजितेन्द्रियस्य केवलजीवनोपायमात्रपर्यवसन्ना भवन्तीति त्रिदण्डमुपजीवतीत्युक्तम्—

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
ताभ्यामन्नमदत्त्वा वै भुक्त्वा चान्द्रायणञ्चरेदिति ॥

शास्त्राभिज्ञं यतिं ब्रह्मचारिणं चाग्रे भोजयन्ति हि ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

[1]वैराकरणे किन्निमित्तमत्राह । एक इति । परः सर्वोत्तमः आत्मा परमात्मा एक एव भूतेषु चराचरसंज्ञेषु आत्मनि स्वलिङ्गश्चावस्थितो हि यस्मात्तस्माद्धिष्ठानत्वाद्वैरं न कुर्यात्तदप्रियत्वादित्यर्थः । एको देवः सर्वभूतेषु गूढ इतिश्रुतेः अत्र दृष्टान्तमाह । स्वयञ्ज्योतीति । यद्वद्यथा आकाश उदपात्रेषु घटादिषु एक एव स्थितस्तथेत्यत्र विशेषस्तु—

घटादिषु महाकाशो निर्विशेषश्च सन्ततः ।
घटावयवरूपस्तु तथैवान्यो घटानुगः ॥
घटनाशेऽथ नाशः सन् मध्यमाकाश इष्यते ।
एकदेशाभिमानित्वादित्याकाशास्त्रयः स्मृताः ॥
महाकाशो विष्णुराजो विष्णुस्तत्र तु मध्यमाः ।
क्षुद्रविष्णुस्तदितर एवमात्मा त्रिधा स्मृतः ॥
महाखत्रपरस्त्वात्मा जीवा मध्यखवत्स्मृताः ।
घटानुगखवत्प्रोक्ता असुरा नित्यदुःखिनः ॥
महाकाशवशाः सर्वे आकाशा इतरे स्मृताः ।
परमात्मवशे तद्वज्जीवाः सर्वेऽपि संस्थिताः ॥
एवं विश्वात्मकमिदं जगत्पश्येद्यतिः सदा ।

इत्यस्मान्मानाद्गन्तव्यः केवलं नाकाशवत् भूतानां परमात्मनश्च व्याप्यव्यापकसम्बन्धोऽपि तु तस्माद्विशेषोऽप्यस्तीत्याह । भूतानीति । एकः परमात्मा एवात्मा व्यापकश्चादाता येषां तानीमान्येकात्मकानि कञ्चस्वः स्वार्थे विशिनष्टि—

भूतानामेक एवात्माप्येको भूतेषु सन्ततः ।
एको भूतानि चावृते तस्मादेकात्मकानि तु ॥

इति वचनात् अशनसिद्ध्यसिद्ध्योरपि मद्भक्तिन्हासो न कर्तव्य इति भावेनाह । अलब्ध्वेति । दैवस्य मम सन्निहितमधीनम् ॥ ३३ ॥

ननु तर्हि प्रयत्नोऽपि तदर्थं न कर्तव्य इति तत्राह । आहारार्थमिति । ननु नाहारं चिन्तयेत्प्राज्ञ इति निषेधः कथमत्राह । युक्तमिति । यावत्प्राणधारणार्थमपि चिन्तनं विहितत्वाद्युक्तं नवा मजीविष्यमिमानस्वादन्नीति श्रुतेः अशनालाभे देहस्य प्राणवियोगस्तेन देहस्य पञ्चत्वं वागादीनां स्वस्वकारणसम्पत्तिस्तत्र पुरुषार्थोपयोगितत्त्वविमर्शो न सम्भाव्यतेऽतः पुरुषार्थानुदयस्तो देहयात्रार्थमशनचिन्तनमावश्यकमित्याशयेनाह । तत्त्वमिति । तेन देहेन तत्त्वं विमृश्यते तत्तत्त्वम् ॥ ३४ ॥

फलितमाह । यदृच्छयेति ॥ ३५ ॥

शौचादिकर्माणि स्वभावत एव कुर्यान्नतु विधिचकितत्वेनेत्याशयेनाह । शौचमिति । ज्ञानी यतिः—

स्वभावतो धर्मपरो न विधेश्चकितश्चरेत् ।
अल्पं फलं हि चकिते स्वभावे फलमुत्तमम् ॥

इतिवचनात् ॥ ३६ ॥

अत्र हेतुमाह । नहीति । तस्य ज्ञानिनो विकल्पाख्या श्रौतस्मार्तविरुद्धकल्पनाख्या क्रिया न हि यस्मादतो ज्ञानी विधिं विहाय स्वत एव श्रौतादिक्रियां कुर्यादित्यन्वयः ज्ञानिनोऽपि यावद्देहं निषिद्धेऽपि मनोगमनात्कथं नास्तीत्यत्राह । मदीक्षयेति । आदेहान्तं प्रारब्धकर्मनिबद्धदेहपातपर्यन्तं ज्ञानिनोऽपि क्वचिन्निषिद्धविषये ख्यातिर्मनोगतिलक्षणा प्रतीतिः स्यात् सापि मदीक्षया ज्ञानप्रपन्नमत्कटाक्षनिरीक्षणेन हता स्वभक्तिमुद्बोधयितुमसमर्थः स्यादिति शेषः ततः प्रारब्धकर्ममूलदेहपातादनन्तरं मया सम्पद्यते मत्प्रसादेनाविर्भूतस्वरूपानन्दो भवतीत्यर्थः—

निषिद्धं मनसाकल्प्य भीतो विहितमाचरेत् ।
अज्ञो ज्ञस्य तु सङ्कल्पः स्वभावाद्विहितानुगः ॥
शरीरधर्मिणः क्वापि निषिद्धेऽपि मनो व्रजेत् ।
तथापि तस्य नानर्थो मोचनैवान्यथा व्रजेत् ॥

इति स्मृतेः ॥ ३७ ॥

एवंविधज्ञानप्राप्तावुपायमाह । दुःखोदर्केष्विति । उपाव्रजेदित्युपसर्गेण मुक्तिपर्यन्तं गुरुनिकटे निवासः कर्तव्य इति ज्ञायते ॥ ३८ ॥

शुश्रूषेत्सहितस्तावद्यावज्ज्ञानोदयो गुरुम् ।
ततः परं च शुश्रूषेद्यथा तस्य प्रियम्भवेत् ॥

इति स्मृत्यर्थं स्पष्टमाह । तावदिति । यावद्ब्रह्म मां विजानीयात्तावद्गुरुमेव परिचरेदित्यन्वयः आदृत इत्यनेन ज्ञानोदयानन्तरमपि गुरुशुश्रूषा कर्तव्येति ज्ञायते ॥ ३९ ॥

वेषमात्रधारिणो यतयः पूज्या इत्यस्मिन्पक्षे बाधकमित्याह । यस्त्वेति । प्रचण्डेन्द्रियाणां सारथिर्मनो यस्य स तथा त्रिदण्डं त्रिवेणुलक्षणम् ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्राप्यैश्वर्ये जाते आहारार्थं समीहेत कुतः यतस्तस्य प्राणानां मनआदीन्द्रियाणां धारणं स्थिरीकरणं युक्तम् अन्यथा त्वपरिपक्वस्याविक्षेपः स्यादेवेत्यर्थः । तद्धारणे च किं स्यात्तत्राह । तत्त्वमिति ॥ ३४ ॥ ३५ ॥

यथाहं लीलया स्वेच्छया नतु कर्मवश्यत्वेन चरामीति स्वशक्तिलेशप्राप्तिस्तस्य दर्शिता तत्र हेतुः ज्ञानी मत्स्फूर्तिमान् ॥ ३६ ॥

ननु तस्य प्रापञ्चिकशुभाशुभस्फूर्तेरनुगतत्वाद्विभेदवत्तापि स्यात् तत्राह । नहीति । विकल्पाख्या मत्तोऽन्यस्फूर्तिः ततः मया सम्पद्यते साष्टर्याख्यां मत्तुल्यसम्पत्तिं प्राप्नोतीत्यर्थः ॥ ३७—४२ ॥

---

[1] अस्य मूलं पाठ भेदात्पूर्वत्र ३२ गतम् ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कुतस्तस्य पिपृच्छिषाहेतुरित्यत आह । निवृत्त इति । सुहृदाम् बन्धूनां निधनाद्विह्वलः विक्षिप्तचित्तः तत्प्रशान्तयेऽपृच्छदित्यर्थः ॥ १२ ॥

प्रश्नस्योत्तरं वक्तुं प्रतिजानीते । तानिति । तान्मोक्षधर्मान् देवव्रतस्य भीष्मस्य मुखाच्छ्रुतान् ते तुभ्यमभिधास्यामि । ननु ज्ञानविज्ञानवैराग्यभक्तियोगबुभुत्सोः किं मोक्षधर्मोपदेशेनेत्यतस्तान्विशिनष्टि । ज्ञानेति । ज्ञानादिभिरुपबृंहितान् तत्सहितानित्यर्थः ॥ १३ ॥

तावज्ज्ञानमुपदिशति । नवेति । नव भावाः शब्दस्पर्शरूपरसगन्धा विसर्गशिल्पगत्युक्तयश्च रेतउत्सर्गो मूत्रपुरीषोत्सर्गश्चेत्युत्सर्गद्वयस्यैककोटित्वप्रापणेन नवेति निर्देशः अन्यथा दशेति स्यात् एकादशेन्द्रियाणि पञ्च महाभूतानि त्रयः सत्त्वादयो गुणाः एषु परिदृश्यमानेषु भूतेषु देवमनुष्यादिशरीरेषु एतान् भावान् अथैकं ज्ञानैकाकारमात्मवस्तु च जीत्यभिप्रायेणैकवचनं येन मया सहितं मदंशं मच्छेषतैकरसं जीवस्वरूपं चेत्यर्थः । अन्वीक्षेत तदेतदन्वीक्षणात्मकं ज्ञानमिति मम मया निश्चितं प्रकृतिपुरुषयाथात्म्यविवेचनमेव ज्ञानमित्यर्थः ॥ १४ ॥

अथ विज्ञानमुपदिशति । एतदेवेत्यर्द्धेन तथाशब्देन पूर्वश्लोकस्थप्रकृतिपुरुषाकारः परामृश्यते न तथा अन्यथा प्रकृतिपुरुषविलक्षणेनेत्यर्थः । एकेन येन मयैवोपायभूतेन यदेकं मत्स्वरूपं प्राप्यमिति शेषः एतदेव हि विज्ञानम् उपायोपेयभावेन मत्स्वरूपज्ञानमेव हि विज्ञानमित्यर्थः । विज्ञानमेव प्रपञ्चयति । स्थितीतिसार्द्धेन त्रिगुणात्मनां त्रिगुणात्मकप्रकृतिपरिणामात्मकानां भावानाम् देहानामेव जन्मस्थितिविनाशान् पश्येत् ॥ १५ ॥

किञ्च सृज्यात् सृज्यं शरीराच्छरीरान्तरं प्रति तदादावन्ते मध्ये च यदन्वियात् पुनश्च तत्प्रतिसंक्रामे शरीरप्रलये यत् शिष्येत एकरूपमवतिष्ठेत तदेव सत् प्रकृतिविविक्तमात्मस्वरूपमित्येतदपि विमर्शनं ज्ञानमित्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानं पृष्टं तस्य उत्तरत्वेन धर्माणां कथनं कथं सङ्गच्छत इत्यत उक्तं ज्ञानेति ॥ १३ ॥

येन ज्ञानेन भूतेषु जीवेषु स्थितान् नवैकादश पञ्च त्रीन् भावान् अष्टाविंशतितत्त्वान्यन्वीक्षेत मल्लक्षणां तत्तच्छक्तिस्वरूपपूर्वकं पश्यति एषु तत्त्वेषु तन्नियामकतया स्थितमेकं तत्त्वेभ्यः प्रधानं तत्र तत्त्वपतिं हरिमपि पश्यति तन्मम निश्चितं ज्ञानमपि पृथिव्यादिपञ्चभूतबुद्ध्यहङ्कारचित्तमूलप्रकृतयो नव मनसा सह श्रोत्रादीन्द्रियाण्येकादश त्रयः सत्त्वादयो गुणाः शब्दादयः पञ्च ज्ञात्वा तत्त्वानि तेष्वीशं सर्वतत्त्वेश्वरं प्रभुं जानन् ज्ञानी भवेत् इति ॥ १४ ॥

नन्विदं ज्ञानं चेद्विज्ञानं तर्हि किं तत्राह एतदेवेति । हिशब्दो विशेषद्योतकः स्वस्य अविशेषतो योग्यं ज्ञानं ज्ञानिपदस्य ज्ञानेन सहितमेतदेव ज्ञानं विज्ञानं विद्धीति शेषः स्वस्य योग्यं ज्ञानं विशेषतः पूर्वोक्तमेव यो जानन् स विज्ञानी भवत्युतेति वचनमत्र मानं तस्यापि तत्त्वेशविषयत्वात्कथं विज्ञानं नेति तत्राह ॥ न तथेति । यद्यपि तत्तत्त्वं सर्वेश्वरविषयं तथापि तथैव पूर्वोक्तप्रकारेण तत्त्वानि ज्ञात्वा सर्वतत्त्वेश्वरं विषयीकुर्वन् ज्ञानं विज्ञानं न भवति स्वयोग्यपुरुषार्थसाधनत्वाभावात्तस्मात् स्वाविस्वज्ञानविशिष्टमेव विज्ञानमित्यर्थः । हरेस्तत्त्वेष्वेकत्वात्प्राधान्यं कुत इत्यत आह । एकेनेति । नोऽस्माकं तत्त्वानां मध्ये एकेनान्यानिरपेक्षेण तत्त्वेन यद्यत्र स्थित्वा यदाधारत्वेन त्रिगुणात्मनां सत्त्वादिगुणनिर्मितदेहानां भावानां स्थित्युत्पत्त्यप्ययाः स्युः ॥ १५ ॥

यच्च तत्त्वमादावन्ते सृष्टेः प्राक् प्रलयादूर्ध्वं मध्ये स्थितिकाले च सर्वेषु पुनस्तत्प्रतिसंक्रामे तस्य सृष्टस्य संहारे च सृज्यं जगदन्वयात् प्रविशति । यच्च शिष्येत अवशिष्टमविनाशि तदेव सत् स्वतन्त्रं सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णो नचापरं अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारतेति वचनाद्धरिरेव तत्त्वेषु प्रधानं तत्त्वमिति भावः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वेषामनन्यशरणत्वादित्याह । तापत्रयेणेति द्वाभ्याम् । अमृतमत्र या निर्वृतिस्तनुभृतामित्यादिन्यायेन ब्रह्मानन्दतोऽप्यधिक आनन्दः ॥ ९ ॥

आपवर्ग्यभक्तियोगतात्पर्यकैः वागमृतैरासिञ्च यथावर्णविधानमपवर्गश्च भवतीत्यादिपञ्चमस्कन्धगद्यात् ॥ १० ॥

तत्र तस्य विस्तरेण शुश्रूषामाशङ्क्य विस्तरार्थमेव सङ्क्षेपेण कथयिष्यामीति विस्तरं सूचयन्नाह । इत्थमिति त्रिभिः ॥ ११—१४ ॥

तर्हि एतत्पूर्वोक्तं यज्ज्ञानं तदेव विज्ञानमुच्यते कदेत्यपेक्षायामाह । न तथेति । अयं भावः शब्देन परोक्षज्ञाने हि आधाराधेयत्वेन कार्यकारणत्वेन वा द्वयोरप्यवधानं भवत्येवेति तस्य ज्ञानस्य निदिध्यासनेन शब्दमात्रेणैव वा परमात्मनोऽपरोक्षस्फुरणे तु नान्यत्स्फुरेदित्यस्य विज्ञानत्वमिति ॥ १५ ॥

सृज्यात्सृज्यमिति "श्रुतेस्तु शब्दमूलत्वात्" इति न्यायेन परिणाम एव स्वीकृतो नतु विवर्त्तः कल्पात्कल्पमित्यनुक्तेः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु ज्ञानेनैव कृतार्थीभव किं शुद्धभक्तियोगप्रश्नेनेत्यत आह । तापत्रयेणेति । अमृते ब्रह्मानन्दादप्यधिकं सुखप्रदं माधुर्यमभितो वर्षतीति तस्मात् यदुक्तं या निर्वृतिस्तनुभृतां तव पादपद्मध्यानात् सा ब्रह्मणि स्वमहिमन्यपि नाथ । माभूदिति तेन ज्ञानं विनापि संसारक्षयस्य ज्ञानसाध्यब्रह्मानन्दादप्यधिकानन्दस्य च लाभाद्भक्तिः पृच्छ्यत इति भावः ॥ ९ ॥

ननु तर्हि शुद्धभक्तियोगेनैव कृतार्थीभव किं ज्ञानयोगप्रश्नेनेत्यत आह । इत्थमिति । अयमर्थः शुद्धभक्तियोगस्य यादृच्छिकमहत्कृपैकलभ्यत्वान्न पुरुषप्रयत्नमूलकत्वं ज्ञानयोगस्तु निष्कामकर्मजन्यज्ञानेन ज्ञातत्त्वपदार्थैः स्वत एव सुलभः इत्ययं पुरुषप्रयत्नसाध्यस्तस्मादप्राप्तशुद्धभक्तियोगा अप्येवं निस्तरेयुरित्यतः ज्ञानं पृच्छ्यत इति आपवर्ग्यैरपवर्गादिवचनामृतैरासिञ्चेति त्वन्मुखचन्द्रोदितं ज्ञानामृतमेव स्वर्गापवर्गजनकं भवतीति भावः ॥ १०—१३ ॥

तत्र ज्ञानमाह । नवेति । प्रकृतिपुरुषमहदहङ्कारपञ्चतन्मात्राणि

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एकादश इन्द्रियाणि पञ्च महाभूतानि त्रयो गुणाः एतान् भावान् अष्टाविंशतितत्त्वानि भूतेषु ब्रह्मादिस्थावरान्तेषु कार्येषु अनुगतानि येन ज्ञानेनेक्षेत अथ एष्वपि भावेषु अष्टाविंशतितत्त्वेषु एकं परमात्मतत्त्वम् अनुगतं येनेक्षेत कार्य्यकारणात्मकं जगत् पश्यन् परमकारणात्मकमेवैतत् नतु ततः पृथगिति येन पश्येत्तज्ज्ञानमित्यर्थः ॥ १४ ॥

विज्ञानमाह । एतदेवेत्यर्द्धेन । एतदेव एतत् ज्ञानमेव विज्ञानं भवति कथमित्यत आह । न तथेति । येन परमात्मना एकेन यद्विश्वमनुगतं यथा पूर्वमीक्षितं तथा नेक्षते अयमर्थः ज्ञानदशायां परोक्षीभूतेन परमात्मना अनुगताः सर्वे परोक्षाः परोक्षीभूता भावा दृष्टाः विज्ञानदशायां तु एकः परमात्मैवापरोक्षीभूत ईक्षितो भवति तदनुभवानन्दादेव तत्कार्याणां भावानामीक्षणेऽवकाशो न भवेदित्यद्वितीयात्मानुभवः ज्ञानदशायामेकेन परमात्मनैवानुगतानां कार्याणां सर्वेषां परमकारणात्मकत्वात् परमात्मैक्यमेव यदुक्तं तदुपपादयति । स्थितीति सार्द्धेन । त्रिगुणात्मनां भावानां कार्याणां स्थित्युत्पत्त्यप्ययान् पश्येदित्युत्पत्तिस्थितिप्रलयवत्त्वात्तेषामनित्यत्वं पश्येदित्यर्थः । अनित्यत्वादेव सार्वकालिकसत्यत्वाभावात्तेषामसत्यत्वं ज्ञानिनो मन्येरन्निति भावः ॥ १५ ॥

सत्यः पुनरेकः परमात्मैवेत्याह । आदौ उत्पत्तौ अन्ते परिणामान्तरापत्तौ च कारणत्वेन मध्ये च आश्रयत्वेन सृज्यात् सृज्यं कार्यात् कार्यं प्रति यदन्वियात् अनुगच्छेत् तत्प्रतिसंक्रामे तेषां प्रलये च यदवशिष्येत तदेव सत् यथा महदादीनां स्वस्वकार्य्यं प्रति कारणत्वेऽपि सर्वकारणत्वाभावान्न कारणत्वं किन्त्वेकः परमात्मैव कारणं तथैव तेषां सत्यत्वेऽपि सार्वकालिकसत्यत्वाभावान्न सत्यत्वं किन्त्वेकः परमात्मैव सत्य इति ज्ञानदशायामपि तदेवाद्वयत्वं पश्येदिति भावः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्वच्चरणारविन्दच्छत्रं नान्यतः संसारगर्ते पतितं ज्ञानभक्त्युपदेशेन मां समुद्धरेत्याह । तापत्रयेणेति द्वाभ्याम् । अङ्घ्रिद्वन्द्वमेवातपत्रं तस्मात् अमृतमासितो वर्षतीति तत्तस्मात् ॥ ९ ॥

आपवर्ग्यं: अपवर्गसाधनभूतज्ञानभक्तिविषयैः ॥ १०—१२ ॥

ज्ञानादयः उपबृंहिताः वर्णिताः यैस्तान् सारमात्रतोऽभिधास्यामि ॥ १३ ॥

तत्र ज्ञानविज्ञाने कथयति । नवेति सार्द्धेन । जीवप्रकृतिमहदहङ्कारान् पञ्च तन्मात्राणि चेति नव एकादशेन्द्रियाणि पञ्च महाभूतानि सत्वादीन् त्रीन् गुणान् एतान् भावान् अष्टाविंशतिपदार्थान् भूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु अन्वयेषु येनेक्षेत कारणत्वेन पश्येत् अथैकं सर्वात्मानं परमकारणं निःसमानातिशयं चिदचिच्छक्तिमन्तमेकं माम एतेषु अष्टाविंशतिपदार्थेषु येनेक्षेत तन्मम निश्चितं ज्ञानं भूतानां चेतनाचेतनात्मकानामष्टाविंशतिसंख्याकैः जीवप्रकृत्यादिभिः सहैक्यं असम्भाव्य तेषामैक्यं परमकारणेन मया सह यदा सम्भावयति तदा ज्ञानवान् भवतीति भावः ॥ १४ ॥

येत् यदा एकेन तथा नेक्षेत परमकारणेन सहैक्यं न पश्येत् किन्तु तत्तदसाधारणस्वरूपगुणादिबुभुत्सया वैलक्षण्यं पश्येत् एतदेवहि विज्ञानम् नन्वेतत्सर्वस्यैकात्मकत्वे सति घटेतेत्यत एकात्मकत्वं सर्वस्यैकोपादानतया दर्शयति । स्थितीति सार्द्धेन । त्रिगुणात्मनां सत्वादिकार्याणां प्राकृतपदार्थानामित्यर्थः स्थित्यादीन् पश्येत् ॥ १५ ॥

किंतद्यतः स्थित्यादयो भवन्तीत्यपेक्षायामाह । आदाविति । आदावुत्पत्तौ अन्ते परिणामान्तरापत्तौ मध्ये च सृज्यात्कार्यात् सृज्यान्तरं यदन्वियात् तत्प्रतिसंक्रामे सृज्यसंहारे च यदवशिष्येत तदेव एतत्सर्वकारणम् एवकारः परमाण्वादिव्यावृत्त्यर्थः ॥ १६ ॥

---

### भाषा टीका ।

हे ईश ! इस घोर संसार मार्ग में आध्यात्मिक आधिभौतिक आधिदैविक इन तीन तापों से तपायमान दुखित पुरुष के वास्ते अमृत के वर्षाने वाले आपके चरणरूप छत्रके विना दूसरा कोई रक्षक मेरेको नहीं दीखता है ॥ ९ ॥

हे महानुभाव ! इस संसार रूप बिलमें पड़े हुवे कालरूप सर्प से ग्रसे हुए क्षुद्र सुखोंकी तृष्णा वाले इस संसारी जीवको कृपा करके आप उद्धार करो मोक्षदायक अपने वचनों से सींचन करो ॥ १० ॥

श्रीभगवान् उवाच इसी प्रकार से पूर्व काल में धर्म जानने वालों मे श्रेष्ठ भीष्मजी से हम सब लोगों के सुनतेही युधिष्ठिर महाराज ने प्रश्न किया रहा ॥ ११ ॥

भारत युद्ध जब हो चुका तब अपने बन्धुओंके मरने से युधिष्ठिर महाराज विह्वल होगये तब बहुत से धर्मों को पूछा फिर भीष्मजी से मोक्ष धर्मों को पुछते भये ॥ १२ ॥

अब भीष्मजी के मुख से सुने हुपे ज्ञान वैराग्य विज्ञान श्रद्धा भक्ति से युक्त उन प्रश्नो को उत्तर सहित मैं तुम से कहूंगा ॥ १३ ॥

प्रकृति पुरुष महान् अहङ्कार पञ्च भूतों की शब्दादितन्मात्रा एकादश इन्द्रिय पञ्च महाभूत तीन गुण ऐसे अठाइस एक परमात्मा इतने तत्वों को सम्पूर्ण प्राणि मात्रमें जिससे जान जावे वही ज्ञान हमारे मतमे निश्चय ज्ञानहै ॥ १४॥

फिर इसी का नाम विज्ञान है जिससे कि एकही से नहीं किन्तु प्रकृति पुरुष काल के सहित परमात्मा सब त्रिगुण भाव मात्रोंकी उत्पति स्थिति प्रलय को करते हैं ॥ १५ ॥

सब पदार्थों के आदि में अन्तमें और मध्यमें एक कार्य मैसे दूसरे कार्यको जो व्याप्त होकर जाताहै फिर उसकार्य के नाश होनेपर जो रहता है वही परमात्मा सत्य सदा एक रूपहै ॥ १६ ॥

---

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।
प्रमाणेष्वनवस्थानाद्विकल्पात् स विरज्यते ॥ १७ ॥
कर्मणां [1]परिणामित्वादाविरिञ्चादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १८ ॥
भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ! ।
पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १९ ॥
श्रद्धाऽमृतकथायां मे शश्वन् मदनुकीर्तनम् ।
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ २० ॥
आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ।
मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः ॥ २१ ॥
मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।
मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥ २२ ॥
मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ।
इष्टं दत्तं हुतं [2]जप्तं मदर्थं यद्व्रतं तपः ॥ २३ ॥
एवं [3]धर्मैर्मनुष्याणामुद्धवाऽऽत्मनिवेदिनाम् ।
मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वैराग्यमाह। श्रुतिरिति द्वाभ्याम्। श्रुतिर्नेह नानास्ति किञ्चनेत्यादिः प्रत्यक्षं घटादिकार्यं तन्त्वादिव्यतिरेकेण न दृश्यते ऐतिह्यं महाजनप्रसिद्धिः अनुमानं विमतं मिथ्या दृश्यत्वाच्छुक्तिरजतादिवदित्यादि एवं प्रमाणचतुष्टयम् एतेष्वनवस्थानादेतैर्बाधितत्वात् स एवं सर्वानुगतं सत्यमात्मतत्त्वं पश्यन्विकल्पस्य च मिथ्यात्वात्ततो विरज्यते विरक्तो भवतीत्यर्थः ॥ १७ ॥

ननु वेदोक्तस्वर्गादिसुखाशया न विरज्येतेत्याह। कर्मणामिति। आविरिञ्चाद्ब्रह्मलोकपर्यन्तमदृष्टमपि सुखममङ्गलं दुःखरूपं नश्वरं च पश्येत् ॥ १८ ॥

भक्तियोगं सकारणमाह। भक्तियोगः पूर्वमुक्त एव तथापि तस्मिन्प्रीतिं प्राप्नुवते तुभ्यं पुनश्च कथयिष्यामि ॥ १९ ॥

श्रद्धा श्रवणादरः शश्वदिति सर्वत्रानुषज्जते मदनुकीर्तनं श्रवणानन्तरं मत्कथाव्याख्यानमित्यर्थः ॥ २० ॥ २१ ॥

अङ्गचेष्टा लौकिकीक्रिया वचसा लौकिकेनापि मद्गुणाना-मीरणम् कथनम् ॥ २२ ॥

मदर्थं मद्भजनार्थम् तद्विरोधिनोऽर्थस्य परित्यागः भोगस्य तत्साधनस्य चन्दनादेः सुखस्य पुत्रोपलालनादेः इष्टादि वैदिकं सत्कर्म तदपि मदर्थं कृतं भक्तेः कारणमित्यर्थः ॥ २३ ॥

भक्तिः प्रेमलक्षणा संजायते अस्य भक्तस्यान्यः कोऽर्थः साधनरूपः साध्यरूपो वा ऽवशिष्यते सर्वोऽपि स्वत एव भवतीत्यर्थः ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

विमतं विवादास्पदीभूतम् अत्र विश्वं पक्षीकृत्य मिथ्यात्वं साध्यते दृश्यत्वं हेतुः यद्दृश्यं तन्मिथ्या यथा शुक्तिरजतादीत्यन्वयव्याप्तिः यन्मिथ्या न भवति तन्न दृश्यं यथात्मेति व्यतिरेकव्याप्तिः एतैः श्रुत्यादिप्रमाणैः विकल्पस्य बाधितत्वात् मिथ्यात्वेन ज्ञातत्वात् सर्वानुगतमिति घटोऽस्ति पटोऽस्ति घटोऽनुभूयत इत्येवं सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्त इत्यात्मतत्त्वस्य सत्तानुभूतिरूपतया सर्वप्रतीत्यधिष्ठानत्वात् सर्वानुगतत्वं यथैकैव रज्जुरधिष्ठानतया सर्पभूदलनाम्बुधारादण्डादिष्वनुगता तद्वदित्यर्थः। विकल्पस्य च विविधं कल्प्यत इति विकल्पः प्रपञ्चस्तस्य ततः विकल्पात् ॥ १७ ॥

कर्मणामग्निहोत्रचातुर्मास्यपशुसोमादीनां परिणामित्वादिति कारित्वात् कार्यत्वादिति यावत् दुःखरूपं भोगकालेऽपि स्पर्धाऽसूयादिमत्त्वात् ॥ १८ ॥

---

[1] फलरूपत्वात् [2] भुक्तं इति वि० वीर० पाठः [3] धर्मः इति वीर० पाठः।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी

भक्तियोगं प्रेमलक्षणं सकारणं कारणेन साधनभक्तियोगेन सहितं तथापि पूर्वमुक्तत्वेऽपि कारणमुपायम् ॥ १९ ॥

श्रद्धेति चतुष्कम् श्रद्धा कथायाः सर्वपुरुषार्थोपादने विश्वासः अत एव श्रवणादर इति निष्कृष्टोऽर्थः पूजायामुपचारैरर्चने स्तुतिभिः स्तोत्रैः १ परिचर्यायां परिचर्या तु सेवोपकरणादिपरिष्क्रिया तथा प्रकीर्णकच्छत्रचामरादिभिरुपासनमित्युक्तलक्षणायाम् अभ्यधिका मत्पूजातोऽपि तत्र मम सन्तोषविशेषात् मन्भक्तेस्तत्र तत्र ममैव स्फुरणम् २ ॥ २० ॥ २१ ॥

मदर्थेषु मन्निमित्तकार्येषु लौकिकेनापि इति वेदोक्तकथाव्यावृत्तिः तथा चानुकीर्तनेन न पौनरुक्त्यं सर्वकामविवर्जनमिति मद्व्यतिरिक्तेच्छावर्जनं मय्यर्पितात्मेच्छति मद्भिनान्यदित्युक्तेः ३ ॥ २२ ॥

तद्विरोधिनो भजनव्याघातकस्यार्थस्य द्रव्यस्य सुखेन पौनरुक्त्यमाशङ्क्य भोगशब्दस्य तत्साधने चन्दनादौ वृत्त्या इष्टमित्यादयो भावे निष्ठा ४ ॥ २३ ॥

धर्मैर्भागवतधर्मैः श्रद्धादिभिः स्वत एव भवतीति परमपुरुषार्थशिरोमणौ तत्र सर्वसुखान्तर्भावात् २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रुतिः वेदपूर्वभागः अनवस्थानात् अनवस्थानमस्थैर्यं दृढानिश्चयः वेदान्तव्यतिरिक्तप्रमाणेषु अन्यपरतया तत्त्वानिश्चयाभावादित्यर्थः विकल्पात्पुत्रपश्वादिफलवैविध्यात् ॥ १७—१९ ॥

मदनुकीर्तनं स्तुतिभिः जन्मकर्मप्रतिपादकवचनम् ॥ २०—२५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ वैराग्यमुपदिशति । श्रुतिरिति द्वाभ्यां चतुष्टयमित्यनन्तरं तेनेति शेषः प्रमाणशब्दः कर्मणि ल्युडन्तः तेन चतुष्टयेन प्रमाणेषु प्रमितेषु कर्मफलेषु स उक्तविधज्ञानसम्पन्नो विरज्यते इत्येतद्वैराग्यमित्यर्थः । ऐतिह्यशब्दः श्रुतिमूलकस्मृतिपुराणादीनामप्युपलक्षणार्थः तत्र श्रुत्यादिप्रमितं कर्मफलं स्वर्गादिप्रत्यक्षसिद्धं कृष्यादिकर्मफलसस्यादि अनुमानसिद्धं स्वारोग्यादि तस्यौषधादीनामारोग्यजनकत्वानुमानसिद्धत्वात् अत्रानुमानं वैराग्यहेतुतयोक्तं तच्च श्रुत्यैव प्रदर्शितं "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति इदं हि कृष्यादिकर्मफलदृष्टान्तेन कर्मफलत्वहेतुना पुण्यफलस्य नश्वरत्वमनुमापयति अस्मिन् पक्षे चतुष्टयमित्यनन्तरं तत्र तेनेति च शेषः तत्र श्रुत्यादिप्रमितेषु फलेषु तेनत्यनेनानुमानं परामृश्यते प्रत्यक्षग्रहणं दृष्टान्तार्थम् एतच्च स्वयमेव स्फुटीकरिष्यति । अदृष्टमपि दृष्टवदिति अत्रानुमानस्यानुमेयद्वारा विरक्तिहेतुत्वं पुण्यचितो लोकः क्षीयते इति च पयग्रहणमन्येषामुपलक्षणार्थं चेति चाभिप्रयन् साध्यधर्मान् विरक्तौ हेतुतया निर्दिशति । अनवस्थानाद्विकल्पात् परिणामित्वादिति कर्मणामित्येतत्फलपरं कर्मणां कर्मफलानामनवस्थानादेकरूपतया स्थित्यभावाद्विकल्पात्तारतम्यात् परिणामित्वाद्विकारित्वाद्विनाशित्वाच्च विरज्यत इति सम्बन्धः विरक्तिमेवाभिनयेन दर्शयति । आविरिञ्च्यादित्यादिना दृष्टवददृष्टं ब्रह्माधिपत्यपर्यन्तं सर्वमपि श्रुत्यादिप्रतिपन्नं कर्मफलं नश्वरमत एवामङ्गलं दुःखगर्भं चेति विपश्चित् ज्ञानी पश्येत् ॥ १७—१८ ॥

त्वद्भक्तियोगं च मद्भक्तिमृग्यामिति भक्तियोगः पृष्टः तत्र तस्य विस्तरेणोपपादितत्वात् तत्स्वरूपबुभुत्साप्रयुक्तः प्रश्नः किन्तु तदन्तरङ्गविविदिसाप्रयुक्त इत्यभिप्रयन् तदन्तरङ्गसाधनानि वक्तुं प्रतिजानीते । भक्तियोग इति । प्रीयमाणाय भक्तियोगश्रवणार्थं प्रीतियुक्ताय यद्वा मद्विषयप्रीतियुक्ताय अनेन पात्रता व्यज्यते पूर्वोक्तः सपरिकर उक्त इत्यर्थः । अतः सोऽधुना नोपदेष्टव्य इति भावः । इदानीं तूक्तेष्वेव भक्तियोगकारणेषु यत्परमुत्कृष्टमन्तरङ्गकारणं तत्पुनः कथयिष्यामीत्यर्थः कारणमित्येकवचनं सामान्याभिप्रायकम् ॥ १९ ॥

कानि पुनस्तानीत्यत आह । श्रद्धेत्यादिना मे ममामृततुल्या या कथा तस्यां तच्छ्रवणादौ इत्यर्थः । श्रद्धा आदरः मदनुकीर्तनं शश्वदिति सर्वत्रानुषज्यते मद्गुणकीर्तनपरिनिष्ठा आसक्तिः स्तुतिभिः जन्मकर्मप्रतिपादकवचनैः ॥ २० ॥

परिचर्या भगवन्मन्दिरसम्मार्जनोपलेपादिक्रिया पूजात्वावाहनादिषोडशोपचारात्मिका इति न पौनरुक्त्यं सर्वाङ्गैः

> पादाङ्गुलिभ्यां जानुभ्यां शिरसा चावनीं स्पृशन् ।
> बद्धाञ्जलिर्नमस्कुर्यात् पञ्चाङ्गः स उदीर्यते ॥
> निधाय दण्डवद्देहं प्रसार्य चरणौ करौ ।
> बद्ध्वा मुकुलवत्पाणी प्रणामो दण्डसंज्ञितः ॥
> पादौ शिरस्तथा हस्तौ निकुञ्च्य मुकुलाकृती ।
> मनोबुद्ध्यभिमानैश्च प्रणामोऽष्टाङ्गसंज्ञितः इति ॥

विहितैः सर्वैरङ्गैः अभ्यर्चिका मद्भक्तानां पूजा च सर्वभूतेषु मन्मतिः ... ॥ २१ ॥

मदर्थेषु मदाराधनोपकरणतुलसीपुष्पार्जनेषु कर्मसु निमित्तभूतेषु अङ्गचेष्टा कायव्यापारः वचसा लौकिकेनापि मद्गुणानामीरणं कथनमतः स्तुतिभिः स्तवनमित्यनेन न पौनरुक्त्यम् मय्यर्पणं समाधानं सर्वकामविवर्जनं प्रयोजनान्तरानभिसन्धिः ॥२२॥

मदर्थे मत्प्रीत्यर्थे अर्थपरित्यागः वित्तव्ययः भोगस्य तत्साधनस्य चन्दनादेः सुखस्य पुत्रोपलालनादेश्च परित्यागः इष्टं यागादिवैदिकं कर्म दत्तं दानं हुतं होमः भुक्तमतिथिभोजनं व्रतमेकादश्युपवासादि तपः अन्यदपि शास्त्रीयकायक्लेशादिकम् एतत्सर्वं मत्प्रीत्यर्थं कृतं मद्भक्तेः कारणमित्यर्थः ॥ २३ ॥

एवं धर्म इत्यनुक्तसंग्राहकं तत्र प्रदर्शनार्थमाह । आत्मनिवेदनम् । आत्मशब्दस्तदनुबन्धिनामप्युपलक्षणार्थः निवेदनं भगवदायत्तत्वानुसन्धानं मयीत्यस्यैश्य इत्यादिः एभ्यो धर्मेभ्यो मयि भक्तिः प्रीतिरूपसञ्जायते किन्तत इत्यत आह । अस्य सञ्जातभक्तियोगस्य को नु पुरुषार्थोऽवशिष्यते सर्वोऽपि सुलभ एवेति भावः ॥ २४ ॥

श्रीभगवानुवाच ॥

अहिंसा सत्यमस्तेयमसंगो ह्रीरसंचयः।
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाभयम् ॥ ३३ ॥
शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम्।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥ ३४ ॥
एते यमाः सनियमा उभयोर्द्वादश स्मृताः।
पुंसामुपासितास्तात! यथाकामं दुहन्ति हि ॥ ३५ ॥
शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः।
तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

निःसमातिशयस्य कारणस्य आत्मनः, परमात्मनो मम दर्शनम् ऐश्वर्यमणिमादयः इति। अणिमादयोऽत्र मुक्तिप्रतिबन्धभूताः मुमुक्षुहेयाः सिद्धयो नोक्ताः अपि तु तासामष्टौ मत्प्रधाना इति स्वगुणातया प्रागुक्ताः "परमं साम्यमुपैति, मम साधर्म्यमागता" इति श्रुतिस्मृतिप्रोक्तमुक्तगुणविशेषाः बोध्याः ॥ २७ ॥

धर्मादीनां व्याख्याविशेषं श्रुत्वा यमादीनपि पृच्छति। यम इति ॥ २८ ॥

इष्टं हितं धनं किम् ॥ २९ ॥

परेति विद्यादीनां विशेषणम् ॥ ३० ॥

श्रीमंगडनम् ॥ ३१ ॥

प्रश्नान् प्रश्नविषयान् अर्थान् विपरीतान् अधमादीन् ॥ ३२-३३॥

भाषा टीका।

अब परमात्मा के विषै चित्त अर्पण किया जाता है तब सत्वगुण से वर्धित होताहै औ शांत होजाता है तब धर्म ज्ञान वैराग्य ऐश्वर्य इन गुणोंको प्राप्त करता है ॥ २५ ॥

जब देहादि विकल्पों मे अर्पित होता है इन्द्रियोंके साथ दौड ता रहता है तब रजोगुणी होजाता है असत् पदार्थमे लगता है तब विपरीत अधर्म अज्ञान अवैराग्य अनैश्वर्य इन गुणोंको प्राप्त करता है ॥ २६ ॥

धर्म वही है कि जिसमें मेरी श्रवण कीर्तनादि भक्ति होवे परमात्मा का सर्वत्र व्याप्ति देखना वही ज्ञान है विषयोंमें आसक्ति नहीं करना यही वैराग्य है अणिमादिकों की प्राप्ति ऐश्वर्य है ॥ २७ ॥

उद्धव उवाच हे अरिकर्शन ! शत्रुनाशक ! यम कितने प्रकार का है नियम कितने हैं हे कृष्ण ! कौन शम है हे प्रभो ! कौन दम है तितिक्षा कौन है धृति कौन है ॥ २८ ॥

ज्ञान क्या है तप क्या है शौर्य क्या है सत्य क्या है ऋत क्या है त्याग क्या है धन क्या है इष्ट क्या है यज्ञ क्या है दक्षिणा क्या है ॥ २९ ॥

हे श्रीमन् ! पुरुष का बल क्या है हे केशव ! भग क्या है लाभ क्या है विद्या क्या है लज्जा क्या है उत्तम श्री क्या है सुख क्या है दुःख क्या है ॥ ३० ॥

पंडित कौन है मूर्ख कौन है मार्ग कौन है खोटा मार्ग कौन है स्वर्ग कौन है नरक कौन है बंधु कौन है घर कौन है ॥ ३१ ॥

धनी कौन है दरिद्र कौन है कृपण कौन है कौन ईश्वर है हे सत्पुरुषों के पति ! इतने मेरे इन प्रश्नों के उत्तर कहिये औ इन के विपरीत जो हैं तिन को कहिये ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यमनियमानाह। अहिंसेति त्रिभिः। अस्तेयं मनसापि परस्वाग्रहणम् आस्तिक्यं धर्मे विश्वासः ॥ ३३ ॥

शौचं बाह्यमाभ्यन्तरं चेति द्वयम् अतो द्वादश नियमाः श्रद्धा धर्मादरः ॥ ३४ ॥

उभयोः श्लोकयोर्ये स्मृतास्ते यमा नियमाश्च यद्वा उभयोः प्रवृत्तनिवृत्तयोः मुमुक्षोर्यमा मुख्याः सकामस्य नियमा मुख्याः स्मृता इत्यर्थः। अत्र हेतुमाह हि यस्मादुपासिताः सेविताः सन्तः पुंसां प्रवृत्तानां निवृत्तानां च यथाकामं कामानुसारेण मोक्षमभ्युदयं च दुहन्तीति ॥ ३५ ॥

मुमुक्षोरुपादेयान् शमादीन् हेयांश्च दुःखादीन् महाजनप्रसिद्धेभ्यो विलक्षणानाह। शम इत्यादिना यावत्समाप्ति। एतेनैव तेद्विपरीता अशमादयोऽप्युक्ताः शमो मन्निष्ठता बुद्धेर्नतु शान्तिमात्रम् दम इन्द्रियसंयमो न चौरादिदमनम् तितिक्षा विहितदुःखस्य संमर्षः सहनं न भारादेः जिह्वोपस्थयोर्जयो वेगधारणम् धृतिर्न स्वजुगुप्सागमात्रम् ॥ ३६ ॥

दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम् ।
स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥ ३७ ॥
ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ।
कर्मस्वसंगमः शौचं त्यागः संन्यास उच्यते ॥ ३८ ॥
धर्म इष्टं धनं नॄणां यज्ञोऽहं भगवत्तमः ।
दक्षिणा ज्ञानसंदेशः प्राणायामः परं बलम् ॥ ३९ ॥
भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः ।
विद्यात्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दण्डो भूतद्रोहस्तस्य त्यागो दानं न धनार्पणम् कामत्यागो भोगोपेक्षा तपो न कृच्छ्रादिः स्वभावो वासना तस्य विजयः प्रतिबन्धः शौर्यं न विक्रान्तिः समं ब्रह्म तस्य दर्शनमालोचितं सत्यविषयत्वात्सत्यं न यथार्थभाषणमात्रम् ॥ ३७ ॥

अन्यच्च ऋतं सूनृता सत्या प्रिया च वाक् एवं च ऋतसत्ययोः स्फुट एव विवेकः क्रमप्राप्तं त्यागं व्याख्यातुमादौ ततोऽर्थभेदेन शौचं व्याचष्टे तस्यापि मलत्यागरूपत्वे त्यागाभेदप्रतीतेः कर्मस्वसङ्गमोऽनासक्तिः शौचं त्यागस्तु संन्यास इति तयोर्भेद इत्यर्थः ॥ ३८ ॥

नृणामिष्टं धनं धर्मो न पश्वादिसाधारणम् भगवत्तमः परमेश्वरोऽहमेव यज्ञः मदनुवृत्त्या यज्ञोऽनुष्ठेयो न क्रियाबुद्ध्येत्यर्थः यज्ञार्थं दानं दक्षिणा सा च ज्ञानोपदेशो न हिरण्यादिदानम् तेन हि यज्ञरूपो विष्णुः प्राप्यते दुर्दमदमनं बलं तच्च मनोदमनहेतुत्वात्प्राणायाम इति ॥ ३९ ॥

लाभं व्याचिख्यासुः प्रथमं भगं ततो भेदेन व्याचष्टे लोके तयोरभेदप्रसिद्धेः भगो भाग्यं तच्च मे ऐश्वरो भावो मदीयमैश्वर्यादिषाड्गुण्यमित्यर्थः । उत्तमो लाभस्तु मद्भक्तिर्न पुत्रादिः विद्या चाऽऽत्मनि प्रतीतस्य भेदस्य बाधो न ज्ञानमात्रम् अकर्मसु जुगुप्सा हेयत्वदर्शनं ह्रीर्न लज्जामात्रम् ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

अहिंसेति त्रिकम् । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा इति पतञ्जलिसूत्रे पञ्चानां परिग्रहोऽत्र तु द्वादशानामिति संख्यातो वैलक्षण्यम् एवम् । शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमा इत्यस्मिन् सूत्रे पञ्चानां नियमानाम् परिग्रह इह तु द्वादशानामिति तत एव तत् ॥ ३३ ॥

बाह्यमाभ्यन्तरं चेति तत्र बाह्यं मृज्जलादिभिः कायादिप्रक्षालनम् । आभ्यन्तरं मैत्र्यादिभिश्चित्तमलानां प्रक्षालनम् । जपश्च स्वाध्यायापरपर्यायः प्रणवपूर्वाणां मन्त्राणां सुबद्धृष्टयाम् । तपश्चान्द्रायणादि एकादश्यादिव्रतं वा । सूत्रे निष्कामतया सर्वक्रियाणां परमेश्वरेऽर्पणलक्षणमीश्वरप्रणिधानम् । अत्र

तु स्वरूपतो विलक्षणानां होमादीनां परिग्रह इति वैलक्षण्यं व्याख्यातम् ॥ ३४ ॥

प्रथमार्थे मूलोक्तपद्यस्य मूल एवं संख्यापरिग्रहस्य कुत्राप्यनुक्तत्वात् अधिकारिनिर्णयानभिधानाच्च यद्वेति । अत्र प्रवृत्तिनिवृत्ति व्यवस्थायाम् अभ्युदये स्वर्गादि ॥ ३५ ॥

एतेनैव शमादिलक्षणेन अत्र बुद्धेर्भगवन्निष्ठतायाः शमत्वोक्त्या बुद्ध्यधीनानामिन्द्रियादीनां स्वसम्बन्धेनैव दमादिकं भगवान्मेने इति महाजनवैलक्षण्यम् ॥ ३६ ॥

तस्य ब्रह्मणः । सत्यविषयत्वात् परमार्थसत्यब्रह्मैकमेकत्वात् ३७

ऋतसत्यनेत्रमित्यादौ ऋतस्य सत्याद्भिन्नत्वादन्यदेवस्यकम् । अपृष्टस्यापि शौचस्याभिधाने हेतुं व्याचष्टे क्रमप्राप्तमिति । ततः शौचात् भेदेन पृथक्त्वेन तत्र हेतुः तस्यापीति । शौचस्यापि द्विविधस्य कायमनोमलत्यागरूपत्वेन लोके त्यागाभेदप्रतीतेः अनासक्तिरेव शौचं न मलत्यागमात्रं संन्यास एव त्यागो नतु प्रत्यापत्तिरूपं सर्वस्वदानमात्रम् । तयोः शौचत्यागयोः ॥ ३८ ॥

धर्म एव धनं न पश्वादि । कुतः साधारण्यं सर्वसाधारणत्वात् । सा च ज्ञानोपदेश इति ज्ञानस्योपदेशो यस्मात् सः ज्ञानोपदेशहेतुराचार्यभक्तिविशेष एव मुख्या दक्षिणा न हिरण्यादिदानमात्रमित्यर्थः । अन्यथा शिष्यस्य यजमानस्य ज्ञानोपदेशकर्तृत्वेनाचार्यत्वापत्तेः तेन ज्ञानोपदेशेन तच्च बलम् । ननु दयायाः किञ्च लक्षणं प्रोक्तमित्यत आह । लोकप्रसिद्धेति निर्हेतुकपरदुःखप्रहाणेच्छा कृपेति लोकप्रसिद्धलक्षणेनाभिप्रेतेति न विलक्षणं तल्लक्षणं कृतमित्यर्थः ॥ ३९ ॥

लाभं क्रमप्राप्तं ततो लाभात् । भेदेन पृथक्त्वेन अपृष्टस्यापि भगस्य व्याख्याने हेतुमाह । लोके तयोरिति । तयोर्लाभभगयोः भावोऽत्र प्रकृतिजन्यबोधे प्रकारीभूतो धर्मविशेषः । स ऐश्वर्यादिषाड्गुण्यमेवेति तथा व्याख्यातं भेदो मर्त्योऽहं देवोऽहं बालोऽहं युवाहमित्यादि बुद्धिस्तस्या बाधः न ज्ञानमात्रम् । शास्त्रार्थज्ञानमात्रं विद्या ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अभयमिति पद्यम् अस्मदस्माभिरस्य भयाभावात् अभयान्तरे

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

द्वादशस्वस्मादन्येषां च भयाभावश्च विवक्षितः उभयो-र्द्वादश अभयमित्युभयविवक्षया तन्त्रोच्चारणम् अत उभयेषां द्वादशत्वं पूर्णं स्यात् ॥ ३३—३६ ॥

स्वभावविजयः मनुष्यादिस्वभावविजयः क्षुत्पिपासानभिभू-तत्वं समदर्शनम् अपक्षपातेन दर्शनम् ॥ ३७ ॥

यथा दृष्टार्थविषया वागृतम् ऋतसत्ययोर्भेदः कर्मस्वसङ्गमः कर्तृत्वाभिमानाभावः संन्यासः फलत्यागः ॥ ३८ ॥

भगवत्तमः अतिशयितज्ञानादिमान् ज्ञानसंदेशः ज्ञानप्रदा-नम् ॥ ३९ ॥

ऐश्वरो भावः ईश्वरसम्बन्धी स्वभावः ऐश्वर्यवीर्ययशः प्रभृ-तयः आत्मनि भिदाभावः देवत्वमनुष्यत्वाद्यभिमाननिवृत्तिः अक-र्मसु निषिद्धकर्मसु जुगुप्सा ह्रीः ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यमान्नियमांश्च परिगणय्य दर्शयति सार्धद्वयेन। तत्राद्यश्लो-कोक्ता यमाः शौचादयस्तु नियमा इति विवेकः। उभयोः श्लोकयोर्द्वादश स्मृताः तत्र शौचमान्तरं बाह्यं चेति शौचा-दीनां द्वादश संख्यावगन्तव्या यद्वा अभयशब्देन स्वस्यान्येभ्यः स्वस्मादन्येषां च भयाभावश्च विवक्षित इति तेनान्यतरेण साकं शौचादीनां द्वादशत्वमवगन्तव्यम् अहिंसा भूताद्रोहः चिन्ता सत्यं भूतहितावहं वचः अस्तेयं मनसापि परस्वाग्र-हणम् असङ्गः काञ्चनासक्तिः ह्रीस्वरूपं स्वयमेव वक्ष्यति असं-चयः अपरिग्रहः आस्तिक्यं शास्त्रार्थविश्वासः ब्रह्मचर्यं स्त्रीसङ्गराहित्यं मौनं वृथालापवर्जनं स्थैर्यमचाञ्चल्यं क्षमा तितिक्षा तस्याः स्वरूपं वक्ष्यति ॥ ३३ ॥

शौचं शास्त्रीयकर्मयोग्यता जपो मन्त्रावृत्तिः तपः शास्त्री-यकायक्लेशः श्रद्धा चिकीर्षितविषयत्वरा आतिथ्यमतिथिभोजनं तीर्थाटनं तीर्थयात्रा परार्थेहा परोपक्रिया तुष्टिर्यदृच्छालाभ-सन्तुष्टिः ॥ ३४ ॥

किमेभ्य इत्यत आह। पुंसामिति। उपासिता अनुष्ठिता एते हे तात! यथाकामम् इच्छानुसारं दुहन्ति फलन्तीत्यर्थः ॥ ३५ ॥

अथ शमादीनां स्वरूपं विवृणोति। शम इत्यादिना ग्रावद्-ध्यायसमाप्ति। एतेनैव तद्विपरीता अशमादयोऽप्युक्तेयाः बुद्धेर्म-न्निष्ठता या सा शमः नतु शान्तिमात्रमित्यर्थः। इन्द्रियसंयमो बाह्येन्द्रियनियमनं न चौरादेर्दमनमात्रं दुःखसंमर्षो दुःखस्य सहनं न मात्रादेः जिह्वोपस्थयोर्निग्रहधारणं धृतिः नत्वनुद्वेगमात्रम् ॥ ३६ ॥

दण्डो भूतद्रोहस्तस्य त्यागो दानं न धनार्पणमात्रं काम-त्यागो भोगानपेक्षा तपो न कृच्छ्रादिः स्वभावविजयः क्षुत्पिपा-सानभिभूतत्वं शौर्यं नतु शत्रुविजयमात्रं समदर्शनं तारत-म्यापोहेन सर्वस्य ब्रह्मात्मकत्वदर्शनं सत्यं न यथार्थभाषण-मात्रम् ॥ ३७ ॥

सूनृता यथादृष्टार्थविषया वाणी ऋतं नतु प्रियभाषणमात्रं कर्मस्वसङ्गमः कर्तृत्वाभिमानाभावः शौचं नतु स्नानादिजन्य-मात्रं शौचमपूर्वमप्यभिमेतत्वाद्व्याख्याते संन्यासः कर्मफल-त्यागस्त्याग उच्यते नतु कर्मत्यागः ॥ ३८ ॥

नृणां धर्मो मद्भक्तिकर्दमः इष्टं धनं नतु वित्तमात्रं भगवत्तमोऽति-शयितज्ञानशक्त्यादिमानहं यज्ञः स्वर्गापवर्गसाधनभूतो हि यज्ञः स चाहमेवेत्यर्थः। ज्ञानसंदेशो ज्ञानं संदिश्यते सम्यगुपदिश्यते येन तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवयेत्याद्युक्तेन प्रणिपातसेवा-दिना स ज्ञानसंदेशो दक्षिणा नतु हिरण्यादिदानमात्रं प्राणा-यामः परं बलं नतु दुर्मददमनं बलम् ॥ ३९ ॥

यज्ञोऽहं भगवत्तम इत्युक्तं कस्तर्हि भग इत्यभिप्रायमाविष्य तं व्याचष्टे। भगो म ऐश्वरो भाव इति ईश्वरसम्बन्धिस्वभावः ऐश्व-र्यवीर्ययशःप्रभृतिः परदुःखनिराचिकीर्षा दया लोकप्रसिद्धैवेति न व्याख्याता उत्तमोत्कृष्टा मद्भक्तिरेव लाभो नतु पुत्रादिः आत्मनि भिदाभावो देवमनुष्यत्वाद्यभिमाननिवृत्तिर्विद्या नतु ज्ञानमात्रम् अकर्मसु निषिद्धकर्मसु जुगुप्सा हेयत्वदर्शनं ह्रीर्नतु लज्जामात्र-मित्यर्थः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

विपरीतमुक्तेभ्योऽन्यद्दोष: ॥ ३३—३५ ॥

दुहन्ति फलानीति शेषः ॥ ३६—३७ ॥

दण्डन्यासः अशास्त्रविहितदण्डत्यागः दण्डत्याग इति वा पाठः स्वभावविजयः स्वमनोजयः समदर्शनं यथावस्तुद-र्शनम् ॥ ३८ ॥

कर्मस्वसङ्गः नाहङ्कृतेति ॥ ३९ ॥

इष्टं धनं धर्मः भगवत्तमोऽहं यज्ञः यज्ञेन इज्य इत्यर्थः ज्ञानसंदेशः ज्ञानोपदेशः दक्षिणा ऐश्वरो भावो ममैश्वरत्वभावनं भगः आत्मनि भिदाबाधः सर्वतः विलक्षणो हरिरिति ज्ञानं विद्या ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अहिंसेति त्रिकम् उभयोरिति यमे नियमे चेत्यर्थः ॥३३।३५॥

अन्तःकरणस्य स्वनिष्ठत्वमेव शममुक्त्वा अन्तः करणाधीना-नामिन्द्रियादीनां च स्वस्वसम्बन्धेनैव यमादिकं मेने ॥ ३६ ॥

समदर्शनं नारायणपराः सर्वे इत्यादिरीत्या ॥ ३७—३८ ॥

टीकायां सा च ज्ञानोपदेश इति ज्ञानस्योपदेशो यस्मात्सः ज्ञानोपदेशप्राप्तिहेतुराचार्ये भक्तिविशेष इत्येवार्थः नहि यजमानो ज्ञानोपदेशं करोति यथा हिरण्यादिदक्षिणामिति यद्वा भग-वत्तमः स्वयं भगवद्रूपः श्रीकृष्णाख्यो ऽहमेव यज्ञो मज्ज्ञानेनैव यज्ञफलप्राप्तिः "सर्वे वेदाः सर्वविद्याः सशास्त्राः सर्वे यज्ञाः सर्व-इज्यश्च कृष्णः विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन्! सर्वयज्ञाः समाप्ता" इति महाभारतोक्तेः तस्मिंश्च ज्ञाने यः संदेशः सम्वादः आचार्यानुकूलं वचः तदाज्ञानुष्ठानं वा स एव दक्षिणा तत्सन्तोषकरत्वात् ज्ञानपर्यायकत्वाच्च ॥ ३९ ॥

भिदा मर्त्योऽहं देवोऽहं बालोऽहं युवामित्यादिबुद्धिस्तस्या बाधः ॥ ४०—४४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यमनियमानाह । अहिंसेति द्वाभ्याम् । शौचं बाह्यमाभ्यन्तरं चेति द्वयम् अतो द्वादश नियमाः उभयोः श्लोकयोर्यें स्थितास्ते यमा नियमाश्च यथा यथावेदं कामं पूरयन्तीति यमनियमौ मन्मते अन्यमते च तुल्यसंख्याकौ तुल्यलक्षणौ च अनयोरपि भगवन्मते वैलक्षण्यं सम्भवेदित्याशङ्का निवृत्यर्थमेवै तत्प्रश्नोत्तरे ज्ञेयं ॥ ३३—३५ ॥

साधकानामुपादेयान् शमादीनाचार्यान्तरवैलक्षण्येन लक्षयति । शम इत्यादिना यावदध्यायपरिसमाप्ति । बुद्धेर्मन्निष्ठता शम इति मन्निष्ठबुद्धित्वं विना केवला शान्तिर्विशेषेत्र इन्द्रियसंयम इति स्वेन्द्रियदमनं विना स्वशिष्यादिदमनं हास्यास्पदमेव दुःखसंमर्ष इति परावमाननोत्थस्य दुःखस्य शास्त्रविहितस्य दुःखस्य वा सहनेन तितिक्षा तेन विना तु स्वेच्छयैव शीतोष्णादिदुःखसहनं मौढ्यमेव जिह्वोपस्थस्य जयं विना अन्यत्र धीरता व्यर्थैव ॥ ३६ ॥

दण्डन्यासः भूतमात्रस्यैव द्रोहत्यागो दानं धनार्पणमात्रं तु न किमपि भोगोपेक्षा एकादशीकार्तिकव्रतादौ या विहिता सैव तपः नतु कृच्छ्रादि स्वभावः स्वीयपाण्डित्यादिविख्यापनं तस्य स्वाभाविकयोः कामक्रोधाद्योश्च राजसतामसयोर्भावयोश्च विजयः प्रतिबन्धं शौर्यं नतु विक्रमः समदर्शनम् ईर्ष्यासूयादिवैषम्यपरित्यागेन सर्वत्र स्वसमसुखदुःखालोचनम्—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ! ।
सुखं वा यदि वा दुःखमिति ।

श्रीगीतोक्तेः नतु यथार्थभाषणमात्रम् ॥ ३७ ॥

सूनृतां वाणीं सत्यां प्रियां च या वाणी सैव नतु यथार्थभाषणमात्रं तथात्वे दोषवतां दोषकीर्तनमपि प्रसज्येत तस्मिंश्च सति निन्दा स्यात् सा च सतां श्रोतृणामप्रियेति तस्याः सूनृतवाणीत्वाभावः स्यात् पूर्वाचार्यैस्तु सत्यं यथार्थाचरणम् ऋतं यथार्थभाषणमित्यन लक्षणा चक्रुः कर्मसु अनासक्तिः शौचं नतु केवलं शुचित्वमेवाति पूर्वपृष्टस्य श्रेतास्युगधर्मस्य शौचस्य लक्षणमिदमनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सला इति न्यायात् एवं भगो मे ऐश्वरो भाव इत्यत्रापि ज्ञेयं त्यागः संन्यासः कलत्रपुत्रादिममतात्यागः नतु भोगत्याग एव त्यागः ॥ ३८ ॥

धर्म एव इष्टं धनं न गवाश्वादि अहं भगवत्तमो यज्ञः देवतन्त्रेन एव यज्ञः मज्जन्मयात्राद्युत्सवो यज्ञबुद्ध्याऽनुष्ठेय इत्यर्थः । नतु नश्वरफलोऽश्वमेधादिः ज्ञानस्य उत्सवाग्ने मत्सं कीर्तनादिरसानुभवस्य उपदेशः स्वेष्टमित्रेषु ज्ञापनैव दक्षिणा नतु धनवस्त्राद्यर्पणं दुर्दमदमनं बलं तच्च मनोदमनहेतुत्वात् प्राणायामः ॥ ३९ ॥

दया लोकप्रसिद्धैवेति न सा लक्षिता मम ऐश्वरो भावो भग एव ऐश्वर्यं भगः नतु जीवानां ब्रह्मरुद्रादीनामैश्वर्यमित्यर्थः भक्तिलाभ एव लाभो नतु पुत्रादिलाभः आत्मनि जीवात्मनि अविद्याकृता भिदा भेदात्मत्वं तस्या बाध एव विद्या यदुक्तं भगवत्मयः पुमानिति भिदा यदवोधकृतेति न स्वर्धीता व्याकरणाद्या अकर्मसु पापेषु जुगुप्सा लोकनिन्द्योत्थैव सत्राप्रवृत्तिर्नतु लज्जामात्रम् ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शौचं बाह्याभ्यन्तरभेदाद्द्विविधम् अतो द्वादशसंख्यापूर्तिः ॥ ३४ ॥

उभयोः श्लोकयोः पूर्वे यमा उत्तरे नियमा इत्यर्थः । यथाकामं यथासङ्कल्पं मुक्तिं भुक्तिं च दुहन्ति पूरयन्ति ॥ ३५ ॥

शमादीन् व्याचष्टे । शम इति । शमशब्दः शान्तिमात्रपरत्वेन प्रतीयते वस्तुतस्तु एक एव भगवान् सर्वात्मातो द्वेषादीन् विहाय तं शान्तो भूत्वा भजामीति बुद्धेर्मन्निष्ठता शमः दमशब्दः बाह्यशत्र्वादिदमनपरतया प्रतीयते विशेषतस्तु सर्वोपद्रवकारणीभूतैकादशेन्द्रियाणां निग्रहः इन्द्रियनिग्रहेण दान्तो भूत्वा मां भजेदिति फलितोऽर्थः दुःखानां त्रिविधानां संमर्षः सहनं न मारादेः शिश्नोदरत्रपस्य महदानसक्त्योरनाधिकारात् तज्जयो धृतिः नानुद्वेगमात्रम् ॥ ३६ ॥

दण्डवत्परपीडाजनकवचनादित्यागो दानं न वस्त्राद्यर्पणमात्रम् कामत्यागः दुर्वासनात्यागस्तपः न कृच्छ्रचान्द्रायणादि स्वभावस्य शास्त्रविरुद्धायाः प्रकृतेर्विजयः शौर्यं न विक्रान्तिः समस्य सर्वत्र हेतुतया स्थितस्य दर्शनं सत्यं न यथार्थकथनमात्रम् ॥ ३७ ॥

सूनृता सत्या प्रिया च वाणी ऋतम् क्रमप्राप्तं त्यागं व्याचष्ट स्वाश्रमकर्मसु तत्फलत्यागेन असङ्गरूपः "यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयत" इति वचनात् तेष्वेवेश्वरे युक्तेषु शौचं तच्छुद्धिरूपः कर्मशुद्धिमेवर्पणामिति वचनात् स्वानन्दपरित्यागपूर्वको यः मयि मदात्मकत्वेन स्वस्य सङ्कल्पस्य च त्याग उच्यते नतु गृहादित्यागमात्रमित्यर्थः ॥ ३८ ॥

इष्टं धनं धर्मः "स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे" इति पूर्वोक्तः । नतु पश्वादि भगवत्तमः निःसमानातिशयैश्वर्यवानहं यज्ञः सर्वपुरुषार्थसाधनं नतु कर्ममात्रम् दक्षिणा च ज्ञानसन्देशः ज्ञानोपदेशः नतु सुवर्णादिदानमात्रं मनोदमनहेतुत्वात्परं बलं प्राणायामः ॥ ३९ ॥

मे मम यो भावः "मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते" इत्येवं भूतः स भगः नतु प्राकृत ऐश्वर्यादिमात्रं भगशब्दार्थ इत्यर्थः । नतु तव भावः जीवस्य कथं घटेत इत्यत आह । ऐश्वर इति । ईश्वरस्य मम असाधारणः भगमैश्वरः जीवस्तु तत्समतां मुक्तौ प्राप्नोतीति भावः । "निरञ्जनः परमं साम्यमुपैतीति" श्रुतेः "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः" इति श्रीमुखवचनाच्च उत्तमो मोक्षहेतुत्वाच्च लाभो मद्भक्तिरेव आत्मनि भिदाऽब्रह्मात्मकत्वभ्रमजः केवलभेदस्तद्बाधो विद्या, नतु तार्किकाद्यभिमतं केवलभेदज्ञानं तत्त्वमसीतिश्रुतेः—

एकं समस्तं यदिहास्ति किञ्चित्तत्
अच्युतो नास्ति परं ततोऽन्यत् ॥
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहमिति ॥

विष्णुपुराणाच्च अकर्मसु निषिद्धकर्मसु जुगुप्सा हेयत्वबुद्धिर्ह्रीः न लज्जामात्रम् ॥ ४० ॥

श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः ।
दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ॥ ४१॥
मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः ।
उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥ ४२ ॥
नरकस्तमउन्नाहो बन्धुर्गुरुरहं सखे ! ।
गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४३ ॥
दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेन्द्रियः ।
गुणेष्वसक्तधीरीशो गुणसंगो विपर्ययः ॥ ४४ ॥
एत उद्धव ! ते प्रश्नाः सर्वे साधु निरूपिताः ।
किंवर्णितेन बहुना लक्षणं गुणदोषयोः ।
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥ ४५ ॥
इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
एकोनविंशोऽध्यायः ॥ १६ ॥

भाषा टीका ।

श्री भगवान् उवाच अहिंसा सत्य चोरी न करना किसी में आसक्ती न करना खोटे कार्य मे लज्जा करना द्रव्यादि सञ्चय न करना आस्तिकता ब्रह्मचर्य मौन होना स्थिर बुद्धि क्षमा करना अभय रहना इनका नाम यम है ॥ ३३ ॥

पवित्रता जप तप होम श्रद्धा अतिथि सेवा मेरा पूजन तीर्थयात्रा परोपकार चेष्टा सन्तोष आचार्य कीसेवा ॥३४॥

इन दोनो श्लोकों में बारह यम और नियम कहेहैं हे तात। इनके उपासना से पुरुषों को सब मनोरथ प्राप्त होते हैं ॥ ३५ ॥

बुद्धि की मेरे मे निष्ठा होना शम है इन्द्रियों का संयम ही दम है दुःखका सहना तितिक्षा है जिह्वालिंग दोनो का जीतना धृति है ॥ ३६ ॥

किसी को दण्ड न देना इसका नाम दान है कामका त्यागना तप हैं स्वभाव का जीतना शौर्य है समदृष्टि का नाम सत्य है ॥ ३७ ॥

कवि जनोंने सुन्दर वचन को ऋत कहाहै कर्मोंमे फल की इच्छा रहित होना शौच है सन्यास ही त्यागहै ॥ ३८ ॥

मनुष्यों का इष्टधन धर्म है ऐश्वर्य वालों मे श्रेष्ठ मैं ही यज्ञ हूं ज्ञानका उपदेशही दक्षिणा है प्राणायामही परम बल है ॥३९॥

हमारा जो ईश्वर भाव है सो भग है मेरी भक्तिका लाभ ही उत्तम लाभ है आत्मा मे देवमनुष्यादि भेद दृष्टि छूटना विद्या है कुकर्मों मे घिनाई होने का नाम लज्जा है ॥ ४० ॥



श्रीधरस्वामिकृतभावार्थदीपिका।

गुणा एव श्रीर्मण्डनं न किरीटादि दुःखसुखयोरत्ययोऽतिक्रमोऽननुसंधानं सुखं न भोगः विषयभोगापेक्षैव दुःखं नाग्निदाहादि बन्धान्मोक्षं द्वयं वा यो वेत्ति स पण्डितो न विद्वन्मात्रम् ॥ ४१ ॥

अहंबुद्धिरित्युपलक्षणम् देहगेहादिष्वहं ममेत्याभिमानवान् मूर्ख इत्यर्थः । मन्निगमो मां नितरां गमयति प्रापयति यो निवृत्तिमार्गः स तु पन्थाः सन्मार्गो न कण्टकादिशून्यः चित्तविक्षेपः प्रवृत्तिमार्गः स उत्पथः कुमार्गो नतु चोराद्याकुलः सत्त्वगुणस्योदय उद्रेकः स्वर्गो नेन्द्रादिलोकः ॥ ४२ ॥

तमस उन्नाह उद्रेकः स नरको न तामिस्रादिः गुरुरेव बन्धुर्न भ्रात्रादिः स चाहमेव यथाऽहं जगद्गुरुः " एक एव परो बन्धुर्विषमे समुपस्थिते । गुरुः सकलधर्मात्मा यत्राकिञ्चनगो हरिः" इति सत्साधनं भोगायतनं गृहं तच्च मानुष्यं मानुषरूपं शरीरमेव न हर्म्यादि गुणैः सम्पन्न आढ्य उच्यते न धनी ॥ ४३ ॥

असंतुष्टो यः स दरिद्रो न निःस्वः योऽजितेन्द्रियः स कृपणः शोच्यो न दीनः विषयेष्वनासक्तधीर्यः स ईशः स्वतन्त्रो न राजादिः गुणसङ्गी गुणेषु सङ्गो यस्य स विपर्ययोऽनीशः एतच्च शमादिविपर्ययोपलक्षणार्थम् ॥ ४४ ॥

उपसंहरति । एत इति । साधु मोक्षोपयोगितया एतच्च सर्वं गुणदोषयोर्विविक्तबोधकत्वेन पृष्टमिति तयोः संक्षेपतो लक्षणमाह ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

किं बहुना वर्णितेन गुणदोषयोर्लक्षणमेतावदेव तदाह । गुणदोषयोर्दृशिर्दर्शनं दोषः गुणस्तु तदुभयदर्शनविवर्जितः स्वभाव इति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

न विद्वन्मात्रं न्यायादिवेत्तृमात्रं न पण्डितः ॥ ४१ ॥

चित्तस्य विक्षेपो यस्मात् स तथा ॥ ४२ ॥

विषमे संसारलक्षणे कष्टे समुपस्थिते प्राप्ते सति । सकलधर्मात्मा सर्वधर्मोपदेष्टा । यत्र यस्मिन् गुरौ तुष्टे भक्तिजनलभ्यः श्रीहरिर्लभ्यत इति शेषः ॥ ४३ ॥

एतच्च ईशाविपर्ययकथनम् ॥ ४४ ॥

एत इत्युक्तं मोक्षोपयोगितया मोक्षसाधनत्वेन । एतावदेवेति पूर्वोक्तस्तल्लक्षणानि व्यवहारमयत्वाद्गौणानि परमार्थमयत्वान्मुख्यं तु तल्लक्षणमेतावदेवेत्यर्थः । गुणदोषयोर्विहितत्वनिषिद्धत्वयोः दर्शनं विवेकः । उभयवर्जितः स्वभाव इति तस्य गुणदोषदृष्टिमतिक्रम्य स्वभावत एव परमश्रेयसी प्रवृत्तिर्गुण इत्यर्थः । एतदपेक्षयोभयोरपि हीनत्वात् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीर्गुणा नैरपेक्ष्याद्याः निरपेक्षत्वगुणाद्याः श्रीर्भवतिसैव श्रीः सन्तोष एव समृद्धिरित्यर्थः । दुःखसुखात्ययः दुःखतान्मिश्रसुखात्ययः ॥ ४१ ॥

मन्निगमः मद्विषयज्ञानम् ॥ ४२—४३ ॥

विपर्ययः मनीश्वरत्वम् इदमपृष्टमपि प्रष्टुरभिप्रेतत्वादुक्तम् ॥ ४४ ॥

उभयवर्जितः उभयवर्जनं गुणः अयमर्थः संसारे उपादेयतया चाभिमतानां सर्वपदार्थानां दोषदुष्टतया हेयत्वाविशेषेऽपि तद्विपर्ययेण इदं गुणवत् इदं दोषवदिति विभागज्ञानं भ्रान्तिरूपत्वाद्दोष इत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नैरपेक्ष्याद्या इत्याद्यशब्देन यदृच्छालाभसन्तोषादिपरिग्रहः नैरपेक्ष्यादिगुणसमुदायः श्रीर्मण्डनं नतु किरीटादिः श्रीरित्यर्थः दुःखसुखात्ययो दुःखमिश्रसुखापायः सुखं नतु भोगः कामसुखापेक्षा शब्दादिविषयसुखापेक्षा दुःखं नरकाग्निदाहादिः बन्धमोक्षवित् बन्धमोक्षकारणवित् पण्डितो नतु विद्वन्मात्रम् ॥ ४१ ॥

देहादिष्वहम्बुद्धिरात्माभिमानो यस्य स मूर्खो नतु केवलाज्ञानमात्रम् अहम्बुद्धिशब्दो ममताबुद्धेरप्युपलक्षणार्थः देहादीत्यादिशब्देन तदनुबन्धिसंग्रहः मन्निगमः मां नितरां गमयति प्रापयतीति तथा पन्था मद्विषयज्ञानमित्यर्थः समार्गः नतु कण्टकादिशून्यो मार्गः चित्तस्य विक्षेपः शब्दादिविषयप्रावण्यमुत्पथः कुमार्गो नतु चोराद्याकुलः सत्त्वगुणस्योदयोऽभिवृद्धिः स्वर्गो नतु इन्द्रादिलोकः ॥ ४२ ॥

तमसउद्भाहोऽभिवृद्धिर्नरको नतु तामिस्रादिः गुरुरेव बन्धुः स च गुरुरहमेवेत्यर्थः । नतु पितृभ्रात्रादिः हे सखे ! मानुष्यं शरीरं गृहं नतु भोगस्थानं हर्म्यादि गुणाढ्यः सद्गुणशाली आढ्यो नतु धनिकः ॥ ४३ ॥

असन्तुष्टः यदृच्छालाभसन्तोषरहितः यः स दरिद्रो नतु निर्धनः उपर्युपरि पश्यन्तः सर्व एव दरिद्रा इति न्यायादिति भावः । अजितेन्द्रियः कृपणः शोच्यो नतु दीनः गुणेषु शब्दादिष्वसक्ता धीर्यस्य स ईशः नतु राजादिः गुणेषु सङ्गो यस्य स तु विपर्ययो ऽनीशः इदमप्यभिप्रेतत्वादुक्तम् ॥ ४४ ॥

व्याख्यानमुपसंहरति । एत इति । प्रश्नाः पृष्टार्थाः सर्वे साधु यथा तथा निरूपिताः इत्थं मोक्षोपयुक्ता यमादयो निरूपिताः यथैवं विपरीतानपि निरूपयेत्यभिप्रायमाशङ्क्य किम्प्रातिस्विकतत्स्वरूपनिरूपणप्रयासेन यतस्तेषां लक्षणतः संग्रहीतुं शक्यत्वादित्यभिप्रायेणाह । किम्वर्णितेनेति । कथं तर्हि मोक्षोपयुक्तात्तद्विरोधिनो विवेक इत्यत आह । लक्षणं गुणदोषयोरिति । गुणदोषयोर्मुक्त्युपयुक्ततद्विरोधिनोर्लक्षणमेतावदित्यर्थः । किं तदित्यत आह । गुणदोषदृशिरिति । इह संसारिणां ऐहिकपारलौकिकसुखेषु तत्साधनेषु च गुणबुद्धिः दुःखतत्साधनेषु तु दोषबुद्धिः सैषा उभयी बुद्धिर्दोषः गुणस्तूभयवर्जनम् उभयोः संसारिणां गुणवत्तया दोषवत्तया चाभिमतयोः सुखदुःखयोर्वर्जनं गुणः तयोरुभयोरपि दोषदृष्टिर्गुण इत्यर्थः । स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः । विपर्ययस्तु दोषः स्यादुभयोरेष निश्चय इति गुणदोषयोः स्वरूपं स्वयमेवानन्तराध्याये वक्ष्यति तत्र स्वस्वाधिकारनिष्ठा नाम स्वस्ववर्णाश्रमानुरूपस्वस्वकर्माहितसाधनेषु धर्मेषु निष्ठा स एव गुणस्तद्विपर्ययनिष्ठा दोष इत्यर्थः एवञ्च मुमुक्षोरनभिसंहितफलस्ववर्णाश्रमोचितधर्मशमदमाद्युक्तभक्तियोगनिष्ठा गुणः दृष्टादृष्टसुखसाधने निष्ठा तु दोषः स्वाधिकारनिष्ठा विपर्ययश्चेति गुणदोषलक्षणं इत्युक्तं तथा दुःखतत्साधनेषु दोषदृष्टिरपि मुमुक्ष्वपेक्षया दोष एव दुःखेषु दोषदृष्टिर्हि तन्निवृत्त्युपायेषु प्रवर्तयति मुमुक्षोः प्रारब्धकर्मफलभूतदुःखस्यावश्यानुभाव्यत्वेन तन्निवृत्त्युपायेषु प्रवृत्त्यभावात् दुःखार्थकर्मसु [illegible] प्रवृत्त्यभावाच्च अतः स्वाधिकारनिष्ठाविपर्ययरूपत्वाद्दोषदृष्टिरपि दोष एवेत्युक्तम् एवं च मुमुक्षोर्या मुमुक्ष्वधिकारनिष्ठा सुखदुःखप्राप्तिनिवृत्त्युपायाभिनिवेशात्मिका सैव विपरीतेत्यन्याधिकारनिष्ठात्वं विपरीतत्वमिति

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

लक्षणं फलितम् अन्यथिकाराभिनिवेशश्चाश्रमादिस्वरूप इति तस्य तद्विपर्ययत्वम् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुःखात्ययोः सुखं मोक्षलक्षणं सुखं कामानां विषयाणां सुखापेक्षा दुःखम् ॥ ४१ ॥

देहादावहंबुद्धिर्यस्य स तथा मन्निगमः मद्विषयो वेदः सत्त्वगुणोदयः सत्त्वगुणाभिवृद्धिः स्वर्गः ॥ ४२ ॥

तमउन्नाहः अज्ञानोन्नतिः नरकः भक्त्यादिगुणाढ्यः ॥ ४३ ॥
असन्तुष्टो विषयासन्तोषवान् दरिद्रः—

> विषये दोषबुद्धिः सन्निन्द्रियाणां वशे स्थितः ।
> कृपणः स तु सम्प्रोक्तो गुणबुद्धिविपर्ययः इति ॥

गुणेषु विषयेषु असक्तधीः स्ववशः ईश्वरः गुणसङ्गी सर्वविषयसङ्गी विपर्ययो विपरीतः क्षयः—

> पुरुषार्थमतिर्यस्य विषयेष्वपि देहिनः ।
> विपरीतः स तु क्षेयः स्वात्मनो विपरीततः ॥

इतिवचनात् वित्तासन्तोषमात्राद्दरिद्रः सर्वविषयसङ्गी विपरीतः ॥ ४४ ॥

निरूपिताः परिहृताः शास्त्रतात्पर्यार्थं कथयति । किम्वर्णितेनेति । गुणदोषयोर्लक्षणमुद्दिश्य बहुना वर्णितेन किं विहितकरणं गुणः निषिद्धकरणाद्दोषः इति गुणदोषदृष्टिर्दोषः भगवत्प्रियत्वाप्रियत्वमन्तरेणेति शेषः उभयवर्जनं गुणः उभयोर्गुणदोषयोर्भेददर्शनत्यागो गुण इत्यर्थः । अत्र हरेर्यत्प्रियं सगुणः यदप्रियं स दोषः इति सतां मतमिति तात्पर्यं यद्वा बहुना वर्णितेन किं गुणदोषयोर्लक्षणं स्वरूपं कुर्वाणमिति शेषः कथमत्राह । गुणेति । गुणदोषयोरन्योऽन्यदृष्टिर्दोषः उभयवर्जनं गुणः अत्रापि हरिप्रियत्वादिप्रयोजनमिति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं स्वप्रश्नमनुसृत्यैव प्रपञ्चितं तदेतच्च मम प्रायो नातिस्पष्टमिति स्पष्टयन् परमस्पष्टं पूर्वोक्तं यमादिफलभूतं गुणं लक्षयन् व्यतिरेकज्ञानाय दोषमपि लक्षयति । किमिति । बहुना व्यवहारमयत्वाद्व्यवहारप्रचुरेण परमार्थप्रचुरमयत्वान्मुख्यमेकमेव गुणदोषयोर्लक्षणमित्यर्थः तदाह । गुणेति । गुणो विहितत्वं दोषो निषिद्धत्वं तत्तयोर्दृष्टिर्विवेको दोषः किन्तूभयवर्जितो यः स्वभावविशेषः स गुणः तत्तद्दृष्टिमतिक्रम्य स्वभावत एव परमेश्वरे प्रवृत्तिर्गुण इत्यर्थः एतदपेक्षयोभयोरप्यपकृष्टत्वात् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गुणा एव श्रीर्मण्डनं न किरीटादि सुखदुःखयोरत्ययः अतिक्रमः अननुसन्धानमेव सुखं न विषयभोगः विषयभोगापेक्षैव दुःखं नाग्निदाहादि बन्धं मोक्षं च यो वेत्ति स एव पण्डितः न तु शास्त्रव्याख्यातैव ॥ ४१ ॥

मन्निगमः मां नितरां गमयतीति स भक्तिज्ञानयोगः न तु कण्टकादिशून्यो मार्गः चित्तविक्षेपः प्रवृत्तिमार्गः सत्त्वगुणस्य उदयः उद्रेकः स्वर्गः नेन्द्रादिलोकः ॥ ४२ ॥

तमसउन्नाह उद्रेकः गुरुरेव बन्धुर्न भ्रात्रादिः स चाहमेव ॥ ४३ ॥

गुणसङ्गः गुणसंश्लेषाभीशः ॥ ४४ ॥

साधु मोक्षोपयोगितया एतत्सर्वं त्वया गुणदोषयोर्विवेकार्थैवाह पृष्टस्तस्मात्तयोः संक्षेपतो लक्षणं ब्रवीमि शृणु इत्याह । किमिति । गुणदोषयोर्लक्षणमेतावदेवेत्याह । गुणदोषयोर्दर्शनं दोषः गुणस्तु तदुभयदर्शनरहितः स्वभाव इति अस्यार्थः उत्तराध्यायान्ते स्पष्टीभविष्यति ॥ ४५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशेऊनविंशः सङ्गतः सङ्गतः सताम् ॥ १९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नैरपेक्ष्याद्याः गुणा एव श्रीः मण्डनं न कटककुण्डलादि आदिना दया शौशील्यादिपरिग्रहः दुःखसुखयोरत्ययोऽतिक्रमः सुखं विषयसुखस्यापि दुःखोदर्कत्वात्तदतिक्रमस्य शान्तिहेतुत्वात्सुखत्वं बोध्यम् काम्यन्ते इति कामाः विषयाः तत्सुखापेक्षा दुःखम् बन्धं मोक्षं च यो वेत्ति स पण्डितः न तु नानाग्रन्थाभ्यासमात्रतः पण्डितो भवति ॥ ४१ ॥

देहाद्यहंबुद्धिः देहेन्द्रियमनोबुद्ध्यादिष्वात्ममतिः उपलक्षणमेतद्देहादौ ममेत्यभिमानः मन्निगमः मदीयो वेदः पन्थाः सन्मार्गः शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीति स्मृतेः न तु सुगमतीर्थादिमार्गमात्रम् दुष्टकाणादादिशास्त्राणि च चित्तविक्षेपः कणादादितर्कप्रावण्यमुत्पथः कुपथः न दुर्गमस्थानादिमार्गमात्रम् सत्त्वगुणस्योदयो वृद्धिः स्वर्गः न लोकविशेषमात्रम् ॥ ४२ ॥

तमसउन्नाहः वृद्धिः नरकः न तामिस्रादिमात्रम् गुरुर्भिक्षोऽहं बन्धुर्न भ्रात्रादिः भक्तजनयोग्यं मानुषं शरीरं गृहमेव भजनकण्टकजनसमाकुलं स्थानम्—

> गुणैर्विमलमतिर्विमत्सरः प्रशान्तः—
> शुचिचरितोऽखिलसत्त्वमित्रभूतः ।
> प्रियहितवचनो ऽस्तमानमायो—
> वसति सदा हृदि तस्य वासुदेवः ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्यादिभिः आढ्य उच्यते मुनिभिः न द्रविणवान् ॥ ४३ ॥

योऽसन्तुष्टः स एव दरिद्रः न निर्धनः योऽजितेन्द्रियः स कृपणः शोच्यः न दीनः गुणेष्विन्द्रियार्थेषु न सक्ता धीर्यस्य स ईशः अपृष्टं विपरीतानपि ब्रूहीति तस्योत्तरमेकदेशकथनेनाह । गुणसंगो विपर्यय इति । गुणेषु संगो यस्य स विपर्ययः अनीशः एवं शमादिविपरीता अपि बोध्याः इति भावः ॥ ४४ ॥

उपसंहरति । एते इति । हे उद्धव ! प्रश्नाः एते सर्वे साधु निरूपिताः अथोक्तशमादिपोषकाविघातकगुणदोषयोः प्रसङ्गप्राप्तेन लक्षणेन बहुना वर्णितेन किमपि तु सारं लक्षणं वर्णयामि तदाह । गुणदोषदृशिरिति । गुणदोषयोर्दृशिर्दर्शनमालोचनं दोषः तदुभयवर्जितः स्वभावस्तु गुण इत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनविंशाध्यायार्थप्रकाशः ॥ १९ ॥

---

भाषा टीका ।

निरपेक्ष आदिक गुण श्री शोभा है दुः खसुख का नहीं मानना ही सुख है काम सुखों की अपेक्षा दुःख है बन्ध-मोक्ष के जानवाला ही पण्डित है ॥ ४१ ॥

देहादिकों में अहं बुद्धिकरने वाला मूर्ख है मेरे प्राप्ति का मार्ग ही मार्ग है चित्तका विक्षेप होना खोटा मार्ग है सत्वगुण का उदय स्वर्ग है ॥ ४२ ॥

तमोगुण का बढ़ना नरक है हे सखे ! मैं ही गुरु औ बन्धु हूं मनुष्य का शरीर ही घर है गुणवाला ही धनी है ॥ ४३ ॥

असन्तोष वाला ही दरिद्र है जो अजितेंद्रिय सो कृपण है गुण में जिस की बुद्धि आसक्त नहीं है सो ईश है गुणों का सङ्ग ही विपर्यय है ॥ ४४ ॥

हे उद्धव ! इतने तुमारे ए प्रश्न मैंने सब अच्छे कह दिये अब बहुत गुण दोषों के लक्षण करने से क्या प्रयो-जन है केवल गुण दोषों का जो देखना सोई दोष है इस का छोड देना ही गुण है ॥ ४५ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध में
उन्नीसवोंअध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ १९ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

—:०:—

## अथ विंशोऽध्यायः ।

———:*:———

उद्धव उवाच ॥

विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ।
अवेक्षतेऽरविन्दाक्ष ! गुणं दोषं च कर्मणाम् ॥ १ ॥
वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ।
द्रव्यदेशवयःकालान् स्वर्गं नरकमेव च ॥ २ ॥
गुणदोषभिदादृष्टिमन्तरेण वचस्तव ।
निःश्रेयसं कथं[(१)] नृणां निषेधविधिलक्षणम् ॥ ३ ॥
पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ! ।
श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विंशे योगत्रयं प्रोक्तं भक्तिज्ञानक्रियात्मकम् ।
गुणदोषव्यवस्थार्थमधिकारिविभागतः ॥ १ ॥

गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित इत्युक्तं तदाक्षिपति । विधिश्चेति पञ्चभिः । विधिश्च प्रतिषेधश्चेश्वरस्य तव निगम आज्ञारूपो वेदः स च विधेयानां प्रतिषेध्यानां कर्मणां गुणं दोषं च पुण्यपापफलरूपमवेक्षते ॥ १ ॥

उत्तमाधमभावेन तदधिकारिणां वर्णानामाश्रमाणां विकल्पं भेदं च गुणदोषरूपमवेक्षते प्रतिलोमानुलोमजं च गुणं दोषं च तथैवावेक्षते प्रतिलोमजा उत्तमवर्णासु स्त्रीषु हीनवर्णेभ्यः पुरुषेभ्यो जाताः सूतवैदेहकादयः अनुलोमजास्तूत्तमवर्णेभ्यः पुरुषेभ्यो हीनवर्णासु स्त्रीषु जाता मूर्धावसिक्ताम्बष्ठादयस्तेषां च "असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजा" इति गुणदोषौ द्रव्यादीन् कर्मार्हतानर्हताभ्याम् स्वर्गं नरकं च तत्फलतया गुणदोषरूपमेवावेक्षते एतच्चोत्तराध्याये प्रपञ्चयिष्यते ॥ २ ॥

तथापि प्रस्तुते किमायातमत आह । गुणदोषेति । गुणदोषदृशिर्दोष इति निराकृतत्वाद्गुणदोषभिदादृष्टिमन्तरेण तां विना निषेधविधिलक्षणं कर्मकाण्डगतं तव वचः कथम् तच्च वचोऽन्तरेण नृणां निःश्रेयसं कथं स्यात्तत्रापि श्रोतव्यो मन्तव्य इति साधनविधीनामुच्छेदप्रसङ्गात् शब्दान्वाचो विग्लापन हि तदित्यादिनिषेधस्य चावश्यकत्वादिति भावः । यद्वा गुणदोषभिदादृष्टिरूपं निषेधविधिलक्षणं तव वचो विनेति सामानाधिकरण्यमेवास्तु यद्वा गुणदोषभिदादृष्टिमन्तरेण निषेधविधिलक्षणमपि वचः कथं नु तत्त्वमस्यादिवाक्यवन्निःश्रेयसपरं स्यात् सर्वस्य वेदस्य तत्परत्वाङ्गीकारादित्यर्थः ॥ ३ ॥

ननु पितरो देवाश्च सर्वज्ञाः प्रत्यक्षतो दृष्ट्वा मनुष्येभ्यः कथयिष्यन्ति नेत्याह । पित्रादीनां सर्वेषां तव त्वद्वाक्यरूपो वेद एव तु श्रेयः श्रेष्ठं चक्षुः प्रमापकम् क्व अनुपलब्धेऽर्थे मोक्षे स्वर्गादौ च तथा साध्यसाधनयोरिदमस्य साध्यमिदमस्य साधनमित्यत्रापि तदेवं गुणदोषदृष्ट्यभावे निःश्रेयसं न घटेत ॥ ४ ॥

———

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अधिकारिभागतः योगत्रयाधिकारे भेदनया गुणदोषव्यवस्थाकाम्यकर्माधिकारिणो निखिलगुणदोषभाक्त्वं निष्कामाधिकारिणस्तु ज्ञानभक्तिप्राप्तेः पूर्वं यत् किञ्चित् तद्भाक्त्वं ताभ्यां सिद्धानान्तु न किञ्चिदपीति यो नियमस्तदर्थमित्यर्थः । तद्गुणदोषवर्जनमाक्षिपति पूर्वपक्षविषयीकरोति । विधेयानामग्निहोत्रादीनां प्रतिषेध्यानाञ्च कलञ्जभक्षणादीनां शुभाशुभं फलम् कर्मभूतं वेदः कर्ता गुणं दोषञ्च यथाक्रमं गुणत्वेन दोषत्वेन चावेक्षते प्रतिपादयतीत्यर्थः । गुणदोषञ्चेति समस्त पाठे चशब्दस्त्वनर्थकः । तदधिकारिणां कर्माधिकारिणां वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां भेदमपि वेदः कर्तृभूतः उत्तमाधमरूपतया गुणदोषरूपत्वेन प्रतिपादयति अयमुत्तमस्ततोऽयमधम इत्यर्थः तथैव उत्तमाधमभावेन गुणदोषौ श्रेष्ठत्वनिकृष्टत्वलक्षणौ । तत्फलतया कर्मफलरूपतया । एतच्च द्रव्यादीनाम् गुणदोषरूपत्वञ्च ॥ १ ॥

तथापि गुणदोषावेक्षणेऽपि प्रस्तुते " गुणदोषदृशिर्दोष " इति सिद्धान्ते निराकृतत्वात् गुणदोषदर्शनस्य निषिद्धत्वात् ।

---

(१) नुस्यात् इति वि॰ पाठः ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

गुणदोषदर्शनं विना निषेधविधिलक्षणं तव वचः कथमिति गुणादर्शनं विना विधौ प्रवृत्त्यसम्भवात् । दोषदर्शनं विना निषेधान्निवृत्त्यसम्भवाच्चेत्यर्थः । ननु ज्ञानकाण्डे गुणदोषदर्शनं मया निषिद्धं नतु कर्मकाण्डे इत्याशङ्क्याह । तत्रापि साधनविधेः श्रवणादिसाधनविधानस्य । हि यतः । तत् बहुशब्दध्यानं वाचो विग्लानिकरं नानामतोपपादनेन समाधिच्यावकमित्यर्थः । पुनरर्थे वाक्यभेदमाशङ्क्याह । यद्वेति । अन्तरेणेत्यस्य योजनया विनेति व्याख्यातम् । तां तच्च विना निःश्रेयसं कथं स्यादित्यर्थः । अत एकप्रातिपदिकत्वात् व्यक्त्यभेदाभावेन सामानाधिकरण्यं न तु वैयधिकरण्येन तच्च वच इत्यादिकं पुनरावर्त्यते इत्येवकारार्थः उद्धवस्य शिष्यत्वात् जिज्ञासैव युक्ता न तु प्रतिवादित्वं निरुक्तार्थे च प्रतिवादित्वप्रतीतिरतः पुनर्यद्वेति । तत्परत्वात् मोक्षपरत्वात् । अन्तःकरणशुद्ध्या विधिनिषेधलक्षणस्यापि ज्ञानद्वारत्वादिति भावः ॥ २—३ ॥

प्रमापकं प्रमाजनकम् । अस्य ज्योतिष्टोमादेः । इदं स्वर्गादि साध्यं फलम् ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ते निगमः त्वच्छासनरूपविधिनिषेधात्मकशास्त्रवाक्यं स्वर्गं नरकमेव चेति तव निगमः अपेक्षत इत्यन्वयः ॥ १—२ ॥

निषेधविधिलक्षणं वचः तव गुणदोषभिदादृष्टिमन्तरेण कथं निःश्रेयसं स्यात् निःश्रेयसप्रतिपादकं स्यात् ॥ ३ ॥

श्रेयसि मोक्षे साध्यसाधनयोः स्वर्गादौ तत्साधने च चक्षुर्वेद इत्यन्वयः ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गुणदोषदृशिर्दोषो गुणस्तूभयवर्जनमिति गुणदोषदृशेर्दोषत्वेन तदुभयवर्जनात्मकगुणेन भवितव्यमित्युक्तं ननु दृष्टसुखदुःखप्राप्तिनिवृत्त्युपायदृशः प्रत्यक्षादिमूलकत्वेऽप्यदृष्टसुखदुःखप्राप्तिनिवृत्तिसाधनदर्शनं शास्त्रैकमूलकत्वाद्वेदस्य च विधिनिषेधात्मकस्य त्वदाज्ञारूपत्वात्त्वमेव वेदमुखेनैवं कुरु मैवमित्याभाष्य कथमधुना उभयं वर्जयेति प्रतिषिद्धं ब्रूषे इत्याक्षिपति । विधिश्चेति पञ्चभिः श्लोकैः । ते तव निगमः शासनरूपः विधिनिषेधात्मको वेदः सच विधेयानां प्रतिषेध्यानां च कर्मणां गुणं दोषं चेति भावप्रधानो निर्देशः गुणरूपतां दोषरूपतां चापेक्षते अत्र विधेयेषु कर्मसु प्रवर्तनार्थं गुणरूपतां निषेध्येषु त्याजनार्थं दोषरूपतामपेक्षत इति विभागः अपेक्षणमत्रबोधनं तथा वर्णाश्रमविकल्पार्थश्चापेक्षत इति सम्बन्धः ॥ १ ॥

तत्र वर्णाश्रमविकल्पो वर्णाश्रमभेदः प्रतिलोममनुलोमं च जातावस्मिन्स्तत्त्वं वर्णाश्रमविकल्पमिति सम्बन्धः तत्र प्रतिलोमजा उत्तमवर्णासु स्त्रीषु हीनवर्णेभ्यः पुरुषेभ्यो जाताः सूतवैदेहकादयः अनुलोमजास्तूत्तमवर्णेभ्यो हीनवर्णासु स्त्रीषु जाता मूर्धावसिक्ताम्बष्ठादयः तत्र वर्णाश्रमभेदमधिकारित्वेनापेक्षते द्रव्यं करणत्वेन देशकालावाधारत्वेन वयस्त्वधिकारिविशेषणत्वेन स्वर्गं नरकं च फलत्वेन तत्र नरकस्य फलत्वं निषेधातिवृत्तौ द्रव्यं चरुपुरोडाशादिकं देशः समे यजेतेत्याद्युक्तविधः वयस्तु जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्याद्युक्तविधं कालस्तु वसन्ते वसन्ते ज्योतिषा यजेतेत्याद्युक्तविधः ॥ २ ॥

अपेक्षतां ततः किमत आह । गुणदोषभिदादृष्टिमिति । गुणदोषभेददर्शनमन्तरेण विधिनिषेधात्मकं तव वचः कथं नृणां निःश्रेयसप्रतिपादकं स्यात् गुणदोषभिदादृष्टिं ततः प्रवृत्तिं निवृत्तिं च उपजनय्य त्वद्वचः पुरुषार्थपर्यवसायि स्यादित्यर्थः । निःश्रेयसशब्दः पुरुषार्थमात्रपरः अतो गुणदोषादिभेददर्शनस्यावश्यकत्वात्तद्वर्जनं युक्तमिति भावः ॥ ३ ॥

अलौकिकश्रेयस्तत्साधनादिज्ञानं च शास्त्रैकोपजनितव्यमित्याह । पित्रिति । अर्थे अलौकिकश्रेयसि तत्साधनरूपे चार्थे अनुपलब्धे प्रत्यक्षादिभिरनवगते सति तथा साध्यसाधनयोः स्वर्गादिग्रन्थयोरप्यनुपलब्धयोः सतोः हे ईश्वर ! श्रेयः श्रेष्ठं चक्षुस्तद्ग्राहकत्वान्निगमरूपो वेद एव चक्षुषः श्रेयस्त्वं च कालकामक्षादिदोषराहित्यं वेदे तु पुरुषदोषासंस्पर्शः पितृदेवमनुष्याणामित्यनेनार्वाचीनानामलौकिकश्रेयस्तत्साधनादिज्ञानं वेदं विना नास्तीति किं वक्तव्यं यतः पूर्वेषामपि नास्तीति सूच्यते ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अधिकारिणामनेकविधत्वेन साधनानामपि तथात्वात्केषांचिद्धर्मादिविवक्षया कर्मयोगादिभेदेन त्रिधा विभज्य तत्स्वरूपं कथयन्नस्मिन्नध्याये तत्र अवतारिकया एव गुणस्तद्विपर्ययो दोष इति भगवदभिप्रायमप्युद्धवो विविच्य ज्ञापनाय पृच्छति । विधिश्चेत्यादिना । हे अरविन्दाक्ष ! ईश्वरस्य ते तव विधिश्च प्रतिषेधश्च विधिनिषेधलक्षणो निगमो वेदः कर्मणां गुणं दोषं चापेक्षते विहितकरणाद्गुणो निषिद्धकरणाद्दोष इति वक्तीत्यर्थः ॥ १ ॥

तदधिकारापादकवर्णाश्रमाणां विकल्पं भेदं च प्रतिलोमजोऽनधिकार्यनुलोमजोऽधिकारीति । प्रतिलोमानुलोमजं च अत्रापि विशिष्टमातापितृजातो विशिष्टाधिकारीति च धर्मार्जितं द्रव्यं कुरुक्षेत्रादिदेशं जातः पुत्रः कृष्णकेश इत्यादिलक्षणं वयश्च वसन्तादिकालं चेति द्रव्यदेशवयःकालाः तथा पुण्यफलं स्वर्गं पापफलं नरकं चापेक्षत इति सर्वत्र योजनम् ॥ २ ॥

संशयबीजमुत्थापयति । गुणेति । तव वचस्तु गुणदोषभिदादृष्टिमन्तरेण वर्तते विहितप्रतिषिद्धकर्मणां गुणदोषभेददर्शनं विहाय गुणदोषयोर्भेदो नास्तीत्येवं विधं तत्र निषेधविधिलक्षणं विहितनिषिद्धकरणहेतुगुणदोषभेददर्शिवेदवचनं कथं नु निःश्रेयसं पुरुषार्थपर्यवसायि स्यात् तदर्थमेव प्रवृत्तत्वं तदनुचितम् ॥ ३ ॥

कुतोऽस्माह । पितृदेवेति । हे ईश्वर ! तव वेदोऽनुपलब्धेऽर्थे मम-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वेश्वरत्वमोक्षादिविषये साध्ये सुखादौ साधने कर्मादावपि पित्रादीनां श्रेयश्चक्षुर्दिव्यमेव चक्षुरित्यन्वयः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदभिप्रायमबुद्ध्वेव निगदश्रवणाय पृच्छति । विधिश्चेति युग्मकम् अत्र गुणं दोषं चेति टीकायां गुणं पुण्यं दोषं पापं च क्रमेण गुणदोषरूपमवेक्षते इत्येव वाच्यं गुणदोषं चेति समस्तपाठे तस्य पुण्यपापरूपं गुणदोषमवेक्षत इत्यर्थः किं त्वस्मिन् पाठे चशब्दस्त्वनर्थकः ॥ १ ॥ २ ॥

गुणदोषभिदेति तैः तत्र निःश्रेयसं मोक्षः तथा वाक्यभेदमाशङ्क्याह । यद्वेति । अन्तरेणेत्यस्यैव योजनया विनेति व्याख्यातं तां तच्च विना निःश्रेयसं कथं स्यादित्यर्थः । अत एव प्रतिपाद्यत्वात् सामानाधिकरण्येन न तु वैयधिकरण्येन तच्च वच इत्यादिकं पुनरावर्त्यते इत्येवकारार्थः निःश्रेयसं कथं स्यादिति तु पूर्ववदेव योज्यं सर्वस्य वेदस्येति अन्तःकरणशुद्ध्यादिविधिनिषेधलक्षणस्यापि ज्ञानद्वारैवेत्यादिरिति भावः ॥ ३ ॥

अनुपलब्धेऽर्थे भगवत्स्वरूपविभवादौ ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ज्ञानं कर्म च भक्तिश्च विंशे साधु निरूप्यते ॥
तत्र तत्राधिकारी च गुणदोषव्यवस्थया ।

गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित इति यदुक्तं तस्य भगवदभिप्रेतमर्थं सहसा जानन्नपि तन्मुखेनैव तस्य विवरणं नानाविशेषसहितं श्रोतुकामस्तत्र विप्रतिपद्यमान इवाह । विधिश्चेति पञ्चभिः । विधिश्च प्रतिषेधश्च ईश्वरस्य तव निगमः आज्ञारूपो वेद एव तत्र विधिविधेयानां कर्मणां गुणमवेक्षते प्रतिषेध्यानां कर्मणां दोषमवेक्षते प्रतिपादयतीत्यर्थः विधिनिषेधाभ्यामेव गुणदोषौ पुण्यपापे स्वर्गनरकौ भवत इति यावत् तथा वर्णानाम आश्रमाणां च विकल्पं भेदं च तद्गतं गुणं दोषं चावेक्षते प्रतिलोमानुलोमजं तद्गतं च गुणदोषं प्रतिलोमजा उत्तमवर्णासु स्त्रीषु हीनवर्णेभ्यः पुरुषेभ्यो जाताः सूतवैदेहकादयः अनुलोमजास्तु उत्तमवर्णेभ्यो हीनवर्णासु जाताः अम्बष्ठकरणादयः द्रव्यादिगतांश्च गुणदोषान् स्वर्गनरकरूपं च गुणं दोषं च ॥ १—२ ॥

तथापि प्रस्तुते किमायातमत आह । गुणेति । निषेधविधिलक्षणं वचस्तव वेदरूपं वाक्यं गुणदोषभिदादृष्टिमन्तरेण अयं विहितत्वाद्गुणः अयं निषिद्धत्वाद्दोष इति या भेददृष्टिस्तां विना कथं निःश्रेयसं निःश्रेयसकरं स्यात् ॥ ३ ॥

न केवलं मनुष्याणामेव वेदो निःश्रेयसकरोऽपितु देवपित्रादीनामपीत्याह । पितृदेवेति । वेद एव तव श्रेयः श्रेष्ठं चक्षुर्ज्ञानहेतुः क्व अनुपलब्धेऽर्थे मोक्षे स्वर्गादौ च तथा साध्यसाधनयोः इदमस्य साध्यमिदमस्य साधनमित्यत्रापि ॥ ४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित इत्युक्तं तत्र शङ्कते विधिश्चेति पञ्चभिः । हे अरविन्दाक्ष ! ते तवेश्वरस्य सर्वनियन्तुः विधिश्च प्रतिषेधश्चेत्युभयविधो निगमो वेदः कर्मणां विधेयानां स्वर्गादिप्रदत्वं गुणं निषेध्यानां नरकादिप्रदत्वं दोषं चावेक्षते ॥ १ ॥

किंच निगमः वर्णाश्रमविकल्पादीन् गुणं दोषं चावेक्षते इत्यन्वयः एतच्चाग्रिमेऽध्याये स्फुटीभविष्यति तत्र वर्णादयः अधिकारिणः द्रव्यादयः उपकरणानि स्वर्गनरकौ फले इति विवेकः ॥ २ ॥

अतः विधिनिषेधलक्षणं निगमरूपं तव वचो गुणदोषभिदादृष्टिमन्तरेण नृणां निःश्रेयसं स्वार्थबोधकं कथं स्यात् ॥ ३ ॥

ननु सर्वोऽपि स्वार्थः प्रत्यक्षतोऽवगन्तव्य इत्यत आह । पित्रेति । अनुपलब्धेऽर्थे प्रत्यक्षतोऽवगन्तुमशक्येऽर्थे पित्रादीनां श्रेयः श्रेष्ठं चक्षुः प्रमापकं तव वाक्यरूपो वेद एव नन्वनुध्यानतोऽनुपलब्धोऽप्यर्थोऽवगन्तव्य इत्यत आह । साध्यसाधनयोरपि चक्षुरिति योजना अयमर्थः यथा भास्करप्रद्योतिता अर्था अन्यैश्चक्षुषा यथोपयोगं गृह्यन्ते तथा वेदप्रोक्ता वह्निधूमादयोऽर्थाः लौकिकैः बुद्ध्या साध्यन्ते न साधनत्वेन गृह्यन्ते किंबहुना चतुराननोऽपि वेदज्ञापितमेव सृष्ट्वं सृजति एतच्च वेदान्तकौस्तुभे स्थितम् ॥ ४ ॥

---

### भाषा टीका ।

उद्धव उवाच हे कमललोचन ! आप ईश्वर हैं आप की आज्ञा रूप जो वेद शास्त्र है वह विधि निषेध दोनों को कहता है जो सब कर्मों के गुण दोषों की अपेक्षा करता है क्योंकि गुण दोष के जाने बिना विधि निषेध नहीं होसकता है ॥ १ ॥

वर्ण आश्रमों के भेद अनुलोम प्रति लोम जाति द्रव्य देश अवस्था काल स्वर्ग नरक ॥ २ ॥

इन सबों में गुण दोष के भेद दृष्टि के बिना विधि निषेध रूप जो आप का वचन तिस से मनुष्यों को कैसे कल्याण होगा ॥ ३ ॥

हे ईश्वर ! आपका जो वेद है सो अदृष्ट धर्म के विषय में और उस के साध्य तथा साधन में पितर देव मनुष्यों के वास्ते नेत्र रूप है ॥ ४ ॥

---

गुणदोषभिदादृष्टिर्निगमात्ते न हि स्वतः ।
निगमेनापवादश्च भिदाया इति ह भ्रमः ॥ ५ ॥

श्रीभगवानुवाच ॥

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ ६ ॥
निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।
तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥ ७ ॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च शास्त्रेणैव विहितां भेददृष्टिं तस्मिन्नेव विषये शास्त्रं कथं निवर्तयेदित्याह । ते निगमात्त्वदाज्ञारूपाद्वेदादेव न हि स्वतः स्वस्मादर्थप्राप्तत्वेन निवर्तेत ह स्फुटम् भ्रमो भवति तं निवर्तयेति शेषः ॥ ५ ॥

विषयाभेदेऽप्यधिकारिभेदेनाविरोधं वक्तुं प्रथमं योगत्रयमाह । योगा इति । योगा उपाया ब्रह्मकर्मदेवताकाण्डैः प्रोक्ताः कर्म च निष्कामम् श्रेयोविधित्सया मोक्षसाधनेच्छया अन्य उपायो नास्तीति काम्यकर्मादिकं व्यावर्तयति तथा चोत्तराध्याये स्फुटीकरिष्यति य एतानित्यादिना ॥ ६ ॥

तेष्वधिकारिभेदमाह । निर्विण्णानामिति द्वाभ्याम् । इह एषां मध्ये कर्मसु निर्विण्णानां दुःखबुद्ध्या तत्फलेषु विरक्तानामत एव तत्साधनभूतकर्मन्यासिनां ज्ञानयोगः सिद्धिद इत्युत्तरेणान्वयः अनिर्विण्णचित्तानां दुःखबुद्धिशून्यानाम् अतः कामिनां तत्फलेष्वविरक्तानामित्यर्थः ॥ ७ ॥

यदृच्छया केनापि भाग्योदयेन तत्र काम्यकर्मसु प्रवर्तमानस्य सर्वात्मना विधिप्रतिषेधाधिकार इत्युत्तराध्याये वक्ष्यति निष्कामकर्मयोगाधिकारिणस्तु यथाशक्ति स्वच ज्ञानभक्तियोगाधिकारात्प्रागेव तदधिकृतयोस्तु स्वल्पः ताभ्यां सिद्धानां तु न किञ्चिदिति ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तस्मिन्नेव विषये पूर्वोक्तपुण्यपापादौ । नहि स्वत इति रागतो गुणदोषदृष्टिर्नास्ति । यदि स्वतः स्यात्तर्हि तर्केणापि निवर्त्तेत । अतः रागप्राप्त्यभावात् । किन्तु वेदेनैव प्राप्तत्वात् वेदार्थप्राप्तत्वेनैव निवर्त्तेत । तं भ्रमम् ॥ ५ ॥

विषयाभेदेऽपि पूर्वोक्तपुण्यपापादरूपाणां गुणदोषदृष्टिविषयाणामभेदेऽपीत्यर्थः । अधिकारिभेदेनेति । कर्माधिकारिणः प्रति निखिला एव गुणदोषाः वर्णिताः । शुद्धान्तःकरणान् परमसिद्धान् प्रति तु गुणदोषदृष्टिर्दोष इत्यनेनैक एवेति भावः ॥ ६ ॥

तेषु त्रिषु योगेषु । एषां योगानां मध्ये । तत्फलेषु कर्मफलेषु । अत एव विरक्तत्वादेव । तत्साधनेति फलसाधनभूतकर्मत्यागिनाम् । भक्त्यधिकारे तु "अन्त्यजा अपि तद्राष्ट्रे शङ्खचक्राङ्कधारिणः । अवाप्य वैष्णवीं दीक्षां दीक्षिता इव संबभुः" इत्यादिप्रामाण्येन जात्यादिकृतनियमाभावाच्छ्रद्धामात्रं हेतुरित्याह । यदृच्छयेति । केनापि परमस्वतन्त्रभगवद्भक्तसङ्गतत्कृपाजातेन भाग्योदयेन मङ्गलोदयेन तदुक्तम् । शुश्रूषोः श्रद्दधानस्येत्यादि ॥ ७—८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नहि स्वतः स्वोत्प्रेक्षया न भवतीत्यर्थः । गुणेति, विधिनिषेधवशात् गुणदोषभेदबोधः सिद्धः तथापि गुणदोषापवादं शृण्वतो मम चित्तं भ्राम्यतीत्यर्थः । अस्य चोद्यस्य परिहारः उपरिष्टाद्भविष्यति ॥ ५—६ ॥

निर्विण्णानामर्थार्जनादिक्लेशनिर्विण्णानां पञ्चमहायज्ञादिकर्मत्यागेन न ज्ञानयोगसिद्धिरिह विवक्षिता वचनान्तरैकार्थ्यात् "ते त्वघं भुञ्जते पापाः" इति गृहाचारस्यावर्जनीयत्वं ह्युच्यते स्वधर्मस्थ इति कामिनामिति इदानीं फलकामित्वमिह न विवक्षितं किन्तु पूर्वकामनाप्रयुक्तकर्मानुष्ठानवासनया इदानीमपि कर्मणि श्रद्धालूनामित्यर्थः । अनिर्विण्णचित्तानाम् अर्थार्जनादिक्लेशसहत्वादनिर्वेदः ॥ ७ ॥

यदृच्छयेति । न निर्विण्णः अर्थार्जनादिक्लेशसहः नातिसक्तः सामग्रीसम्भवे त्वनुतिष्ठामीति प्रतिपत्तिमान् ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतो गुणदोषभिदादृष्टिस्ते तव निगमादाज्ञारूपाद्वेदादेव न तु स्वतः एवं स्थितेऽधुना निगमेन गुणदोषदृष्टिर्दोषो गुणस्तूभयवर्जनम् इत्यनेनानुवादेन भिदाया गुणदोषदृष्टिभेदस्याप[illegible]

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवावस्थ कुतः कृत इति शेषः । अतो मे भ्रमः मम चित्तं भ्राम्यतीत्यर्थः ॥ ५ ॥

नहि सर्वस्य वेदबोधितं सर्वं वर्जयितव्यम् इत्युच्यते येन तत्र भ्रमः स्यात्किन्तु निरूपकभेदेन सर्वं व्यवस्थितम् इत्युच्यते नरकापत्तया हि स्वर्गो गुणः अतः अपेक्षितगुणदोषविभागमात्रं क्रियतेऽतो विधिनिषेधशास्त्रनिरूपकस्य स्वर्गो नरकश्चेत्युभयमपि दुष्टमिति गुणदोषभेदापवादः फलं मोक्षोपायस्तु निरूपकस्यापि गुणश्चेत्तर इति गुणदोषभेदापवादवचनं न तद्गोचरमपितु सङ्कुचितविषयमिति परिहारं विवक्षुस्तावदधिकारिभेदेन पुरुषार्थसाधनानि व्यवस्थितानीत्याह । योगास्त्रय इत्यादिना स्वस्वेऽधिकारे इत्यत प्राक्तनेन नृणां श्रेयोविधित्सया श्रेयस्साधनमिच्छया कैवल्यस्वर्गापवर्गरूपश्रेयःप्राप्त्यर्थं मया प्रोक्ताः के पुनस्ते इत्यत आह । ज्ञानमिति ज्ञानमत्र प्रकृतिविविक्तात्मोपासनात्मकं कर्माभिसंहितफलकर्मयोगः भक्तिः भक्तियोगः एभ्योऽन्य उपायः पुरुषार्थसाधनं कुत्रचिदपि नास्ति कस्यापि वेदस्तन्मूलस्मृतीतिहासपुराणादिष्वेतत्प्रतिपादनपर इत्यर्थः ॥ ६ ॥

इह नाम तत्र त्रिषु मध्ये कर्मसु निर्विण्णानां तत्फलेषु दुःखबुद्ध्या विरक्तानामत एव न्यासिनां यदृच्छया केनापि भाग्योदयेन तत्साधनभूतकर्मत्यागिनां ज्ञानयोगः तत्र तेषामधिकार इत्यर्थः । कामिनां स्वर्गकामानामनिर्विण्णचित्तानाम् उत्साहिनां कर्मयोगः ॥ ७ ॥

यदृच्छयेति केनापि भाग्योदयेन यदृच्छया मत्कथादौ मत्कथाश्रवणादौ जातश्रद्धः सञ्जातादरः न निर्विण्णो इत्यनेनेदानीं कर्मफलकामित्वं न विवक्षितं किन्तु पूर्वकामनाप्रयुक्तकर्मानुष्ठानवासनया इदानीमपि कर्मफलेष्ववशेषितवासनामात्रत्वम् अत एव नातिसक्तः दोषावेक्षणेनातीवासक्तिरहितस्तस्य भक्तियोगः अनुष्ठित इति शेषः सिद्धिदोऽपवर्गदः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

लौकिकं पूर्वपक्षमुपसंहरति—शृणोति । यतो हेतु उत्तमं चक्षुः कस्तेन कारणेन नियमाद्गुणदोषभेददृष्टिः स्वतो हि स्वाभाविकयैव ननु तर्हीत्थं निश्चितत्वमत्त्वत किमिति भ्रम इति तत्राह नियमेनेति । चशब्द एवार्थे भवता शिक्षिताः गुणदोषयोर्भेदस्य नियमेनैवापनोद उच्यते इति यस्मात्तस्मात् भ्रमः सञ्जातस्ततो निश्चयस्मवर्तं पृच्छामीति भावः ॥ ५ ॥

स्वतः सर्वगुणात्मा तु विष्णुरेकः सनातनः ।
अन्यस्तर्वं तत्प्रियत्वाद्गुणो दोषस्तथाऽप्रियम् ॥
एवं ज्ञानवतां दृष्टिरस्वस्त्वावगच्छति ।
कालदेशविशेषेषु प्रीतिमद्यमपेक्ष्यतु ॥
अविज्ञातवतस्तस्य मर्यादा वेदतः कृता ।
गुणदोषभिदा नास्ति भगवत्प्रियमन्तरा ॥

गुणदोषदृशेर्दोषो ह्यन्यत्र भगवत्प्रियात् ।
गुणा ये दोषतामीयुर्दोषाश्च गुणतां क्वचित् ॥
अतो दोषो न दोषः स्यान्न गुणोऽपि गुणो भवेत् ।
भगवत्प्रीतिविज्ञानाद्गुणदोषभिदां यदि ॥
पश्येत्तत्तद्गुणायैव विपर्यासं न कारयेत् ।
गुणदोषभिदा क्वापि स्वातन्त्र्येण न हि क्वचित ॥

इत्यनेनास्य तात्पर्यार्थो विज्ञायते । यद्वा गुणदोषभिदा दृष्टिर्निषमात्ते तव मते स्वतो नहिप्रत्युत गुणदोषभिदाया: अपवादोऽपि अतो भ्रम इति गुणदोषयोर्विहिताविहितकर्मानुष्ठानपरिनिष्ठितत्वं वेदो वक्तीति यद्यपि तत्तात्पर्यार्थो न किन्तु भगवत्प्रियाप्रियाविवेकाज्ञानपरिनिष्ठाविषयः—

स्वतस्तु गुणदोषत्वदृशोर्भेदेन वस्तुना ।
दोषापि गुणा एव स्याद्भगवत्प्रीतितो गुणः ॥
दोषस्तु तद्विपरीत्यादिति दृष्ट्वा भवेद्गुणः ।
कालदेशविशेषेण प्रीत्यज्ञानाज्जगत्स्थितेः ॥
मर्यादागुणदोषाणां कृता वेदेषु सर्वशः ।

इत्येतदेव—

स्वे स्वेऽधिकारे या निष्ठा सगुणः परिकीर्तितः ॥
विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः ।

इत्यादिना वक्ष्यते अतः विहिताद्यनुष्ठानपरिनिष्ठितत्वेन गुणदोषभेदनियमोऽकर्मात्प्रियादिविवेकाज्ञानविषयतिभावेन भगवानुक्तवमर्थं परिहारित्पंस्त्रित्वेन क्रोडीकृत्य मुक्त्युपायानाह योगास्त्रय इति योग उपायान्नृणामर्थो समर्थोविद्वान् इतिगुणविशिष्टानां नृनय इति धातोः वाभिर्दिशति । ज्ञानमिति । अन्ययोगं व्यवच्छिनत्ति नेति ॥६॥

तत्र ज्ञानयोगाधिकारिण आह । निर्विण्णानामिति । इह कर्मसु निर्विण्णानां न्यासिनां सनकादीनामितिशेषः—

सनकाद्या ज्ञानयोगा भक्तियोगाश्च देवताः ।
मानुषाः कर्मयोगाश्च त्रिधैते योगिनः स्मृताः ॥
सर्वेषां सर्वयोगैश्च प्राप्यामुक्तिर्न संशयः ।
तथाऽपितु विशेषेण सततेषां विधीयते ॥

इतिवचनमप्रमाणे ज्ञानादिगुणानां त्रिषु सत्वेऽपि (१)सामान्यविशेषविवक्षया विभागो युज्यते प्रमाणानां सत्वात् कर्मयोगाधिकारिणमाह । तेष्विति । ज्ञानभक्तियोगिनोऽपेक्ष्य ज्ञानभक्त्योरल्पत्वात्कर्मयोगिन इति ॥ ७ ॥

भक्तियोगाधिकारिण आह । यदृच्छयेति । तुशब्दो विशेषं सूचयति यः पुमानिति जातावेकवचनं यदृच्छया स्वादृष्टोद्भितभगवदिच्छया जातश्रद्धा मत्कथादौ किञ्चिदश्रद्धावन्तः न निर्विण्णाः नित्योत्पन्नसंसारासारज्ञानत्वाच्च कादाचित्कनिर्वेदाः नातिसक्ताः नित्यसम्पूर्णभोगत्वाच्च कादाचित्कविषयाः नातिसक्ता ये पुरुषाः अस्त्येषां भक्तियोगो मुख्यभक्तिरवामुख्यसिद्धिद इत्यन्वयः । उक्तमेतल्लक्षणां देवानामेवेति देवा एव भक्तियोगिन इत्यर्थः—

भगवद्गुणानुसारेण चेष्टार्थो नीयते हि यैः ।
भक्तियोगास्तु ते प्रोक्तास्तदृशाद्धिसुराः सदा ॥

---

१ तथाचसमानाधिकरणगुणानामप्यज्ञानादीनामाधिक्यविवक्षयाज्ञानयोगित्वाद्युक्तिः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्त्यानुसारिवेदार्थं ज्ञात्वा तदनुसारतः ।
भगवद्गुणैर्नियन्ते ते प्रोक्ता ज्ञानयोगिनः ॥
कर्माणि शास्त्रतो ज्ञात्वा तत्प्राधान्यानुसारतः ।
विज्ञातार्थैर्गुणाविष्णोर्ज्ञेयास्ते कर्मयोगिनः ॥
भक्तिर्ज्ञानं च किञ्चित्तु पश्चात्तेष्वपि जायते ।
तथापि कर्मयोगास्ते कर्मपूर्वत्वकारणात् ॥
भगवद्गुणानुरागित्वमधिकम्भक्तियोगिनाम् ।
तस्मात्तेऽप्यधिका ह्येषु देवाएव विशेषतः ॥
ईषद्वैराग्यमल्पं तु पूर्वं देवेषु जायते ।
पश्चाद्विरागोऽप्यधिको देवानां नात्र संशयः ॥
ज्ञानाधिक्यं तु देवानां भक्त्याधिक्यं तथैव च ।
विरागोऽप्यधिकस्तेषां सदैव सनकादिनाम् ॥
ज्ञानाधिक्यान्मनुष्येभ्यो भण्यन्ते ज्ञानयोगिनः ।
ननु ज्ञानादिकास्ते वै देवेभ्यस्तु कथञ्चन ॥
देवानामपि कामित्वं विद्यते यद्यपिस्फुटम् ॥
तथापि प्रत्यवायित्वान्मनुष्याः कर्मयोगिनः ।
त्रियोऽगाऽप्यधिको ब्रह्मा सर्वेभ्यः परमो विभुः ॥
महायोगेश्वरेशत्वात्तस्माद् ब्रह्मा चतुर्मुखः ।
इतिवचनात् समस्तम् युक्तम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गुणदोषेति । तैः तत्र तस्मिन्निति पूर्वोक्तपुण्यपापादिस्थर्थः यस्मादिति यद्यपि ततः स्वाभाविका तर्केणापि निवर्त्तेत न तु तथा वेदेनैव जातत्वात्तदर्थप्राप्तत्वेनैव निवर्त्तेत तदेवं हि स्फुटं योऽयं भ्रमो भवति स यस्मात्तदर्थप्राप्तत्वेनैव निवर्त्तेत तस्मा-द्वेदवाचा त्वमेव तं भ्रमं निवर्त्तयेत्यर्थः ॥ ५ ॥

टीकायां विषयाभेदेऽपि पूर्वोक्तपुण्यपापादिरूपाणामभेदे-नीत्यर्थः । अधिकारिभेदेनेति कर्मादिसाधकान् प्रति बह्वी गुण-दोषा वर्णिताः परमसिद्धान् प्रति गुणदोषदार्शैव इत्य-नेनैक एवेति भावः । तत्र अकिञ्चनाख्याया एव भक्तेः सर्वो-र्द्ध्वभूमिकावस्थितत्वम् अधिकारिविशेषानिष्ठत्वं च दर्शयितुं प्रक्रि-यान्तरं तत्र परतत्त्वस्य वैमुख्यपरिहाराय यथाकथञ्चित्सां-मुख्यमात्रं यत्सम्पत्त्येन लभ्यते तच्च त्रिधा निर्विशेषरूपस्य तदीयब्रह्मा-ख्याविर्भावस्य ज्ञानरूपं सविशेषरूपस्य च तदीयभगवदा-ख्याविर्भावस्य भक्तिरूपमिति अयं तृतीयश्च तस्य द्वय-स्यैवद्वारं कर्मार्पणरूपमिति तदेतत् त्रयं पुरुषयोग्यताभेदेन व्यवस्थापयितुं लोके सामान्यतो ज्ञानकर्मभक्तीनामेवोपायत्वं नान्येषामित्यनुवदति योगास्त्रय इति । योगा उपायाः मया शास्त्र-योनिना श्रेयांसि मुक्तित्रिवर्गप्रेमाणि अनेन भक्तेः कर्मत्वं व्यावृत्तम् ॥ ६ ॥

तेष्वधिकारहेतूनाह त्रिभ्याम् । इह एषां मध्ये निर्विण्णानां ऐहिक-पारलौकिकविषयप्रतिष्ठासुखेषु विरक्तचित्तानाम् अत एव तत्सा-धनलौकिकवैदिककर्मसंन्यासिनां तानि त्यक्तवतामित्यर्थः यद्वा यत्र दृढजातमुमुक्षुणामिति मिमिमतं तेषां ज्ञानयोगः सिद्धिदः कामिनान्तत्तत्सुखेषु रागिणाम् अत एव तेषु तत्साधनभूतेषु कर्मसु अनिर्विण्णचित्तानां तानि त्यक्तुमसमर्थानां कर्मयोगः सिद्धिदस्तत्सङ्कल्पानुरूपफलदः ॥ ७ ॥

अथ "ते वै विदन्त्यतितरन्ति च देवमायाम्" इत्यादौ तिर्य-ग्जना अपीत्यनेन भक्त्यधिकारे कर्मादिवज्जात्यादिकृतनियमाति-क्रमात् श्रद्धामात्रं हेतुरित्याह । यदृच्छयेति । यदृच्छया केनापि परमस्वतन्त्रभगवद्भक्तसङ्गतत्कृपाजातमङ्गलोदयेन तदुक्तं शुश्रूषोः श्रद्दधानस्येत्यादि ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं त्विदानीमुभयसङ्कटमुपस्थितमित्याह । गुणेति । निगमस्त्व-दाज्ञारूपाद्वेदादेव विधिनिषेधात्मकाद्गुणदोषभेददृष्टिर्विहिता अभूत् निगमेनाज्ञप्तया त्वदाज्ञयाभिन्नया गुणदोषभेददृष्टेरप्रमाणत्वोक्ति (इ)अस्पष्टमभिप्राय(ं)निश्चयासामर्थ्यान्मे भ्रमोऽभूत् तं त्वमेव निवर्त-येति भावः ॥ ५ ॥

अधिकारिभेदेनावस्थाभेदेन च गुणदोषभेददृष्टेर्विहितत्वं निषिद्धत्वं च यथायोगं भवेदिति तज्ज्ञापयितुमाह । योगा उपायाः ब्रह्मकर्मदेवताकाण्डैः प्रोक्ताः श्रेयांसि मोक्षत्रिवर्गप्रेमाणि तेषां विधित्सयेति मे सर्वत्र कृपैवेति भावः । नान्यम् एतत्त्रयं विनाऽन्यस्तपोयागादिकस्तपोऽष्टाङ्गयोगादेर्यथासम्भवं ज्ञानभक्त्यो-रेवान्तर्भावदर्शनादिति भावः । अत्र इत्यनेन कामिभिः कर्मण एव ज्ञानिभिर्ज्ञानस्यैवोत्तमात्वं शुद्धभक्तिश्च परा हता ॥ ६ ॥

तत्र के कुत्राऽधिकारिण इत्यपेक्षायामाह । निर्विण्णानामिति त्रिभ्याम् । इह एषां मध्ये निर्विण्णानां विरक्तानां गृहकुटुम्बादि-ष्वनासक्तानामित्यर्थः । अत एव कर्मसु गृहाश्रमप्राप्तेषु न्यासिनां त्यागवतां ज्ञानयोगो भवेत् तेषु गृहाश्रमकर्मसु अनिर्विण्ण-चित्तानां अतः कामिनां कामो विषयासक्तिस्तद्वतिशयवतां भुक्ति-मत्वर्थीयः देहगेहकलत्रादिष्वासक्तिमतामित्यर्थः ॥ ७ ॥

यदृच्छया प्रथमस्कन्धव्याख्यानयुक्त्या यादृच्छिकमहत्सङ्गेन मत्कथादौ जातश्रद्ध इति अत एव भक्तामृतकथायां मे इति भक्ताः सर्वे कथाः शृण्वन्तीति तत्र तत्र भक्तियोगे कथाश्रद्धालुरेवा-धिकारी दर्शितः अत्र तु भिन्नोपक्रम इत्यस्य ज्ञानिभ्यः कर्मिभ्यश्च वैशिष्ट्यम् एकवचनेन विरलप्रचारत्वं च ध्वनितं नातिसक्तः देहगेहकलत्रादिषु अत्यासक्तिरहितः अत्र निर्विण्णा इति तेषु निर्वि-ण्णत्वे ज्ञानेऽधिकारः अत्यासक्तत्वे कर्मण्यधिकारः अत्यासक्ति-राहित्ये भक्तावधिकारः इत्यधिकारत्रयविवेकः निर्वेदस्य कारणं निष्कामकर्महेतुकान्तःकरणशुद्धिरेव अत्यासक्तेः कारण-मनाद्यविद्यैव अत्यासक्तिराहित्यस्य कारणं यादृच्छिकमहत्सङ्ग एवेति तत्र तत्र कारणं द्वयं किञ्चैतदुत्कृष्टाधिकारिण एव लक्षणं किन्तु "वाञ्छन्निच्छन् अन्यमुकुन्दचरणाम्बुजम् । न भजेत्स-र्वतो मृत्युः" इत्युक्तेर्यादृच्छिकभक्तसङ्गेतरीन्द्रियपातेनैव भक्ता-वधिकारी ज्ञेयः ॥ ८ ॥

---

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९ ॥
स्वधर्मस्थो यजन् यज्ञैरनाशीः[1] काम उद्धव !।
न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥
अस्मिल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥ ११ ॥
स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा।
साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥ १२ ॥
न नरः स्वर्गतिं काङ्क्षेन्नारकीं[2] वा विचक्षणः।
नेमं लोकं च काङ्क्षेत देहावेशात्प्रमाद्यति ॥ १३ ॥
एतद्विद्वान् पुरा मृत्योरभवाय घटेत सः।
अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥
छिद्यमानं[3] यमैरेतैः कृतनीडं वनस्पतिम्।
खगः [4]स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ १५ ॥
अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः।
मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ते निगमात् विधिनिषेधलक्षणादाज्ञारूपाद्वेदात् नियमेन गुणदोषदृष्टिर्दोष इति भगवद्वाक्यरूपेण वेदेन अपवादश्च क्रियते अतः इदं स्फुटं भ्रमः संशयः ॥ ५ ॥

मुमुक्षोरुत्तमभक्तियोगमारुरुक्षोः यावद्यत्राधिकारस्तत्र निष्ठा गुणः अनधिकारे प्रवृत्तिर्दोषः ततः प्राप्तपरभक्तियोगः सर्वत्र निरपेक्षः गुणदोषदृष्टिशून्यः दृढविश्वासेन मां स्मरन्मुच्यते इति वक्तुं योगानाह श्रीपुरुषोत्तमः। योगा इति। श्रेयोविधित्सया मोक्षसाधनेच्छया योगा उपायाः अन्यः काम्यकर्मादिरूपः ॥ ६ ॥

तदधिकारीन् दर्शयति। निर्विण्णेति द्वाभ्याम्। इह एषां मध्ये परमात्मस्वरूपगुणादिश्रवणमननाद्यभिनिवेशेन कर्मसु निर्विण्णानां त्यक्ततदनुष्ठानाभिनिवेशानाम् न्यासिनां त्यक्तान्तःकरणमलानां यद्वा परमात्मनि अनुष्ठितं कर्मफलत्यागिनाम् ज्ञानयोगः सिद्धिद इत्याग्रिमेणान्वयः। भगवत्स्वरूपादिश्रवणादावनुत्पन्नरुचित्वेन तेषु कर्मसु अनिर्विण्णचित्तानां यतो हृदयशुद्धिकामिनाम् कर्मयोगस्तु सिद्धिदः ॥ ७ ॥

यदृच्छया मत्कथादौ जातश्रद्धः भक्त्युपयोगिषु कर्मसु न निर्विण्णः तेषु भक्तिपरत्वान्नातिसक्तः यः पुमानस्य भक्तियोगः सिद्धिदः भक्त्याधायसिद्धलक्षणमोक्षप्रद इत्यर्थः ॥ ८ ॥

भाषा टीका।

गुण दोष की दृष्टि तो आप की आज्ञारूप शास्त्र से है स्वयं नहीं है फिर आप की आज्ञा से उस गुण दोष दृष्टि का निषेध भी करते हो तो मेरे को इस बात में भ्रम होता है ॥ ५ ॥

श्रीभगवान् उवाच सब मनुष्यों के कल्याण के विधान की इच्छा से मैंने ज्ञान कर्म भक्ति ऐसे तीन प्रकार के योग कहे हैं इन से और कोई उपाय नहीं है ॥ ६ ॥

जो लोग इस संसार में कर्मों से उदासीन हैं और त्यागी हैं तिन के लिये ज्ञानयोग है उन कर्मों मे जिन का वैराग्य नहीं है और जो कामना वाले हैं तिन के वास्ते कर्मयोग है ॥ ७ ॥

जो पुरुष न विरक्त है न आसक्त है परन्तु दैवयोग से मेरी कथादिक मे जिस की श्रद्धा होगई है उस के वास्ते मेरा भक्तियोग सिद्धिदायक है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सावधिं कर्मयोगमाह। तावदिति नवभिः। कर्माणि नित्यनैमित्तिकानि यावता यावत् ॥ ९ ॥

कर्मयोगिनो ज्ञानभक्तिभूमिकारोहप्रकारमाह। स्वधर्मस्थ इति।

---

१ मांस २ चेति ३ कालावयवैः ४ स्वदेह इति पि० पाठः।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनाशीः कामोऽफलकामः अन्यन्निषिद्धं काम्यं च नरकयानं हि द्वेधैव विहितातिक्रमाद्वा निषिद्धाचरणाद्वा अतः स्वधर्मस्थत्वान्निषिद्धवर्जनाच्च नरकं न याति अफलकामत्वान्न स्वर्गमपीत्यर्थः ॥ १० ॥

किन्तु अस्मिल्लोकेऽस्मिन्नेव देहे अनघो निषिद्धत्यागी अतः शुचिर्निवृत्तरागादिमलः यदृच्छयेति केवलज्ञानादपि भक्तेर्दुर्लभतां द्योतयति ॥ ११ ॥

अनेन प्रकारेण ज्ञानभक्तिसाधनत्वान्नरदेहं स्तौति—स्वर्गिणोऽपीति । निरयिण इति दृष्टान्तत्वेनोक्तम् ज्ञानभक्तिभ्यां ज्ञानभक्त्योः तदुभयं स्वर्गिनारकिशरीरम् ॥ १२ ॥

अतो नरः स्वर्गतिं न काङ्क्षेत नारकीमिति दृष्टान्तः यद्वा स्वर्गनरकसाधनकर्माणि न कुर्यादित्यर्थः । मत्यातिभ्रष्टत्वात्पुनरपि मनुष्यो भवेयमित्यपि न काङ्क्षेत यतो देहावेशाद्देहासक्त्या स्वार्थे प्रमाद्यत्यवधानशून्यो भवति ॥ १३ ॥

अपि त्वेतद्देहसाधकमिति विद्वांस्तथार्थसाधिदमपि मर्त्यं ज्ञात्वा ऽप्रमत्तोऽनवसासन् मृत्योः पूर्वमेव मोक्षाय घटेत प्रयत्नं कुर्यात् ॥ १४ ॥

अप्रमत्तो मुक्तसङ्गः सुखं प्राप्नोतीत्यत्र दृष्टान्तः छिद्यमानमिति यमैर्यमवन्निर्दयैः पुरुषैः कृतं नीडं यस्मिंस्तम् स्वकेतं स्वस्थाश्रयम् अलम्पटोऽनासक्तः ॥ १५ ॥

दार्ष्टान्तिकमाह । अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वा भयेन वेपथुः कम्पो यस्य सः ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तत्र तेष्वधिकारिषु मध्ये सर्वात्मना सर्वथा स च विधिप्रतिषेधाधिकारः । तदधिकृतयोर्ज्ञानभक्त्यधिकारिणोस्तयोः स्वरूपः ज्ञानभक्त्यनुकूलः । न किञ्चिदिति अनुपयोगादन्तरायरूपत्वाच्च किञ्चिदपीत्यर्थः ॥ ९ ॥

भूमिका भवत्या ॥ अतः नरकयानस्य द्वैविध्यात् । स्वर्गिकर्मोजनायाः कृतत्वादित्यर्थः इत्युक्तम् ॥ १० ॥

यदृच्छया भक्तसङ्गतत्कृपालक्षणेन भाग्येन केवलज्ञानाद्विशेषज्ञानात् ॥ ११ ॥

अनेन निष्कामकर्मानुष्ठाननिषिद्धवर्जनरूपेण प्रकारेण । तथा चायमर्थः । तत् स्वर्गिनारकिशरीरं ज्ञानभक्त्योरसाधकं स्वर्गिणो विषयाभिनिवेशप्राबल्यान्नारकिणो महापीडावेशात्तु तत्तत्साधनाभावात् सर्वथा "तदुपर्यपि बादरायणः सम्भवात्" इति न्यायात् ॥ १२ ॥

अतः स्वर्गिनारकिशरीरस्य ज्ञानभक्त्यसाधकत्वात् नारकस्योपासनार्थत्वात्दृष्टान्त इत्युक्तम् । यदि तत्साधनं कर्मान्तरैवाकाङ्क्षामात्रेण तत्तदुपरि विधमेवेत्तदा तन्निषेधोऽपि सङ्कुच्छेदित्यरुचौ यद्वेति । तथाच मुख्यार्थानुपपत्त्या तत्तच्छब्दयोस्तत्तत्साधनकर्मसु लक्षणाभिप्रेता । अस्य नरदेहस्य न काङ्क्षेत मनुष्यत्वसाधनकर्माणि न कुर्यादित्यर्थः ॥ १३ ॥

तत्र देहम् ॥ १४—१५ ॥

दार्ष्टान्तिकं दृष्टान्तोपपाद्यं छिद्यमानत्वम् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तावत्कर्माणीति । बहुर्थायाससाध्यकर्माणि विवक्षितानि सर्वावस्थास्वपि पञ्चमहायज्ञादीनामपरित्याज्यत्वात् स्वधर्मस्थ इत्युच्यते ॥ ९ ॥

स्वधर्मस्थ इति सन्ध्योपासनाद्याचारनिष्ठः ॥ — १० ॥

अनघः निषिद्धान्निवृत्तः शुचिः ज्ञानं मद्भक्तिं चेति ज्ञानविपाकमनपेक्ष्य प्रथमत एव मद्भक्तिमाप्नोतीत्यर्थः ॥ ११ ॥

ज्ञानभक्तिभ्यां पुरुषार्थसाधकं लोकमिच्छन्तीत्यन्वयः । उभयं स्वर्गनरकम् ॥ १२ ॥

नारकीमेति नारकीमिवेति भावः ॥ १३ ॥

मृत्योः पुरा तत्क्षणात् प्रागेव अभवाय मोक्षाय ॥ १४ ॥

इदं शरीरं कृतनीडं कृतकृत्यमनीडं वनस्पतिं शरीरं खगः पक्षितुल्यः जीवः अलम्पटः निष्कामः ॥ १५—२० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, सति वासनामात्रावशेषे ततः काम्यकर्मस्वेव प्रवर्तेत नरकफलाश्रवणादावपि कथं तस्य भक्तियोगः स्यादित्यतस्तत्रोपायमाह । तावदिति ॥ यावता यावत् निर्विद्येतानीव निर्वेदो न स्यात् यावच्च मत्कथाश्रवणादौ वा श्रद्धा च न जायते तावत्कर्माण्यनभिसंहितफलानि वर्णाश्रमोचितानि कुर्वीत न निर्विद्येत यावतेति अनेनामोक्षं वासनामात्रानुवृत्तेस्तावत्कर्मानभिसंहितफलमनुष्ठेयमेवेति सूचितम् ॥ ९ ॥

एवमामोक्षं स्वधर्मस्थः सन्ध्योपासनाद्याचारनिष्ठः यज्ञैः पञ्चभिर्महायज्ञैर्मां यजन् काम्ये फलेऽनाशीः आशारहितः स्वर्गनरकौ न याति किन्तु जातमद्भक्तियोगो मामेव यातीत्यर्थः । अतो यदन्यदभिसंहितफलं कर्म नाचरेन्नानुतिष्ठेत् ॥ १० ॥

स्वर्गनारकौ न यातीति चेत् किं तर्हि यातीत्यत आह । अस्मिन्निति । अस्मिन् लोके देहे वर्तमानः अनघः निषिद्धान्निवृत्तः स्वधर्मस्थः अत एव शुचिः मत्कथाश्रवणादौ चेति चाशब्देन ज्ञानयोगेऽपि यावच्छ्रद्धा जायते तावज्ज्ञानयोगाधिकृतस्याप्यनभिसंहितफलवर्णाश्रमोचितकर्मानुष्ठेयमेवेति प्राक् सूचितं तदधुना स्पष्टमेवोक्तं ज्ञानं विशुद्धमिति यदृच्छया मद्भक्तिं वेत्यनेन तत्र तत्र भक्तियोगानुग्राहकत्वोक्तस्य ज्ञानस्य विपाकमनपेक्ष्य प्रथमत एव केनचिद्भाग्यविशेषेण भक्तियोगमाप्नोतीति सूच्यते ॥ ११ ॥

विवक्षितपरिहारोपयोगितया नरकस्वर्गकैवल्यमोक्षाणामुत्तरोत्तरं गुणवत्त्वमत्र द्योतयन्प्रतिनियपुरुषार्थसाधनक्षमं नरदेहं निहीनपुरुषार्थसाधनोपयुक्तं न कुर्यादित्याह । स्वर्गिण इति द्वाभ्याम् । स्वर्गिणः स्वर्गस्था निरयिणो नरकस्था एवं मानुषं देहमिच्छन्ति इति विवक्षः इच्छायां हेतुस्तेन देहं विशिनष्टि । साधकं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इति । ज्ञानभक्तिभ्यां कैवल्यमोक्षयोः साधकं प्राप्तिकरं नृदेहस्य तत्साधकत्वकीर्तनेन स्वर्गिनारकिदेहयोरसाधकत्वं सूचितं तत्स्पष्टमाह । उभयं तदसाधकमिति । उभयं स्वर्गिनारकिशरीरं शास्त्रस्य मनुष्याधिकारित्वात्तद्विहितस्यैव पुरुषार्थसाधनत्वादिति भावः ॥ १२ ॥

स्वर्गिणोऽपीच्छन्ति इत्यनेन स्वर्गिशरीरापेक्षयापि मनुष्यदेहस्योत्तमत्वं सूचितं तत्र हेतुतया निरतिशयपुरुषार्थसाधनत्वमुक्तम् अतो दृष्टादृष्टैषयिकसुखसाधनोपयुक्तं न कुर्यादित्याह । न नर इति । विचक्षणः कुशलः नारकीं गतिमिति दृष्टान्तार्थं यथा नारकीं गतिं न काङ्क्षेत्तथा स्वर्गगतिमपीत्यर्थः । गतिरूपाय: पुनरिमं लोकं नृदेहं च दृष्टादृष्टसुखसाधनोपयुक्तं न काङ्क्षेदित्यर्थः काङ्क्षायामनर्थमाह । देहावेशात्प्रमाद्यतीति । दृष्टादृष्टदेहसुखाभिनिवेशात्प्रमाद्यति प्रमादं प्राप्नोति प्रमादो मोहः अन्ततः स्थावरतां प्राप्नोतीत्यर्थः ॥ १३ ॥

नन्वपूर्वमन्यादिदमुच्यते इत्यसाङ्गत्यं परिहर्तुमाह । एतद्विद्वानिति । यो मृत्योः पुरा मरणात्पूर्वमेव शरीरदार्ढ्यावस्थायामेवेत्यर्थः । मर्त्यं मरणशीलमप्येतन्नरशरीरमर्थसिद्धिदं निरतिशयपुरुषार्थसिद्ध्युपयुक्तमितीदं ज्ञात्वा अप्रमत्तः अवहितचित्तो भवति स विज्ञानमवाय मोक्षाय घटेत यतेत अत उपयुक्तमेवेदं ज्ञानमिति नासङ्गतमुक्तमिति भावः ॥ १४ ॥

मृत्योः पुरैव यतेतेत्येतदेव रूपकविशेषाभिप्रायेणाह । छिद्यमानमिति । यमैर्यमवन्निर्दयैरेतैः पुरुषैः कृतं नीडं कुलायं यस्मिंस्तथाभूतमपि । वनस्पतिं यमैश्छिद्यमानं ज्ञात्वा खगः स्वकृतं स्वाश्रयं विहायालम्पटः अनासक्तः क्षेमं सुखं याति तथा कृतहृदालयनीडं वनस्पतितुल्यं शरीरं छिद्यमानं ज्ञात्वा पक्षितुल्यो जीवः निर्लम्पटो निष्कामः स्वकृतमुत्सृज्य नश्वरशरीरसम्बन्धनिवृत्त्युपायं ज्ञात्वा क्षेमं यातीत्यर्थः ॥ १५ ॥

एतदेव विवृणोति । अहोरात्रैरिति । अहोरात्रमात्रैः कालावयवैरायुः छिद्यमानं क्षीयमाणं ज्ञात्वा भयेन वेपथुः चलद्गात्रं यस्य सः मुक्तसङ्गः देहादिष्वसङ्गरहितः निरीहः निर्व्यापारः वैषयिकसुखार्थव्यापाररहितः परं प्रकृतिपुरुषविलक्षणं मां ज्ञात्वा उपासय उपशाम्यति प्रकृतिसम्बन्धाद्विरतो भवतीत्यर्थः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानभक्तियोगिनामपि ज्ञानभक्त्युदयात्पूर्वं ज्ञानभक्तिसाधनत्वादन्तःकरणशुद्धिद्वारा कर्मयोगः कर्तव्यतामर्हतीत्याह । तावदिति । वेदाविरुद्धयोग्यानां मनुष्याणामिदं ज्ञातव्यं यद्वा कर्मयोगिनमेव विविनक्ति । तावदिति ॥ ९ ॥

कर्मणां बन्धकत्वेन ज्ञानभक्तिद्वारा श्रेयःकारणत्वं कथमित्याशङ्कां परिहरन् तत्करणप्रकारमाह । स्वधर्मस्थ इति । ज्ञानयोगी निराशीर्निष्कामः अन्यान्निषिद्धं न करोति चेत् ॥ १० ॥

विहितकर्मणा स्वर्गादिकमप्राप्यं चेत् । किं तर्हि लभ्यमत्राह । अस्मिन्निति । वाशब्द उपमाने समुच्चये वा यथा ज्ञानमाप्नोति तथा भक्तियोगं यदृच्छया कर्मयोगी च शुद्धज्ञानभक्ती ॥ ११ ॥

ज्ञानभक्तिसाधनत्वान्मनुष्यशरीरमुत्तममित्याह । स्वर्गिण इति । लोकं देहं निरयिणः नारकाः ज्ञानभक्तिभ्यां पुरुषार्थसाधकं तदुभयं स्वर्गनरकस्थशरीरं ज्ञानभक्त्योरसाधकं फलरूपत्वात्तस्मान्मानुषमुत्तममित्यर्थः ॥ १२ ॥

बुभुक्षुणा नरकस्वर्गमनुष्यगतयः सदुःखत्वात्प्रमादहेतुत्वाच्च नाकाङ्क्ष्या इत्याह । न नर इति । इमं मनुष्यलोकं देहप्रवेशात्प्रमाद्यति । प्रमादवान्भवति ॥ १३ ॥

नन्वस्तु निराकाङ्क्षस्ततुत्तरं कार्यं किमत्राह । एवमिति पुरोक्तप्रकारेण स्वर्गादीनां दुःखादिमत्त्वाद्विद्वानिदं मनुष्यशरीरं मर्त्यमप्यर्थसिद्धिदं ज्ञात्वा मृत्योरभावाय संसारस्योन्मूलनाय घटेतेत्यन्वयः ॥ १४ ॥

किञ्चात इत्यत्राह । छिद्यमानमिति । खैरिन्द्रियैर्गच्छति जानाति । विषयानिति खगो जीवः कालावयवैस्त्रुटिलवादिलक्षणैश्छिद्यमानं स्वदेहमुत्सृज्य क्षेमं मोक्षं याति अलम्पटो विरक्तो ज्ञानसामग्रीमान् कथमिव खे गच्छतीति खगः पक्षी कखच्छेदन इति धातोः कालावयवैः परश्वादिनिशितास्त्रैः छिद्यमानमात्मना कृतनीडं वनस्पतिं विहाय क्षेमं प्रासरणमिव अलम्पट उत्पतनसमर्थः पटगताविति धातुः ॥ १५ ॥

उक्तमेव विशदयति । अहोरात्रैरिति । परम्परमात्मानं संसारादुपशाम्यति परं वृक्षान्तरमुपगम्य शाम्यति शान्तदुःखो भवति निरीहः निर्गतहरिचेष्टः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तावदिति तैः । तत्र स्वरूपः यदृच्छया ज्ञानभक्त्यनुकूलः न किञ्चिदिति अनुपयोगान्तरायरूपत्वाच्चेति भावः वाक्यार्थे तु तस्मादनयोः कर्मजगुणदोषाभ्यां न गुणदोषत्वमिति भावः यद्वा नन्वेवं केवलानां कर्मज्ञानभक्तीनां व्यवस्थोक्ता नित्यनैमित्तिकं कर्म तु सर्वेषामावश्यकं तर्हि सांकर्यं कथं शुद्धे ज्ञानभक्ती प्रवर्तयेतां तदेतदाशङ्क्य तयोः कर्माधिकारतां वारयति तावदिति । कर्माणि नित्यनैमित्तिकानीति टीका च अत एव "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः" इत्युक्तदोषोऽप्यत्र नास्ति आज्ञाकरणात् प्रत्युत जातयोरपि निर्वेदश्रद्धयोस्तत्करणे एवाज्ञाभङ्गः स्यात् यथा च स्वाख्यानमाज्ञायैवं गुणान्दोषानित्यस्य टीकायां भक्तिदार्ढ्येन निवृत्ताधिकारतया सन्त्यज्येति निवृत्ताधिकारत्वं चोक्तं करभाजनेन देवर्षिभूताप्तनृणामित्यादिना तेषां न किङ्करः किन्तु श्रीभगवत एवेत्यनधिकारित्वम् अत्र कर्मपरित्यागहेतुत्वेनाभिधानाच्छ्रद्धाचरणपदयोरैकार्थ्यं लभ्यते तथ्ययुक्तं श्रद्धा हि शास्त्रार्थविश्वासः शास्त्रं च तदशरणस्य भयं तच्छरणस्याभयं वदति ततो जातायाः श्रद्धायास्तच्छरणापत्तिरेव लिङ्गमिति अत्र विशेषजिज्ञासायां भक्तिसन्दर्भो दृश्यः ॥ ९ ॥

तदेवं योगत्रयं तदधिकारहेतूश्चोक्त्वा कर्मणोऽपि यथा भगवत्साम्मुख्यरूपत्वं स्यात्तथाह । स्वधर्मस्थ इति । टीकायां स्वर्गमपीति पुण्यफलभोगस्योपलक्षणमेवेदम् अफलकामत्वं केवलेश्वराराधनबुद्ध्याकुर्वाणत्वं तत्र ज्ञानिसङ्गे सति तन्मार्गमेव समवलम्ब्य भवेत् भक्तसङ्गे तु तत्सन्तोषमयत्वम् ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अतो यदृच्छयेति पूर्वभक्तकसङ्गतत्कृपालक्षणां भाग्यं बोधितं तदुक्तम् एतावानेव यजतामित्यादि ॥ ११ ॥

उभयं तत्साधकमिति स्वर्गिणो महाविषयावेशान्नारकिणो महापीडावेशात् नतु तयोः कर्मवत्सार्वत्रिकत्वात् "तदुपर्यपि बादरायणः सम्भवात्" इति न्यायेन ॥ १२ ॥

तस्मात्प्राप्तेन नरदेहेन ज्ञानभक्ती एव साधयेत्तु स्वर्गस्थादिकं काङ्क्षेदित्याह । न नर इति ॥ १३ ॥

अथ वैराग्यपूर्वकं विज्ञानमार्गं विवृणोति । एतद्विद्वानित्यादिना जातेष्वतः प्राक् ॥ १४—२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेवं जात्यैवात्यासक्तस्य जीवस्य कर्माधिकारः स्वाभाविक एव स च कियत्पर्यन्तस्तथा ज्ञानाधिकारो भक्त्यधिकारश्च कदा-कदाचित्सम्भवेत्तावामाह । तावदिति । कर्माणि नित्यनैमित्तिकानि तावता यावत् न निर्विद्येत कर्मणान्तःकरणशुद्धौ सत्यां यावन्निर्वेदो न जायत इत्यर्थः । निर्वेदे तु जाते निर्विण्णानां भावः । तथा आकस्मिकमहत्कृपाजनिता श्रद्धा यावदिति ज्ञानयोग इति मदुक्तेऽत्र एवाधिकारो न कर्मणीति श्रद्धातः पूर्वमेव कर्माधिकारः श्रद्धायां जातायान्तु जातश्रद्धस्तु यः पुमानिति मदुक्तेर्भक्तावेव केवलायामधिकारो न कर्मणीति भावः श्रद्धा चैषमात्यन्तिक्येव ज्ञेया स च भगवत्कथा श्रवणादिभिरेव कृतार्थी भविष्यामि नतु कर्मज्ञानादिभिरिति दृढतरनिश्चयलक्षणैव तादृशशुद्धभक्तसङ्गोद्भूतैव ज्ञेया अतएव

"श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः ॥"

इत्युक्तदोषोऽप्यत्र नास्ति आज्ञाकरणात् प्रत्युत जातायां श्रद्धायां तत्करणे आज्ञाभङ्गः प्रसज्जेदिति किन्त्वप्राप्तमहत्कृपस्याजाततादृशश्रद्धमपि वैष्णवान्तरोत्कर्षं दृष्ट्वैव सद्य एव कर्मत्यक्त्वा भगवन्तं भजन्तं जनमेव तद्वचन विषयीकरोतीति केचिदाहुरन्ये तु श्रुतिस्मृती भक्तिप्रतिप्रतिपादिके एव नतु वर्णाश्रमधर्मप्रतिपादिके मयादिष्टानपि स्वकान् धर्मान् सन्त्यज्य यः सर्वान् मां भजेत्स च सत्तम इति भगवदुक्तिविरोधात् अनन्यभक्तानामस्माकं श्रुतिस्मृत्युक्तविधिनिषेधाभ्यां न किमपि प्रयोजनमिति मत्वा यदेकादश्यादिव्रतानमाचरणं ताम्रपात्रस्थदधिदुग्धादेः काश्यपात्रस्थनारिकेलोदकस्य च भगवतेऽर्पणं तस्य च भगवदर्पितस्य भक्षणमिति निषिद्धाचरणं च तदेव श्रुतिस्मृती ममैवाज्ञे इति भगवदुक्तिर्विषयीकरोतीत्याचक्षते न च इति निजधर्मं इति न चलति न कम्पते इति तत्रार्थः अत्र प्राचीनभक्तानामनन्यानामपि कर्मिकुलसङ्गमे स्वेनैव तदनुरोधवशात् यदीषत् कर्मकरणं तत्कर्माकरणमेव तत्र श्रद्धाराहित्यात्—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह इति ।

भगवदुक्तेः ॥ ९ ॥

अत्यासक्तस्य कर्मिणः स्वर्गनरकगामिनः कदाचित्सम्भविनं निष्कामकर्मयोगमाह । स्वधर्मस्थ इति । अनाशीः कामः फल-कामनारहितः अन्यत् निषिद्धम् अतोऽयं स्वधर्मस्थत्वेन विहितानुतिष्ठनात् निषिद्धवर्जनाच्च नरकं न याति फलकामनाराहित्याच्च स्वर्गमपीत्यर्थः ॥ १० ॥

तर्ह्येवं कर्मी किं प्राप्नोत्वित्यत आह—अस्मिन्नेव मर्त्यलोके स्थितः स्वधर्मस्थ इति निष्कामकर्मकरणात् अनघ इति निष्पत्वाच्च शुचिः शुद्धान्तःकरणः सन् विशुद्धं ज्ञानमाप्नोति ज्ञानान्मोक्षञ्च यदृच्छयेति यदि च यादृच्छिकशुद्धभक्तसङ्गलाभस्तदा मद्भक्तिं च केवलां तया च प्रेमाणं प्राप्नोति यदि च कर्ममिश्रज्ञानमिश्रभक्तिमत्साधुसङ्गलाभस्तदा ततः प्राप्तया कर्ममिश्रया ज्ञानमिश्रया च प्रधानीभूतया भक्त्या अन्ततः शान्तिरतिं प्राप्नोति ॥ ११ ॥

अतो मुक्तिप्रेमभक्तिसाधकं नरदेहं स्तौति—स्वर्गिण इति षड्भिः । ज्ञानभक्तिभ्यां ज्ञानभक्त्योः तदुभयं स्वर्गिनारकिशरीरम् ॥ १२ ॥

तस्मादुत्कृष्टां नरगतिं प्राप्य ततो निकृष्टां स्वर्गतिं नरकगतिं च कृताभ्यां पुण्यपापाभ्यां न कामयेतेत्याह । नेति । एवं रहितां नृगतिमपि सुखेन तिष्ठामीति बुद्ध्या न कामयेतेत्याह नेममिति । इमं नरलोकं यतो देहावेशात् देहासक्त्या स्वार्थे ज्ञाने भक्तौ वा प्रमाद्यति ॥ १३ ॥

परन्तु एतन्मर्त्यशरीरं साधकमिति विद्वान् जानन् मृत्योः पूर्वमेव अभवाय भवनिवृत्तये यतेत अप्रमत्तः अनलसः सन् मर्त्यमपि सिद्धवदन्वेन शरीरं मर्त्यमेव [illegible] ज्ञात्वा ॥ १४ ॥

देहाद्यनास्थायां दृष्टान्तमाह । छिद्यमानं यमैरेतैः पुरुषैश्छिद्यमानं कृतं नीडं यस्मिन्स्तं वृक्षं स्वरूपाभयं उत्सृज्य त्यक्त्वा अलम्पटः अनासक्तः खगश्चतुरः पक्षी यथा याति ॥ १५ ॥

तथैव अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वा निरीह उपशान्तिं प्राप्नोति ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कर्मयोगेन तु ज्ञानभक्तिलाभस्ततो मुक्तिरित्याह । तावदिति त्रिभिः ॥ ९ ॥

यदि अनाशीःकामः अनाशीः फलवासनारहितः कामः सङ्कल्पो यस्य सः स्वधर्मस्थः स्वोचितकर्मपरः यज्ञैः यथा योग्यैः यजन् स्वर्गं न याति यदि अन्यत् निषिद्धं न समाचरेत् अतो नरकं न याति ॥ १० ॥

किन्तु ज्ञानं विशुद्धं भक्तिश्रेयस्करम् विशुद्धमिति एवं लिङ्गस्यापरिणामेन योज्यं विशुद्धां ज्ञानपूर्विकां मद्भक्तिं वाऽऽप्नोति ततो मुक्तो भवतीति भावः ॥ ११ ॥

उक्तयोगत्रयाधिकारित्वेन मोक्षसाधकं देहं स्तुवन्मुमुक्षोर्मुक्तिमाह । स्वर्गिण इति पञ्चभिः । एतं लोकं नरदेहं ज्ञानभक्तिभ्यां साधकं मोक्षस्येति भावः । तदुभयं स्वर्गिनारकिविलक्षणम् ॥ १२ ॥

[1]नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स [2]आत्महा ॥१७॥
यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।
अभ्यासेनाऽऽत्मनो योगी धारयेदचलं मनः ॥ १८ ॥
धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।
अतन्द्रितोऽनुरोधेन मार्गेणाऽऽत्मवशं नयेत् ॥ १९ ॥
मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ।
सत्त्वसम्पन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नरः देवानरदेहवान् स्वर्गति नारकीं गतिं वा न काङ्क्षेत इमं लोकं चापि न काङ्क्षेत पुण्यापुण्यमिश्रकर्माचरणेन स्वर्गे नरके वा वास्मात् न पातयेदिति भावः । यतो विचक्षणोऽपि देहावेशात्प्रमाद्यति इष्टं हित्वा अनिष्टे निमज्जति ॥ १३ ॥

तर्हि किङ्कुर्यादित्यत आह । एतदिति । सः नरः विद्वांश्चेत्तर्हि इदं नृत्वशरीरमर्थासिद्धिकमपि मर्त्यं मरणधर्मकं भवति एतज्ज्ञात्वा इत्यवधार्य अप्रमत्तः सन् अनवाय ज्ञानभक्तिभ्यां मोक्षाय यतेत ॥ १४ ॥

अप्रमत्त एव यतेत इत्यत्र दृष्टान्तमाह । छिद्यमानमिति । यमैर्निर्घृणैः एतैः प्रसिद्धैः ॥ १५ ॥

अप्रमत्तस्य फलमाह । अहो रात्रैरिति भयेन वेपथुः कम्पो यस्य सः मुक्तसङ्गः सङ्गो येन सः परं माम् बुद्ध्वा प्राप्नोति मम साधर्म्यं प्राप्नोति ॥ १६ ॥

---

भाषा टीका ।

जब पर्यन्त कर्मों से वैराग्य न होवे तब तक कर्मों को करै अथवा जब तक मेरी कथा के श्रवण में श्रद्धा न होवे तब तक कर्मों को करै ॥ ९ ॥

हे उद्धव ! अपने धर्म में स्थित होकर कर्म करै और कामना न करै यदि और दूसरे कर्मों को नहीं करै तो तब स्वर्ग अथवा नरक को नहीं जाता है ॥ १० ॥

अपने धर्म में स्थित होकर इस लोक में वर्तमान होवे पवित्र रहै निष्पाप होवे तब विशुद्ध ज्ञानको प्राप्त होजाता है अथवा दैवयोग से मेरी भक्ति को प्राप्त होता है ॥११॥

इस मनुष्य शरीर को स्वर्ग वाले तथा नरक वाले दोनों चाहते हैं यह शरीर ज्ञान भक्ति दोनों के सिद्ध करने वाला है उन दोनों देवता नारकि शरीरों से ज्ञान कर्म नहीं सिद्ध होते हैं ॥ १२ ॥

बुद्धिमान् मनुष्य न स्वर्ग की इच्छा करै न नरक की न इस लोक की इच्छा करै क्योंकि देह के अभिमान करने से मनुष्य को प्रमाद होजाता है ॥ १३ ॥

इस बात को जान कर पुरुषको मृत्युकाल के आने से पहिले ही अपने मोक्ष के लिये यत्न करना चाहिये सावधान होकर जाने कि यह शरीर मरने वाला है तौभी मनोरथ के सिद्ध करदेने वाला है ॥ १४ ॥

यमरूपी के निर्दयी दुष्टों से कटते हुये अपने घोंसला वाले पेड़ निवासस्थान को छोड़ कर निर्लोभ होकर जो पक्षी चला जाता है सो सुखी हो रहता है ॥ १५ ॥

इसी तरह से रात दिनों के बीतने से व्यर्थ में अपनी आयु के कटते हुये जान कर कांपता हुआ सब पुरुष संग को छोड़कर परमात्मा को जानकर चेष्टा रहित होकर सब कामनाओं से शांत होजावे ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमप्रवर्तमानं प्रमत्तं निन्दति—नृदेहं एवार्थं नावं प्राप्येत्यध्याहारः यो भवाब्धिं न तरेत्स आत्महा तत्र हेतवः आद्यं सर्वफलानां मूलम् एतदुपार्जितकर्मभिः सर्वप्राप्तेः किञ्च सुदुर्लभमुद्यमकोटिभिरपि प्राप्तुमशक्यम् तथापि तु सुलभम् यदृच्छया लब्धत्वात् तं च सुकल्पं पटुतरम् किंच गुरुः कर्णधारो नेता यस्य तम् मया च स्मृतमात्रेणानुकूलमारुतेन प्रेरितम् ॥ १७ ॥

एवं तावद्विरक्तस्य वैराग्यद्वारा ज्ञानभक्तिसाधकं कर्मयोगमुक्त्वेदानीं सम्यग्विरक्तस्य ज्ञानयोगं तस्य च ज्ञानप्राप्तेः पूर्वं किञ्चित्कृत्यं वर्जनीयं चाऽऽह सार्धैर्नवभिः । यदा त्वारम्भेषु कर्मसु निर्विण्णो दुःखदर्शनेनोद्विग्नस्तत्फलेषु विरक्तश्च तदा संयतेन्द्रियस्सन्नात्मनोऽभ्यासेनाऽऽत्मविषयबुद्ध्यावृत्त्या अचलं यथा भवति तथा मनो धारयेत् ॥ १८ ॥

---

1 नृदेहमासाद्यसुदुर्लभं वः । 2 जगाम यः ।

एष वै परमो योगो मनसः सङ्ग्रहः स्मृतः ।
हृदयज्ञत्वमन्विच्छन् दम्यस्येवार्वतो मुहुः ॥ २१ ॥
साङ्ख्येन सर्वभावानां प्रतिलोमानुलोमतः ।
भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥ २२ ॥
निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।
मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ २३ ॥
यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ।
ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र प्रथममेवात्यन्तधारणासंभवात्स्वभावानुसारेण वशीकरणमाह यर्हि आशु आत्मपरिभ्रमवदनवस्थितं भवति तदाऽनुरोधेन किंचिदपेक्षापूरणद्वारेण ॥ १९ ॥

ननु तर्हि यथा पूर्वमेव स्यात्तत्राऽऽह मनोगतिं तु न विसृजेन्नोपेक्षेत किंत्वप्रमत्तः सन् पश्येदित्यर्थः ॥ २० ॥

अनुरोधमार्गं सदृष्टान्तं स्तौति एषः अनुवृत्तिमार्गेण मनसः संग्रहः परमो योगः तत्साधनत्वादुपचारेण स्तुतिः यथा अर्वतस्य दम्यस्याश्वस्य हृदयज्ञत्वं स्वाभिप्रायेण गतिमन्विच्छन्नपेक्षमाणोऽश्ववारकः प्रथमं किंचित्तद्गतिमनुवर्तते तदा च दृढमना तं धृत्वैव गच्छति नतूपेक्षते तद्वदित्यर्थः ॥ २१ ॥

एवमीषद्वशीकृतस्य मनसोऽत्यन्तनिश्चलत्वोपायानाह—साङ्ख्येनेति त्रिभिः । साङ्ख्येन तत्त्वविवेकेन सर्वभावानां महदादिदेहान्तानामनुलोमतः प्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं चान्वनुध्यायेत् प्रसीदति निश्चलं भवति ॥ २२ ॥

ननूपायसहस्रेणापि मनो विषयाकारतां न त्यजति किंभूयो भूय उपदेशेनेति चेत्तत्राऽऽह—निर्विण्णस्येति । ततश्चागमापायिषु तेष्वाविर्भूतात्मदर्शनात्तदविवेकापन्नसंसारे निर्विण्णस्यातो विरक्तस्य ततश्चोक्तवेदिनो गुरूपदिष्टार्थबोधकस्य ततो गुरूपदिष्टस्यैव चिन्तितस्य पुनः पुनरनुचिन्तया दौरात्म्यं देहाद्यभिमानं त्यजति ॥ २३ ॥

किंच यमादिभिर्योगमार्गैरान्वीक्षिक्या पदार्थशोधनेन ममार्चनध्यानादिभिर्वा वाशब्देनास्य पक्षस्य स्वातन्त्र्यं दर्शयति एतैरुपायैर्योग्यं परमात्मानं मनः स्मरेन्नान्यैस्तोषकं कुर्यादित्यर्थः ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी

अप्रयतमानं यावत्कुर्वन्तं तत्र आत्मधारणविषये । धृतादिति सुकेहस्तपादितकर्मभिः । तथापि सुमुखत्वेऽपि । यदृच्छया केनापि भाग्योदयेन ॥ १७ ॥

तस्य च सम्यग्विरक्तस्य । किंचित् कृत्यं मनोधारणादि । वर्जनीयश्च रुद्धस्य मनस उपेक्षणादि । आत्मविषयवृत्तिसन्तत्या सजातीयप्रत्ययप्रवाहेन ॥ १८ ॥

तत्र मनोधारणे । तत्स्वभावानुसारेण मनः स्वभावानुकूल्येन । किंचिदपेक्षापूरणं मिष्टान्नादिरूपो ... तत् सेवित्वा पुनर्निर्वेदेन तत्त्यजनम् ॥ १९ ॥

पेक्षापूरणं तर्हि यथापूर्वं विषयाविष्टम् ॥ २० ॥

अनुरोधमार्गम् आनुकूल्येन मनोनिरोधमार्गम् । अनुवृत्तिमार्गेण । किंचित्तदपेक्षापूरणद्वारेण । तत् साधनत्वात् । योगसाधनत्वात् उपचारेण अभेदारोपेण आयुर्घृतमितिवत् स्तुतिः । तद्गतिमश्वगतिं । तदाश्वानुवर्तनकाले । तमश्वम् ॥ २१ ॥

यावत् प्रसीदतीति मनःप्रसादे भावानां नश्वरत्वानुसन्धानमेव विरक्तिद्वारा साधनमित्यभिप्रेतम् ॥ २२ ॥

ननूपायसहस्रेणेत्यादि शङ्कासमाधानाभासः कश्चिदस्ति तदयुक्तमेव ततश्चेति पृथगेव योजनोत्थापनात् । ततश्च भवाप्ययानुध्यानानन्तरं तेषु भावेषु । तदविवेकापन्ने संसारे आत्मनो देहादेः पृथक्त्वाज्ञानावलम्बिते संसारे । निर्विण्णस्य दुःखवत्त्वादुद्विग्नस्य । अतो निर्विण्णत्वात् ततश्च विरक्तत्वे सति । तत उक्तवेदित्वे सति ॥ २३ ॥

पदार्थशोधनेन जहदजहल्लक्षणाभ्यां तत्त्वं पदार्थयोः सामानाधिकरण्येन अस्य पक्षस्य परापेक्षत्वमाशङ्क्य पक्षान्तरमाह—ममार्चोपासनाभिर्वेति । ततश्च यमादिभिर्न प्रयोजनमिति भावः । अन्यैः कर्मभिर्न प्रयोजनं अन्यत् कर्मादिकम् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हृदयज्ञत्वं स्वमनोऽभिप्रायवेदित्वं । मनः कल्पति असुमेते उत्पथं गन्तुमिच्छति शाम्यतीत्येवमालोचन गम्यप्रवृत्ती- यर्दस्य उत्पत्तिप्रतिलोमक्रमेणाप्ययः ॥ २२ ॥

सृष्टिः प्रलयादेः चिन्तितस्यानुचिन्तनं भूयोभूयोऽवसता ॥ २३ ॥

स्पष्टमन्यत् ॥ २४—२५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निर्विण्णस्य संसारादुद्विग्नस्य अत एव विरक्तस्य ॥ २३ ॥
किमन्यया गतिक्रियवेत्याह ममार्चोपासनाभिर्वेति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अहो दरिद्रश्चिन्तामणिमकस्मात्प्राप्य पङ्कोऽपि पतीत्याह—नृदेहम् आद्यं सर्ववाञ्छितफलानां मूलम् उद्यमकोटिभिरपि प्राप्तुं मशक्यत्वात् सुदुर्लभमपि केनापि भाग्येन प्राप्तत्वात् सुलभं प्लवं नावं प्राप्नोति शेषः तत्रात्यतिभाग्यवशात् सुकल्पं पटुतरं गुरुः संश्रितमात्र एव कर्णधारो नाविकः पारं नेता यत्र तं मया च सेव्यमानेनानुकूलमारुतेन प्रेरितं वाक्यमिदं ज्ञानिप्रकरणपातित्वात् तेषां च भवाब्धितरणस्यानुपहितफलत्वात्तायुक्तमिति केचित् शुद्धभक्तानामपि भवाब्धितरणस्यानुसंहितफलत्वाभावेऽपि भवाब्धितरणं भवेदिति विहिताकरणलक्षणः प्रत्यवायो न स्यादित्यन्ये ॥ १७ ॥

ज्ञानभक्त्यधिकारिणोः साधारण्येनैव स्वार्थसाधकं नरदेहं स्तुत्वा ज्ञानाधिकारिणः मावश्यकं कृत्यं वदन्नेव तस्य प्राथमिकं स्वभावं दर्शयति—यदेति सार्द्धनवभिः । गृहाद्यारम्भेषु निर्विण्णः दुःखदर्शनेनोद्विग्नः तदधिकारप्राप्तकर्मफलेषु च विरक्तः तदा योगी यमनियमादियोगयुक्तः आत्मनः मनः अचलं यथा स्यात्तथा धारयेत् ॥ १८ ॥

यर्हि तु यत्नेन धार्यमाणमप्यतिचञ्चलतया आशु प्रथमम् अनवस्थितं द्विगुणितं चित्तचाञ्चल्यं भवेत् बलवतः कामादिवेग स्यात्यन्तधारणेन वेगो द्विगुणितो भवेदेवेति भावः तदा अनुरोधेनमकिञ्चित्तदपेक्षापूरणद्वारेण ॥ १९ ॥

ननु तर्हि यथापूर्वमेव स्यात् तत्राह मनसो गतिं तु विसृजेत् किन्तु स्वस्मयेदेवेत्यर्थः ॥ २० ॥

अनुरोधमार्गमकिञ्चिद्दोषदपेक्षापूरणद्वारेण सदृष्टान्तं स्तौति एष किञ्चिदेतदपेक्षापूरणमार्गेण मनसः सङ्ग्रहः स्ववशीकारः परमो योगः यथा दम्यस्य दमयितुमिष्टस्य अर्वतोऽश्वस्य स्वरूपत्वं अर्थात् स्वहृदया आशिक्षस मम भिप्रायविज्ञत्वं इत्याभिप्रायमसावश्वो जानात्विति इच्छन्नश्ववारकः सहसा तद्वशीकारासम्भवात् प्रथमं किञ्चिद्गतिमेवानुवर्त्तते इति शेषः । तद्वदित्यर्थः । तदापि रश्मिना तं धृत्वैव गच्छति न तूपेक्षते ॥ २१ ॥

एवमीषद्वशीकृतस्य मनसोऽत्यन्तनैश्चल्योपायानाह—साङ्ख्येनेति त्रिभिः । साङ्ख्येन, तत्त्वविवेकेन सर्वभावानां महदादिपृथिव्यन्तानां अनुलोमतःप्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं च ॥ २२ ॥

उक्तवेदिनः उक्तार्थपर्य्यालोचकस्य ॥ २३ ॥

आन्वीक्षिक्या तत्त्वविचारेण ममार्चेति वाशब्देनास्य पक्षस्य स्वातन्त्र्यं दर्शयतीति स्वामिचरणाः वाशब्देऽप्यर्थं इत्यन्ये एतैरेव योग्य परमात्मानं स्मरेन्नान्यैः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रमते निन्दति नृदेहमिति मुक्त्यधिकारित्वेनाद्यं प्रथमं मुख्यमित्यर्थः अत एव सुदुर्लभमपि दैवात्सुलभं नृदेहं प्लवं नावमाश्रित्य भवाब्धिं यो नतरेत्स आत्महा ॥ १७ ॥

एवमेकेन श्लोकेन योगात् द्वाभ्यां तदधिकारिभेदं त्रिभिः कर्मयोगिनो ज्ञानभक्त्यादिप्रकारं पञ्चभिर्योगिनां मुक्तिप्रकारं तत एकेन प्रयतनिन्दां चोक्त्वाथ सर्वेषां योगिनामुपकारकं मनोनियमनमाह—यदारम्भेष्विति सप्तभिः । यदारम्भेषु संसारप्रापकेषु कर्मसु निर्विण्णः. यतो विरक्तस्तत्फलभोगेच्छारहितः तदा जितेन्द्रियः सन् आत्मनो मनः अचलं यथा भवति तथा अभ्यासेन धारयेत् ॥ १८ ॥

अभ्यासमेवाह—धार्यमाणमिति त्रिभिः । यर्हि धार्यमाणमाशु भ्राम्यत् अनवस्थितं भवति तदा अनुरोधेन किञ्चिन्मनोनुसारेण कथम्भूतेन मार्गेण ननु लोकवेदाविरोधेनेत्यर्थः ॥ १९ ॥

एतदेवाह—मनइति द्वाभ्याम् । जितप्राणः कृतप्राणायामः जितेन्द्रियः विषयेभ्यः प्रत्याहृतेन्द्रिय हृद्यात् हृत्कमलमयते इति हृदयं ब्रह्म तत्तत्त्वमन्विच्छन् मनोगतिं न विसृजेत् किन्तु आत्मवशं नयेत् एष अर्वतोऽश्वस्येव दम्यस्य दृष्टान्ततया दमनीयस्य मनसः संग्रहः परमो योगः परमयोगसाधनत्वादिति द्वयोरन्वयः ॥ २० ॥ २१ ॥

मनोनिग्रहस्योपायानाह—साङ्ख्येनेति त्रिभिः । साङ्ख्येन सङ्ख्यायन्ते तत्त्वानि आत्मनात्मरूपाणि यया सा सङ्ख्या तत्त्वगणना तत्रावधारणेन कारणस्य नित्यतयोपादेयत्वं कार्याणां नित्यतयानुपादेयत्वं चेत्येवंभूतेनोपादेयानुपादेयविवेकेन यावन्मनः प्रसीदति कारणे नित्ये ब्रह्मणि निष्ठां प्राप्नोति तावत् सर्वभावानां महदादिस्तम्बपर्य्यन्तानाम् अनुलोमतः सृष्टिक्रमतः भवम् प्रतिलोमतः संहारक्रमतोऽप्ययं ध्यायेत् ॥ २२ ॥

कार्य्याणामनित्यत्वध्यानेन तेषु निर्विण्णस्यातो विरक्तस्य "उक्तवेदिनः कारणं तु ध्येयम्" इति श्रुत्युक्तकारणज्ञानवतः चिन्तितस्य कारणस्य ब्रह्मणः अनुचिन्तया ध्यानसन्तत्या दौरात्म्यं मनित्यविषयाभावर्य्यं त्यजति ॥ २३ ॥

यमादिभिर्योगपथैर्योगमार्गैः आन्वीक्षिक्या चिदचिद्ब्रह्मात्मपदार्थविमर्शरूपया विद्यया ममार्चोपासनाभिर्वा वेत्यनेनास्य पक्षस्य परमपदप्राप्तसाधारणत्वं सूच्यते एतैरुपायैर्मनो दौरात्म्यं त्यजति अन्यैः स्वाधिकारवर्जितैर्न त्यजति इत्थं शुद्धमनो मुमुक्षुः किं कुर्यात्तत्राह योग्यं मां स्मरेत् ॥ २४ ॥

---

भाषा टीका

यह मनुष्य शरीर सब फलों का कारण है बड़े दुर्लभ से मिलता है भगवत् कृपा से अब सुलभ भया है सब कार्य करने में समर्थ है समुद्र तरने को नौका रूप है इस में भरम गुरु रूप खेवटिया भी मिला है अनुकूल रूप मेरे वचन से प्रेरित है ऐसे नाव रूप शरीर को पाकर भी जो संसार सागर को न तरे वह पुरुष आत्मघाती है ॥ १७ ॥

यदि कुर्यात्प्रमादेन योगी कर्मविगर्हितम् ।
योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥ २५ ॥
स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
कर्मणां जात्यशुद्धानामनेन नियमः कृतः ।
गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥ २६ ॥
जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ।
वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः ॥ २७ ॥
ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ।
जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् ॥ २८ ॥
प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुने ! ।
कामा हृदय्या नश्यंति सर्वे मयि हृदि स्थिते ॥ २९ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥ ३० ॥
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ३१ ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३२ ॥

भाषा टीका ।

जब प्रवृत्ति के कर्मों से विरक्त होजावे तब इन्द्रियों का संयम करके योगी पुरुष आत्मा के अभ्यास से निश्चल मनको धारण करै ॥ १८ ॥

धारणा स्थिर करने से भी मन यदि भ्रमता रहै स्थिर न होवे तब धीरे से मन का कुछ अनुरोध कर के उसको अपने वश करै ॥ १९ ॥

प्राणायाम से प्राण को जीत कर सब इन्द्रियों को जीत कर सत्त्व गुण युक्त बुद्धि से मन को आत्मा के वस करै ॥ २० ॥

जैसे दमन करने योग्य दुष्ट घोडा के मन को रख कर धीरे धीरे उस को वश करते हैं तैसेही धीरे धीरे मनको निग्रह कर लेना यही परम योग है ॥ २१ ॥

जब तक मन न स्थिर हो तब तक सम्पूर्ण पृथिव्यादि पदार्थों का अनित्यादि विचार से क्रम से तथा विपरीत से सब भावों की उत्पत्ति तथा प्रलय इनका ध्यान करता रहै तो मन स्थिर होगा ॥ २२ ॥

जिसको संसार से निर्वेद भया है जो विरक्त है जो इस कहे योग को जानता है वह पुरुष किसी तत्त्व को चिन्तित कर फिर चिन्ता करता रहै तो मन, अपने चञ्चल स्वभाव को छोड देता है ॥ २३ ॥

यम नियमादिक जो योग के मार्ग हैं तिन से वेदान्तज्ञान से ज्ञानकी विद्या से अथवा, कुछ नहो तो मेरी मूर्ति के पूजन से मनके द्वारा परमात्मा को स्मरण करै यही योग्य है और किसी उपाय से किसी का स्मरण न करै ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, पापापत्तौ प्रायश्चित्तं कार्यमेव तत्राऽऽह—यदीति । योगेन ज्ञानाभ्यासेनैव एतच्च भक्तस्यापि नामकीर्तनाद्युपलक्षणार्थम् नान्यत्कृच्छ्रादि ॥ २५ ॥

ननु नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणो हिंसादिकं त्वशुद्धिहेतुत्वाद्दोषः तत्र च तन्निवर्तकत्वात्कृच्छ्रादिप्रायश्चित्तं गुण इति विधिप्रतिषेधाभ्यामुक्तत्वात्प्रायश्चित्तं विना योगेन कथं पापं दहेत्तत्राऽऽह स्वेस्व इति साधैन स एव गुणो नेतरः तदुपपादयति—सङ्गानिविधिप्रतिषेधाभ्यामनेन गुणदोषविधानेन

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्मणां नियमः सङ्कोचः कृतः कुत इत्यत आह जात्या उत्पत्त्यैवाशुद्धानाम् स च प्राप्तानां सङ्गानां आजनेच्छया अयं भावः पुरुषस्याशुद्धिर्नाम न प्रवृत्तेरन्याऽस्ति स्वाभाविकप्रवृत्त्यैव तस्य मलिनत्वात् सा च सहसा सर्वतो निवृत्तिःकर्तुं शक्यते अत इदं न कर्तव्यमिदमेव कर्तव्यमित्येवं स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरेव क्रियते यथा च न प्रवृत्तिरेष वेदस्तथोत्तराध्याये वक्ष्यामि उत्पत्त्यैव हि कामेष्वित्यादिना अतो योगिनः स्वाभाविकप्रवृत्त्यभावान्न प्रायश्चित्तादिविधिगोचरतेति ॥ २६ ॥

भक्त्यधिकारिणो भक्तियोगमाह—जातश्रद्ध इति सप्तभिः । मत्कथासु जातश्रद्धोऽत एवान्येषु कर्मसु विण्णो न तु तत्फलेषु विरक्तः तदाह वेदेति यद्यपि वेद तथाऽपि तत्परित्यागेऽनीश्वरोऽसक्तः ॥ २७ ॥

एवम्भूतो यः श्रद्धालुर्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयः सन्ततस्तदनन्तरं मां प्रीत्या भजेत विषयांस्तु सेवमानोऽपि तेषु प्रीतिं न कुर्यादित्याह गर्हयन्निति ॥ २८ ॥

कथं भजेत किंवा ततो भवति तदाह प्रोक्तेनेति द्वाभ्याम् "श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनात्" इत्यादिना तत्र तत्रोक्तेन मामसकृत्सिद्धं भजतो हृदय्या हृद्गताः कामा नश्यन्ति ॥ २९ ॥

हृदयमेव ग्रन्थिरहंकारस्तत्पूर्वकाश्च सर्वे संशया असंभावनादयः कर्माण्यनारब्धफलानि संसारहेतुभूतानि च ॥ ३० ॥

तदेवं व्यवस्थयाऽधिकारत्रयमुक्तम् तत्र च भक्तेरन्यानिरपेक्षत्वादन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति तस्मादिति त्रिभिः मद्यात्मनो मय्यात्मा चित्तं यस्य तस्य श्रेयः श्रेयःसाधनम् ॥ ३१ ॥

तत्र हेतुः यत्कर्मभिरित्यादि इतरैरपि तीर्थयात्राव्रतादिभिः श्रेयःसाधनैर्यद्भाव्यं सत्त्वशुद्ध्यादि तत्सर्वमञ्जसा अनायासेनैव स्वर्गमपवर्गं मद्धाम वैकुण्ठं लभत एव वाञ्छा तु नास्तीत्युक्तं यदि वाञ्छतीति ॥ ३२ ॥ ३३ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

तत्र विगर्हिते कर्मणि । एतच्च ज्ञानाभ्यासेनांहो दहनकस्य ॥ २५ ॥

नित्यं सन्ध्योपासनादि । नैमित्तिकं जातीष्ट्यादि । तत्र च दोषत्वे सति । तन्निवर्तकत्वात् । हिंसादिदोषनिवर्तकत्वात् । चकारात् । गुणदोषयोरमिलितत्वात् गुणरूपं प्रायश्चित्तं विना । स्वे स्वे इत्यस्यार्थकम् । तथाच ज्ञानिनो ज्ञानाभ्यास एव गुणः नतु प्रायश्चित्तादिरिति स न कुर्यादिति भावः ॥ २६ ॥

तत् अधिकारिभेदेन गुणदोषयोः कल्पितत्वं उपपादयति उपपत्त्या साधयति । यस्माद्धेतोः । अनेन पूर्वसूचितकर्मव्यत्ययेन । तदुत्पत्त्यैव स्वभावेनैव । स च सङ्कोचः । ननु गुणदोषविधानेन सङ्कुलानां त्यागः कथं स्यादित्याह [illegible] इति । तस्याऽकर्तुः पुरुषस्य । अतः गुणदोषविधानस्य सङ्कोच द्वारा निवृत्तिप्रयोजनत्वात् ॥ २७ ॥

जातश्रद्ध इति युग्मकम् । कथास्विति कीर्तनाद्युपलक्षणम् । जातश्रद्धो सञ्जातविश्वासः । अतएव जातविश्वासत्वादेव । अन्येषु भगवद्धर्मव्यतिरिक्तेषु । तत्फलेषु कर्मफलेषु । तमेवाह अविरक्तत्वमेवाह । एवम्भूतः निर्वेदेऽपि परित्यागाऽशक्तः । तदनन्तरं विश्वासानन्तरम् । मां भजेत मदनन्यतया भक्त्याधिकारी स्यात् । तेषु विषयेषु । श्रद्धा चेयं कर्मणि अर्थिसमर्थविद्वत्त्वावबुक्ताधिकारिविशेषणमेव नतु भक्त्यङ्गत्वे प्रविशति स्वाराज्यकामो राजा राजसूयेन यजेतेतिवत् पुरुषविशेषणत्वेन श्रुतत्वात् तदभावेऽपि सकृदपि परिशीलितं भक्त्या हेलया वेत्याद्ये तस्याः फलदातृत्वश्रवणाच्च । तदुक्तं रसामृतसिन्धौ । श्रद्धामात्रस्य तद्भक्तावधिकारित्वहेतुता । अङ्गत्वमस्य विश्वासविशेषस्य तु केशवे इति । अतएवानुष्ठानाङ्गत्वेऽपि न प्रविशतीति ज्ञेयम् ॥ २८ ॥

ततो भजनात् ॥ २९ ॥

तत्र तत्र प्रकरणे ॥ ३० ॥

असम्भावनादर्शने सन्देहः आदिना विपरीतभावना तत्कार्यभूता रागादयश्च गृह्यन्ते । न प्रारब्धं नोत्पादितं सुखदुःखादिफलं येषामित्यनारब्धफलानि सञ्चितागामिकानि प्रारब्धस्य तु भक्तोत्कृष्टावस्थार्थं भगवतैव रक्षणादिति ज्ञेयम् । तथाच पारमर्षं सूत्रम् । तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति । श्रुतिश्च । "तत् सुकृतदुष्कृते विधुनुते एवम् ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्" इति ॥ ३१ ॥

तदेवं निर्विण्णानां ज्ञानयोग इत्याद्युक्तप्रकारेण । तत्र च योगत्रयमध्ये । अस्य निरपेक्षत्वात् ज्ञानाद्यपेक्षारहितत्वात् । अन्यस्य च ज्ञानादेः तत्सापेक्षत्वाद्भक्त्यपेक्षासहितत्वात् । यतो भक्त्यैव कामादिनाशलक्षणं वैराग्यं ज्ञानञ्च स्वत एव स्यात् तस्मात् मद्भक्तियुक्तस्य । ज्ञानं ज्ञानस्य घनाभ्यासः वैराग्यञ्च वैराग्याभ्यासः । प्रायो वितर्के । श्रेयो न भवेत् किमुत कर्मक्षयः । व्यर्थाधिकश्रमाच्छ्रद्धाभक्त्यन्तरायाच्च । नतु द्वयमत्यन्तनिषेधार्थः ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वे स्वे वर्णाश्रमानुरूपे जात्या शुद्धानां स्वतः शुद्धानां गुणदोषविधानेन निष्कामसकामत्वप्रतिपादनेन नियमः कृतः व्यवस्था कृता ॥ २६ ॥

सङ्गानां काम्यकर्मसङ्गानां त्याज्यत्वे छाया [illegible] स्यापि भगवत्सत्त्वा इन्द्रियजयातिसिद्धिमाह जातश्रद्ध इत्यादिभिः ॥ २७—३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चूर्णावदन्यथाज्ञाखशुद्धानां पापहरणासामर्थ्यानुदयाद्विचिकित्सितौषधवत् "यथापङ्केन पङ्काम्भः" इति वक्ष्यमाणत्वात् मत्प्रियत्वेन मदर्पणेन कर्म कर्तव्यमिति भावः ॥ २७ ॥

मत्प्रियाप्रियविवेकज्ञानेन गुणदोषविदो भक्तियोगिनो वृत्तं दृष्टान्तेन भक्तियोगिनां स्थितिं विदधानो निगमयति, जातश्रद्ध इति । यतो मत्प्रियाप्रियनिबन्धौ गुणदोषौ ततो मां भजेतेत्यन्वयः । कीदृशो भक्तियोगी प्रारब्धादृष्टाद्विषयपरित्यागे नीश्वरोपि शास्त्रज्ञानेन मत्कथासु जातश्रद्धत्वेन सर्वकर्मसु निर्विण्णो यः कामान्विषयान् दुःखानां प्रापकान्वेद ॥ २८ ॥

यश्च प्रीतः श्रद्धालुः प्रेम्णापि भगवदुपास्तिं न मुञ्चतीत्यर्थः अत एव दृढनिश्चयो भजन् विरोधिनः कामान् जुषमाणश्च दुःखोदर्कानिति विद्वान् कामान् गर्हयंश्च स इत्यर्थः ॥ २९ ॥

विषयसेविनो योगिनः कर्दमगर्ते पतत्पर्यवसतः कदाप्युत्थानं न स्यादित्यतस्तद्भजनफलमाह—प्रोक्तेनेति । उक्तप्रकारेण भक्तियोगेनासकृत्सदानिरन्तरं मां भजतो मुनेरपरोक्षज्ञानिनो भक्तियोगिनो हृदिस्थिता अनभीष्टाः कामाः सर्वे निर्मूलतया नश्यन्ति कदा मयि हृदि स्थिते प्रकाशमाने सति ॥ ३० ॥

एतदेव विवृणोति, भिद्यत इति । हृदयग्रन्थिः प्राकृतान्तःकरणाख्यो बन्धः लिङ्गशरीरलक्षणः अखिलात्मनि सर्वगते मयि दृष्टे अपरोक्षिते सतीति शेषः ॥ ३१ ॥

यस्मात्पूर्वकर्मणां विनाशेन किञ्चित्कस्योपमर्देन उत्तरस्य अश्लेषेण भक्तियोगिनः सर्वपुरुषार्थोत्तमः तस्मादिह जीवतश्चौ महात्मनो मदेकचित्तस्य मद्भक्तियुक्तस्य योगिनो देहजातज्ञानाद्भेदो न भवेत् वैराग्याच्च तस्मादित्यन्वयः । नन्वेवं तर्हि ज्ञानवैराग्यरूपां श्रेय इक्तिः कथमित्यत उक्तं प्राय इति भक्त्यनुसारिज्ञानवैराग्ये विना अन्यस्माज्ज्ञानाद्वैराग्याच्च श्रेयो निषिध्यते देवानां रागित्वेपि मुक्तिसम्भवात्—

"रागिणोपि विमुच्यन्ते देवा नास्त्यत्र संशयः ।
रागापनोदनार्थं च ज्ञानं साध्यं यतीश्वरैः" ॥

इति वचनात् । किञ्च, "स्मर्तव्या विषये दोषा यतिभिर्न तु दैवतैः ।"
"हरिरेव सदा पूज्य इत्यर्थं दैवतैरपि" इति च ॥
इति ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अस्य ज्ञानाधिकारिणः कर्मगुणदोषास्पर्शमाह—यदीति सार्द्धद्वयेन । योगेन ज्ञानाङ्गेन ॥ २५ ॥

तदेवं कर्मार्पणाक्षेपकज्ञानकेवलभक्त्योऽधिकारिभेदेन व्यवस्थापिताः अतः स्वाधिकारानुरूपेणैव स्थातव्यमित्याह—स्वे स्व इति । विपर्ययस्तु दोषः स्यादिति भावः तस्मात्साधूक्तं योगेनैव नतु कर्मणेति ॥ २६ ॥

कर्मणामिति तैः तत्रानन्तोऽपि पूर्वसूचितेन कर्मशास्त्रोक्तेनार्थः । यद्वा, ननु कथं योगस्य तादृशं सामर्थ्यं ? कथं वा कर्मणोर्विवादः स्यादिति कर्मशास्त्राग्रहः सङ्गमित स्यात् तत्र कर्मणां वस्तुतो दोषत्वेपि तस्यैव किञ्चिद्गुरुत्वेन गुणतया मतत्वं दर्शयन् योगस्य स्वभावगुणत्वं व्यञ्जयति, कर्मणामिति । कश्चित्कश्चिदतीव निर्को निर्दोषोऽस्तीति लोके मिष्ठान्नकल्पात्तिव्यपदेश इव जात्यैवाशुद्धानां कर्मणां बहुगुणदोषत्वाविधानं तेनानेन मद्भाव एव कृतः कथं सङ्गानां त्याजनेच्छया सहसा सर्वत्याजनासक्तेष्वत्र क्रम एव क्रियत इत्यर्थः ॥ २७ ॥

अथ भक्तिमार्गं विवृणोति—जातेत्यादिना । एवमन्यतः प्राक् तत्र जातश्रद्ध इति युग्मकेन कथयत्युपलक्षणं मत्कथादिषु एतदेव केवलं परमश्रेय इति जातविश्वासः अत एवान्येषु कर्मसु उद्विग्नः किन्तु वर्त्तमानेषु प्राचीनपुण्यकर्मफलभोगेषु एवं भूत इत्याह, वेदेति । ततस्तां वेदस्याविच्छेदाख्यातं न निर्विण्णो नातिसक्त इत्येव चरणामवस्थामारूपैवेत्यर्थः । मां भजेत मदीयानन्यताख्यभक्ताविधिकारी स्यात् ननु ज्ञानवज्ज्ञाने सम्यग्वैराग्य एव तस्याः स्वतः सर्वशक्तिमत्त्वेनान्यनिरपेक्षत्वादित्यर्थः । अनन्तरं च वक्ष्यते तस्मान्मद्भक्तियुक्तस्येत्यादिना यत्कर्मभिरित्यादिना च नच कर्मनिर्वेदसापेक्षत्वमापतितं ननु भक्तेः सर्वोत्तमत्वविश्वासेन स्वत एव प्रवर्त्तते मनो निर्विण्णा इत्यनुवादमात्रम् अत एव यद्यपि ज्ञानकर्मणोरपि श्रद्धापेक्षास्त्येव तां विना बहिरन्तः सम्यक्प्रवृत्त्यनुपपत्तेः तथापत्र श्रद्धामात्रस्य कारणत्वेन विशेषतस्तदङ्गीकारः तथापि च तदपेक्षापूर्वकं सम्यक् प्रवृत्त्यैव मां विनाऽन्यतरत्या भक्तिस्तया न प्रवर्त्तते कदाचित् किञ्चित्प्रवृत्ता च तद्यतीति अत एव न निर्विण्णो नातिसक्त इत्यस्यानन्तरमपि मत्कथाश्रवणादौ येषां श्रद्धायां जातायामेव कर्मपरित्यागो विहितः भक्तिमात्रं तु तां विनापि सिद्ध्यति सकृदपि परिगीतं श्रद्धया हेलया वेत्यादौ सतां प्रसङ्गादित्यादौ च तत्पूर्वतोपि तस्याः फलदातृत्वश्रवणाच्च म्रियमाणो हरेर्नामेत्यादौ तथा फलदातृत्वसौष्ठवश्रवणाच्च मां च श्रद्धाशास्त्राभिधेयावधारणाद्यैवाङ्गं नहिश्वासरूपत्वात् ततोनानुष्ठानाङ्गत्वे प्राप्ते सति सकैश्च फलोत्पादने विधिसापेक्षापि न स्यात् दानादिकर्मणा वद्भ्यादिवत् भगवच्छ्रवणकीर्तनादीनां स्वरूपस्य तादृशशक्तत्वात् ततस्तस्या श्रद्धाद्यपेक्षा कुतः स्यात् तस्माच्छ्रद्धानभक्त्यङ्गं किन्तु कर्मणापर्यवसमर्थेवक्तृत्ववदनन्यताख्यातायां भक्तौ अधिकारिविशेषणमेवेति अत एवैतद्भयपारम्येनैवोक्तं बहुशस्तथामत्कथादौ जातश्रद्ध इति जातश्रद्धा मत्कथाः शृणोति च मत्कथामात्रश्रवणेनार्थेन तत्फलोपपत्तिसम्भवेन समर्हति पदेन तद्विधिकनिर्देशेनात्मारामतावस्थायामपि सा केषाञ्चित्प्रवर्तत इति तस्याः साध्यत्वमेवाभिप्रेतम् अनन्तरं च वक्ष्यते न किञ्चित्साधवो धीरा इति अतः साध्यत्वस्थापनाय तां विनाकर्मज्ञाने अपि न सिद्ध्यतीति च ज्ञापितं तदेव अनन्यभक्त्याधिकारे हेतुः श्रद्धामात्रमुक्त्वा स यथा भजेत तथा शिक्षयति श्रद्धाविश्वास-

---

१ यदि भगवत्प्रीतिकर एव धर्मः तत्प्रीतिकर एवाधर्मः स च वेदविहितोऽस्तु मा वा तर्हि वेदविधानस्यैवैयर्थ्यमित्यतो ज्ञानवतां देवानामेवं व्यवस्था अज्ञानां मानुषादीनां वेदविधिरपेक्षित एवेत्याशयेन भक्तियोगिनो वृत्तं इत्युक्तम् ।

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वक्ष्यते । किञ्च, भगवदनुभवरूपं ज्ञानं विषयारोचकत्वलक्षणम् वैराग्यं च भक्त्युत्थत्वाद्गुणातीतं तस्य स्वत एव स्यात् यदुक्तं "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एक कालः । प्रपद्यमानस्य" इति प्रायग्रहणेन काचित्कज्ञानभक्तेः प्रथमदशायां तद्ग्रहेऽपि नाश्रेयस्करं भक्तिमुक्त्यैव निर्विघ्नत्वात्तद्युक्ताविरक्तता इति तन्मतमुक्तं भक्तिरसामृतसिन्धौ ॥ ३१ ॥

ननु, यदि कश्चित्त्वत्कथादाविव श्रद्धालुर्नतु कर्मज्ञानादिषु तद्रोचकत्वादथ च तत्फलेषु स्वर्गापवर्गादिषु स्पृहावांश्च स्यात्तदा किं भजेदत आह—यदिति द्वाभ्याम् । इतरैरपि श्रेयः साधनैस्तीर्थयात्राव्रतादिभिः सक्तान सालोक्यम् ॥ ३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदुक्तमन्यैर्मनोदौरात्म्यं न त्यजतीति तत्र स्वाधिकारे निष्ठा गुणोऽन्याधिकारे निष्ठा दोष इति हेतुमाह—स्वे स्वे इति सार्द्धद्वाभ्याम् । योगेनैव स्वाधिकारप्राप्तेनैव तत्र मन्यत् स्वाधिकारबाह्यं कदाचनापि नैव कुर्यात् ॥ २५ ॥

यतः स्वे स्वे अधिकारे कर्मयोगिनः कर्मणि ज्ञानयोगिनो ज्ञाने भक्तियोगिनो भक्तौ या निष्ठा स गुणः परिकीर्तितः सर्वतः कीर्तितः अन्याधिकारे निष्ठा दोष इत्यर्थः । सङ्गानां दुःखयोनीनां प्राकृतपदार्थसंयोगानां त्यजनेच्छया मुमुक्षया अनेन गुणदोषविषयकेन गुणदोषविधानेन जात्यशुद्धानां जातित एवाशुद्धानां संसारप्रापकानां मुक्तिविरोधिनां कर्मणां नियमः कृतः मुक्त्युपायानां कर्मज्ञानादीनां यथाधिकारे आदरोऽनधिकारे नादरस्तदा तेषां स्वत एव संत्यागाद् इति नियमः कृत इत्यर्थः ॥२६॥

एवं गुणदोषदर्शनप्रयोजनमुक्त्वाऽथ कर्मभिः इह जन्मकृतैरन्यजन्मकृतैर्वा शुद्धान्तःकरणस्य महत्सेवया साधनरूपा कथाश्रवणाद्यात्मिका भक्तिः तया वैराग्यं ज्ञानं च जायते "वासुदेवे भगवति भक्तियोगः समाहितः । सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति" इति श्रीमन्नारदोक्तेः तत्र स्वाधिकारप्राप्ते कर्मणि भक्तियोगे वा गुणं पश्यन्नन्यत्र प्रवृत्त्यधिकाराभावाद्दोषं पश्यन् एवं शुद्धस्य तदनन्तरं ज्ञानवैराग्याभ्यां पराभक्तिर्जायते ।—

> "तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ।
> ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः" ॥

इति पूर्वोक्तत्वात् तथा सम्पन्नस्य गुणदोषवर्जितस्वभावो भवतीत्याह—जातश्रद्ध इति । ज्ञादशाभिः कर्मभिः शुद्धान्तःकरणत्वेन मत्कथासु जातश्रद्धः "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति पूर्वोक्तेश्च । अत एव सर्वकर्मसु निर्विण्णः काम्यन्ते इति कामाः तान् यद्यपि दुःखात्मकान् वेद तथापि तान् जुषमाणः मां भजेतेत्युत्तरेणान्वयः ।—

> "तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् ।
> हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्" ॥

इत्युक्तत्वात् ॥ २७

भगवद्भजनेनैव तत्कथाश्रवणादिरूपेण कामत्यागः भगवत्प्राप्तिः तद्भक्तिप्राप्तिश्च भविष्यतीति दृढनिश्चयः ॥ २८ ॥

प्रोक्तेन मत्कथाश्रवणादिरूपेण कामान्नश्यन्ति तेभ्यो वैराग्यं भवति मयि हृदिस्थिते मयि ज्ञाते सतीत्यर्थः । मत्कथाश्रवणादिरूपया भक्त्या मद्विषयकं ज्ञानं संसाराद्वैराग्यं च भविष्यतीति फलितोऽर्थः ॥ २९ ॥

ज्ञानफलमाह—भिद्यत इति । हृदयं देहादावहंममाभिमानरूपान्तःकरणवृत्तिः तादृशं हृदयमेव ग्रन्थिः छिद्यते अन्येऽपि संशयाः उपास्योपासकस्वरूपगुणादिविषयकाः सर्वे क्षीयन्ते कदा आत्मन्यात्मनि मयि दृष्टे सुजाते सति "यद्विज्ञानेन सर्वं विज्ञातं भवति" इति श्रुतेः ॥ ३० ॥

तस्मात्कर्मभक्तिसमुत्पन्नात्सवैराग्यात्सज्ञानात् हेतोर्मद्भक्तियुक्तो भवति मत्प्रेमविशेषभक्तियुक्तो भवति तस्य मद्भक्तियुक्तस्य अहमात्मा आश्रयो यस्य तस्य न वैराग्यं चकारात्कर्माणि न श्रेयः न मम वशीकरणहेतुः प्रायोग्रहणेन ज्ञानादीनाम् भक्त्यङ्गत्वे श्रेयस्त्वं सूच्यते यथा केनापि हेतुना बहुकालतो राजपुत्रः स्वैरिण्या वियोजितः संवर्द्धितश्च स्वगृहे स्थापितश्च स कदाचित्केनापि कर्मणा तुष्टेन राजस्वरूपगुणाद्यभिज्ञेन प्रबोधितः स्वैरिणीदोषख्यापनेन तस्यां विरक्तश्च कृतः राज्यप्राप्तिस्थाने च प्रापितस्तस्य पितृप्रेमविह्वलस्य पितुरङ्के पतितस्य भक्तिरेव पितरं वशीकरोति न पूर्वकृतानि कर्मज्ञानादीनि साधनानि तद्वदिति ॥ ३१ ॥

भक्त्यैव सर्वं यद्वाञ्छति तत्सुखं भवतीत्याह यदिति द्वाभ्याम् इतरैस्तीर्थयात्रादिभिश्च श्रेयोभिरितरैरुपायैः ॥ ३२ ॥

### भाषा टीका ।

यदि कदाचित् भक्त योगिजन से प्रमाद वश से कोई खोटा कर्म हो भी जावे तो योगही से उसके पाप को दहन करे और कुछ नहीं करै ॥ २५ ॥

अपने अपने वर्णाश्रम के अधिकार से निष्ठा रखना यही गुण है जाति से अशुद्ध जो कर्म है तिनका यही बात से नियम किया है गुण तथा दोष के विधान से और सङ्गो की त्यागने की इच्छा से ॥ २६ ॥

मेरी कथा में जिसको श्रद्धा भई हो और सब कर्मों में वैराग्य होगया हो वह सब कर्मों को दुःख रूप जानता है परन्तु परित्याग करने में भी समर्थ नहीं है ॥ २७ ॥

तब अति प्रीति से श्रद्धावान् दृढ निश्चयवाला होकर दुःख फलदेने वाले उन कर्मों की निन्दा करता हुआ फिर भी यथा कथञ्चित् उन का सेवन करता हुआ मेरा भजन करै ॥ २८ ॥

पहिले कहे हुये भक्तियोग से जो मुनि मेरे को निरन्तर भजता है उस मुनि के हृदय के सब काम मेरे हृदय के मध्य में वास करने से नष्ट हो जाते हैं ॥ २९ ॥

जब सब को अन्तर्यामी मेरे को वह पुरुष हृदय में देख लेताहै तब उस के हृदय की मोह ग्रन्थी छूटजाती है सब संशय उसके मिटजाते हैं और सब कर्म क्षय हो जातेहैं ॥ ३० ॥

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥ ३३ ॥
न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३४ ॥
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ३५ ॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ३६ ॥
एवमेतान् मयादिष्टाननुतिष्ठन्ति मे पथः ।
क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः ॥ ३७ ॥

इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
विंशोऽध्यायः ॥ २० ॥

भाषा टीका ।

तिस से मेरी भक्ति से युक्त मेरे मे मन लगाने वाले योगी के लिये न ज्ञान है न वैराग्य है अर्थात इन से कल्याण करने की अपेक्षा नहीं रहती है ॥ ३१ ॥

कर्मों से जो फल होता है तपस्या से जो होता है ज्ञान से जो होगा वैराग्य से जो होगा योग से दान धर्म से और अन्य धर्मों से भी जो कुछ होना है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र हेतुमाह—न किञ्चिदिति । धीरा धीमन्तो यतो मम एकान्तिनो मय्येव प्रीतियुक्ता अतो मया दत्तमपि न गृह्णन्ति किं वक्तव्यं न वाञ्छन्तीत्यर्थः । अपुनर्भवमात्यन्तिकमपि कैवल्यम् ॥ ३४ ॥

तदुपपादयति—नैरपेक्ष्यमेव परमुत्कृष्टमनल्पकं महन्निःश्रेयसं फलं तत्साधनं च प्राहुः मे भक्तिर्निराशिषः प्रार्थनाशून्यस्य निरपेक्षस्य प्रार्थनाकारणभूतापेक्षारहितस्य पुंसो भवेत् । यद्वा, मे निरपेक्षस्य या भक्तिः सा निराशिषो भवेदित्यर्थः ॥ ३५ ॥

अनेन प्रकारेण सिद्धानां न गुणदोषा इति विरोधपरिहारमुपसंहरति न मयीति गुणदोषैर्विहितप्रतिषिद्धैरुद्भवो येषां ते गुणाः पुण्यपापादयः साधूनां निरस्तरागादीनामतः समचित्तानामत एव बुद्धेः परमीश्वरं प्राप्तानाम ॥ ३६ ॥

काम्यकर्मनिष्ठां निर्दिश्यसेतान् मुक्तिमार्गानुपसंहरति—एवमिति । मे पथो ज्ञानत्रयुपायान् येऽनुतिष्ठन्ति ते क्षेमं काल-मायादिरहितं मम लोकं विन्दन्ति यत्परमं ब्रह्म तद्विदुः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे

श्रीधरस्वामिकृतभावार्थदीपिकायाम्

विंशोऽध्यायः ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत्र ज्ञानवैराग्ययोः श्रेयस्साधनत्वाऽभावे । यदिति युग्मकम् । सत्त्वशुद्ध्यादीत्यादिना स्वर्गादिपरिग्रहः ॥ ३३ ॥

तत्र वाञ्छाऽभावे । एकस्मिन् मय्येवान्तो निष्ठा येषाम् ते इति मय्येव प्रीतियुक्ता इति व्याख्यातम् । अत एकान्तित्वात् ॥ ३४ ॥

तत् एकान्तित्वम् उपपादयति, युक्त्या साधयति । तत्साधनं फलसाधनम् । पूर्वार्धे प्रार्थनाशून्यत्वेनैवापेक्षाराहित्यमुक्तम् पुनर्निरपेक्षस्येत्याधिकमतो यद्वेति । निराशिषो निष्कामस्य ॥ ३५ ॥

विरोधपरिहारं गुणदोषदृशिर्दोष इत्यस्य "आत्मनः सान्ध्यामुपासीत न कलञ्जं भक्षयेत्" इत्यादिभिर्यो विरोधः गुणदोषभिदा दृष्टिर्निगमात्ते न हि स्वत इत्यादिनोक्तवेनाकरतव्य परिहारं निवृत्ति विहितप्रतिषिद्धैः सन्ध्यावन्दनादिकलञ्जभक्षणादिभिः ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इत्यस्माल्लोकपात् मुक्तिभक्तिवल्लभसाधनस्याधिकानन्दबुद्धेच त्यर्थः ॥ ३५ ॥

भक्तियोगिनां रागिणश्चेत्तेषां विषया गुणदोषोद्भावकाः स्युरिति तत्राह—नेति । मिश्रेऽपि तेषां भक्तिफलात्मना विषयभोगाभावाद्गुणा विपर्यया गुणदोषोद्भावकाः न भवन्ति कुतः समचित्तानां समत्वेन मातृप्रवाहितकरणात्मदर्प्रवानिषद्धवर्जनाच्च एतदपि कुत इत्यत उक्तं बुद्धेरिति बुद्धेः प्रकृतेः परमात्मतुकामानां मदेकाहितकरणत्वस्य युक्तत्वादित्यर्थः । अनेनैषां वैराग्यमपि अधिकमित्युक्तं भवति । तदुक्तं—

"कामिनोऽपि स्वयं कामान् भुञ्जते न फलात्मना ।
तस्माद्विरागेऽप्यधिका देवा एव हि तादृशाः ॥

इति ॥ ३६ ॥

त्रयाणामपि योगिनां फलमाह—एवमेतानिति । कर्मयोगिनः क्षेमं विन्दन्ति । ज्ञानयोगिनो वैकुण्ठादिमत्स्थानं भक्तियोगिनो ब्रह्म तत्रापि मुख्यभक्तिभाक् ब्रह्म परमं ब्रह्म विन्दतीति—

"उत्तमो भक्तियोगस्तु ज्ञानयोगस्तु मध्यमः ।
अधमः कर्मयोगश्च ब्रह्मैको मुख्यभक्तिभाक् ॥
ज्ञानमप्यधिकं तेषां नियतं भक्तियोगिनाम् ।
उक्तेति भगवद्भक्त्या तद्वन्न ज्ञानयोगिनः ॥
भक्त्यंशकं यतो ज्ञानं ज्ञानस्नेहात्मिका हि सा ।
तथापि ज्ञानयोगित्वं मानुषज्ञानतोऽधिकम् ॥
भक्तियोगे ततो यत्नः कार्यो विद्वद्भिरञ्जसा ।

इत्यतः फलतारतम्यमवगन्तव्यम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अपवर्गो मोक्षसुखं च तदतिक्रमसुखं च भवतीत्याह, मद्धाम वैकुण्ठं चेति कथञ्चिद्भक्त्युपकरणत्वेनैव यदि वाञ्छति कश्चित् तत्र श्रीचित्रकेत्वादिकवत्स्वर्गे वाञ्छा तस्य भक्त्युपकरणत्वं चोक्तं "रेमे विद्याधरस्त्रीभिर्गापयन् हरिमीश्वरम्" इति श्रीशुकादिवदपवर्गवाञ्छान्तरप्रार्थनया श्रीकृष्णेन दूरीकृतायां मायायां सत्यां मातृगर्भान्निष्क्रामेति हि ब्रह्मवैवर्तीयकथा तत्र च भक्त्युपकरणत्वं ब्रह्मभूतः प्रसन्नात्मा" इत्यादिश्रीगीतावचनवत्तथा प्राप्तभगवत्पदवीयद्भक्तविशेषवैकुण्ठवाञ्छा तेहि प्रेष्णा साक्षाद्भगवच्चरणारविन्दसेवेच्छयैव तत्प्रार्थनप्राप्तवन्तु यथा अजामिलनिमित्तपार्षदानुवृत्त्येवादिवत् ॥ ३३ ॥ ३४ ॥

तादृशभक्तेः साधनमपि तादृशमित्याह—नैरपेक्ष्यमिति ॥ ३५ ॥

तदेवं सकामकर्मोत्थगुणदोषयेथा निष्कामकर्मा न लिप्यते तत्र तत्रोक्तैश्च न ज्ञानाधिकारी तथा तत्र तत्रोक्तैर्भक्त्यधिकारी तच्चतुष्टयोक्तैश्च न तादृशोऽसिद्ध इति वदन् गुणान्तु भयवर्जितः, इत्यस्य पराकाष्ठां दर्शयति न मयीति ॥ ३६—३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इतरैस्तीर्थयात्रादिभिरपि यद्भाव्यं तत्सर्वं भक्तियोगेन मद्भक्तो लभते तत्रापवर्गः सा अनायासेनैव किन्तु सर्वं तदाह, स्वर्गापवर्गमिति । स्वर्गः प्रापञ्चिकसुखं सत्त्वशुद्ध्यादिकं भक्त्या कथञ्चिद्यदि नाङ्गीकृणोति, नेति ॥ ३३ ॥ ३४ ॥

नैरपेक्ष्यं साधनान्तराफलान्तरापेक्षाराहित्यं हि परं श्रेष्ठं महत्पूर्वकं प्रमाणनादर्शकं निःश्रेयसं भवति निराशिषः फलान्तरकामनाशून्यस्य निरपेक्षस्य वैराग्याद्यपेक्षाशून्यस्य ॥ ३५ ॥

यन्मयोक्तं गुणाक्षोपदर्शिकैषां गुणात्तु भयवर्जितः इति तदत्राह—शुभ भक्तेष्वित्याह—नेति । गुणदोषयोरुद्भवो येभ्यः तत्तरलक्षणमाश्रयन्ते गुणा एकान्तभक्तानां न सन्ति किन्त्वप्राकृता एव गुणा यतो बुद्धेः प्रकृतेः परं मामिति दासमेव, तत्तु उपेयुषां नतु गुणमयं किञ्चिदपि मन इन्द्रियादिकं निर्गुणो मदपाश्रय इत्यभिमोक्तः । यद्वा गुणदोषोद्भवाविधिप्रतिषेधनिबन्धना गुणा न भवन्तीति तेषां शास्त्राचारणे कोऽपि गुणो भवति नापि निषिद्धाचरणे कोऽपि दोष इत्यर्थः । समचित्तानामिति भक्तानां समचित्तत्वमुक्तं चित्रकेतूपाख्याने शम्भुना यथा—

"नारायणपराः सर्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ इति

बुद्धेः प्रकृतेः परं भगवन्तमुपेयुषां भक्त्या सिद्धेष्वेतु दोषदृष्टिर्न कर्तव्येति किन्वक्तव्यं साधकेषु दुराचारेष्वपि न कार्येति भगवता गीतं यथा—

"अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः"॥

इति ॥ ३६ ॥

अथोमार्गानुपसंहरति—एवमिति । ये अनुतिष्ठन्ति ते यथायोगं निष्कामकर्मिणः क्षेमं विन्दन्ति भक्ताः मत्स्थानं वैकुण्ठं विन्दन्ति ज्ञानिनो ब्रह्मविदुरिति ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशेऽयं विंशः सङ्गतः सङ्गतः सताम् ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अञ्जसा अनायासेनैव ॥ ३३ ॥

मया दत्तमपि कैवल्यं चेत्रज्ञमात्रलक्षणं मोक्षमपुनर्भवं मत्प्राप्तिलक्षणं वा मोक्षं न स्वीकुर्वन्ति वाञ्छायास्तु का कथा यतः एकान्तिनः मदेकहृदयाः ॥ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथापि मुक्तिस्तु स्यादेवेति सूचयन् निरपेक्षसाधनं साधनं निरपेक्षस्यैव भवेदित्युपपादयति, नैरपेक्ष्यमिति । परं श्रेष्ठमनल्पकं निरपेक्षः स्वानन्दपूर्णः स्वाश्रयः अहं तस्य भावो नैरपेक्ष्यं मद्भावलक्षणं निःश्रेयसं मोक्षं "निरञ्जनः परमं साम्यमुपैति" इत्याद्याः श्रुतयः प्राहुः तस्मान्निरपेक्षस्य मद्भावसाधनरूपा भक्तिरपि निराशिषो निरपेक्षस्यैव भागवतस्य भवेदित्यर्थः ॥ ३५ ॥

भागवतानां निरपेक्षत्वमेव दर्शयति—नेति । बुद्धेरित्युपलक्षणं देहेन्द्रियमनोबुद्धिप्राणेभ्यः परं विलक्षणं स्वं पदार्थं यद्वा बुद्धेः प्रकृतेः परं मां ध्यानेनोपेयुषां प्राप्तानामत एव साधूनां निरस्तरागादीनामत एव समचित्तानामत एव मय्येकान्तभक्तानां गुणाद्विहितेषु दोषेषूद्भवो येषां गुणानां रागद्वेषादीनां ते न सन्ति गुणदोषवर्जितास्तेषां स्वभाव इत्यर्थः ॥ ३६ ॥

उपसंहरति, एवमिति । मादिष्टानुपदिष्टान् यथा मुक्तिमार्गान् येऽनुतिष्ठन्ति ते क्षेमं कालकर्मप्रकृतिदोषरहितं पदं परमं श्रेष्ठं ब्रह्म व्यापकं यद्विदुः श्रुतयः स्मृतयश्च तन्मम स्थानं विन्दन्ति यमन्ते योऽस्याध्यक्षः स परमे व्योमन् इत्याद्याः श्रुतयः—

ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् ।
शुद्धं सनातनं ज्योतिः परब्रह्मेति यद्विदुः" ॥

इत्याद्याः स्मृतयश्च ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
विंशाध्यायार्थप्रकाशः ॥ २० ॥

---

भाषा टीका ।

इन सब फलों को मेरा भक्त मेरे भक्ति योग से अनायास से प्राप्त हो जाता है स्वर्ग तथा मोक्ष तथा मेरा वैकुंठधाम जो चाहे तो मिल जाता है ॥ ३३ ॥

जो मेरे एकांती भक्त हैं साधु हैं धीर हैं वे तो मेरे देने से भी न कैवल्य को चाहते हैं न मोक्ष को चाहते हैं ॥ ३४ ॥

जो निरपेक्षता है वही बड़ा भारी कल्याण पदार्थ है तिस हेतु से जो निरपेक्ष है औ निष्काम है तिसी को मेरी यथार्थ भक्ति होती है ॥ ३५ ॥

जो मेरे एकांत भक्तों को गुण तथा दोषों के गुण नहीं होते है क्यों कि वे तो साधु हैं समचित्त वाले हैं बुद्धि के पर तीर में प्राप्त हो गये हैं ॥ ३६ ॥

इस प्रकार कहे हुये इन मार्गों को जो लोग अनुष्ठान करते हैं वे भक्ति जन क्षेम कल्याण स्थान मेरे पद को प्राप्त होते हैं जिसको कि परब्रह्म कहते है ॥ ३७ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध मे
बीसवें अध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ २० ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे विंशोऽध्यायः ॥ २० ॥

—:०:—

## अथ एकविंशोऽध्यायः ।

——:*:——

श्रीभगवानुवाच ॥

य एतान् मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ॥
क्षुद्रान् कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते ॥ १ ॥
स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥
शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ।
द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥
धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ ! ।
दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥ ४ ॥
भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्चधातवः ।
आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥ ५ ॥
वेदेन नामरूपाणि विषमाणि समेष्वपि ।
धातुषूद्धव कल्प्यन्ते एतेषां स्वार्थसिद्धये ॥ ६ ॥
देशकालादि भावानां वस्तूनां मम सत्तम ! ।
गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥ ७ ॥
अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् ।
कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

जयति स्वपरानन्दः परानन्दनृकेसरी ।
यत्कृपालवलेशेन श्रीधरः सत्कृतिः कृती ॥
ईक्षन्तामिमां सन्तः क्षमन्तां मम साहसम् ।
मया हि स्वीयबोधाय कृतमेतन्न सर्वतः ॥
एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् ।
कामिनां द्रव्यदेशादिगुणदोषाः प्रपञ्चिताः ॥

तदेवं गुणदोषव्यवस्थार्थं योगत्रयमुक्तं तत्र ज्ञानभक्तिसिद्धानां न कश्चिद्गुणदोषौ साधकानां तु प्रथमतो निवृत्तिकर्मनिष्ठानां यथाशक्ति नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणः तदकरणं निषिद्धकरणं च तमोवृद्धिकरत्वाद्दोषः तन्निवर्तकत्वाच्च प्रायश्चित्तं गुणः विशुद्धसत्वानां तु ज्ञाननिष्ठानां ज्ञानाभ्यास एव सिद्धिहेतुत्वाद्गुणः भक्तिनिष्ठानां पुनः श्रवणकीर्तनादिभक्तिरेव गुणः तद्विरुद्धः सर्वमुभयेषां दोष इत्युक्तम् इदानीं ये तु न सिद्धा नापि साधकाः किन्तु केवलं काम्यकर्मप्रधानास्तेषां सफलगुणदोषान् सप्रपञ्चं विवक्षुरादौ तानति बहिर्मुखान्निन्दति, य एतानिति । मत्पथो मदुक्तमार्गान् क्षुद्रान् तुच्छांश्चलैरस्थिरैः प्राणैर्वायुभिरिन्द्रियैर्वा जुषन्तः सेवमाना भवन्ति ते संसरन्ति निखिलगुणदोषभाक्त्वेन नानायोनीः प्राप्नुवन्तीत्यर्थः ॥ १ ॥

ननु, तैरेव कर्मभिः केचिद्गुणदोषभाजः केचिन्नेति कुतो वैषम्यम् नह्यभिन्ना केचित्सवन्ते केचिन्नेति सम्भवति तत्राऽऽह, स्वे स्व इति । अधिकारभेदेन कल्पितौ गुणदोषौ न वस्तुनिष्ठाविति भावः ॥ २ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदाह, शुद्ध्यशुद्धी इति । विचिकित्सार्थं योग्यमयोग्यं चेति सन्देहद्वारा स्वाभाविकप्रवृत्तिप्रतिबन्धार्थमित्यर्थः । तत्र शुद्ध्यशुद्धी योग्यत्वायोग्यत्वे गुणदोषौ तन्निमित्तोपादेयत्वानुपादेयत्वे शुभाशुभौ तन्निमित्तावर्थानर्थौ ॥ ३ ॥

तत्र शुद्ध्यशुद्धी धर्मार्थम् शुद्धेन धर्मः अशुद्धेनाधर्म इति गुणदोषौ व्यवहारार्थम् अशुद्धावपि राजादीनां व्यवहारदर्शनात्तदुपादेयं नान्यदिति शुभाशुभौ यात्रार्थं दोषत्वेऽप्युपायस्तु शरीरनिर्वाहमात्रोपादानेन पापमधिकोपादानेतु पापमिति मया मन्वादिरूपेण धर्मरूपां धुरं भारं कर्मजडानामित्यर्थः ॥ ४ ॥

शुद्ध्यशुद्धी प्रपञ्चयिष्यन् वेदोक्तत्वेन तदभिनिवेशो माभूदिति समानेष्वपि वस्तुष्विति यदुक्तं तत्प्रपञ्चयति, भूमीति त्रिभिः । भूतानां प्राणिनाम् धारयन्तीति धातवः कारणानि शारीराः शरीरारम्भकाः देहतः साम्यमुक्तं जीवतोऽप्याह—आत्मसंयुता इति ॥ ५ ॥

धातुषु देहेषु नामरूपाणि वर्णाश्रमादीनि कल्पनायाः प्रयोजनमाह, एतेषां प्राणिनां स्वार्थसिद्धये प्रवृत्तिनियमद्वारा धर्मादिपुरुषार्थसिद्धये ॥ ६ ॥

न केवलं देहेष्वेवापितु देशकालादिभावानामपि आदिशब्देनानुपादेयानां फलनिमित्ताधिकारिणां ग्रहणम् । वस्तूनामुपादेयानां ब्रह्मादीनामपि मम मया नियमार्थं सङ्कोचार्थं सिद्धयर्थः ॥ ७ ॥

एवं गुणदोषविषयं परिशोध्य तयोः शुद्ध्यशुद्धिमूलत्वाच्छुद्ध्यशुद्धी प्रपञ्चयति, अकृष्णसार इत्यष्टाभिः । देशानां मध्ये कृष्णहरिणरहितोऽशुचिः तत्राप्यब्रह्मण्यो ब्राह्मणभक्तिशून्योऽत्यन्तमशुचिः कृष्णसारोऽपि कृष्णेन मृगेण सारः श्रेष्ठो यः सोऽप्यसौवीरकीकटः सुवीराः सत्पुरुषास्तद्धान्सौवीरः कीकटोऽपि शुचिः तदुक्तम् 'स एव पुण्यतमो देशः सत्पात्रं यत्र लभ्यते, इति तद्वर्जितो यः कीकटोऽङ्गवङ्गकलिङ्गादिः असंस्कृतः सम्मार्जनादिशून्यो म्लेच्छबहुलो वा इरिणमूषरम् एकवद्भावः तदशुचि तदन्यः शुचिरित्यर्थादुक्तं भवति ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

एकविंशाध्यायस्य किञ्चिदर्थमनुसन्धाय मङ्गलमाचरति जयतीति । स्वं परं चानन्दयतीति तथा स चासौ परमानन्दस्वरूपो यो नृकेसरी नृसिंहः स जयति सर्वोत्कर्षेण वर्तते । श्लेषेण परमानन्दसंज्ञकगुरुणा महेश्वरस्याभेदोऽभिप्रेतः । सत्कृतिः सत्प्रयत्नः कृती विद्वान् बभूवेति शेषः । ईदृशं निवेदयति—ईदृशमिति । तत्र त्रिष्वधिकारिषु मध्ये योगत्रये वा निवृत्तिकर्मनिष्ठानां निष्कामकर्मनिरतानां । तदकरणं नित्यनैमित्तिकाकरणम् । तत्तत्करणस्य सत्त्वमालिन्यापादकत्वात् तन्निवर्तकत्वाच्च तस्य निषिद्धकरणजन्यदोषस्य निरासकत्वात् । विशुद्धसत्त्वानां जातवैराग्याणां भक्तिनिष्ठानां जातश्रद्धानां तद्विरुद्धं ज्ञानमभक्तिविरुद्धम् । उभयेषां ज्ञानिभक्तानां । नापि साधका निष्कामा अपि न कामानैहिकान् पारलौकिकांश्च ॥ १ ॥

अधिकारे कामित्वनिष्कामित्ववैराग्यश्रद्धारूपैर्विशेषणैर्यथा योग्यतया अधिक्रियमाणे सम्बन्धविशेषे या निष्ठा स्थितिः स गुणः विपर्ययः पराधिकारे निष्ठा । उभयोर्गुणदोषयोः नत्वाभासोक्तशङ्कायाः कतरदिव समाधानं तत्राहाधिकारभेदेनेति न वस्तुनिष्ठाविति यथा ऋतुगमनं क्रियात्मकं वस्तु तत्र गृहस्थस्य विहितत्वाद्गुणत्वं प्रतीयते किन्तु विरक्तस्य निषिद्धत्वाद्दोषत्वमेवेति न गुणे गुणत्वं नच दोषे दोषत्वं किन्त्वधिकारभेदेनोभयोः कल्पितत्वमित्यर्थः ॥ २ ॥

तदाह, गुणदोषयोः कल्पितत्वमाह—शुद्धीति सार्द्धकम् । विचिकित्साशब्दस्य विचिकित्स्यकार्ये प्रवृत्तिप्रतिबन्धे लक्षणा अत इत्यर्थं इत्युक्तम् । तन्निमित्ते इति ते योग्यत्वायोग्यत्वे निमित्ते कारणे ययोस्तथाभूते उपादेयानुपादेयत्वे पुनस्तन्निमित्त इति ते उपादेयत्वाऽनुपादेयत्वे निमित्ते ययोस्तावर्थानर्थौ तत्र शुद्ध्यशुद्ध्यादि मध्ये । शुद्धेन देशकालादि षट्पदार्थेन व्यवहारार्थमपि विनापि शुद्ध्यशुद्धिव्यवस्थां केवलव्यवहारार्थमपि गुणदोषौ उपादेयत्वानुपादेयत्वे विधीयेते अत एवाशुद्धावपीति व्याख्यातम् । नान्यदिति अन्यत् प्रतिग्रहादिकं नोपादेयं । यात्रार्थमिति विनापि गुणदोषव्यवस्थां केवलवृत्त्यर्थमपि तौ शुभाशुभौ विधीयेते अत एव दोषत्वेऽपीति व्याख्यातम् ॥ ३ ॥

दर्शित इत्यर्द्धकम् । धुरमिति कर्मजडानामेव भारो ननु भक्तानां तेषान्त्वाचारः सुखमय एवेत्यर्थः । सुखस्वरूपया भक्त्यैव प्रवृत्तत्वात् ॥ ४ ॥

वेदप्रोक्तत्वेन हेतुना भक्तस्य तदभिनिवेशः शुद्ध्यशुद्ध्यासक्तिर्माभूदभवत्विति हेतोः तत् समानत्वम् । कारणानि शरीरस्य: पूर्वस्मीनि अत एव शरीरारम्भकाः भौतिकत्वेन सर्वदेहानां समत्वाज्जीवानां देहतः साम्यमुक्तम् ॥ ५ ॥

वर्णाश्रमादीनीति ब्राह्मण ब्रह्मचार्यादि-नामानि रूपाणि द्विपदत्वादीनि उत्तममध्यमाधमत्वानि चेति व्याख्येयम् । प्रवृत्तिनियमद्वारा प्रवृत्तिसङ्कोचक्रमेण आदिना मोक्षपर्यन्तानां परिग्रहः ॥ ६ ॥

फलनिमित्ताधिकारिणां कामिनां कीदृशानामनुपादेयानां वेदा ब्रह्मात्मविषया इति वक्ष्यमाणत्वात् चित्तशुद्ध्यर्थमेव कर्माणि विहितानि न काम्यफलार्थः अतः फलमुद्दिश्य कर्म कर्तारो हि अयोग्या अत एवानुपादेया इति तेषां निखिलगुणदोषौ विधीयेते इत्यर्थः । उपादेयानां यागादि कर्मसु योग्यत्वेन ब्राह्मणानामित्यर्थः । नियमशब्दस्य व्यवस्थार्थत्वाच्छुद्धवस्थायाश्च सङ्कोचे पर्यवसानादित्यर्थ इत्युक्तम् ॥ ७ ॥

गुणदोषविषयं देशकालादिषट्कं परिशोध्य विविच्य । तयोर्गुणदोषयोः तत्रापि अकृष्णसारत्वेऽपि कृष्णसारोऽपि कीकटः अङ्गवङ्गकलिङ्गादिः तद्विवर्जितः सत्पुरुषरहितोऽशुचिः एकवद्भाव इति कीकटश्चाऽसंस्कृतश्च इरिणश्चैतेषां समाहारः कीकटाऽसंस्कृतेरिणं असौवीरं च तत् कीकटाऽसंस्कृतेरिणञ्चेति तथा । असौवीरादन्यः भक्तवान् कीकटादिरपि शुचिरिति अर्थात् तात्पर्यवशादुक्तम् ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ॥

एष एव परिहारोऽनन्तराध्याये स्फुटतरमुच्यते, प्राणैरिति। प्राणशब्देनेन्द्रियविषयाः शब्दादयो लक्ष्यन्ते प्राणैरिन्द्रियैर्वा च इति विपर्ययः अधिकारानुगुणा निष्ठा यथा शूद्रस्य ब्राह्मणधर्मः अविरक्तस्य संन्यासधर्मश्च दोषः ब्राह्मणस्य विरक्तस्य च गुणः ॥ १—२ ॥

समानेष्वपि भौतिकत्वाद्याकारेण समानत्वे शुद्ध्यशुद्धी एव गुणदोषौ तौ च शुभाशुभौ कर्मनिष्पादनयोग्यत्वायोग्यत्वरूपौ विधीयेते द्रव्यस्य विचिकित्सार्थं दुष्टस्य शूद्रस्य जिहासार्थं गुणदोषविधानमित्यर्थः ॥ ३ ॥ ४ ॥

धर्मार्थं दुष्टद्रव्यवर्जनेन धर्माख्यप्रयोजनसिद्धिः व्यवहारः अर्थार्जनादिः यात्रा देहधारणं धर्माविरोधार्थार्जनदेहधारणादिकमपि शुद्ध्यशुद्धी कर्मानुष्ठाने सत्येव सत्ये भवत इत्यर्थः धातवः शरीरसम्बन्धिनो भूतानां धातवः ॥ ५ ॥

कल्प्यन्ते ज्ञाप्यन्तेऽप्येतेषां पुंसां पुरुषार्थसिद्ध्यै ॥ ६ ॥

देशकालादिभावानां देशकालादिनिष्पाद्यानां नियमार्थं कर्मणां वर्जनीयवर्जनार्थम् ॥ ७ ॥

अकृष्णसारः कृष्णमृगप्रचाररहितो देशः कृष्णमृगप्रचारे सत्यपि असौवीरकीकटासंस्कृतेरिणम् असौवीरादिव्यतिरिक्त देश कर्मण्य इत्यर्थः। कीकटो मगधकलिङ्गादिः असंस्कृतदेशः म्लेच्छभूयिष्ठदेशः इरिणम् ऊषरक्षेत्रम् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

"कर्मणां जात्यशुद्धानामनेन नियमः कृतः।
गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥

इत्यशुद्धानां कर्मणां सङ्गानां च त्याज्यत्वोक्त्या शुद्धानां तेषां मुमुक्षोरप्युपादेयत्वं सूचितं तत्र के पुनस्ते कर्मादयः शुद्धा अशुद्धाश्चेत्याभिप्रायमालक्ष्य तान् विवक्षुस्तावत्स्वाधिकार निष्ठाविपरीतनिष्ठैव दोषः स एवाशुद्ध्यावहस्तत्फलं तु संसार इत्याह—य इति । अभ्यासमत्पथः ममार्गः जन्मजरामरणाद्यनेकसांसारिकदुःखसागरनिमग्नान् जीवाननवलोक्यानुजिघृक्षया मदाराधनोपयुक्तकरणकलेवरशास्त्रादिकं प्रयच्छतो ममेत्यभिप्रेतोयं पन्थाः मार्गः मत्प्राप्त्युपायः कर्मयोगज्ञानयोगभक्तियोगात्मकान् हित्वा ये चलैः प्राणैरिन्द्रियैः क्षुद्रान् कामान् शब्दादिविषयान् जुषन्तः सेवमाना भवन्ति ते संसरन्ति सांसारिकदुःखतरणोपायार्थं हि करणकलेवरादीन्प्रयच्छतो जातस्य मनुष्यमात्रस्य मदुक्तादिष्टस्वस्ववर्णाश्रमोचितेषु साक्षात्परम्परया वा मत्प्राप्तिसाधनेष्वधिकारस्तमिममधिकारं त्यक्त्वा ये केवलं क्षुद्रकामपरास्ते पुनः संसरन्तोऽनन्ततः स्थावरतां प्राप्नुवन्तीति भावः ॥ १ ॥

मनुष्यमात्रस्य क्षुद्रकामाभिनिवेशः संसारावहत्वाद्दोषप्रत्यभिप्रेत्योक्तं वचः पुनः पठति, स्वे स्वे इति ॥ २ ॥

विवक्षितस्य शुद्ध्यशुद्धिविभागस्य तावत्प्रयोजनं वक्तुं प्रतिजानाति शुद्ध्यशुद्धी इति । द्रव्यस्य विचिकित्सार्थम् इदं योग्यम् इदमयोग्यं वेति सन्देहद्वारा स्वाभाविकप्रवृत्तिप्रतिबन्धार्थमित्यर्थः शुद्ध्यशुद्धी योग्यत्वायोग्यत्वे वस्तुषु देशकालद्रव्यकर्तृमन्त्रकर्मरूपेषु पदार्थेषु समानेष्वपि पञ्चभूताद्यात्मकत्वेन समानाकारेष्वपि अपीत्यनेन व्यर्थोऽयं शुद्ध्यशुद्धिविभाग इत्याशङ्का निरस्ता किं तत इत्यत आह—गुणदोषौ शुभाशुभौ इति सत्यामेव विचिकित्सायां शुभाशुभावहौ स्वाधिकार तद्विपर्ययरूपौ गुणदोषौ विज्ञातौ भवत इत्यर्थः । गुणदोषौ इत्यस्य तत इत्यादिः विधीयेते इत्यस्य विभज्य ज्ञाप्यत इत्यर्थः ॥ ३ ॥

ततोऽपि किमित्यत आह—धर्मार्थमिति । गुणदोषपरिज्ञानं धर्मार्थमित्यर्थः सत्येव हि तद्ज्ञाने दोषपरिहारेण स्वाधिकारनिष्ठारूपधर्मसिद्धिः किञ्च, इदमुपादेयमिदमनुपादेयमिति व्यवहारार्थं च यात्रार्थं धर्माविरोधेन तदुपयुक्तशरीरसंरक्षणार्थम् एतत्सर्वं शुद्ध्यशुद्धिविभागेन सम्भवतीति भावः । तदाह, दर्शित इति धर्मं स्वाधिकारात्मकधर्मरूपां धुरं भारमुद्वहताम् उद्वोढुमिच्छतामयमाचारः शुद्ध्यशुद्धिविभागपूर्वकप्रवृत्तिरूपो दर्शितो ज्ञापितः ॥ ४ ॥

"शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु" इति प्रतिज्ञातमेव प्रपञ्चयति, भूमीति त्रिभिः । आब्रह्मस्थावरादीनां भूतानां प्राणिनां शरीरारम्भकाः भूम्यादयः पञ्च धातवः तेचात्मनाऽन्तरात्मभूतेन मया संयुताः सर्वे आब्रह्मस्थावरान्त-श्वरतात्मात्मकाः इत्यर्थः । अनेन समानेष्विति विवक्षितं साम्यं स्पष्टीकृतम् ॥ ५ ॥

समानेष्वपीत्यपि शब्देनान्तरवैषम्यमपि शुद्ध्यशुद्धिविभागज्ञापनप्रयोजकमस्तीति सूचितं तद्विवृणोति—वेदेनेति । समेष्वप्युक्त्या ब्रह्मादिस्थावरान्तेषु भावेषु समानाकारेषु सत्स्वपि तच्छरीरारम्भकेषु धातुषु भूम्यादिपञ्चभूतेषु विषमाणीति विविधानि नामरूपाणि च वेदेन कल्प्यन्ते विधात्रेति शेषः निधाता हि मनसि विपरिवर्तमानाद्देवमनुष्यादिवैदिकशब्दाश्रयगततद्वाच्यभूतदेवाद्याकारान् देवमनुष्यादीन्सृजति तथा च श्रुतिः "वेदेन नामरूपे व्याकरोत्सता सतीप्रजापतिः" इति स्मृतिरपि—

"नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम्।
वेदशब्देभ्य एवादौ देवादीनां चकार सः" ॥

इति कल्पनायाः प्रयोजनमाह—एतेषां संसारिणां जीवानां स्वार्थसिद्धये स्वार्थसिद्ध्युपयुक्ताधिकारनिष्ठार्थमित्यर्थः ॥ ६ ॥

ततः किमत आह—देशेति । भवन्तीति भावा देशकालादिरूपेण सतामित्यर्थः आदिशब्देन द्रव्यकर्तृमन्त्रकर्मणां ग्रहः वस्तूनां गुणदोषौ योग्यत्वायोग्यत्वे शुद्ध्यशुद्धीति यावत् । शुद्ध्यशुद्धी विधीयेते इत्युपक्रमात् मम मया विधीयेन निश्चित्य ज्ञाप्येते किमर्थं कर्मणां देशकालादिनिष्ठानां नियमार्थं संकोचार्थं विपरीताधिकारवर्जनेन स्वस्वाधिकाराणामनुष्ठानार्थमित्यर्थः ॥ ७ ॥

प्रतिज्ञाते शुद्ध्यशुद्धी विदधाति, अकृष्णसार इत्यादिना । अकृष्णसारः स कृष्णमृगप्रचाररहितो देशः तथाऽब्रह्मण्यो ब्राह्मणभक्तिशून्यश्चाशुचिर्भवेत् कृष्णमृगप्रचारो ब्रह्मण्यश्च शुचिरित्यर्थः । कृष्णसारोऽपि न सर्वो देशः शुचिः किन्तु सौवीरादिव्यतिरिक्तो देशः तत्र सौवीरः सौराष्ट्रदेशः कीकटदेशो मगधकलिङ्गादिः—

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति" ॥

इति इत्यतेऽसंस्कृतो म्लेच्छभूयिष्ठदेशः इरिणमूषरदेशः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कर्मयोगिनां भगवत्प्रियत्वेन द्रव्यदेशादिशुद्धिकथनपूर्वकं कर्मकरणप्रकारं वक्तुमिमध्याये तत्र कथितानां श्रेयसामप्येकमननुतिष्ठतां गतिमाह—य एतानिति । भक्तिज्ञानक्रियात्मिकां भक्तिज्ञानकर्मयोगविषयाम् ॥ १ ॥

यथा गुणदोषौ मरिप्रयाप्रियेपदितविहिताविहितकरणनिमित्तौ एवं गुणदोषमूले पुण्यपापनिबन्धेन शुद्धयशुद्धी अपि मत्सन्निधानविशेषतदभावकृतेन ब्राह्मणजात्यधिकृते इति पूर्वोक्तानुवादपूर्वं शुद्धयशुद्धिव्यवस्थामाह—स्वेस्वे इति । उक्तार्थीयम् ॥ २ ॥

पञ्चभूतात्मकत्वेन समानेष्वपि वस्तुषु द्रव्यस्य शुद्धिः अशुद्धिः गुणदोषौ च शुभाशुभौ च मत्सन्निधानविशेषतदभावकृतत्वेन विधीयेते किमर्थमत उक्तं विचिकित्सार्थं शुद्धयशुद्धिविवेकज्ञानेन पुण्याभिवृद्धेन सुखाधिक्यं भवति इति । एतदर्थमिति—

"पञ्चभूतात्मकत्वेन सदृशता सर्ववस्तुषु ।
हरिसन्निधिभेदेऽप्यस्ति विशेषश्च महान्सदा" ॥

इति वचनात् ॥ ३ ॥

एतदेव विवृणोति, धर्मार्थमिति । सुकृतादिप्रयोजनमुद्दिश्य धर्मं धर्मसाधनं धुरमुद्वहता मया यात्रार्थं शरीरयापनार्थम् ॥ ४ ॥

शुद्धयशुद्धी इत्युक्तमेव विवृणोति, भूमीति । स्थावरादीनाम् आब्रह्मपर्यन्तानां जीवानाम् आत्मना संयुताः शारीराः भूम्यादयः पञ्चधातवो महाभूतानि ॥ ५ ॥

पञ्चभूतात्मकत्वेन समानेष्वपि स्थावरादिब्रह्मान्तेषु धातु परमेश्वरः "य इमं त्रिधातु पृथिवीम्" इति श्रुतिः । तस्य सन्निधानविशेषाच्छुद्धत्वं तत्सन्निधानविशेषादशुद्धत्वं च भेदेन तारतम्यलक्षणेन विषमाणि नामरूपाणि विकल्प्यन्ते विविधत्वेन कल्प्यन्ते व्यवहारयोग्यत्वयोग्यानि क्रियन्ते विद्वद्भिर्मया चेति शेषः । किमर्थमेतेषां वेदविहितेन प्रत्यवलक्षणानां जीवानां स्वार्थसिद्धये स्वस्वयोग्य पुरुषार्थसिद्धये इति आब्रह्मस्थावरादीनां श्रुतिस्मृतिलक्षणाम्नायोक्तानामित्यर्थः । "वाक्यस्वरयोरङ्गिनृ" इति वचनात्—

"मदक्षरैः सन्निहिते नरस्तच्छुद्धितरं मतम् ।
अतः शुचितमो विष्णुः सान्निध्यं च समाधतः" ॥

इति वचनात् ॥ ६ ॥

वेदादीनां श्रुतिस्मृतिलक्षणां मन्मुखोद्भूतं वचनमेव गुणदोषयोर्विवेकमित्याह—देशेति । अयं देशोऽयं कालः एतद्द्रव्यमिति इमानि कर्मयोग्यानि नेतराणीति मम वचनाद्वेदादीनां गुणदोषौ विधीयेते कर्मणां नियमार्थं फलसाधनार्थम् ॥ ७ ॥

कीदृशो देशः शुचय इत्यतस्तानाह—कृष्णसार इति । ब्राह्मणानां कर्मकरणाय कृष्णसारो नाम मृगो देशानां शुचिः शुद्धिकरो भवेत् कृष्णसारोऽयं देशमधिवसति स देशः शुचिरित्यर्थः । मधशब्देन कृष्णसारविधुरोऽपि देशः शुचिरिति सूचयति—

"नदीसमुद्रगिरयः आश्रमाश्च वनानि च ।
नगराणि च दिव्यानि शालग्रामादयस्तथा ॥
तेषां समीपगाश्चैव देशा योजनमात्रतः ।
कर्मयोग्यास्तु समाख्यातास्तदन्ये कीकटाः स्मृताः ॥
तदन्येऽपि तु ये देशाः कृष्णसारोषिताः स्मृताः ।
कर्मयोग्या एव ते ज्ञेया" ॥

इति वचनात् । उक्तस्यापवादमाह, कृष्णसारोपीति । कृष्णसारोऽपि सौवीरकीकटासंस्कृतेरिणोऽन्यदेशस्य शुचिहेतुः एषां सकाशोऽपि शुचिकरो नेत्यर्थः । अपरोऽद्युषितो देशोऽसंस्कृत इत्युच्यते तदुक्तं "यदि नाऽद्युषिताः खलैः" इति तत्रापि विशेषोऽन्यत्रोक्तः—

"खलैरद्युषिताश्चापि यदि सद्भिरधिष्ठिताः । इति
कर्मयोग्या इति विज्ञेया विष्णुलिङ्गानि यत्र च" ॥

इरिणदेशः लावणिक ऊपरभूपादिकः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

य एतानिति तैः तत्र साधकानामजातवैराग्यश्रद्धानां विशुद्धसत्त्वानां जातवैराग्याणां भक्तिनिष्ठानां जातश्रद्धानां न सिद्धा अजातवैराग्यश्रद्धाः नापि साधकाः निष्कामा अपि नेति विवेकव्यं मूले तु क्रिया ज्ञानभक्तिसरूपकत्वेन लक्षितान् पूर्वोक्तान् कामानैहिकान् पारलौकिकान् वा ॥ १ ॥

तत्र व्यावहारिकयोर्गुणदोषयोर्विधानार्थमधिकारिमाह स्व पूर्वानुवादेनैव गुणदोषौ वक्ष्यति—स्वेस्व इति । अधिकारे कामित्वनिष्कामत्ववैराग्यश्रद्धाभिर्यथायोग्यतया अधिक्रियमाणौ योगविशेषे उभयोर्व्यावहारिकपारमार्थिकाधिकारिणोः किन्तु पूर्वत्र गुणत्वं कल्पितमुत्तरत्र तु सिद्धमेवेति भावः । अत्र ज्ञानकर्मणोर्भक्तत्वं विना सिद्धत्वाभावेन तन्मिश्रतयैव विद्धि तस्मात्तेन तत्र तत्र निष्ठा च्युतिः किन्तु सर्वनिरपेक्षतया सर्वप्राधिकार्यौ भक्तावेव तत्तद्दोषमिश्रत्वे कृते निष्ठा च्युतिः स्यादिति गम्यते तदेवं भक्त्यंशसहायकर्मनिष्ठाकर्मठ गुणः तथा तत्सहाया ज्ञाननिष्ठा ज्ञानिनि ततोऽपि गुणः निष्किञ्चनभक्तिनिष्ठा तु भक्तेः सर्वोत्कृष्टो किमुत तत्साध्यप्रेमलक्षणाभक्तिरिति पूर्वपदेन प्राप्तम् एवमेतद्विपर्ययोऽन्यूनेऽधिके वाधिकारे प्रवेशो दोषः न्यूनं पूर्वहानेः अधिके पराप्तिरसिद्धश्चेत्यर्थः ॥ २ ॥

अत्र व्यावहारिकेऽपि स्वे स्व इत्यनुसारेणैव गुणदोषौ विवृणोति, शुद्धयशुद्धीत्यादिना । तत्र शुद्धीति सार्धकं टीकायां धर्मार्थमिति प्रायिकमेव विचिकित्सायामपनोदनादिलक्षणव्यवहारार्थमपि तदुपयुक्त द्रव्यादीनां तत्तच्छास्त्रे शुद्धयशुद्धित्वाशुभत्वाशुभत्वविधानदर्शनात् एवमुत्तरत्रापि गुणदोषौ व्यवहारार्थमिति विनापि शुद्धयशुद्धिव्यवस्थां केवलव्यवहारार्थमपि गुणदोषौ विधीयेते शुभाशुभौ धर्मार्थमिति विनापि गुणदोषव्यवस्थां

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

केवलवृत्त्यर्थमपि तौ विधीयेते इत्यर्थः । तस्माद्गुणदोषाविस्यादि-लक्षणौ तूपलक्षणौ एवेति भावः । अतः शुद्ध्यशुद्ध्यादियुग्मत्रयकणा धर्मार्थव्यादीनां योजना न कथासङ्गतं सर्वत्र सर्वविधानदर्शनात् व्यवहारोऽत्र परमार्थशास्त्रमात्रानुगतिः नतु पूर्ववत्परमार्थतत्परस्तुतिः धर्मयाज्ञमोस्तादितरयोः पृथगुपादानात् ॥ ३ ॥

दर्शित इत्यर्थकम् । धर्ममुद्वहतां धुरमिति मद्भक्तिमुद्वहतां त्वाचारः सुखमय एवेत्यर्थः सुखस्वरूपया भक्त्यैव प्रवृत्तत्वात् ॥४॥५॥

समेषु सर्वेषामात्मसंयुक्तत्वाद्गुणाधिक्याभाववत्सु भौतिकत्वादिषु त्वविशेषेष्वपि विषमाणि नामानि ब्राह्मणादीनि रूपाणि उत्तमादित्वेन भिन्नानि निम्बसदे स्वादुवद्गुणदोषतया कल्प्यन्ते केवलमुपचर्यन्ते किमर्थं स्वाधिकारानुरूपायामेव प्रवृत्तौ जीवानां स्वार्थो धर्मादिः सिद्ध्यति प्रवृत्तिसङ्कोचात् क्रमेण मोक्षश्च सिद्ध्यतीत्येतदर्थमित्यर्थः ॥ ६ ॥

नियमार्थं व्यवस्थार्थं सङ्कोचार्थञ्च तदेतच्च श्रीभगवत्सन्दर्भे विनैव तत्सम्बन्धं तु "निर्गुणो मदपाश्रयः मन्निकेतन्तु निर्गुणम्" इत्यादि वक्ष्यमाणात् प्राकृतगुणातीतगुणाश्रयस्य ममेति वेदात्मकेन मयेत्यर्थः ॥ ७ ॥

अकृष्णसार इति तैः तच्च निर्गलितार्थमिति ज्ञेयं कृष्णमृगेण श्रेष्ठोऽपि सुवीरैर्ब्रह्मण्यैर्हीनश्चेत्कीकटोऽप्यशुचिः सद्युक्तश्चेत्कीकटोऽपि शुचिरिति ॥ ८—९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गुणदोषदृशिर्भूम्ना प्रोक्ता कर्माधिकारिषु ।
एकविंशे तत्प्रपञ्चः श्रुत्यर्थश्च विनिश्चितः ॥

सकामकर्मिणो निन्दति य एतानिति । मत्पथः समासान्तोभाव आर्षः । मत्प्रापकमार्गान् भक्तिः साक्षान्मत्प्रापिका ज्ञानं मम निर्विशेषस्वरूपप्रापकं क्रियानिष्कामकर्म परम्परया तत्प्रापकं क्षुद्रान् स्वर्गराज्यादीन् ॥ १ ॥

ननु, मया को गुणः को दोष इति त्वं पृष्टस्त्वया च मदुक्तेषु गुणदोषदृशिर्दोषस्तदभावो गुण इति प्रत्युक्तं तत्राह-मिदमाशङ्क्य यदि कश्चित्स्वल्पश्रद्धो भक्तालुः शुद्धभक्त्यधिकारी प्रतिष्ठितैः कर्मिभिर्ज्ञानिभिर्वा युक्त्या दैवाद्वशीकृतस्तदनुमत एव सन् औषधपानन्यायेनारोचकमपि कर्म करोति ज्ञानं वाभ्यस्यति तदा तस्मिन् भक्ते किं गुणदोषदृशिर्दोषः किं तदभाव एव गुणः किञ्च यदि कश्चिदप्राप्तमहत्कृपत्वाद्भक्तावजातसम्यक् श्रद्धः कर्मी ज्ञानी वा भक्तोत्कर्षं दृष्ट्वा तादृशनिजोत्कर्षकामनयैव स्वाधिकारप्राप्तानि कृत्यानि त्यक्त्वा मद्वदेव भगवन्तं भजन्नात्मानं वैष्णवत्वेन ख्यापयति तदा तस्मिंस्तस्मिन् दाम्भिके जगद्वञ्चके किं गुणदृष्टिः कर्तव्या भवति चेत् सत्यं शृणु तर्हि गुणदोषयोर्लक्षणमित्याह, स्वे स्वे इति । ज्ञानिनो ज्ञाने एवं कर्मिणः कर्मण्येवाधिकारस्तत्रैव निष्ठा निष्ठितत्वं गुणः किन्तु तयोः स्वतः फलदानासमर्थयोर्भक्तिमिश्रत्वेनैवानुष्ठेयत्वं "नैष्कर्म्यमप्यच्युतभाववर्जितम्" इत्यादेरन्यथा वैफल्यमेव शुद्धभक्तस्य तु भक्तावेव निष्ठा गुणः तस्यास्तु स्वत एव फलदानसामर्थ्यात् कर्मज्ञानाद्यमिश्रत्वेनैवानुष्ठेयत्वं "धर्मान् सन्त्यज्य यः सर्वान् मां भजेत्" इति "न ज्ञानं न च वैराग्यम्" इत्यादेः ज्ञानादिमिश्रत्वे सति तस्याः शुद्धभक्तित्वापगमः स्यात् विपर्ययः पराधिकारे निष्ठितत्वम् उभयोर्गुणदोषयोः ॥ २ ॥

किञ्च गुणदोषयोः प्रपञ्चो महानेव तमहं विवृणोमि, शृण्वित्याह, शुद्ध्यशुद्धी इति । द्रव्यस्य विचिकित्सा इदं योग्यमयोग्यं वेति सन्देहस्तन्निवर्तनार्थं "मशकार्थो धूमः" इति वत् सनानेषु उत्तरश्लोके वक्ष्यमाणेषु भूम्यादिष्वत एव शाकमूलफलादिष्वपि वास्तूकशाकः शुद्धः कलम्बीशाकोऽशुद्ध इत्येवं गुणदोषौ शुभाशुभौ विधीयेते तत्र धर्मार्थं शुद्ध्यशुद्धी शुद्धेन धर्मः अशुद्धेनाधर्मः इति व्यवहारार्थं गुणदोषौ शुद्धत्वेऽपि शिष्टानां व्यवहारदर्शनाद्गुणः अशुद्धत्वेऽपि तददर्शनाद्दोषः यात्रार्थं शुभाशुभौ असत्प्रतिग्रहादेर्दोषत्वेऽपि आपत्सु शरीरनिर्वाहमात्रोपादानं शुभमेव अधिकोपादानं त्वशुभं पापमेव ॥ ३ ॥

एवं धर्मरूपां धुरम् वहतां जनानां मया मन्वादिरूपेणायमाचारो दर्शितः ॥ ४ ॥

"गुणदोषभिदा दृष्टिनिगमात्तेन हि स्वतः" इति यत्त्वयोक्तं तत्सत्यमेव किन्तु निगमो हि लोकोपकारक एवेत्याह, भूमीति द्वाभ्याम् । धारयन्तीति धातवो भूम्यादय एते आब्रह्मस्थावरादीनां शारीराः शरीरारम्भकाः इति देहतः साम्यमुक्तम् आत्मतोऽप्याह, आत्मेति ॥ ५ ॥

धातुषु देहेषु समेष्वपि नामरूपाणि वाचकवाच्यानि ब्राह्मणोऽयमिति ब्रह्मचार्ययमिति ताम्बूलिकतैलिकादिरयमिति वर्णाश्रमादि निबन्धनानि कल्पनायां प्रयोजनमाह, एतेषां प्राणिनां स्वार्थसिद्धये प्रवृत्तिनियमद्वारा धर्मादिषु पुरुषार्थसिद्धये ॥ ६ ॥

न केवलं देहेष्वेव अपि देशकालफलनिमित्तादिष्वपीत्याह, देशकालादयो ये भावाः पदार्थास्तेषां तत्सम्बन्धिनां वस्तूनां व्रीह्यादीनामपि मम मया नियमनार्थं सङ्कोचनार्थमित्यर्थः ॥ ७ ॥

प्रथमं शुद्ध्यशुद्धी प्रपञ्चयति, अकृष्णसार इत्यष्टभिः देशानां मध्ये कृष्णहरिणरहितो देशोऽशुचिः तत्रापि न सन्ति ब्रह्मण्या ब्राह्मणभक्तिमन्तो यत्र सत्यत्यन्तमशुचिः कृष्णसारोऽपि कृष्णेन मृगेण सारः श्रेष्ठोऽपि असौवीरः कीकटश्च असंस्कृतो मार्जनादिशून्यो म्लेच्छादिबहुलश्च ईरिणम् ऊषरश्च तेषां द्वन्द्वैक्यं तत् अशुचिः सुवीराणां सत्पुरुषाणां निवासः सौवीरः असौवीरो यः कीकटो गयाप्रदेशः सौवीरः सत्पात्रयुक्तः कीकटोऽपि शुचिरित्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वाध्याये त्रयाणां मुक्त्युपायानां योगानां मध्ये यत्राधिकारस्तत्र निष्ठा गुणोऽन्यत्र निष्ठा यदि दोषस्तर्हि जात्यशुद्धानां संसारहेतूनां तु सर्वथा त्याग एव इति नियमो दर्शितः योगत्रयासक्तानां प्रेमविशेषरूपभक्त्याविष्टचित्तानां परमभागवतानां न किञ्चिद्गुणदोषाविति चोक्तमधुनाऽस्मिन्नध्याये त्रयाणां योगिनां स्वस्वधर्माद्यर्थमुपादेयानुपादेयपदार्थव्युत्पत्तये देशादिपदार्थानां शुद्ध्यादिकं दर्शयति, तत्र तावत्प्रस्तुतयोगत्रयनिष्ठजनस्तुतिद्योतनाय तद्विमुखान्बुभुक्षून्निन्दति, य इति ॥ १ ॥

प्रस्तुतयोगत्रयस्योपयोग्यनुपयोगिनां पदार्थानां शुद्ध्यादिकं वक्तुं योगानां मध्ये यत्राधिकारस्तत्र निष्ठा गुणोऽन्यत्र निष्ठा दोष इत्यनुवदति, स्वे स्वे इति ॥ २ ॥

कर्मण्यो गुणवान् कालो द्रव्यतः स्वत एव वा ।
यतो निवर्तते कर्म स दोषोऽकर्मकः स्मृतः ॥ ९ ॥
द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च ।
संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथवा ॥ १० ॥
शक्त्याऽशक्त्याऽथवा बुद्ध्या समृद्ध्या च यदात्मने ।
अघं कुर्वन्ति हि यथा दशावस्थानुसारतः ॥ ११ ॥
धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम् ।
कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शुद्ध्यादिनियमप्रयोजनमाह—शुद्धीति द्वाभ्याम् । शुद्धे प्रवृत्ति गुणः अशुद्धे तु दोषः एवम्भूतौ गुणदोषौ शुद्धप्रवृत्त्या शुभोऽर्थः अशुभप्रवृत्त्याऽशुभोऽनर्थः इत्येवम्भूतौ शुभाशुभौ चोद्दिष्टाविति शेषः । समानेष्वपि एकात्मकेष्वपि वस्तुषु देशादिषु शुद्ध्यशुद्धी योग्यत्वायोग्यत्वे विधीयेते । किमर्थं प्रतिपाद्येते तत्प्रतिपादनस्य प्रवृत्तिरूपं फलरूपं च प्रयोजनमुक्तं प्रयोजनान्तरमाह, द्रव्यस्य विचिकित्सार्थमिति देशः कालादियोग्यत्वायोग्यत्वविषयकसंशयनिराकरणार्थम् ॥ ३ ॥

इत्यर्थम् किञ्चिद्वस्तु अशुद्धत्वेन किञ्चिच्च शुद्धत्वेन प्रतीयते तत्र यथोचितव्यवहारसिद्ध्यर्थं च किं बहुना यात्रार्थं निर्वाहार्थं च धर्मं धर्मरूपां धुरमुद्वहताम् अयमाचारः दर्शितः ॥ ४ ॥

वस्तूनां समानत्वं दर्शयति, भूमीति । भूतानां प्राणिनां आब्रह्मस्थावरादीनां समष्टिव्यष्टीनामित्यर्थः भूम्यादिनामकाः पञ्च धातवः एतदुपलक्षणं लिङ्गशरीरारम्भकानामिन्द्रियादीनाम् शारीराः शरीरारम्भकाः समष्टिव्यष्टिदेहकारणानीत्यर्थः । भूम्याद्यात्मकं सर्वं समष्टिव्यष्टिरूपं जगदित्यर्थः । भूम्याद्याः किमात्मका इत्याकाङ्क्षायामाह, आत्मसंयुता इति आत्मना परमकारणेन मया संयुताः मदात्मका इत्यर्थः ॥ ५ ॥

पञ्चभूतेषु समेष्वेकात्मकेषु वेदेन नामानि ब्राह्मणादीनि रूपाणि तत्तच्छरीरादीनि विषमाणि कल्प्यन्ते समर्थ्यन्ते किमर्थम् एतेषां क्षेत्रज्ञानां स्वार्थसिद्धये भोगमोक्षसिद्धये ॥ ६ ॥

किञ्च मम वस्तूनामंशभूतानां पदार्थानां मध्ये देशकालादिभावानाम् आदिना द्रव्यकर्तृमन्त्रकर्मणां सङ्ग्रहः वेदेन गुणदोषौ योग्यत्वायोग्यत्वे विधीयेते किमर्थम् मुमुक्षुभिर्निष्काममेव कर्म कर्तव्यं न तु काम्यमित्यादिकर्मणां नियमार्थम् ॥ ७ ॥

सङ्क्षेपतः शुद्ध्यशुद्धी दर्शयति, अकृष्णसार इत्यष्टभिः । तत्र देशशुद्ध्यशुद्ध्योर्देशानां मध्ये अकृष्णसारः कृष्णमृगप्रचारशून्यः अशुचिः अब्रह्मण्यः ब्राह्मणेभ्यो हितकृत् ब्रह्मण्यस्तद्भिन्नोऽब्रह्मण्यः अशुचिः कृष्णेन मृगेन सारः श्रेष्ठोऽपि सौवीरः सत्पुरुषयुक्तस्तद्व्यतिरिक्तोऽसौवीरः सः अशुचिः सत्पुरुषयुक्तस्तु सर्वोऽपि शुचिरेव "सर्वे पुण्यतमो देशः सत्पात्रं यत्र लभ्यते" इति वचनात् । कीकटः मङ्गवङ्गकलिङ्गादिरसंस्कृतो म्लेच्छबहुलश्च इरिणः ऊषरश्च एकवद्भावः तदशुचिर्भवेत्तदन्येषां शुचित्वमर्थादुक्तमेव ॥ ८ ॥

---

भाषा टीका ।

श्री भगवान् उवाच ॥ जो पुरुष भक्ति ज्ञान क्रिया रूप मेरे इन मार्गोंको छोडकर इन चल प्राणोंसे क्षुद्रकामों को सेवन करते हैं वे पुरुष संसारही मे घूमते रहते हैं ॥ १ ॥

अपने अपने अधिकार में जो निष्ठा कहा है, सोई तो गुण है इससे जो विपरीत है वही दोष है इन दोनों का यही निश्चय है ॥ २ ॥

समानही वस्तुओ मेंभी शुद्धि तथा अशुद्धि का विधान किया जाता है द्रव्य के सन्देह विचार के वास्ते शुभ अशुभ गुणदोष भी कहे जाते हैं ॥ ३ ॥

हे अनघ ! धर्मके वास्ते व्यवहार के वास्ते देह यात्राके वास्ते जो लोग धर्मके भारको धारण करते हैं उनके वास्ते मैंने यह आचार दिखाया है ॥ ४ ॥

सबभूतों के पृथिवी जल अग्नि वायु आकाश ये पांच धातु हैं इनहीसे ब्रह्मा से स्थावर पर्यंत आत्मा के सहित सबके शरीर हैं ॥ ५ ॥

हे उद्धव ! इन के स्वार्थ सिद्धि के लिये समधातुओं में भी सब के विषम नाम रूप वेदके द्वारा कल्पना किये जाते हैं ॥ ६ ॥

हे सत्तम ! मेरे कर्मोंके नियम के वास्ते देशकाल आदिके जितने भाव वस्तु हैं तिनके गुणदोष विधान किये जाते हैं ॥ ७ ॥

देशों के मध्य में कृष्णसार मृगके बिना जो देश है तथा ब्राह्मण का रक्षक जो देश नहो वह देश अशुद्ध है कृष्णसार मृगके रहने परभी सौवीर मगध देश तथा असंस्कार वाला देश ऊषर देश ये सब अशुद्ध हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कालस्य शुद्ध्यशुद्धी दर्शयति, कर्मण्य इति, । द्रव्यतो द्रव्यसम्पत्त्या स्वतो वा पूर्वाह्णादिरूपः कर्मण्यः कर्मार्हः स काल-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मिन्कर्मणि गुणवान् यतो यस्मिन् द्रव्यालाभेन वा राष्ट्रविप्लवादिना वा कर्म निवर्त्तते यश्च सूतकादौ दशाहादिलक्षणोऽकर्मकः कर्मानर्हः स्मृतः स कालो दोषः अशुद्ध इत्यर्थः ॥ ९ ॥

वस्तुशब्दोपात्तानां द्रव्याणां शुद्ध्यशुद्धी दर्शयति, द्रव्यस्येति चतुर्भिः । द्रव्येण तोयादिना शुद्धिर्मन्त्रादिना स्वशुद्धिः वचनेन शुद्धमशुद्धं वेति सन्देह शुद्धमित्येवं रूपेण ब्राह्मणवचनेन शुद्धिर्विपरीतेनाशुद्धिः संस्कारेण प्रोक्षणादिना पुष्पादेः शुद्धिरवघ्राणादिना स्वशुद्धिः कालेन दशाहादिना नवोदकादेः शुद्धिः

"काले मेघोदकं ग्राह्यं वर्ज्यं तु त्र्यहमेव हि ।
अकाले दशरात्रं स्यात्ततः शुद्धिर्विधीयते" ॥

विपरीतेनाशुद्धिः पर्युषितान्नादेरशुद्धिः अन्त्यजाद्युपहतानां तडागाद्युदकानां महत्त्वाल्पत्वाभ्यां शुद्ध्यशुद्धी ॥ १० ॥

शक्त्याऽशक्त्या सूर्योपरागादिसूतकस्नानादेः शक्तस्यत्यशुद्धिरशक्तस्यापि शुद्धिः बुद्ध्या पुत्रजननादौ दशाहादिस्नानेन शुद्धिरस्नानेनाशुद्धिः समृद्ध्या जीर्णमलवद्वस्त्रादेः समृद्धस्याशुद्धिर्दरिद्रं प्रति शुद्धिः तत्रापि विशेषमाह, यदिति । एते च द्रव्यवचनादयो द्रव्याशुद्धिद्वारा आत्मनि यदघं कुर्वन्ति तद्देशावस्थानुसारेण एव यथा यथावत्कुर्वन्ति न सर्वतः तथा हि निर्भय एव देशे कुर्वन्ति न तु चौराद्याकुले तथा रोगादिव्यतिरिक्तयुवाद्यवस्थायामेव कुर्वन्ति न बाल्यरोगाद्यवस्थायामिति तथा च स्मृतिः

"देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्" ॥

इति ॥ ११ ॥

द्रव्यादिभिर्द्रव्यस्य शुद्धिरित्युक्तं तत्र वचनादिशुद्धिरेकरूपैव द्रव्यतस्तु शुद्धिर्बहुरूपेति तां प्रपञ्चयति, धान्येति । दारु लौकिकं ग्रहचमसादि च अस्थि गजदन्तादि रसाः तैलघृतादयः तैजसाः सुवर्णादयः तेषां पार्थिवानां च रथ्याकर्दमघटेष्टकादीनां यथा यथं कालादिभिः शुद्धिः तत्रापि काकान्त्यजाद्युपघाततारतम्येन देशकालावस्थाद्यनुसारेण च एतैरन्यैश्च युतायुतैर्मिलितैः केवलैश्च कालस्य पुनर्ग्रहणं युतत्वप्रदर्शनार्थम् ॥ १२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

द्रव्यसम्पत्त्येति "पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्" इति स्मृतेः द्रव्यसम्पत्तिश्चेन्नाडीच्छेदनात् पूर्वं पुत्रजन्मकालो दानकर्मार्हः पूर्वाह्णादिश्च स्नात एव जपादिकर्मार्हः । तस्मिन् दानजपादिकर्मणि यस्मिन्काले यच्चेत्यध्याहृतम् अन्यथानन्वयापत्तेः ॥ ९ ॥

पर्युषितान्नादेरशुद्धिरपि कालेनैव ज्ञेया । तत्रापि निरुक्तशुद्ध्यशुद्धिव्यवस्थायामपि ॥ १० ॥

तथाहि । देशावस्थानुसारमेव दर्शयति तथाच बौधायनस्मृतिः । देशं निर्भयदेशं कालं महदर्यादिदोषशून्यम् आत्मानं ब्राह्मणादिरूपम् । द्रव्यम् अल्पबहुधान्यादिरूपम् । द्रव्यप्रयोजनमिति यदि पक्वान्नादिविवाहादौ भोजनादि प्रयोजनं यदा उपस्थितं तर्हि "तन्मात्रद्रव्यमुद्धृत्य शेषं संस्कारमर्हति" इत्युक्तेः । उपपत्तिं युक्तिं यथा प्रोक्षणमात्रेण पुस्तकशुद्धिर्न तु प्रक्षालनतापनादिना मूलनाशापत्तेः इति शौचान्यथानुपपत्त्या प्रोक्षणमात्रमेव तच्छोधकं कल्प्यते । अवस्थां बाल्याद्यवस्थां यथा अदृष्टरजस्ककन्यासु बालेषु च विशोधनम् । अदत्ताः अपरिणीता याः कन्यास्तासु कृतचूडासु वाग्दानात् प्राक् अहोरात्रं विशेषेण शुद्धिकारणं सपिण्डानाम् सपिण्डत्वञ्च कन्यानां त्रिपुरुषपर्यन्तमेव अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञाय इति वासिष्ठवचनात् । बालेषु चानुत्पन्नदन्तेषु अग्निसंस्कारे सत्येकाहो विशोधनम् । एवं वृद्धबालातुरान् विनेत्युक्तेः सूतकादौ तेषां शुद्धिर्विज्ञेया ॥ ११ ॥

तत्र द्रव्यशुद्धौ । तां द्रव्यतः शुद्धिम ग्रहचमसादि च यज्ञीयपात्रम् । यथायथं धर्मशास्त्रानुसारेण तत्र धान्यानां शुद्धिः प्रोक्षणात् यथाह बौधायनः । "व्रीहयः प्रोक्षणाद्भिः शाकमूलफलानि च । तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा" इति लौकिककाष्ठस्य शुद्धिस्तक्षणादिना यथाह याज्ञवल्क्यः "काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि" इति गजदन्तादेस्तु गोमूत्रादिभिः शुद्धिः । यथाह यमः । "गोमूत्रेणास्थिदन्तानां क्षौमानां गौरसर्षपैः" इति । शङ्खश्च । सिद्धार्थकानां कल्केन दन्तशृङ्गमयस्य च । गोवालैः फलपात्राणामस्थ्नां स्याच्छृङ्गवत्तथा" इति । तैलघृतादीनाञ्च शुद्धिः प्लवनादिना । यथाह शङ्खः । "प्लवनं घृततैलानां प्लवनं गोरसस्य च । भाण्डानि क्षालयेदद्भिः शाकमूलफलानि च" इति चकारस्तु घृततैलयोरपि प्लावनमाभिधत्ते । प्लावनं वस्त्रान्तरितपात्रे प्रक्षेपः तस्मिन्नेव पात्रे यथा तद्बहिर्निःसरति तथा तज्जातीयद्रव्येण पूरणं वा सुवर्णादीनां च शुद्धिर्जलादिना । यथाह ब्रह्मपुराणे ब्राह्मे च । "सुवर्णरूप्यशङ्खाश्च शुक्तिरत्नमयानि च । कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च । निर्लेपानि च शुद्ध्यन्ति केवलेन जलेन च । शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षाराम्लवारिभिः" इति । रथ्येत्यादि तत्र रथ्या राजमार्गस्तस्याः शुद्धिः [illegible] । यथाह बौधायनः—"आसनं शयनम् यानं नावः पन्थास्तृणानि च । मारुतार्केण शुद्ध्यन्ति पक्वेष्टकचितानि च" इति एवं कर्दमस्यापि । घटादेस्तु शुद्धिः दहनादिना । यथाह देवलः । मृण्मयानान्तु पात्राणां दहनाच्छुद्धिरिष्यते" इति । मनुयाज्ञवल्क्यौ । पुनः पाकेन मृण्मयमिति पुनः पाकान् महीमयमिति । मूलोक्तचर्मणां शुद्धिस्तु वातादिना । यथाह यमः । कृष्णाजिनानां वालैश्च" इति । तत्रापि पूर्वोक्तशुद्धावपि एतैः कालादिभिरन्यैश्च गौरसर्षपधान्यकल्कादिभिः कार्पासिकसूत्रनिर्मितवस्त्रादीनां शुद्धिः युतैर्द्वित्रिमिलितैर्युतैरेकैकजलादिभिरपि । कालेन शुद्धिः काले मेघोदकं ग्राह्यमित्यादिना यद्यप्युक्ता तथापि कालस्य पुनर्ग्रहणं जलवात्यादिशुद्धौ कालस्य व्यापकत्वदर्शनार्थं सर्वशोधकत्वात् "जगतामाश्रयो हि सः" इत्युक्तेः ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गुणवांश्च कालः कर्मयः देशकालयोः कर्मयता च द्रव्यान्तरसम्बन्धाद्वा स्वतो भवति मथुरादेशस्य जयन्त्यादिकालस्य च भगवज्जन्मयोगात् गुणवत्त्वं यत इति निवर्तते अनिवृत्तश्च प्रकृतसम्भवं कर्मयदोष इत्यर्थः ॥ ९ ॥

द्रव्येण आतपादिना वचनेन शास्त्रबलेन अल्पकालेन अनतिविप्रकृष्टकालेन वसने संस्कारेण यथा प्राक्षेण भूशुद्धिः महत्त्वाल्पतया यथा नदीजलस्य महत्त्वात्पृथिवीजलस्याल्पत्वाच्च तत्संसर्गेऽपि नदीजलस्य शुद्धिः ॥ १० ॥

शक्त्या मन्त्रादिशक्त्या शुद्धिः आतुरस्य वाक्यशुद्धिः ब्राह्मणवाक्येन शुद्धिः समृद्ध्या समृद्धस्य सवस्त्रतः शुद्धिः अलं पर्याप्तं देशावस्था राष्ट्रक्षोभः ॥ ११ ॥

धान्येति धान्यस्य वायवातपादिना शुद्धिः दारुणो मृत्तोयाभ्याम् अत्यन्तोपहतौ तक्षणाद्वा अस्थ्नामपि वायवातपशोषणाच्छुद्धिः तत्र शुद्धिर्यथा आर्द्रस्पर्शेन शुष्कास्थिस्पर्शे प्रायश्चित्तं न तत्पनिबन्धनं तत्तुशुद्ध्यर्थं रसस्य क्षीरादेः केशादिसंसर्गेणापि वस्त्रेण कालेन शुद्धिः तैजसस्य कांस्यादेः अग्निना शुद्धिः चर्मणां सलिलेन शुद्धिः पार्थिवानां द्रव्याणां युतायुतैः संयोगासंयोगैः शुद्धिः यथा ओदनस्य केशाद्यपनयनाज्यसंयोगादिना शुद्धिः ॥ १२—१४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ कालस्य शुद्ध्यशुद्धी विवृणोति, कर्मण्य इति । कर्मणि साधुः कर्मण्यः शुचिरित्यर्थः । कोऽसौ यो द्रव्यतो द्रव्यसम्पत्त्या स्वतः पूर्वाह्णत्वादिना यो गुणवान् यतः यत्र तु काले द्रव्यालाभेन वा राष्ट्रविप्लवादिना वा आरब्धं कर्म निवर्तते निवृत्तं भवति न समाप्यत इति यावत् । यश्च सूतकादौ दशाहादिलक्षणः स कालोऽकर्मकः कर्मानर्हः अत एव दोषः अशुचिः इदं देशस्याप्युपलक्षणं देशकालयोः कर्मण्यता च द्रव्यान्तरसम्बन्धाद्वा स्वतो वा भवति मथुरादिदेशस्य कृष्णजयन्त्यादि कालस्य च भगवत्सम्बन्धयोगाद्गुणवत्त्वम् ॥ ९ ॥

अथ द्रव्यस्य शुद्ध्यशुद्धी दर्शयति, द्रव्यस्येति चतुर्भिः । द्रव्येण मृज्जलातपस्नानादिना द्रव्यस्य वस्त्रादेः शुद्धिः मूत्रादिना त्वशुद्धिरित्यर्थः । वचनेन शास्त्रबलेन च शुद्धमशुद्धं वेति सन्देहे शुद्धमस्त्विति ब्राह्मणवचनेन वा शुद्धिः संस्कारेण प्रोक्षणादिना च पुष्पादेः शुद्धिरवघ्राणादिना त्वशुद्धिः अल्पकालेनानतिविप्रकृष्टकालेन यथा शवोदकादेर्दशाहादिना शुद्धिः विपरीतेन त्वशुद्धिः महत्त्वाल्पतया यथा नदीजलस्य महत्त्वात्पृथिव्यादिजलस्याल्पत्वात् चण्डालादिसंस्पर्शेऽपि नद्यादिजलस्य शुद्धिः रथ्यादिसलिलस्य त्वशुद्धिरित्यर्थः ॥ १० ॥

शक्त्याशक्त्या यथा सूर्योपरागादिषु स्नातुं शक्तस्य तु स्नानादिनैव शुद्धिरातुरस्य त्वशक्त्या शुद्धिः कस्य चिद्बुद्ध्या शुद्धिरशुद्धिश्च यथा पुत्रजन्मादौ दशाहातिक्रमज्ञानेन शुद्धिरनतिक्रमज्ञानेन त्वशुद्धिः समृद्ध्या उत्सवेन यथा भगवदुत्सवादिष्वस्पृश्यस्पर्शेऽप्युत्सवेनैव शुद्धिः तत्र विशेषमाह, यथात

"देशं कालं तथा शक्तिं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्" इति स्मृत्युक्तरीत्या एते द्रव्यवचनादयः शोधकाः देशावस्थाद्यनुसारतः आत्मानोऽशुद्धात्मकस्य द्रव्यस्य अथाऽलङ्कुर्वन्ति अलं पर्याप्तं यथा तथा शुद्धिं कुर्वन्तीत्यर्थः । यद्वाऽलंशब्दोऽत्र वारणार्थकः अलङ्कुर्वन्ति यथावद्शुद्धिं वारयन्तीत्यर्थः । अघङ्कुर्वन्तीति पाठान्तरे यथा आत्मनः यथावस्थितद्रव्यस्वरूपस्य स्वतः शुद्धस्यैवाघं कुर्वन्ति स्वभावतः शुचिवस्तूनि अशुचित्वमापादयन्ति तथा देशावस्थाद्यनुसारतः शुद्धिरिति स्वतः शुद्धस्यैव उच्छिष्टाद्यशुचिवस्तुसंस्पर्शेऽशुद्धिरुच्यत इति ॥ ११ ॥

तां प्रपञ्चयति, धान्येति । धान्यादीनां कालादिभिः शुद्धिः तत्र धान्यस्यावघातादिना वायवातपादिना शुद्धिः दारूणां दारुपात्रादीनां मृत्तोयाभ्याम् अत्यन्तोपहतौ तक्षणाद्वा अस्थ्नां गजदन्तादीनामपि वायवातपादिना शोषणाच्छुद्धिः तत्तुशुद्ध्यर्थं रसस्य क्षीरादेः केशादिसंस्पर्शेऽपि कालेन शुद्धिः तैजसस्य कांस्यादेः अग्निना शुद्धिः चर्मणां तैलेन पार्थिवानां द्रव्याणां युतायुतैः संयोगासंयोगैः शुद्धिः यथा ओदनस्य केशाद्यपनयनाज्यसम्भोगादिना शुद्धिरुच्यत इति ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देशान्निरूप्य कर्मयोग्यं कालमाह—कर्मण्य इति । विहिता इत्यादि प्रमाणसिद्धोऽयमर्थ इति प्रकटनाय कर्मण्य इति स्मृत्युक्तशब्दानुवादः गुणवान् वृत्तिमान् कालः कर्मण्यः यज्ञादिकर्मयोग्यः स च द्विविधः द्रव्यतः स्वत इति वाशब्देन द्वावपि योग्याविति वक्ति, एवशब्देन तृतीयो नास्तीति निश्चीयते द्रव्यतः कर्मण्यो वसन्तादिलक्षणः स्वतः कर्मण्यः सन्ध्यादिलक्षणः कालस्य गुणवत्त्वं नाम किं येन कर्मावर्तत इति तं विविनक्ति यत इति यतो यस्मिन् काले निषिद्धात्कर्म निवर्तते न क्रियते स कालः सदोषो निषिद्धो कर्मकः कर्मानर्हो निशीथादिलक्षणः स्मृतः निशीथो मध्यमा रात्रिः राक्षसानां तु गोचरः इत्यादिना यतो दोषात्कर्म निवर्तते तेन दोषेण युक्तः कालः सदोषत्वादकर्मकः ॥ ९ ॥

द्रव्यस्य शुद्ध्यशुद्धिप्रकारोऽपि बहुविध इत्याह—द्रव्यस्येत्यादिना ताम्रादेर्द्रव्यस्याम्लादिद्रव्यसंयोगेन शुद्धिः भाण्डादिद्रव्यस्य तूच्छिष्टामेध्यसुरादिसंयोगेनाशुद्धिः महता वचनेन च शुद्ध्यशुद्धी स्तः तद्यथा अभक्ष्यत्वं यतिपात्रत्वं चालाबुनो दृष्टं केषाञ्चित्प्रक्षालनादिसंस्कारेण शुद्धिः असंस्कारेण शुद्धिः गर्दभयानमसंस्कृतवाण्यादेः केषाञ्चिदपोऽश्वापहृतगृहादिद्रव्यविशेषाणां कालतः शुद्धिः अजादीनां कालेनाशुद्धिः अजादीनां महत्त्वे श्वादिस्पर्शे स्पर्शाभावेन सिद्धस्य शुद्धिः अथवान्यस्याल्पत्वात्स्पर्शेन शुना स्पृष्टस्य तस्याशुद्धिः अल्पस्यापि पापस्य पिपीलिकादिजनादेरशुचित्वं न महतो द्रव्यस्य वधादशुद्धिः ॥ १० ॥

१ फलेच्छावत्यः ।
२ तटाकाद्युदकानां ॥

अमेध्यालिप्तं यद्येन गन्धं लेपं व्यपोहति ।
भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते ॥ १३ ॥
स्नानदानतपोऽवस्थावीर्यसंस्कारकर्मभिः ।
मत्स्मृत्या चाऽऽत्मनः शौचं शुद्धः कर्माचरेद्द्विजः ॥ १४ ॥
मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ।
धर्मः सम्पद्यते षड्भिरधर्मस्तु विपर्ययः ॥ १५ ॥
क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः ।
गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥ १६ ॥

भाषा टीका ।

देश भी काल से द्रव्य से अथवा स्वयं ही गुण युक्त हो जाता है जहां से कि कर्म की निवृत्ति हो जाती है वह दोष अकर्मक कहा जाता है ॥ ९ ॥

द्रव्य की शुद्धि तथा अशुद्धि कहीं द्रव्य से होती है कहीं वचन से होती है किसी द्रव्य की संस्कार से किसी की काल से किसी चीज की अधिक होने से शुद्धि ही रहती है किसी की थोड़े होने से ॥ १० ॥

किसी द्रव्य की शक्ति से किसी की अशक्ति से किसी की बुद्धि से ऐसे कई एक पदार्थ आत्मा के वास्ते अशुद्धि कारक आत्मा अवस्था के अनुसार हो जाते हैं ॥ ११ ॥

धान्य तथा काष्ठादि तंतु घृतादि रस तैलादि चर्म के पदार्थ इनकी शुद्धि काल से वायु से आतप से मृत्तिका से जल से यथायोग्य शुद्धि होती है पार्थिवपदार्थों को तो किसी के मिलने किसी के अलग होने से शुद्धि होती है ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्पृश्यस्पर्शे शुद्धिमुक्त्वा लेपविषयेऽप्याह । यत्पीठपात्रवस्त्रादि येन तक्षणक्षाराम्लोदकादिना गन्धं लेपं च व्यपोहति त्यजति स्वगतं च मलं त्यक्त्वा प्रकृतिं स्वमेव रूपं भजते तस्य तच्छौचं शोधकम् यावता च तक्षणादिना व्यपोहति तावत्प्रमाणं स्वरूपत आवृत्तितो वा तत्कर्तव्यमिष्यते ॥ १३ ॥

एवं तावद्द्रव्यशुद्धिरुक्ता इदानीं कर्तृशुद्धिमाह, स्नानेति । अवस्था कौमारादिः वीर्यं शक्तिः संस्कार उपनयनादिः कर्म सन्ध्योपासनदीक्षादिलक्षणम् आत्मनः साहङ्कारस्य कर्तुरेतैः स्नानादिभिर्यथायथं तत्कार्यानुसारिणी शुद्धिः इयं च शुद्धिर्न व्यवहारार्था किंतु विहितकर्मार्थेत्याह । शुद्ध इति । द्विजइत्युपलक्षणं शूद्रादेरपि ॥ १४ ॥

मन्त्रशुद्धिमाह, सद्गुरुमुखाद्यथावत्परिज्ञानं मन्त्रशुद्धिः कर्मशुद्धिमाह, ईश्वरार्पणं कर्मणः शुद्धिः धर्माद्यर्थं शुद्धयष्टकमुपक्रान्तः प्रकृतमुपसंहरति, धर्म इति । देशकालद्रव्यकर्तृमन्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः सम्पद्यते एतेषां यो विपर्ययः सोऽधर्मस्तद्धेतुरित्यर्थः ॥ १५ ॥

अयं च गुणदोषविभागो न वास्तव इत्याह । क्वचिदिति । आपदि प्रतिग्रहो गुणोऽन्यदापदि निषिद्धत्वाद्दोषः परधर्मश्च परस्य गुणोऽपि स्वस्य दोषः दोषोऽपि कुटुम्बत्यागादि विरक्तादेर्न दोषोऽपितु विधिबलेन गुणः । एवं योऽयं गुणदोषयोरेकाश्रयत्वेऽपि नियमो गुणदोषार्थं वा यो नियमो नियामकं शास्त्रं स तयोर्भेदमेव बाधते ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

यत् पीठेति पीठस्य काष्ठस्य तक्षणाच्छुद्धिः । यथाह याज्ञवल्क्यः । काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि" इति अमेध्यलिप्तपात्राणां शुद्धिर्यथा मार्कण्डेयः । उदुम्बराणामम्लेन क्षारेण त्रपुसीसयोः । भस्माम्बुभिश्च कांस्यानां शुद्धिः प्लावाद्द्रवस्य चेति । उदुम्बराणां ताम्रमयपात्राणां त्रपु रङ्गम् । वस्त्राणां च शुद्धिः क्षारजलादिना । तान्तवं मलिनं पूर्वमद्भिः क्षारैश्च शोधयेत् अंशुभिः शोषयित्वा वा वायुना वा समाहरेत्" इति शङ्खोक्तेः । तस्य पीठादेः तत् तक्षणादि तावदिति मूलपदं व्याचष्टे यावता चेति । स्वरूपत इति तक्षणस्वादिस्वरूपेणैकवारमेव तद्गन्धलेपानपगमे तु आवृत्तौ वारम्वारं वा तत् तक्षणादि कर्तव्यम् । तदुक्तमभिज्ञैः । यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः । तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु" इति ॥ १३ ॥

स्नानेति तत्र स्नानेन देहशुद्धिस्तया देवार्चनादिकार्यसिद्धिः । दानेन मनः शुद्धिस्तया विषयभोगेऽपि पापाभावसिद्धिः । यथाह गार्ग्यः । अकार्यकारिणां दानम्" इति एवम् ग्रहनिमित्तदानेन ग्रहशान्तिलक्षणकार्यसिद्धिर्वा । तपसा कृच्छ्रचान्द्रायणादिना पापप्रायश्चित्तसिद्धिः अवस्था कौमारादिः तया च शुद्धिः यथा हरिहरभाष्ये । शिशोरभ्युक्षणं कार्यं बालस्याचमनं स्मृतम् । रजस्वलादि संस्पर्शे स्नातव्यस्तु कुमारकैः" इति । बालादिस्वरूपं च यथा तत्रैव । प्राक् चूडा करणाद्बालः प्राक्प्रायणात्कुमारः शिशुः । कुमारस्तु स विज्ञेयो

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

यावन्मोक्षपानवन्धनामिति । तथा च शुद्ध्या शिशुस्पर्शादिकार्यसिद्धिः शक्त्या च ग्रहणादौ व्रतादिकार्यसिद्धिः । उपनयनादिसंस्कारेण यज्ञयोग्यतालक्षणकार्यसिद्धिः । सर्वोपासनादिकर्मणा पापापनोदनादिसिद्धिरिति तत्तत्कार्यानुसारिणी शुद्धिर्विज्ञेया । आत्मनः शौचं शुद्धिमाचरेत्ततः शुद्धः सन् वेदविहितं कर्माचरेदित्यन्वयः । मत्स्मृत्या चेति स्मृतिस्वातन्त्र्योक्तेः स्मृतिलक्षणा शुद्धिर्न व्यावहारिकाधिकारमर्हति अपि तु परमस्य तस्याः सर्वत्राव्यभिचारित्वात् । हरिर्हरति पापानि दुष्टचित्तैरपि स्मृत इत्याद्युक्तेः ॥ १४ ॥

एतेषां देशादिषण्णां यो विपर्ययोऽशुद्धत्वं सोऽधर्म इति । अत्राशुद्धत्वस्य देशादिनिष्ठत्वादधर्मस्य तु पुंनिष्ठत्वादभेदानुपपत्तिः किन्तु जन्यजनकयोगगाभिन्यायुर्घृतमितिवल्लक्षणाप्रयोजनं च देशाद्यशुद्धिरधर्मः न व्यभिचरतीति व्यवस्थापरिष्कारः ॥ १५ ॥

क्वचिदित्यस्य व्याख्या आपदीति । प्रतिग्रहस्य गुणत्वमाहारार्थं समीहेतेति प्राणधारणस्यावश्यकत्वात् निषिद्धत्वं च प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदमित्यादेः । कुटुम्बत्यागादेर्दोषत्वं, पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः । न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते इत्युक्तेः । विरक्तादेरिति आहिता नैष्ठिकपरिग्रहः । न दोष इति । यदहरेव विरजेत्तदहरेव प्रव्रजेदिति श्रुतिरूपविधिबलेन कुटुम्बत्यागादिगुणः श्रेष्ठ एव । एकस्मिन्नेवार्थे प्रतिग्रहादौ योऽयं प्रसिद्धो नियमः नियामकं शास्त्रम् आपदि प्रतिग्रहस्य गुणत्वप्रतिपादकम् अनापदि तु दोषत्वप्रतिपादकं वाक्यं कर्तृ । स नियमः शास्त्रं कर्तृ । तयोर्गुणदोषयोर्भेदमेव कर्म भूतं बाधते गुणदोषौ न वस्तुनिष्ठौ किन्तु अधिकारिभेदेन कल्पितावेवेति बोधयतीत्यर्थः ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

परिज्ञानं प्रयोगज्ञानं कर्मप्रयोगानुष्ठानं शुद्धिः द्रव्यादिशुद्धिभिः विपर्ययैः मन्त्रवैकल्यादिभिः ॥ १५ ॥

गुणेति स्नानातुरादेर्निषिद्धत्वाद्दोषः दोषोऽपि हिंसा विहितत्वात् यज्ञेषु गुणः गुणदोषार्थनियमः विशेषशास्त्रेण गुणदोषनियमः तद्भिदां बाधते ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत्र ताम्रवस्त्रादिकममेध्यलिप्तं भवति तत् येनाम्लोदकादिना यावद्द्रव्यं दुर्गन्धं लेपम् अमेध्यलेपं च व्यपोहति त्यजति स्वगतं मलं त्यक्त्वा प्रकृतिं स्वमेव रूपम्भजेत्तावत्तस्य शौचमाकूचित दृश्यते ॥ १३ ॥

अथ कर्तृशुद्धिमाह । स्नानेति । अवस्थानम् कर्मानुष्ठानोपयुक्तं वयः वीर्यं शक्तिः वीर्येति पाठान्तरे संस्कार उपनयनादिः कर्म सन्ध्योपासनादिरूपं मत्स्मृतिर्विष्णुचिन्तनम् एभिरात्मनः शौचं शुद्धिः द्विजः इत्थं शुद्धः सन्नेव स्वाधिकारात्मकं कर्माचरेत् ॥ १४ ॥

अथ मन्त्रशुद्धिमाह, मन्त्रस्येति । परिज्ञानं प्रयोगज्ञानम् आचार्यमुखाद्यथावत्परिज्ञानं वा मन्त्रस्य शुद्धिः अथ कर्मशुद्धिमाह कर्मशुद्धिर्मदर्पणम्" इति कर्मणां मदर्पणमेव तेषां शुद्धिरित्यर्थः। अर्पणं नाम भगवदाराधनरूपत्वानुसन्धानम् इत्थं शुद्ध्यशुद्धिप्रश्नमुपसंहरति धर्मः इति षड्भिः देशकालद्रव्यकर्तृमन्त्रकर्मभिर्विशुद्धैरेव धर्मः स्वाधिकारलक्षणः सम्पद्यते विपर्ययैरशुद्धैस्त्वधर्मः प्रथमान्त पाठे विरुद्धानां षण्णां यो विपर्ययः अशुद्धिः सोऽधर्मः तद्धेतुरित्यर्थः ॥ १५ ॥

इमे च शुद्ध्यशुद्धी विषयभेदेन व्यतिकरतामापाद्येते इत्याह- क्वचिदिति । क्वचिद्गुणोऽपि शुद्धिरपि विशेषविधिबलाद्दोषः स्यादशुद्धिः स्यात् यथातुरस्य निषिद्धं स्नानादिकं तथा दोषोऽपि गुणः स्यात् यथा हिंसादिर्यज्ञमिच्छतः अतो गुणदोषार्थनियमः विशेषशास्त्रेण गुणदोष विषयनियम इत्यर्थः। स तद्भिदां सामान्यशास्त्रप्राप्तगुणदोषविभागं बाधतेऽपवदति सामान्यशास्त्रस्य विशेषविधिविषयसङ्कोचमात्रं क्रियते नत्वत्यन्तबाध इति न तस्य वैयर्थ्यमित्येवकाराभिप्रायः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदमेध्यलिप्तं येन गन्धं लेपं च व्यपोहति । तेन तस्य प्रकृतिं भजते तस्य वस्तुनस्तच्छौचं शुद्धिरुपदिश्यते ॥ १३ ॥

कर्माङ्गशुद्धिप्रकारमाह । स्नानेति । अवस्था यौवनादिलक्षणा वीर्यं माहात्म्यं शक्तिर्वा संस्कार ऊर्ध्वपुण्ड्रादिधारणं कर्म नित्यसन्ध्यावन्दनादिमत्पूजावसानम् एभिर्मनः शौचं च मनसः शुद्धिं कृत्वाऽभीक्ष्णं कर्माचरेत् मदभ्यासान्मम ध्यानाभ्यासाच्च ॥ १४ ॥

ऋष्याद्युपेतस्य मन्त्रस्य परिज्ञानमापादनीयमिति शेषः। कर्मणः शुद्धिः कथमित्यत उक्तं कर्मेति मदर्पणं ब्रह्मार्पणमस्त्विति एतैः साध्यं किमत्राह, धर्म इति । धर्मो मत्सन्निधिलक्षणः सम्पाद्यते तत्राधिकारिण आह । सद्भिरिति । विपर्ययैर्मदर्पणमकुर्वाणैरसद्भिरेतैरधर्मः पापलक्षणः सम्पाद्यत इत्यन्वयः—

"आन्तरः सन्निधिर्विष्णोर्बाह्यः सन्निधिरेव च"
द्विविधः सन्निधिः प्रोक्तः कृत्रिमो बाह्य उच्यते ।
स्वाभाविकस्त्वान्तरः स्यात्प्रतिमाजीवगो यथा" ॥

इति वचनेन सन्निधानार्थं ब्रह्मार्पणं कर्तव्यमिति ज्ञायते ॥ १५ ॥

इतोऽपि भगवदर्पणं कर्तव्यमन्यथा कृतहान्यकृताभ्यागमौ स्यातामिति भावेनाह । क्वचिदिति । क्वचित्कर्मणि विहितत्वेन गुणोऽपि दोषः स्यात् मद्भक्तेनानर्पितत्वेनानुष्ठितत्वादन्यथादिति शेषः । अपि विधिना ब्राह्मणोऽपि न हन्तव्य इति निषेधविधिना दोषोऽपि गुणः स्यात् यथेन्द्रस्य ब्रह्महत्या ऋषिनारायणप्रातिजनकत्वात् । ननु, गुणदोषविधाननियमः कथमत्राह । गुणेति । गुणदोषाभ्यामर्थनियमः स्वर्गनरकादिफलनियमस्तौ गुणदोषौ विदन्ति जानन्तीति तद्विदः मनुष्यादयस्तेषामेव बाधते कल्मषकरो भवति

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अयत्नसाध्यत्वात् एव[1]शब्देन तिर्यगादयो व्यावर्त्यन्ते अतेर्ग्रहणा-शक्तत्वमावात्तेषामतो मनुष्यादीन् प्रति विधीयमानौ गुणदोषौ भगवदर्पणाभावे स्वर्गनरकादिफलं दत्त इत्युक्तं तद्विधानं तद्विका-मित्यनेन मनुष्यादिष्वपि शुभाशुभज्ञानयोग्यवयसां तदजानतां महा[2]नज्ञानजो दोषो मूर्खाणां तिर्यगादीनां तदभावश्चेति सूच्यते

> "वर्षाच्चतुर्दशादूर्ध्वं ये विदुर्न शुभाशुभम् ।
> तेषामज्ञानजो दोषः सुमहान्कर्मजोऽपि" ॥ इति
> तिरश्चामिन्द्रियाशक्तेर्न दोषो ज्ञानजो भवेत् ।
> गुणोऽपि नैव कश्चित्स्यादयतो ज्ञानबहिष्कृता ॥

इति वचनात् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्नानमृत्सु चेति स्वतन्त्रमुक्तम् "अपवित्रः पवित्रो वा" इत्यादेः अतोऽप्रतिकार्यां शुद्धियोधनाय प्रोक्तेयं न व्यावहारिकी मन्तव्या, सर्वत्रास्खलितरूपत्वात् "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः" इत्यादेः ॥ १४—१८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यत् पीठवस्त्रपात्रादि अमेध्यलिप्तं भवेत् तत् येन तावच्छारात्मकमृज्जलादिना गन्धं लेपं च व्यपोहति त्यजति प्रकृतिं स्वरूपं भजेत् तस्य तच्छौचं तावदिति यावता तक्षणादिना गन्धलेपं व्यपोहति तावत्प्रमाणं शौचं कर्तव्यमित्यर्थः ॥ १३ ॥

द्रव्यशुद्धिमुक्त्वा कर्तृशुद्धिमाह, स्नानेति। अवस्था बाल्यादिः तत्र वीर्यं शक्तिः शक्त्यनुरूप आचार इत्यर्थः संस्कार उपनयनादिः कर्म सन्ध्योपासनादिकं तैः आत्मनः साहङ्कारस्य कर्तुः शौचं शुद्धिः प्रयोजनमाह, शुद्ध इति द्विज इत्युपलक्षणं शूद्रादेरपि ॥ १४ ॥

मन्त्रशुद्धिमाह, मन्त्रस्य सद्गुरुमुखात् यथावत् परिज्ञानं मन्त्रशुद्धिमाह, मदर्पणमिति मह्यमर्पितं कर्मशुद्धमनर्पितमशुद्धं तस्मात् तद्भिन्नं व्यवहारार्थं इति भावः । शुद्धयशुद्धी प्रपञ्चयोपसंहरति, धर्म इति षड्भिः । देशकालद्रव्यकर्तृमन्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः सम्पद्यते एतेषां यो विपर्ययः सोऽधर्महेतुरित्यर्थः ॥ १५ ॥

अयं च गुणदोषविभागो न क्वापि नियत इत्याह, क्वचिदिति । आपदि प्रतिग्रहो गुणोऽप्यनापदि निषिद्धत्वाद्दोषः दोषोऽपि कुटुम्बत्यागादिर्विधिना विधिबलेन विरक्तेर्गुणः तस्माद्गुणदोषरूपौ वाच्यौ तयोर्नियम एव तद्भिदां गुणदोषरूपभेदं बाधते यथा कुटुम्बत्यागो दोष एवेति यो नियमः स एव अधिकारिविशेषे दोषं बाधते ज्ञानिनः कुटुम्बत्यागस्य गुणत्वात् तथा कुटुम्बत्यागो गुण एवेति यो नियमः स एव गुणं बाधते कर्मिणः कुटुम्बत्यागस्य दोषत्वात् तस्माद्गुणदोषौ न सामान्यतो नियतौ किन्तु व्यवस्थाविशेष एव नियतौ इत्याविरर्थः ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च अमेध्येनाशुचिना मलपङ्कादिना लिप्तं यत्पीठपात्रवस्त्रादि येन तक्षणघर्षणोदकादिना यावत्परिमाणेन गन्धं लेपं व्यपोहति त्यजति अत एव प्रकृतिं स्वरूपं भजते तस्य पीठादेः तक्षणादि तावत् परिमाणं शौचं शोधकमिष्यते ॥ १३ ॥

कर्तृशुद्धिमाह, स्नानेति । अवस्था कौमारादिलक्षणा वीर्यं शक्तिलक्षणम् संस्कारः उपनयनादिलक्षणः कर्म सन्ध्योपासनादिलक्षणम् एतैः स्नानादिभिः आत्मनः शौचं शुद्धिः एवं शुद्धः सन् कर्माचरेदिति ॥ १४ ॥

मन्त्रशुद्धिमाह, गुरुमुखात्परिज्ञानं मन्त्रस्य शुद्धिः कर्मशुद्धिमाह । कर्मशुद्धिर्मदर्पणम् इति इत्थं शुद्ध्यशुद्धी प्रपञ्चयोपसंहरति धर्म इति धर्मः स्वस्वाधिकारप्राप्तः षड्भिर्देशकालद्रव्यकर्तृमन्त्रकर्मभिः शुद्धैः सम्पद्यते एषां विपर्ययस्तु अधर्मः अधर्महेतुः ॥ १५ ॥

अयं गुणदोषविधायको वेदः ज्ञानभक्तिसाधनविशेषबोधकतया मोक्षहेतुरित्याशयेनाह । क्वचिदिति । आश्रमादाश्रमं गच्छेदिति विधिनोपकुर्वाणस्य दारसंग्रहो गुणोऽपि नैष्ठिकस्य दोषः स्यात् द्वेषादिनासक्तस्य कुटुम्बत्यागो दोषोऽपि विरक्तस्य यदहरेव विरजेत्तदहरेव परिव्रजेदिति विधिना गुणः गुणदोषौ अर्थो विषयो यस्य स गुणदोषार्थः नियमयति ओऽधिकारे स्थापयतीति नियमो वेदः स चासौ स च सः गुणदोषविधायको वेदः तद्भिदामेव बाधते ॥ १६ ॥

---

### भाषा टीका

जो वस्तु किसी अशुद्ध चीज को चिपटने से अशुद्ध होगई हो उस को धोने से उसका लेप तथा गन्ध छूट जावे और वह वस्तु अपने पहिले रूप को प्राप्त हो जावे तो शुद्ध हो जाती है उसका उतना ही शौच है ॥ १३ ॥

स्नान करने से दान से तप से अवस्था से कहीं वीर्य से संस्कार कर्म से तथा मेरे स्मरण करने से आत्मा का शौच होजाता है मनुष्य को चाहिये कि ऐसे शुद्ध हो जावे तब वैदिक कर्मों को करे ॥ १४ ॥

गुरु के मुख से उपदेश से ज्ञान होने से मंत्र की शुद्धि होती है मेरे अर्पण करने से कर्मों की शुद्धि होती है ऐसे छै प्रकार से धर्म होता है इन से विपरीत होने से अधर्म होजाता है ॥ १५ ॥

कहीं पर गुण भी दोष होजाता है कहीं पर विधि से किया दोषभी गुण हो जाता है इन गुण दोष दोनों का जो अर्थ, नियम वही उन के भेद को बाधन करता है ॥ १६ ॥

---

1 तद्विकामेवेत्यवधारणेन मूर्खाणां गुणदोषाज्ञानेनाधिकाराभावः प्रतीयतेतत्तात्पर्यानुसारेण व्यावर्त्यं दर्शयति ।

2 अज्ञानत्वादशुभकारणदोषापेक्षया अज्ञानत्वादिकं निषिद्धमित्यज्ञानजो दोषो महानित्यर्थः ॥

समानकर्माचरणं पतितानां न पातकम् ।
औत्पत्तिको गुणः सङ्गो न शयानः पतत्यधः ॥ १७ ॥
यतो यतो निवर्तेत विमुच्येत ततस्ततः ।
एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥ १८ ॥
विषयेषु गुणाध्यासात्पुंसः सङ्गस्ततो भवेत् ।
सङ्गात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् ॥ १९ ॥
कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते ।
तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दोषस्य क्वचिद्दोषत्वाभावे गुणत्वे चोदाहरणं दर्शयति । समानस्य तस्यैव कर्मणः सुरापानादेराचरणमपतितानां पतनहेतुरपि जात्या कर्मणा वा पतितानां पुनः पातकमधिकारभ्रंशकं न भवति पूर्वमेव पतितत्वात् अतोऽत्र दोषस्यापि दोषता नास्तीत्यर्थः । तथा सङ्गोऽपि यो यतेर्दोषः स गृहस्थस्यौत्पत्तिकः पूर्वस्वीकृतो न दोषोऽपि तु गुणः "ऋतौ भार्यामुपेया" दित्यादिविधानात् उभयत्र दृष्टान्तः पूर्वमेवाधः शयानो यथा न पततीति ॥ १७ ॥

अतो गुणदोषनियमविधीनां प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमित्यभिप्रेत्याह । यतो यत इति ॥ १८ ॥

यथाश्रुतप्रवृत्तिपरतां वेदस्य निराकर्तुं प्रवृत्तिमार्गस्यानर्थहेतुतां दर्शयति । विषयेष्विति चतुर्भिः । संग आसक्तिः तत्र तेषु विषयेषु येन प्रतिहन्यते कामस्तेन सह कामादेव कलिः कलहो विवादः ॥ १९ ॥

दुर्विषहस्तीव्रः तमः संमोहः तं क्रोधमनु चेतना कार्याकार्यस्मृतिः द्रुतं शीघ्रम् ॥ २० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

दोषस्य सुरापानादेः । क्वचित्तु पूर्वमेव जातिकर्मपतितेषु । दोषत्वं नास्ति तथा सङ्गस्य दोषरूपस्यापि क्वचिद्गृहस्थे प्रत्युत गुणत्वमस्ति तत्र तत्र चोदाहरणं दर्शयतीत्यर्थः । अतः अधिकारभ्रंशकत्वाभावात् । तत्र पतितेषु । उभयत्र दोषत्वाभावे गुणत्वे च । अधःशयनं न अधःपतनं किन्त्वाधःशयनस्य पतनसंभवाभावाद्गुण एव इत्यर्थः ॥ १७ ॥

यतो गुणदोषविभागो न वास्तवोऽतः । एष निवृत्तिलक्षणः ॥ १८ ॥

यथाश्रुतेति । वाक्यार्थमनतिक्रम्य या प्रवृत्तिपरता स्वर्गकामो यजेतेत्यादिरूपा तां निराकर्तुं तात्पर्यानुपपत्त्या निराकर्तुम् ॥ १९ ॥

व्यापिनी पूर्वं व्याप्य स्थिता । तमसा क्रोधेन ग्रस्यते नाश्यते ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सामान्यव्याप्त्या गुणदोषविभागमपवदति । समानकर्माचरणमिति । समानकर्माचाराणां समानकर्मभिः पतितैः सम्व्यवहारे पतितानां न पातकं किन्त्वपतितानामेव पातकं स्यात् । गुणैः सङ्गः सङ्गाख्यो गुणः जन्मसिद्धः सर्वप्राणिनां नाशाय भवति अतो जन्तुरधः पतति निरयं प्रविशति ॥ १७ ॥

एष धर्मः असंगरूपधर्मः ॥ १८ ॥

संगात् भोग्य इति बुद्ध्या कामः भोक्तुरभिनिवेशः कलिः कलहः ॥ १९ ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दोषस्य क्वचिद्दोषत्वाभावे उदाहरणमाह । समानेति । समानकर्माचरणम् एककर्माचरणं सह संभाषणादिकमित्यर्थः । तत्पतितानां न पातकं किन्त्वपतितानामेव पतितैः सह सम्भाषणं पातकं क्वचिद्गुणस्यान्यत्र दोषत्वेऽपि उदाहरणमाह । औत्पत्तिक इति । गुणैः शब्दादिविषयैः सह सङ्गो गृहस्थस्यौत्पत्तिकः स्वाभाविकः पूर्वमेव स्वीकृतत्वात् अतः तस्य न दोषः किन्तु गुणः ऋतावुपेयादित्यादिशास्त्रानुमतत्वात् स एव तु सङ्गो यतेस्तु दोषः तत्र दृष्टान्तः पूर्वमेवाधः शयानो न पततीति औत्पत्तिको गुणैः सङ्गो नाशायालः पतत्यध इति पाठान्तरे तत्रायमर्थः सङ्गानां त्याज्यत्वेऽपि आत्मगुणानां सङ्गानां च त्याज्यत्वमुक्तं तत्र कोऽसौ सङ्गः यस्य त्याज्यतोक्ता कश्च त्याज्यत्वे हेतुः कुतश्च सङ्ग उपजायते सङ्गस्य च के पुनर्दोषा इत्यभिप्रायवानाह । औत्पत्तिक इत्यादिना । गुणैः शब्दादिविषयैः सह सङ्ग औत्पत्तिकः सर्वप्राणिनां जन्मसिद्धः स नाशाय भवति नाशोऽत्र आत्मनः स्वाभाविकाचैतन्याविर्भावात्मकशून्यता कल्पेतव अतो जन्तुरधः पतति निरयं प्रविशतीत्यतश्च त्याज्यतायुक्तेति भावः ॥ १७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्यागप्रकारमाह । यतो यत इति ॥ यतो यतो विषयान्निवर्तेत विश्लिष्येत् ततस्ततो विमुच्येत विशेषेण मुच्येत न तत्तं विषयं पुनरनुध्यायेदित्यर्थः । विपर्ययेऽनर्थपरम्परां विवक्षुस्तावत्सङ्गपरिहारस्य पुरुषार्थहेतुतामाह । एष इति । एष असङ्ग एव नृणां परमो धर्मः निरतिशयश्रेयःसाधनं तदाह । क्षेमः सुखावहः शोकाद्यनर्थपरिहारकश्च ॥ १८ ॥

किञ्च विषयेषु शब्दादिषु गुणाध्यानादुपादेयत्वाभिनिवेशात्ततस्तत्र विषयेषु पुनः पुनः पुंसः सङ्गो भवेत् सङ्गाच्च तत्र विषयेषु कामः मनुपभुज्यावस्थानाशक्त्यात्मकश्चित्तविकारः कामो भवेत् कामाच्च कलिः कलहो भवेत् ॥ १९ ॥

ततश्च दुःसहः क्रोधः तं क्रोधं तमोऽनुवर्त्तते क्रोधात्तमो भवेदित्यर्थः । तमश्चात्र सम्मोहः सच कार्याकार्यविवेकाभावात्मकः तमसा च या पुंसो व्यापिनी चेतना सा द्रुतमाशु ग्रस्यते ग्रस्ता भवति धर्मभूतज्ञानस्य विभुत्वाद्व्यापिनीत्युक्तं तदतिसङ्कुचितं भवतीत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुणदोषनिमित्तबाधो यथा न स्यात्तं प्रकारं वक्ति समानेति । अपतितानां विप्रादीनां समानकर्माचरणे भवपर्याणेनात्मयोग्यकर्माचरणं पातकं न स्यात् तथा पूर्वमपतिता विप्रादयो येन कर्मणा पतन्ति तेषां तत्समानकर्माचरणं तप्तसुरापानतप्तस्त्रीमूर्त्यालिङ्गनादिकं देहत्यागवद्दोषवर्ज्यं तत्कर्म पातकं च न भवति तथा श्यानः शूद्रश्च ब्राह्मणादिपातित्यहेतुभिः लशुनभक्षणादिभिरश्नो न पतति अथ इति विशेषणात्सुरापानादिभिरेव पपाति । कुतो न पततीत्यत उक्तमौत्पत्तिक इति तस्य शूद्रस्य लशुनभक्षणादिलक्षणैर्गुणैरमुख्यैः कर्मभिः सङ्गः औत्पत्तिकः स्वाभाविको यतस्तस्मात्स्वायोग्य एव कर्मणि पततीत्यर्थः—

> त्रैवर्णिकाः पतन्तो वेदकर्मप्रवर्तनात् ।
> श्यानः शूद्र उद्दिष्टो वेदकर्माप्रवर्तनात् ॥
> न तस्याभक्ष्यजो दोषः शुश्रूषायां प्रवर्ततः ।
> यथा सुवर्णस्य मलं शुक्लं ताम्रस्य नैव तत् ॥
> एवं विप्रादिदोषैस्तु न शूद्रो दोषतामियात् ।
> मलं तु तस्यापि मलं यथैव शूद्रजन्मनः ॥
> स्वधर्मप्रतिरूपस्य चरणं दोषदं मतम् ।

इतिवचनात् ॥ १७ ॥

किं बहुनोक्तेन सर्वतोऽस्वाभिमानपरित्यागेन श्रीनारायणसमर्पणमेव समस्तदोषनाशकमित्याह । यतो यत इति । यतः यतः कर्मणो नाहं कर्तेति निवर्तेत अहङ्काररहितेन यद्यत्कर्म परमेश्वरार्पणबुद्ध्या करोति ततस्ततः कर्मणो विमुच्येत तत्तत्कर्म बन्धकं न स्यादित्यर्थः । तत्कर्तृत्वपरायाः बुद्धेश्च तादर्थ्यमस्तीति । एष इति । एषः परमेश्वरसमर्पणलक्षणो धर्मः संसारमुक्तिहेतुः "मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा" इत्यादेः ॥ १८ ॥

विपक्षे बाधकमनर्थलक्षणमाह । विषयेष्विति । अयमर्थः भगवदर्पणबुद्धिरहितेन क्रियमाणं कर्म शब्दादिविषयेषु गुणबुद्धिं जनयति । मृगतृष्णिकापयःपूरमतीव तदनु तत्सङ्गस्य पुंसो विषयेषु गुणाध्यानात् सुखसाधनत्वध्यानात् तेषु अहत्त्वतः सङ्गः स्यात् ततस्तेषु कामः इच्छा स्यात्तिक्कातः कलिः कल द्रावणे इति धातोः चेतनधर्मज्ञानद्रावणहेतुरधर्माज्ञानात्मा विशति ॥ १९ ॥

कलेरावेशात्स्वाभीष्टपरिपन्थिषु सत्सु दुर्विषहः क्रोधः स्यात्तदनु द्वेषानन्तरं तमो वर्तते ततस्तमसि मग्नस्य पुंसः व्यापिनीन्द्रियसन्तता चेतना सुखानुभवशक्तिस्तमसा दुःखोद्रेकेण ग्रस्यते नष्टा भवति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विषयेष्विति चतुर्भिः ॥ १९—२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गुणदोषयोरनियमं प्रपञ्चयति,—समानस्य तस्यैव कर्मणः सुरापानादेराचरणम् अपतितानां पतनहेतुरपि जात्या कर्मणा वा पतितानां पुनः पातकम् अधिकारभ्रंशकम् न भवति पूर्वमेव पतितत्वात् यथा सङ्गोऽपि यो यतेर्दोषः स गृहस्थस्य पाक्षिकः पूर्वस्वीकृतो न दोषः अपि तु गुणः सङ्गस्यासक्तेरौत्पत्तिकत्वे सति ऋतौ भार्यासङ्गो गुणः तदसङ्गस्य तस्मिन्नधिकारिणि दोषश्रवणात् उभयत्र दृष्टान्तः पूर्वमेवाधः शयानो यथा न पतति ॥ १७ ॥

किञ्च गुणदोषविधीनां प्रवृत्तिसङ्कोचद्वारा निवृत्तावेव तात्पर्यमित्यभिप्रेत्याह । यतो यत इति ॥ १८ ॥

यथाश्रुतप्रवृत्तिपरतां वेदस्य निराकर्तुं प्रवृत्तिमार्गस्यानर्थहेतुत्वं दर्शयति । विषयेष्विति चतुर्भिः । संगः आसक्तिः कामादेव कलिः कामप्रतिघातकेन लोकेन सह कलहः ॥ १९ ॥

तं क्रोधमनु तमो मोहः ततस्तमसा मोहेन चेतना कार्याकार्यस्मृतिः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुणदोषप्रतिपादकस्यापि वेदस्य तद्द्वाबाधकत्वं यदुक्तं तदन्वयव्यतिरेकाभ्यां द्रढयति । समानेति । समानकर्माचरणं प्रमाणपूर्वककर्माचरणं पतितानामपि पातकं पतनहेतुर्न किन्तु शुद्धिहेतुरित्यर्थः । शास्त्रीयकर्मरतः पतितोऽपि शनैः ऊर्ध्वं गच्छतीति भावः औत्पत्तिकः स्वाभाविकः स्वेच्छया कृतः सङ्गो न गुणः न शुद्धिहेतुरित्यर्थः शयानः शास्त्रोक्ते कर्मणि लुप्तदृष्टिः अधः पतति अधोगतिं प्राप्नोति ॥ १७ ॥

अथ विषयेषु वैराग्यं परमो गुण इत्याह । यत इति । यतो यतो विषयात् एषः निवृत्तिलक्षणः ॥ १८ ॥

तया विरहितः साधो ! जन्तुः शून्याय कल्पते ।
ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च ॥ २१ ॥
विषयाभिनिवेशेन नाऽऽत्मानं वेद नापरम् ।
वृक्षजीविकया जीवन् व्यर्थं भस्त्रेव यः श्वसन् ॥ २२ ॥
फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ।
श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥
उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ।
आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ विषयेष्वासक्तिः परमो दोष इत्याह । विषयेष्विति चतुर्भिः विषयेषु शब्दादिषु गुणाध्यानादुपादेयत्वचिन्तनात् तत्र तेषु सङ्गः आसक्तिः सङ्गात्तत्र कामः कामादेव कामाभिघातकः सह कलिः कलहः ॥ १९ ॥

दुर्विषहः दुर्भरः तं क्रोधमनु तमः सम्मोहः तमसा कार्याकार्यविवेकलक्षणा चेतना द्रुतं शीघ्रं ग्रस्यते ॥ २० ॥

भाषा टीका ।

जो लोग स्वयं पतित हैं तिनका जो स्वाभाविक आचरण है वह पातक नहीं है उनका तो जन्म से यह सङ्ग गुणाही है क्योंकि जो जमीन पर सोता है वह नीचे नहीं गिरता है ॥ १७ ॥

जिस जिस अयुक्त कर्म से निवृत्त होता है उसीसे वह छूट जाता है यही मनुष्यों का धर्म है जो कि शोक तथा मोहको नाश करता है ॥ १८ ॥

विषयों में गुण के अनु सन्धान के करनेसे पुरुषको उस में आसक्ति होतिहै आसक्ती के होनेसे उस में कामना होती है कामके होनेसे मनुष्यों का कलह होता है ॥ १९ ॥

कलह के होने से बड़ा भारी क्रोध होता है जिसके पीछे बड़ा अज्ञान होता है फिर पुरुष की व्यापक चेतना बुद्धि तमो गुण से ग्रसित हो जाती है ॥ २०

श्रीवरस्वामिकृतभावार्थदीपिका ।

शून्याय कल्पते असत्तुल्यो भवतीत्यर्थः । स्वार्थविभ्रंशः पुरुषार्थहानिः मूर्च्छितस्य मृततुल्यस्य ॥ २१ ॥

तत्तुल्यत्वं प्रपञ्चयति । विषयेति । व्यर्थं वृक्षजीविकयैव यो जीवन् वर्तते स मूर्च्छिततुल्यः अत एव यो भस्त्रेव श्वसन् वर्तते स मृततुल्यः अतः स्वार्थनाश इत्यर्थः ॥ २२ ॥

ननु प्रवृत्तस्य स्वर्गादिफलश्रवणात्कुतः स्वार्थविभ्रंश इत्यत आह । फलश्रुतिरिति । इयं फलश्रुतिर्न श्रेयः परमपुरुषार्थपरा न भवतीत्यर्थः । किंतु बहिर्मुखानां नृणां मोक्षविवक्षयाऽवान्तरफलैः कर्मसु रुच्युत्पादनमात्रम् यथा भैषज्ये औषधे रोचनं रुच्युत्पादनम् तथा हि

पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान् ।
पित्रैवमुक्तः पिबति न फलं तावदेव तु ॥

तथा मातृवाक्यं च

शिखा ते वर्धते वत्स ! गुडूचीं भक्षया पिब ।

इति न फलं तावदेव तु किन्त्वारोग्यम् ॥ २३ ॥

ननु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते कुत एवं व्याख्यायते यथाश्रुतस्याघटनादित्याह । उत्पत्त्यैवेति त्र्यङ्काम् । उत्पत्त्या स्वभावत एव कामेषु पश्वादिषु प्राणेष्वायुरिन्द्रियबलवीर्यादिषु स्वजनेषु पुत्रादिषु अनर्थहेतुषु परिपाकतो दुःखहेतुषु ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तया स्मृत्या । ततोऽसत्तुल्यत्वात् । मूर्च्छितमृततुल्यस्येति द्वयोः पदयोर्मिलित्वा व्याख्यानम् ॥ २१ ॥

तत्तुल्यत्वं मूर्च्छितमृततुल्यत्वं वृक्षजीविकया यथानुक्रमेणैव याहच्छिकी जलापवादरूपा वृक्षस्य जीविका तथा विषयाविष्टस्यापि याहच्छिकाहारादिरूपा सा तया जीवन् स्वस्थितिं कुर्वन् यो वर्तते अत एव मूर्च्छिततुल्यत्वादेव अतः मृततुल्यत्वात् स्वार्थनाशश्चतुर्विधपुरुषार्थहानिरित्यर्थः ॥ २२ ॥

इयं पशुकाम इत्यादिरूपा बहिर्मुखानां स्वर्गादिविषयेच्छूनाम् अवान्तरफलैर्गौणफलैः तावदेव खण्डलड्डुकमात्रमेव फलं न किन्तु रुच्युत्पादनार्थं गौणफलाभास एवेत्यर्थः पूर्वमैहिकविषयेच्छूनां निष्कामत्व० पारलौकिकफलेच्छूनामिति ज्ञेयम् ॥ २३ ॥

एवं निवृत्तिपरत्वेन यथाश्रुतस्य प्रवृत्तिपरत्वस्य पश्वादिष्विति पशुकामो यजेत इन्द्रियकामस्य जुहुयात् । स्वर्गादिवीर्यकामस्य यूपं कुर्वीत इत्यादिवाक्यानि ज्ञेयानि परिपाकतः परिणामतः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति वचनात् तदुपपादयति । न इति । नो[1]ऽस्माकं सकाशाच्छ्रेयो मोक्षाख्यं तदेव रोचयति कामयते स्वर्गादेरनित्यतादिदोषज्ञानां मोक्षस्यादोषताज्ञानाच्चेति भेषजरोचनं प्रतीक्षुदण्डं ददातीति यथा तथा इषवुत्तमस्य मन्दाधिकारिणः भोगे विषयाभिमुखीकरणाय प्रोक्तं न तु तत्र तात्पर्यविवक्षया—

> मन्दाधिकारिणा नित्यं तपसैव प्रतीक्षितुम् ।
> मोक्षो न शक्यते येनातः स्वर्गादिकं वदेत् ।
> स्वर्गादिस्वल्पफलतां ज्ञापयित्वापि मोक्षदम् ॥
> वेद[2] वक्तुं तूत्तमानां नित्यो वेदः प्रवर्तते ।
> इक्षुदण्डं ददातीति यथा भेषजरोचनम् ॥
> एवं मन्देषूत्तमेषु मोक्षमाहात्म्यमुच्यते ।
> नह्यल्पफलवान् वेदो वासुदेवैकसंश्रयः ॥

इति वचनात् ॥ २३ ॥

फलश्रुतमोक्षकार्यत्वे युक्तिमाह । उत्पत्त्येति । उत्पत्त्या स्वभावत एवात्मनोऽनर्थत्वे हेतुषु कामादिष्वासक्तमनसो ये मर्त्याः स्तान् वृजिनाध्वनि संसारे भ्राम्यतो ऽत एव स्वार्थमविदुषो जनास्तेषां स्वर्थोपायं बुधो जानन् वेदस्तेषु न नियुञ्ज्यात् नियुञ्जानश्चेदुन्मत्तवाक्यवदप्रमाणं स्यादित्याशयेनाह । कथमिति विषयाभिनिवेशेन तमो विशतस्तान् पुनस्तेषु विषयेषु वेदः कथं युञ्ज्यात् कथमपि युनक्ति उन्मत्तवाक्यसाम्यप्राप्तिभयादिति शेषः कामादिषु मनात्मप्राक् इति वा पदच्छेदः तथा चैकवाक्यं प्राप्नोति ॥ २४—२५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ऐहिकविषयेच्छामिन्द्रिया पारलौकिकतादिच्छनापि निन्दति फलश्रुतिरित्यादिना न रोचन इत्यन्तेन यथा भैषज्यरोचनामाति तद्वदेव लिङ्गाल्पज्ञानेनेति भावः ॥ २३-२६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मूर्छितस्य मूर्छिततुल्यस्य मृतस्य मृततुल्यस्य ॥ २१ ॥

यो वृक्ष इव जीविकया विषयजलग्रहणमात्रजीवनोपायेन जीवन् भवति स मूर्छिततुल्यः भस्त्रेव श्वसन् भवति सः मृततुल्यः ॥२२॥

ननु प्रवृत्तस्य स्वर्गादिफलश्रवणात् कुतः स्वार्थविभ्रंशस्तत्राह । फलश्रुतिरियं न श्रेयः दुःखहानिः सुखावाप्तिः श्रेयस्तदेह नेष्यते इति नारदोक्तेः कर्मफलस्य श्रेयस्त्वखण्डनात् तर्हि अप्सरोभिर्विहराम इत्यादिकं यत् श्रूयते तत् किमत आह । रोचनं परं केवलं बहिर्मुखलोकानां मोक्षविवक्षया भवान्तरफलैः कर्मसु रुच्युत्पादनमात्रं यथा भेषजे औषधे रुच्युत्पादनं तथा हि पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान् पित्रैव मुक्तः पिबति न फलं तावदेव हि इति ॥ २३ ॥

नन्तु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते तत्कुत एवं व्याख्यायते यन्मोक्षतात्पर्यकं कर्मेति तत्र यथाश्रुतस्यार्थस्याघटनादेवमेवेत्याह । उत्पत्त्येति द्वाभ्याम । उत्पत्त्या स्वभावत एव कामेषु विषयभोगेषु प्राणेषु आयुरिन्द्रियबलवीर्यादिषु स्वजनेषु कलत्रपुत्रादिषु अनर्थहेतुषु परिणामतो दुःखहेतुषु ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शून्याय कार्याकार्यव्यवहारबहिष्कृतत्वाय कल्पते स्वार्थविभ्रंशः पुरुषार्थहानिः मूर्छितस्य तत्तुल्यस्य मूर्छितो मूर्छापगमे स्वार्थं साधयेदेव अत आह । मृतस्य चेति । मृतकतुल्यस्य सर्वथा पुरुषार्थशून्यस्येत्यर्थः ॥ २१ ॥

एतदेवाह । विषयेति । वृक्षजीविका वृक्षजीवनमात्रोपकारिका न त्वात्मविद्यायामुपयुज्यते तत्तुल्यया जीविकया जीवन् यः वर्तते अर्थात् मूर्छिततुल्यः वृक्षो हि पुष्पफलच्छायादिभिः परोपकारी अतो नातिपुरुषार्थहीनः यो भस्त्रेव परसन्तापकाशुचिवमयन्त्रवत् श्वसन् वर्तते अर्थात् मृततुल्यः सर्वथा पुरुषार्थहीन इत्यर्थः स विषयाभिनिवेशेन मूर्छितत्वमृतत्वतुल्यतापादकेन आत्मानं परं परमात्मानं च वेद ॥ २२ ॥

ननु विषयाभिनिवेशी किमेवं निन्द्यते स्वर्गकामो यजेतेत्यादिश्रुत्यैव विषये जीवः प्रवर्त्यते इत्यत आह । फलश्रुतिरिति इयं फलश्रुतिः न श्रेयः परं फलं न बोधयति किन्तु नृणां मन्दाधिकारिणां श्रेयोविवक्षया प्रोक्ता पठिता यथा तीक्ष्णौषधसेवने बालप्रवृत्त्यर्थं भेषज्यरोचनं खण्डलड्डुकादि तथा परं केवलं बोधयति स्वर्गादिफलैर्लोभयित्वा ज्ञानभक्तिसाधने कर्मणि नॄन् प्रवर्तयतीत्यर्थः ॥ २३ ॥

अत काम्यन्ते इति कामाः स्वर्गादयः पश्वादयश्च तेषु प्राणेष्वायुरिन्द्रियबलवीर्यादिषु स्वजनेषु पुत्रादिषु अनर्थहेतुषु साधनतः स्वरूपतो रक्षणतः फलतश्च दुःखनिमित्तेषु उत्पत्त्यैव स्वभावत एव मर्त्या आसक्तमनसो ये ॥ २४ ॥

---

### भाषा टीका ।

हे साधो उद्धव ! उस चेतना से रहित होने से मनुष्य फिर शून्य सा हो जाता है तब इसका सब स्वार्थ नष्ट हो जाता है फिर वह मूर्छित हो जाता है मरे के बरोबर हो जाता है ॥ २१ ॥

विषयों के बडे आवेश से वह न अपने को जानता है न दूसरे को जानता है व्यर्थ पेड सरीका जीता रहता है और धौंकनी सरीका श्वास लेता है ॥ २२ ॥

मनुष्यों के लिये जो स्वर्गादिकों की फल श्रुति है वह ही केवल कल्याण नहीं है किन्तु उससे कुछ अधिक कल्याण विधान करने की इच्छा से कहा गया है जैसे कि औषधों के देने में रोचकता कही जाती है ॥ २३ ॥

जितने प्राणि मात्र वे सब जन्म ही से कामों में प्राणों में स्वजनों में जोकि आत्मा के अनर्थ के हेतु हैं तिनमें आसक्ति करने वाले हैं ॥ २४ ॥

---

1 नृणां न इति सामानाधिकरण्येनान्वये कष्टोऽपि मनुष्येषु कल्पनेति भातीअतो न इत्यनन्तरं सकाशा दिति मस्मत्क्याहृतम् ।

2 स्वर्गकामो यजेतेत्यादिवेदैकदेशम ।

न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ।
कथं युञ्ज्यात् पुनस्तेषु तांस्तमो विशतो बुधः ॥ २५ ॥
एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ।
फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि ॥ २६ ॥
कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ।
अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते ॥ २७ ॥
न ते मामङ्ग ! जानन्ति हृदिस्थं य इदं यतः ।
उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥ २८ ॥
ते मे मतमविज्ञाय परोक्षं विषयात्मकाः ।
१ हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना ॥ २९ ॥
२ हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ।
यजन्ते देवता यज्ञैः पितृभूतपतीन् खलाः ॥ ३० ॥
स्वप्नोपममसुं लोकमसन्तं श्रवणप्रियम् ।
आशिषो हृदि संकल्प्य त्यजन्त्यर्थान् यथा वणिक् ॥ ३१ ॥
रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः ।
उपासते इन्द्रमुख्यान् देवादीन्न तथैव माम् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतस्तान् स्वार्थं परमसुखमविदुषः अतो न तान् प्रह्वीभूतान् वेदो यद्बोधयिष्यति तदेव श्रेय इति विश्वसितानित्यर्थः तानेवंभूतान् वृजिनाध्वनि कामवर्त्मनि देवादियोनिषु भ्राम्यतः ततः पुनस्तमो वृक्षादियोनिं विशतः पशुकाम इति आयुरिन्द्रियादिकाम इति च पुत्रादिकाम इति च कथं पुनस्तेष्वेव कामेषु स्वयं बुधो वेदो युञ्ज्यात्प्रवर्तयेत् तथा सत्यनाप्तः स्यादिति भावः ॥ २५ ॥

कथं तर्हि कर्ममीमांसकाः फलपरतां वदन्ति तत्राऽऽह । एवमिति । व्यवसितं वेदस्याभिप्रायम् कुसुमितामवान्तरफलप्ररोचनया रमणीयां परमफलश्रुतिं वदन्ति कुतस्ते कुबुद्धयस्त-दाह हि यस्माद्वेदज्ञा व्यासादयस्तथा न वदन्तीति ॥ २६ ॥

कुबुद्धित्वं प्रपञ्चयति । कामिन इत्यष्टभिः । कामित्वात्कृपणा अतो लुब्धास्तृष्णाकुला अतः पुष्पेष्ववान्तरफलेषु परमफलबुद्धयोऽत एवाग्निमुग्धा अग्निसाध्यकर्माभिनिवेशेन लुप्तविवेकास्ततश्च धूमतान्ता धूमता धूममार्गोऽन्ते येषां ते स्वं लोकमात्मतत्त्वम् तथा च श्रुतिः

कश्चिद्वा अस्माल्लोकात् प्रेत्य आत्मानं वेद अयमहमस्मीति कश्चित्स्वं लोकं न प्रतिजानाति अग्निमुग्धो हैव धूमतान्त इति ॥ २७ ॥

कोऽसौ स्वलोकस्तमाह । हृदिस्थमात्मानं मां स्वलोकम् ननु हृदिस्थमहंकारास्पदं जानन्त्येव सत्यम् परमात्मानं तु न जानन्तीत्याह । य इदं मद्व्यतिरिक्तं जगदाहितं कुतः यत इदं जगज्जातम् तत्कुतो न जानन्ति हि यस्मात् उक्थं कर्मैव शस्त्रं शंस्यं कथनीयं पशुहिंसासाधनं वा येषां ते अतः केवलमसुतृपः प्राणतर्पणपराः नीहारं तमस्तेन व्याप्तानि चक्षूंषि येषां ते यथा सन्निहितमपि न जानन्ति तद्वत् तथा च श्रुतिः 'न तं विदाथ य इमा जजानाऽन्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ती'ति ॥ २८ ॥

वेदतात्पर्याज्ञानाच्चान्यान् यजन्तीत्याह । ते परोक्षमस्फुटं मे मम मतमविज्ञाय केवलान्भूतान् यजन्त इत्युपरितनेनान्वयः स्वमतमेवाऽऽह हिंसायां मांसभक्षणार्थं तत्फलार्थं च यदि रागः स्यात्तर्हि यज्ञ एवेत्यनुवादोऽयं परिसंख्येयं न त्वपूर्वत्वेन चोदनेत्यर्थः यद्यपि नित्यनैमित्तिकयोः कामविशेषानुबन्धो नास्ति तथापि कर्मणा पितृलोक इति श्रुतेः सामान्यतः पितृलोककामनास्त्येव अन्तःकरणशुद्धिकामना चेति भावः तदुक्तम्

'नाकामस्य क्रिया काचिद् दृश्यते चेह कर्हिचित् ।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥'

इति ॥ २९ ॥

असुरा एव हिंसया विहारः क्रीडा येषां ते ॥ ३० ॥

१ हिंसायां यदि कामः स्यात्तद् इति वि० पाठः । २ बुधा पशून् विहिंसन्ति हिंस्यन्ते यत्र तैस्तु ते इति वीरा० विज० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शासः कर्मविधिप्रेरिताः असुतृप इन्द्रियतर्पणपराः हृदिस्थमपि न जानन्तीत्यत्र दृष्टान्तः यथा नीहारं तमस्तेन व्याप्तानि चक्षूंषि येषां ते सन्निहितमपि न जानन्ति तद्वत् ॥ २८ ॥

किञ्च ते मम परोक्षमस्फुटं दुरवगाहमितिभावः मतम-विज्ञाय केवलं विषयात्मकाः विषयप्रवणचित्ताः सन्तः वृथा पशून् विहिंसन्ते यागमपदिश्य मांसभक्षणाय पशून् हिंसन्त इत्यर्थः अतस्ते नास्तिका इति भावः । तत्र प्रेत्य मृत्वा तैर्हिंसि-तैरेव पशुभिरमुत्र शालावृकादिरूपतामापन्नैर्हिंस्यन्ते ॥ २९ ॥

वृथा पशून् विहिंसन्ते इत्यत्र हेतुतया नास्तिकानामभिप्राय-विशेषं प्रकाशयंस्तान् विशिनष्टि । हिंसाविहारा इति । अनेन तत्पूर्वकं मांसभक्षणमुपलक्ष्यते तत्र यदि राग इच्छा स्यात्तर्हि यज्ञ एव चोदना विधिरनुमतिरिति यावत् इति विहिंसन्त इति सम्बन्धः हिंसैव विहारः क्रीडा येषां ते स्वसुखेच्छया मांसभक्षणसुखे-च्छया आलब्धैः पशुभिः ये यजन्ते पित्रादिरूपा देवता यजन्ते अतस्ते खलाः स्वसुखेच्छया यागो व्याजीकृत इत्यतस्ते खला इत्यर्थः ॥ ३० ॥

एवं नास्तिकानां फलमुक्तम् अथास्तिकेष्वपि फलकामानां प्रवृत्तिं तत्फलं च दर्शयति । स्वप्नोपममिति । असन्तं प्रकृतिप-रिणामात्मकमत एव श्रवणप्रियं श्रोत्रमात्रप्रियममुं लोकं परलोकं श्रुत्वा आशिषः कामांश्च हृदि सङ्कल्प्याभिसन्धाय धनानि त्यजन्ति कामसाधकेषु कर्मसु विनियोजयन्ति यथा व-णिग्यथा कश्चिद्वणिग्बहुधनार्जनेच्छया तावत्स्वं धनम्[illegible]-मूलं [illegible] भवन्ति तद्वदित्यर्थः ॥ ३१ ॥

रजःसत्त्वतमोनिष्ठाः रजआदिगुणमूलकर्मनिष्ठाः रजःसत्त्वतमोजुषो राजसाहारादि सेवमानाः तेषु प्रीतियुक्ता वा अत्र रजस्तमोभ्यां मिश्रितं सत्त्वं विवक्षितम् इन्द्रो मुख्यो येषां तान् देवादीनुपासते स्वगुणानुरूपानिन्द्रादीनेवाराधयन्ति न यथा इन्द्राद्युपासनमपि न यथावत्कुर्वन्ति यथावत्त्वं नाम भगव-दात्मकत्वबुद्धियुक्तत्वमेव न यथैवेति मामित्यनेनापि सम्ब-ध्यते साक्षान्मामपि न यथावदुपासत इत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वमतप्रदर्शयोग्यासुरमतं प्रदर्शयति । एवमिति । केचिदसुरपक्षीयाः वेदस्यैवमुक्तं स्वचाशितं निश्चयमविज्ञाय फलश्रुतिं फलं मोक्षस्तद्विषयां श्रुतिं कुसुमितां स्वर्गविषयां वदन्ति । अत एवावेदज्ञा इति ॥ २६ ॥

एतदेवोपपादयति । कामिन इति । कामिनो निषिद्धकामिनः न तु योग्यकामवन्तो निषेध्याः:—

अयोग्यभार्यापुत्रादिकामितानर्थसाधिनी ।
मोक्षकामाक्षरे प्रीतिरतो ब्रह्मादयोऽमलाः ॥
भार्यापुत्रादिसंयुक्ता वासुदेवमुपासते ।

इति प्रमाणात् एवं[1]विधा असुरा इत्यभिप्रेत्य कृपणादिशब्दाः प्रयुक्ताः नतु स्वर्गकाम इति श्रुतेः स्वर्गादिश्चैव स्पष्टा-र्थत्वात् कथं पुष्पेषु फलबुद्धय इति निन्दा क्रियते

१ अयोग्यकामवन्तः ।

इति तत्राह अग्निमुग्धा इति मामविज्ञायाग्निरेवोच्यते इति मुग्धाः मिथ्याज्ञानिनः प्रत्यक्षफलमाह । धूमेति मिथ्याज्ञानित्वं कथमत्राह । स्वलोकमिति स्वलोकं स्वाश्रयं परमात्मानं न विदन्ति अनेन स्वर्गकामाः स्वर्गकामशब्दार्थमपि न विदन्तीति ज्ञापितम्—

नित्यानन्दहरेर्भक्तिज्ञानाद्याः स्वर्गशब्दिताः ।
पुत्रभार्यान्तविद्याद्याः सर्वं मोक्षगतं फलम् ॥
उद्दिश्य स्वर्गकामस्य यजनं श्रुतिचोदितम् ।
तदविज्ञाय पुण्याख्यमनित्यं स्वर्गमिच्छवः ॥
यजन्ति मन्दमतयो वेदवादपरायणाः ।

इति मानेन स्वर्गशब्दविवरणात् स्त्रीभिर्वा यानैर्वा इत्यादि चात्र मानम् ॥ २७ ॥

कोऽसावाश्रय इति तत्राह । न त इति । ये उक्थेन प्राणेन शाः शासनं येषां ते उक्थशासः अन्धे तमसि पातयित्वा प्राणद-ण्डया असुतृपः केवलेन्द्रियारामास्ते य इदं स्वाप्तो यतश्चेदं जातं हृदिस्थं मां न जानन्तीत्यन्वयः—

विष्णुभक्तान् सदा वायुः क्लेशयेत्तमसि क्षिपन् ।
विष्णुभक्तान्विमोक्षाय प्रापयित्वा सुखं भवेत् ॥

इति च अज्ञानं निदर्शयति । यथेति । यथा नीहारचक्षुषः नीहारा-वृतचक्षुषः पदार्थान् यथावन्न विदन्ति ॥ २८ ॥

तथा ते मे मतमविज्ञाय—

मोक्षाख्यफलमेवाह स्वर्गादिवचनं तु यत् ।
असुराणामयं स्वर्गशब्दः पुण्यात्मकं वदेत् ।
देवानां हरिसम्प्राप्तिं वेदो विष्णुपरो यतः ॥

इत्येतत्सिद्धम् अविदित्वा ततः किमत्राह । परोक्षमिति । परोक्षम-न्धतमः तामसाः तत्साविषयकः आत्मा स्वरूपं येषां ते तथा अन्धन्तमः परोक्षं च पक्षे कष्टं तथोच्यते इतिवाक्य-शिष्टं कामिनः कृपणा इत्यादिनोक्ता असुरा इत्ययमुक्तः इदानीं स्पष्टयति । हिंसाविहारा इति । अयं भावः ये कामिनः तेषाम-सुराणां यदि यदा हिंसायां कामः तदा यज्ञ एव न चोदना यज्ञदात्मनो हिंसनमिष्टं तद्विहितमिति कुतर्कैः प्रतिपाद्य यज्ञं प्रति पादयन्ति—

आसुरो विहितां हिंसां विहितत्वेन वर्णयेत् ।
आसुरा याज्ञिकाः सर्वे नारायणपराङ्मुखाः ।

इति वचनात् ॥ २९ ॥

एषां प्रत्यक्षान्यथानुपपत्त्यासुरत्वं स्पष्टमित्याह । हिंसाविहारा इति आलब्धैः हिंसितैः ॥ ३० ॥

अमुं लोकमुद्दिश्य अत्यन्तमनित्यम् अर्थहानिरेवैषां न स्वाभी-ष्टप्राप्तिरित्याह । आशिष इति । हृदि स्वर्गाशिषः सङ्कल्प्य स्वधनानि इति निरूप्य वणिग्यथा तथा अर्थान्त्यजन्ति ॥ ३१ ॥

सन्तु वा पितृभूतपतीनां यष्टारोऽसुराः इन्द्रादिदेवतायष्टारः कथमित्याशङ्क्य यथावदर्चनाभावादित्याह । रज इति । एवं विधा याज्ञिकास्तामसाः कुतः—

विष्णुं विहाय ये देवान् पितॄन् भूतेशमेव च ।
सात्त्वेन वा पूजयन्ति ते ज्ञेया आसुरा नराः ॥

इति स्मृतेः तेष्वपि विशेषोऽस्ति तामसराजसकास्तामसराज-सात्त्विकतामसा इति यत्र ते सर्वे इन्द्रमुख्यान् देवादीन् मां च

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथोपासते १ रजःसत्त्वतमोनिष्ठाः रजःसत्त्वतमोजुषो भवन्ति कथं तामससात्त्विकजनाः किञ्चित्स्वर्गादिसुखोपेता निरयदुःखोद्रिक्तान् लोकान् जुषन्ते तामसराजसजनाः केवलं निरयदुःखाकुललोकान्, तामसतामसजनाः अन्धन्तमोदुःखाविलान् लोकान् सेवन्त इत्यन्वयः—

> तामसेषु तु ये स्वर्गनिरयप्रचुरास्तु ते ।
> ईषत्स्वर्गादिसंयुक्तास्तमोनिष्ठास्तु ते स्मृताः ॥
> केवलं निरये निष्ठा ये ते तामसराजसाः ।
> अन्धे तमसि ये निष्ठास्ते वै तामसतामसाः ॥
> एवं त्रिभेदयुक्तास्तु याज्ञिका विष्णुवर्जिताः ।

कुत्स्नेन त्रैविध्यं प्रामाणिकं निष्ठोत्कर्षं ऽमवस्थायां नाशोऽन्ते प्रतत्वाज्ञपोरिति वचनात् रजआदिभेदयुक्ता रजआदिलोकांश्च प्राप्नुवन्त इत्यर्थः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वं लोकं स्वाभयम् ॥ २७ ॥

न ते मामिति निर्गुणत्वादित्यर्थः ॥ २८—३४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतोऽविदुषः स्वार्थं परमसुखमजानतः तत एव नतान् नम्रीभूतान् वेदो यद्योपदिश्यति तदेव श्रेयः इति विश्वस्तानित्यर्थः भ्रमिनाध्वनि कामवर्त्मनि देवादियोनिषु भ्राम्यतः पुनरपि तमो विशतः वृक्षादियोनिमपि प्राप्नुवतस्तानेव जनान् पुनस्तेष्वेव कामेषु स्वयं बुधो वेदः कथं युञ्ज्यात् प्रवर्तयेत् तथा सत्यनासः स्यादिति भावः ॥ २५ ॥

कथं तर्हि मीमांसकाः वेदस्य स्वर्गादिफलपरतां वदन्ति तत्राह । एवमिति । व्यवसितं वेदस्याभिप्रायं नैव ज्ञात्वा फलश्रुतिं फलमयीं वेदप्रमाणकत्वेन वदन्ति वस्तुतस्तु कुसुमान्येव सञ्जाताति नतु फलानि यस्यां तां न फलमयीं फलयुक्तं किन्तु कुसुमयुक्तमेव कुसुमस्येवाज्ञानेन फलत्वमावर्तादित्यर्थः अतस्ते कुबुद्धयो वेदतात्पर्यानभिज्ञाः हि यस्माद्वेदज्ञा व्यासादयस्तथा न वदन्तीति ॥ २६ ॥

कुबुद्धितां प्रपञ्चयति । कामिन इत्यादिभिः । पुष्पेष्वेवान्तरफलेष्वेव परमफलबुद्धयः अग्निमुग्धाः अग्निसाध्यकर्माभिनिवेशेन लुप्तविवेकाः धूमेन यज्ञाग्निधूमेनान्ते धूममार्गगमनेन च ताम्ताः प्राणिमत्तः तथा च श्रुतिः "कश्चित्स्वं लोकं न प्रजानाति अग्निमुग्धो धूमतान्त" इति ॥ २७ ॥

स लोकः कतमस्तत्राह । नेति । मामन्तर्यामिणं स्वहृदि स्थितमपि न जानन्ति योऽहमेव इदं जगत् यतु स्वांशरूपविश्वो जगत् भवामि तत्राह । यत इति । जगत्कारणत्वादहं जगदित्यर्थः

१ अत्र मनुष्याधमाः तामससात्त्विकाः प्रधानवेदानुगाः तामसराजसाः करणाविप्रधान वेदाः तामसतामसा इति विवेको गीतातात्पर्यानुसारेण मन्तव्यः ।



मद्ध्याने हेतुः उक्थं कर्मैव शस्त्रं शंस्यं कथनीयं पशुहिंसासाधनं वा येषां ते अतः केवलमसुतृपः प्राणतर्पणपराः सर्वत्र हेतुः नीहारमाविद्या तेन व्याप्तं चक्षुर्ज्ञानं येषां ते तथा च श्रुतिः "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्तीति" ॥ २८ ॥

मदज्ञानादेव मत्सम्मतस्य वेदार्थस्याप्यज्ञास्ते इत्याह । ते इति । परोक्षमस्फुटं मे मम मतमविज्ञाय देवादीन् यजन्ते इत्युत्तरेणान्वयः स्वमतं त्वाह हिंसायां यदि रागः स्यादिति यदि पशुहिंसा त्यक्तुं न शक्या स्यात्तदा यज्ञ एव सा कार्येत्यभ्यनुज्ञामयीं परिसंख्यैवेयं नतु चोदनेत्येवं रूपं मे मतमविज्ञाय हिंसात्मकाः विषयाविष्टचेतसः ॥ २९ ॥

अत एव हिंसा विहाराः ॥ ३० ॥

ते अतिमन्दधियश्चेत्याह । स्वप्नोपममिति अमुं लोकं परलोकम् असन्तं असत्तुल्यं तथैवेह लोके आशिषश्च राज्याद्याः सङ्कल्प्य ननु निश्चित्य विघ्नबाहुल्यात् त्यजन्ति अर्थान् कर्मसु विनियोजयन्ति यथा कश्चिद्वणिक् दुस्तरसमुद्रादिलङ्घनेन बहुधनेच्छया स्थितं धनं त्यजन्नुभयभ्रष्टो भवति तद्वदित्यर्थः ॥ ३१ ॥

रजःसत्त्वतमोनिष्ठा ये ते रजःसत्त्वतमांस्येव जुषन्ते सेवन्ते न ब्रह्मेति । यद्यपीन्द्रादीनामपि मदंशत्वान्मदुपासनमेव तत् तथापि यथावन्नोपासते यथावदुपासनाभावात् इत्यर्थः यदुक्तं न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तान् स्वार्थं निरतिशयसुखमविदुषः अत एव नतान् वेदोक्तश्रवणाय नम्रीभूतान् वृजिनाध्वनि संसारे भ्राम्यतः तमः स्थावरादियोनिं विशतः पुनस्तेषु स्वर्गादिषु स्वर्गकामो यजेत्पशुकामो यजेदित्यादिरूपो बुधो वेदः कथं युञ्ज्यादित्यर्थः ॥ २५ ॥

उक्तसिद्धान्तानभिज्ञान् पूर्वमीमांसकान्निन्दति । एवमिति नवभिः एवं व्यवसितं वेदस्याभिप्रायमविज्ञायाबुधाः कुसुमितां मन्दाधिकारिणः फलप्रदर्शनेन काम्यकर्मद्वारा मोक्षसाधने निष्कामकर्मणि प्रवर्तयितुं प्रवृत्तां रमणीयां फलश्रुतिं वदन्ति स्वर्गादिप्राप्तिरेव परं फलं तत्परं वदन्ति हि हेतौ अतस्ते कुबुद्धयः अतो न वेदज्ञाः न तदर्थाभिज्ञा इत्यर्थः ॥ २६ ॥

तेषां कुबुद्धित्वमाह । कामिन इत्यादिना । पुष्पेषु फलबुद्धयः अवान्तरफलेषु मुख्यफलदृष्टयः अत एव अग्निमुग्धाः अग्न्युपलक्षितकाम्यकर्मभिर्विक्षिप्ताः अत एव धूमतान्ताः धूमता कष्टधूमभावः अन्ते येषां ते तथा धूमबहुलभस्मीभूताः देहान्ते भविष्यन्तीत्यर्थः । नन्वात्मनः कथं धूमता स्यात्तत्राह । स्वं लोकं स्वस्वरूपं ते न विदन्ति किन्तु देहमेवात्मानं जानन्ति तथा च श्रुतिः "कश्चिद् वा अस्माल्लोकात्प्रेत्य आत्मानं वेद अयमहमस्मीति कश्चित्स्वलोकं न प्रतिजानाति अग्निमुग्धो धूमतान्त" इति यद्वा धूमतान्ताः आवृत्तिमार्गपर्यवसानाः पुनः पुनर्जन्ममरणाद्युपभागिनः यतः स्वलोकमपुनरावृत्तिमार्गगम्यं लोकं न विदन्तीत्यर्थः ॥ २७ ॥

किञ्च हे अङ्ग उद्धव ते कुबुद्धयः हृदिस्थमन्तर्यामिणं यतः

इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ।
तस्यान्ते इह भूयास्म महाशाला महाकुलाः ॥ ३३ ॥
एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ।
मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते ॥ ३४ ॥
वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे ।
परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ॥ ३५ ॥
शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।
अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदं सर्वं विश्वमुत्पद्यते य एवेदं विश्वाकारेण चिदचिच्छक्तिमान् संस्थितः सर्वं खल्विदं ब्रह्मेति श्रुतेः एवंभूतं सर्वप्रेरकं सर्वकारणं सर्वात्मानं मामपि न जानन्ति यत उक्थशस्त्राः उक्थं कर्मैव शस्त्रं शंस्यं कथनीयं स्वार्थसाधकं परपीडाजनकं वा येषां ते यतोऽसुतृपः प्राणतर्पणपराः सर्वत्र वर्त्तमानमपि मां न जानन्तीत्यत्र दृष्टान्तमाह । यथा नीहारचक्षुष इति । नीहारेण तमसाऽऽवृतानि चक्षूंषि येषां ते यथा निकटस्थमपि न जानन्ति तद्वदित्यर्थः ॥ २८ ॥

किञ्च हिंसायां चोदना अपूर्वविधिर्न भवति किन्तु मन्दाधिकारविशेषस्य यदि हिंसाकर्मफलादौ रागः इच्छा स्यात्तदा यज्ञः हिंसायज्ञः कार्यः इति नियमविधिमाश्रित्य पशुवता स्वाभाविकप्रवृत्तिर्निवार्यते इति मे मतमविज्ञाय विषयेषु आत्मा मनो येषां ते यज्ञैर्देवताः यजन्त इत्युत्तरेणान्वयः ॥ २९ ॥

हिंसायां विहारः क्रीडा येषां ते तथा ॥ ३० ॥

अक्षय्यमित्यनेन वाक्येन तत्कर्मफलस्य ऐहिकलोकभोगान्यल्पकालस्थायित्वापेक्षया किञ्चित्स्थिरत्वमुक्तम् ते च खलाः वाक्यार्थानभिज्ञाः नित्यं मत्वा बह्वर्थव्ययं तदर्थं कुर्वन्तीत्याह स्वप्नोपममिति । अक्षय्यं यत्तैः खलैर्नित्यत्वेनाङ्गीकृतं तद्विपरीतं प्राकृतपदार्थविशेषत्वात् किन्तु स्वप्नोपममनित्यम् एवंभूतममुं परलोकम् तथा अस्मिंल्लोके आशिषः सङ्कल्प्य अर्थान् वणिग् यथा जहति कर्मसु योजयन्ति ॥ ३१ ॥

रजःसत्त्वतमोजुषः रज आदिविपाकभोक्तॄन् मम मायागुणाभिमोहिनामित्यर्थः । मां सर्वचेतनाचेतनस्वामिनं सर्वार्थप्रदन्तु तथा तादृशेन प्रकारेणापि नैवोपासते मदुपासनप्रकारेण नोपासते इति किमु वक्तव्यम् ॥ ३२ ॥

---

भाषा टीका ।

ऐसे जो लोग स्वार्थ नहीं जानते हैं और पाप के मार्ग में घूमते रहते हैं तब जो पण्डित वेद पुरुष सो उनको अज्ञान नरक में जाते हुये देखकर भी फिर उनः कर्मों मे कैसे युक्त करेगा ॥ २५ ॥

कोई दुर्बुद्धि वाले मनुष्य इस बात को न जानकर वेद के ठीक अर्थको न समझ कर फूलों सरीखी फल श्रुतिको देख कर इस वाद को कहते हैं ॥ २६ ॥

वे कामी हैं कृपण हैं लोभी हैं पुष्पों में जिनकी फल बुद्धि होरही है होमकी अग्निसे मुग्ध होरहे हैं धूआं के लगने से अज्ञानि होगये हैं अपने परमात्मा को नहीं जानते हैं ॥ २७ ॥

हे उद्धव ! वे लोग हृदय मे स्थित मेरे को नहीं जानते हैं जोकि मैं हूं जिससे कि सब जगत होरहा है उक्थ जो कर्मकाण्ड विशेष सोई शस्त्र जिनका और अपने प्राणों के पोषण करने वाले हैं जैसे कुहुडी आंख मे छागई हो तैसे वे लोग हैं ॥ २८ ॥

वे विषयात्मा लोग मेरे मतको परोक्ष होने से नहीं जानते हैं यदि मांस में प्रीति होवै तबहीं यज्ञादि हिंसा करी जाती है कुछ विधि नहीं है ॥ २९ ॥

हिंसा मे विहार करने वाले वे लोग अपने सुखके वास्ते मारे हुये पशुओं से यज्ञों से देवतों का यजन करते हैं और वे खल पुरुष ऐसेही पितर तथा भूत आदि कों को पूजते हैं ॥ ३० ॥

वह स्वर्गादि लोक स्वप्न के तुल्य है यथार्थ से नहीं है सुनने मात्रको नित्य है मनोरथ को हृदय मे कल्पना करके जैसे कोई बनिया लोभ से खर्च करै तैसे यजन करते हैं ॥ ३१ ॥

रजो गुण सत्व गुण तमो गुण इन मे निष्ठा वाले हैं रजःसत्वतम के सेवने वाले हैं ऐसे होकर इन्द्रादि देवों की उपासना करते हैं तैसी मेरी उपासना नहीं करते हैं ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति संकल्पेत्युक्तं तमेव संकल्पं दर्शयति । इष्ट्वेति । तस्य भोगस्यान्ते, महाशाला महागृहस्थाः ॥ ३३ ॥

ततः किमत आह । एवमिति । अतो मत्प्रवणाभावान्नित्यं संसारिणो भवन्तीति भावः ॥ ३४ ॥

मयोपबृंहितं भूम्ना ब्रह्मणानन्तशक्तिना ।
भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ॥ ३७ ॥
यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् ।
आकाशाद्घोषवान् प्राणो मनसा स्पर्शरूपिणा ॥ ३८ ॥
छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ।
ओंकाराद्व्यञ्जितस्पर्शस्वरोष्मान्तस्थभूषिताम् ॥ ३९ ॥
विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः ।
अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य प्रकृतं निवृत्तिपरत्वमेवोपसंहरति । वेदा इति । कर्मब्रह्मदेवताकाण्डविषया इमे वेदा ब्रह्मात्मविषयाः ब्रह्मैवात्मा न संसारीत्येतत्पराः तत्परत्वाप्रतीतौ च

'फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ।
श्रेयो विवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥'

इत्युक्तमेव कारणमनुस्मारयति । परोक्षेति । ऋषयो मन्त्रास्तद्द्रष्टारो वा तत्किमिति यतः परोक्षमेव मम च प्रियम् । अयं भावः शुद्धान्तःकरणैरेवैतद्बोद्धव्यं नान्यैस्तानधिकारिभिस्तथा कर्मत्यागेन भ्रंशप्रसङ्गादिति ॥ ३५ ॥

ननु वेदज्ञा अपि जैमिन्यादयः किमिति तथा न वर्णयन्ति मां विना तत्त्वतो वेदं तदर्थं वा न कोऽपि वेत्त्याशयेनाऽऽह । शब्दब्रह्मेति यावत्समाप्ति । स्वरूपतोऽर्थतश्च दुर्विज्ञेयम् तच्च सूक्ष्मं स्थूलं चेति द्विविधम् तत्र सूक्ष्मं तावत्स्वरूपतोऽपि दुर्ज्ञेयमित्याह । प्राणेन्द्रियमनोमयम् प्रथमं प्राणमयं पराख्यं ततो मनोमयं पश्यन्त्याख्यं ततः इन्द्रियमयं मध्यमाख्यं तस्य वाग्व्यञ्जकत्वेन वागिन्द्रियप्रधानत्वात् किञ्च अनन्तपारं समष्टिप्राणादिमयस्य निर्विशेषस्य च तस्य कालतो देशतश्चापरिच्छेदात् अर्थतोऽपि दुर्ज्ञेयत्वमाह । गम्भीरं निगूढार्थम् अतो दुर्विगाह्यं मतिप्रवेशानर्हं तथा च श्रुतिः 'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' अयमर्थः वाचः शब्दब्रह्मणः परिमितानि परिगणितानि पद्यते ज्ञायते एभिरिति पदानि रूपाणि चत्वारि तानि चत्वार्यपि ये मनीषिणोऽन्तर्दृष्टयस्त एव विदुः नान्ये यतो गुहायां देहमध्ये त्रीणि निहितानि नेङ्गयन्ति स्वरूपं न प्रकाशयन्ते केवलं वाचस्तुरीयं चतुर्थं भागं वैखरीरूपं मनुष्याः प्राणिनो वदन्ति तदपि वदन्त्येव न तत्त्वतो जानन्ति ॥ ३६ ॥

तत्र मनीषिभिरेव ज्ञेयं सूक्ष्मं तत्त्वरूपं दर्शयति । मयेति । मयाऽन्तर्यामिणोपबृंहितमधिष्ठितम् अन्तःस्थत्वेऽप्यपरिच्छेदमाह । भूम्नेति । अधिष्ठातृत्वेऽप्यविकारित्वमाह । ब्रह्मणेति । अविकृतस्यापि नियन्तृत्वं घटयति । अनन्तशक्तिनेति । भूतेषु सर्वप्राणिषु घोषरूपेण नादरूपेण लक्ष्यते मनीषिभिः अतः सूक्ष्मत्वेन दर्शने दृष्टान्तो बिसेषूर्णातन्तुरिवेति ॥ ३७ ॥

ततो वैखर्याख्याया बृहत्या वाच उत्पत्तिप्रकारं सदृष्टान्तमाह । यथेति त्रिभिः । हृदयाकाशात् मुखात् द्वारात् उद्वमते बहिः प्रकटयति दार्ष्टान्तिके योजयति । आकाशादिति । प्राणस्तदुपाधिर्हिरण्यगर्भरूपः प्रभुर्भगवान् तेन रूपेण छन्दोमयो वेदमूर्तिः स्वतस्त्वमृतमयः घोषवान्नादोपादानवान् मनसा निमित्तभूतेन निमित्ततामेव दर्शयति । स्पर्शादीन् वर्णान् रूपयति सङ्कल्पयतीति स्पर्शरूपि तेन स्पर्शग्रहणमुपलक्षणम् हृदयाकाशाद्बृहतीं सृजतीति तृतीयश्लोकेनान्वयः बृहतीशब्दार्थव्याख्यानाय विशेषणानि सहस्रपदवीं बहुमार्गाम् तदेवाऽऽह ओङ्कारादुरः कण्ठादिसङ्गेन व्यञ्जितैः स्पर्शादिभिर्भूषिताम् ओङ्कारश्चात्र हृद्गतः सूक्ष्मोऽभिप्रेतो न त्वकारादित्रयरूपः तस्य व्यञ्जककोटित्वात् तत्र स्पर्शाः कादिपञ्चवर्गाः स्वरा अकारादयः षोडश ऊष्माणः शषसहाः अन्तस्था यरलवाः एवं विचित्राभिर्वैदिकलौकिकभाषाभिर्विततां चतुरुत्तरैः चत्वारि चत्वारि अक्षराण्यधिकानि येषां तैश्छन्दोभिरुपलक्षिताम् एवमनन्तपारां सृजति स्वयमेवाऽऽक्षिपते उपसंहरति ॥ ३८ ॥ ३९ ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

इह भुवि रंस्यामहे अप्सरोभिर्विहरिष्यामः ॥ ३३ ॥

ततस्तादृशसङ्कल्पात् । पुष्पितवाक्पदस्थानीयार्थवादबहुलया । अतो मद्वार्तां रुच्यभावात् । मत्प्रवणत्वाभावात् मन्निष्ठत्वाभावात् संसारिणो जन्ममरणादिमन्तो भवन्ति ॥ ३४ ॥

तदेवं पूर्वोक्तप्रकारेण कर्मब्रह्मदेवताकाण्डानि कर्मब्रह्मोपासनाकाण्डानि विषयाः प्रतिपाद्यानि येषु तथाभूताः । आत्मा जीवो ब्रह्मैव न संसारीत्येतत् प्रतिपादनपराः । तत्परत्वाप्रतीतौ ब्रह्मपरत्वाज्ञाने कारणं प्रवृत्तिसङ्कोचेन कर्मसु परोक्षस्य रुच्युत्पादनम् । ननु परोक्षवादत्वं किं कुतः । एतत् वेदानां तत्प्रियत्वं कथं तत्राह । अयं भाव इति । स्फुटं निवृत्तिपरत्वाऽभिधानेऽशुद्धा-
पर्येण निवृत्तिपरत्वम् ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ॥

स्तुर्विगाह्यं युक्तिभिरपि निरूपयितुमशक्यमर्थं गाम्भीर्यैर्दुर्विगाह्यत्वेऽदृष्टान्तः समुद्रवदिति ॥ ३६ ॥

किञ्च अनन्ताः शक्तयो ज्ञानवीर्यतेजःप्रभृतयो यस्य तेन परब्रह्मभूतेन भूम्ना मया उपबृंहितं विस्तारितं प्राणेन्द्रियमनोमयमित्येतत्सदृष्टान्तमुपपादयति । भूतेष्विति । विशेषु पद्मनालेषूर्णेव तन्तुरिव भूतेषु मनुष्येषु घोषरूपेण यः कर्णौ पिधाय श्रूयमाणः प्राणघोषः तद्रूपेण लक्ष्यते तावदुच्चारयितुः प्राणघोषाभिव्यञ्जनमात्रत्वात इत्यर्थः ॥ ३७ ॥

ततो यथा ऊर्णनाभिः कीटविशेषः हृदयात्सकाशान्मुखद्वारा ऊर्णामुद्वमते बहिर्निःसारयति तथा घोषवान् प्राण उच्चिचारयिषोः पुरुषस्य प्राणवायुराकाशाश्रयाः उरःपर्यन्तान्तर्विवरद्वारा स्पर्शरूपेण मनसा स्वसंयोगविशेषेन मनसा सङ्कृतः मन्त्रा मनसा स्पर्शरूपिणा स्पर्शो हृदुरः कण्ठादिस्थानसंस्पर्शः स रूपमाकृतिः प्रकार इतिवावल स्तोऽस्यास्तीति तथा तेन घोषेण च सङ्कृत इत्यर्थः ॥ ३८ ॥

छन्दोमयः छन्दःप्रचुरः छन्दःशब्दाभिधेयवेदाविष्कारकत्वेन तत्प्रायुर्यं विवक्षितम् अमृतमयः स्वामी प्रभुर्देहेन्द्रियादिधारणसमर्थः बृहतीं ब्रह्मशब्दात्मिकां वाचं सृजतीत्युपरिष्टात्सम्बन्धः एवंभूतः प्राणो वागिन्द्रियं प्राप्य बृहतीं वाचमाविष्करोतीत्यर्थः । बृहतीशब्दव्याख्यानाय तां विशिनष्टि । सहस्रपदवीं सहस्रं पदव्यः अयोमार्गा अनवोच्या यस्यास्तां सहस्राक्षरा परमे व्योमन्नित्युक्तविधास्त्वाकाश्यो मावसाना: वर्णाः स्पर्शाः अचः स्वराः शषसहा ऊष्माणः यरलवा अन्तस्थाः ओङ्काराद्यञ्जिताः ये स्पर्शास्वो वर्णास्तैर्विभूषिताम् ओङ्कारप्रभवा वेदा ओङ्कारप्रभवाः स्वराः ओङ्कारप्रभवं सर्वं वाङ्मयमित्यादिशास्त्रार्थोऽनेन स्मारितः ॥ ३९ ॥

विचित्राभिर्भाषाभिर्विततां भाष्यन्त इति भाषाः शब्दाः श्रुतयस्ताभिर्विततां विस्तृतामित्यर्थः । अनन्तपारामपरिच्छिन्नावधिं चतुरुत्तरैः छन्दोभिर्गायत्र्यादिभिरुपलक्षितामिति शेषः चतुरुत्तरैश्चतुरक्षराधिकैर्गायत्र्यादिच्छन्दस्सु पूर्वपूर्वच्छन्दोऽपेक्षयोत्तरोत्तरच्छन्द एकैकस्मिन् पादे एकैकाक्षरवृद्ध्या चतुरक्षराधिकं भवति तैश्छन्दोभिर्युक्तामित्यर्थः । इत्थम्भूतां बृहतीं वाचं प्राणः स्वयं सृजति आक्षिपते स्वव्यापारोपरमेणानभिव्यक्तां च करोतीत्यर्थः ॥ ४० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्प्रार्थनाप्रकारमाह । इष्ट्वेति रंस्यामहे रन्तुमिच्छामः इह भूमौ भवेदावपोपासनं च दर्शितं नित्यानन्दलक्षणमोक्षाकाङ्क्षानुगुणगुणोपसंहाराभावात् ॥ ३३ ॥

भगवदुपासने निमित्तमाह । एवमिति । पुष्पितया स्वर्गादिपुष्पविषयया वाचा व्याक्षिप्तं मनो येषां ते तथा तेषां मानिनामतिस्तब्धानामिति विशेषणद्वयेन मनः समीचीनत्वज्ञानकारणगुर्वादिसेवापि दूरीभूतेति ध्वनयति ॥ ३४ ॥

स्वर्गादिपरस्य वेदस्य मुक्तिपरत्वं कथं घटत इत्यत्राह । वेदा इति । अत एव पूर्णस्वरूपत्वात् ब्रह्मात्मा विष्णुः स एव विषयो येषां ते ब्रह्मात्मविषया वेदाः " नारायणपरा वेदा " इत्यादेः—

ब्रह्मत्वं पूर्णता प्रोक्ता तद्वत्त्व स्वत एव तु ।
स ब्रह्मात्मा समुद्दिष्टो वासुदेवः सनातनः ॥

इति च अनेन ब्रह्मात्मप्राप्तिलक्षणमोक्षपरत्वमविनाभूतं वेदस्येति ज्ञायते उक्तशङ्कायाः परिहारः कथमायात इत्यत उक्तं त्रिकाण्डविषया अपीति यद्यपि ब्रह्मदेवकर्मकाण्डविषया अधिकारिभेदेन प्रतीयन्ते तथाप्युत्तमाधिकारिणां काण्डत्रयपरत्वं विहाय ब्रह्मगुणप्रतिपादनद्वारा मोक्षपरत्वं स्पष्टमिति भावः । सर्ववेदानां ब्रह्मात्मपरत्वं सत्यं चेन्मुखतः किमिति प्रतीत्यभाव इति तत्राह । परोक्षेति । किमनेन प्रयोजनमत्राह । परोक्षमिति " परोक्षप्रिया इव हि देवा " इति श्रुतिः चशब्दान्मद्भक्तानां देवादीनां प्रियमित्यर्थोऽवगन्तव्य ॥ ३५ ॥

परोक्षत्वान्मम प्रसादं विना वेदार्थो दुरवबोध इत्याह । शब्दब्रह्मेति । तर्हि निरधिकारित्वात् डित्थडवित्थादिशब्दवच्च वैयर्थ्यं वेद इत्यत उक्तं प्राणेति । अत्र प्राणादिशब्दैर्ब्रह्मादयो विवक्ष्यन्ते प्राणेन्द्रियमनोभिः मीयते ज्ञायत इति प्राणेन्द्रियमनोमयं मेयत्वान्मय उद्दिष्टो वेदः प्राणादिभिः सदेति वाक्यात् वाक्यत्वे पौरुषेयत्वेन च लौकिकवाक्यवदनित्यं परिमितं च नेत्याह । अनन्तेति—

अन्तो विनाश उद्दिष्टः पारः परिमितिस्तथा ।
अनन्तपारो वेदोऽयं ताभ्यां स रहितो यतः ॥

इति वचनमत्रोदाहृत्यार्थो वक्तव्यः समुद्रवदित्यल्पाधिकारिणोऽपेक्षोक्तं न तूत्तमाधिकारिण इति ॥ ३६ ॥

वेदस्य प्रतीयमानोऽर्थो न वेद्ध्रव्याभावेन वैयर्थ्यमापन्नमित्याह । मयेति । अनन्तगुणपूर्णत्वाद्भूम्ना ब्रह्मादिशब्दवाच्येन मयोपबृंहितं मत्प्रतिपादकत्वेन पूर्णार्थोपेतं किमत्र प्रमाणमत्राह । भूतेष्विति । भूतेषु घोषरूपेण लक्ष्यते कथमिव बिसेषूर्णेव शब्दब्रह्मेति शेषः ॥ ३७ ॥

प्राणादिभिर्मीयत इत्युक्तं तं प्रकारमाह । यथेति । यथोर्णनाभिर्हृदयादूर्णामुद्धृत्य मुखादुद्वहते निष्कासयति पुनर्ग्रसति च एवं घोषवानाकाशगुणशब्दव्यक्तिमान् छन्दांसि मन्यन्ते नेति छन्दोमयो अमृतमयो मत्प्रसादेन मोक्षदः प्राणः भास्पर्शो नेति विष्णुः तं रूपयतीत्याप्यस्पर्शोऽपि प्राणस्य मनस्तेन स्वमनसा सहस्रपदवीं सदनन्तरूपविषयाम् ओङ्कारेषु त्रिमात्राद्यनन्तमात्रावसानप्राणे व्यञ्जितां स्पष्टव्यक्तां तद्व्याख्यानरूपां स्पर्शादिवर्णैरलंकृतां गुणदर्शनादिभेदेन विचित्राभिर्नानाविधाभिरेकाशीतिसङ्ख्याताभिर्भाषाभिर्विततां चतुरुत्तरैश्चतुर्वर्णैरधिकोष्णिगुक्तेर्मांऽस्यादिच्छन्दोभिश्च विततामनन्तपारां विनाशपरिमाणरहितां बृहतीं श्रुतिं हृदयाकाशादुद्धृत्य सृजति उच्चारयति । रुद्रादिरूप उपादिशति पुनः कल्पान्ते स्वस्मिन्नेवाक्षिपते विधात्रीत्यन्वयः चतुरुत्तरत्वनियमो जगत्यन्तानामेव गायत्र्या उष्णिक्चतुर्वर्णाधिक्यादिचतुरुत्तरैः जगत्यन्तानामेव चतुरुत्तरत्वानियमः—

भुङ्क्ते यदाखिलान् स्पर्शानास्पर्शो विष्णुरुच्यते ।
तस्य प्रकाशकं नित्यं नमस्ये प्राणमेकलम् ॥
प्राणस्यैव मनो नित्यं वासुदेवं प्रकाशयेदिति च ।
श्रीयत्तेऽनेन छन्दांसि प्राणः छन्दोमयस्तत इति च—
त्रिमात्रमादितः कृत्वा यावच्चानन्तमात्रकाः ।
प्रणवास्तेऽपि भेदेन ह्यनन्ताः परिकीर्तिताः ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एकमात्रोत्तराः सर्वे वासुदेवाभिधायकाः ।
तेषां व्याख्यानरूपा हि सर्वे वेदाः प्रकीर्तिताः ॥
ओङ्कारेणान्वितास्तस्मात्सदोच्चार्या हरेः प्रियैः ।

इति उक्तार्थे प्रमाणम्—

गुह्यदर्शनभाषे च भाषा चैव समाधिका ।
तिस्रस्तु मूलभाषाः स्युरेकैका च त्रिधा पुनः ॥
गुह्यदर्शनसंज्ञा च गुह्यगुह्या तथापरा ।
एवमादिक्रमेणैव त्वेकाशीतिविभेदिताः ॥
भाषास्तत्र च गुह्याया प्रसिद्धार्थेस्त्वनन्विता ।
गुह्यार्थे तत्परैवान्धोमश्णामित्यादिका च सा ॥
दर्शनान्यबलत्वेव पशुपत्यादिनां तु या ।
बहुश्रुतिविरुद्धन्तु वदेत्सा दर्शनात्मिका ॥
अन्ते निषेधसंयुक्ता भस्मस्नानादिका च सा ।
यथा प्रदृश्यमानार्थो समाधिः सा प्रकीर्तिता ॥
विष्णुः परम इत्याद्या सा च विद्भिरीरिता ।

इतिवचनात् सम्प्रदायज्ञैर्गुरुचरणशरणैरेव पुरुषैर्ज्ञेयोऽयमर्थ इति—

भस्मस्नानविधानं तु श्रुत्युक्तं दर्शनानुगम ।
भस्मस्नानं ततो ग्राह्यंविधानं तु नृसिंहगम ॥

इतिवाक्यादन्ते निषेधयुक्तत्वात् भस्मस्नानादेरोऽपि कर्तव्य इति ॥ ३८—४० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मात्मविषयाः सर्वतो बृहत्तमो य आत्मा परममूलस्वरूपो भगवानहं तत्परा एवेत्यर्थः । अतिप्रियाचरणत्वेन वक्ष्यमाणत्वात् तथा सर्वेषामप्रतीतौ कारणमाह । परोक्षेति । परोक्षं मम च प्रियमिति तु "त्वञ्च रुद्र महावाहो मोहशास्त्राणि कारय । अयतानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु" इत्यन्यत्र व्यक्तत्वात् तच्च इदं ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मयेत्यादौ तदभिप्रायप्रकाशात् । तच्च तत्र सर्वेषामनधिकारात् अत एव मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगमित्याद्युक्तमिति ॥ ३५ ॥

शब्दब्रह्मेति युग्मकम् । प्राणेन्द्रियमनोमयं लौकिकवाग्वत्पराख्यादिरूपेण तेष्वाविर्भूतमपि सुदुर्बोधं यतः शब्दतः अनन्तपारम् अर्थतश्च गम्भीरं दुर्विगाह्यं च तत्र दुर्विगाह्यं प्रवेष्टुं तावदशक्यं कथंचित् प्रवेशे च सति गम्भीरं दुर्गमार्थपर्यवसानमित्यर्थः ॥ ३६ ॥

नन्वेवम्भूतं चेत्कथं प्राणादिष्वाविर्भवति तत्राह । मयेति बृंहितं तत्र तत्रोद्भावितं नन्वनन्ते वैकुण्ठेऽनन्तप्राये च ब्रह्माण्डगणेऽनन्तसंख्ययाविर्भूतं तत्कथं भवतैकेनोद्भावितं स्यात् तत्राह । ब्रह्मणा स्वरूपतः परमबृहत्तमेन शक्तितश्चानन्तशक्तिनेति ननु यत्सर्वव्यापकं भवति तदेवानन्तपारं स्यात् ननु तथैवम्

२ अन्योमांणामाविन्दादिस्वात्मिका प्रतीतार्थे योग्यताभावात् भगवज्ज्ञानेनाध गुरूपदेशादिना मणि मानोत्तमं अवगच्छानीति शोणितोऽर्थः मणिमूर्ध्ने प्रधानश्चेत्युत्तमस्य पर्या मवे द्विसाभिधानम् ॥

वक्ष्यते तत्राह । भूतेष्विति । नादरूपेणाव्यक्तप्रणवाकारेण लक्ष्यते योगिभिः तदुक्तम् ।—

अनन्तोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स योगी नेतरो जनः ॥

इति ॥ ३७ ॥

तस्यैव प्राणादिमयतया पराख्यादिरूपेण स्वस्माद्वृद्धवप्रकारमाह । यथोर्णेति त्रिकेण । यथोर्णनाभिर्हृदयात्स्वकाशान्मुखाद्बहिर्भूतात्तुद्गमते गिरतीत्यर्थः । तथा प्रभुरीश्वरोऽपि भवान् परमात्मापि स्वरूपेणामृतमयः परमानन्दरूपः शक्त्या छन्दोमयः सर्वज्ञानादिस्वरूपश्रेष्ठमयः सन् आकाशाकाशमवस्थस्य हिरण्यगर्भस्याधारचक्रे चाविर्भूय पराख्यां बृहतीं सृजति ततो घोषवान् किञ्चिद्यक्तनादवान् नाभिचक्रं मध्यमाख्यां सृजति ततो हृदि प्राणात्मकः सन् ओङ्कारान्नादरूपोङ्कारतामापद्य स्पर्शरूपिणा तत्तद्वर्णभेदज्ञानस्पर्शिना मनसा पश्यन्त्याख्यां सृजति ततश्च व्यञ्जितस्पर्शत्वादिरूपां छन्दोभिरित्यादिरूपां च शाखाभिः सहस्रपदवीं वैखर्याख्यां सृजति कालान्तरे स्वात्मक्षिपते अन्तः प्रवेशयति च अत्र पूर्वं मात्रा स्वरो वर्णा इति स्यात्तु इत्यत्र मात्राहस्वादिः स्वर उदात्तादिरिति ये पृथक् प्लुता उदात्तादयश्च गृह्यन्ते तेषामपि स्वरेऽन्तर्भावात् लकारस्य च स्पर्शोष्मस्वन्तर्भावाद्कोनपञ्चाशदेधात्र गणिताः ॥ ३८—४१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेषां मनोरथं विवृणोति । इष्टेति । तस्य भोगस्यान्ते इहं महाशालाः महागृहस्थाः ॥ ३३—३४ ॥

प्रकरणमुपसंहरति । वेदा इति । कर्मब्रह्मदेवताकाण्डविषया इमे वेदा ब्रह्मात्मविषयाः ब्रह्मैव योऽयमहमात्मा तद्विषयाः ब्रह्मस्वरूपमदाराधनपरा एवेत्यर्थः । ननु तर्हि ऋषयो मन्त्रास्तद्द्वारो वा कथमेव स्पष्टं नाचक्षते तत्राह । परोक्षमेव यथा स्यात्तथा वदन्ति ननु साक्षादिति ननु तेषां साक्षादकथनस्य कोऽभिप्रायस्तत्राह । परोक्षमिति । तथा कथने एव मत्प्रीतिमवधार्य तथा वदन्तीत्यर्थः ॥ ३५ ॥

ननु वेदस्याप्तत्वान्यथानुपपत्त्यैव भैषज्यरोचनन्यायेनैव तस्य स्वर्गादिपरत्वमिति भवान् यथा व्याचष्टे तथैव जैमिन्यादयोऽपि व्याचक्षतां मैवं यदि ते जानीयुस्तर्हि व्याचक्षीरन् मां विना मद्भक्तान् व्यासनारदादींश्च विना तत्त्वतो वेदार्थं न कोऽपि वेदेत्याह । शब्दब्रह्मेति यावत्समाप्ति । स्वरूपतोऽर्थतश्च दुर्विज्ञेयं तच्च सूक्ष्मं स्थूलं चेति द्विविधं तत्र सूक्ष्मं तावत्स्वरूपतोऽपि दुर्ज्ञेयमित्याह । प्राणेन्द्रियमनोमयं प्रथमं प्राणमयं पराख्यम् आधारचक्रस्थं ततो मनोमयं पश्यन्त्याख्यं नाभावनाहतचक्रस्थम् उपलक्षणमेतत् बुद्धिमयं मध्यमाख्यं हृदये च मणिपूरकचक्रस्थं तत इन्द्रियमयं वैखर्याख्यं तस्य वाग्व्यञ्जकत्वेन वागिन्द्रियप्रधानत्वात् किञ्च अनन्तपारं प्राकृताप्राकृतप्राणमयस्य कालतो देशतश्चापरिच्छेदात् अर्थतोऽपि दुर्विज्ञेयत्वमाह । गम्भीरं गूढार्थम् अतो दुर्विगाह्यं तथा च श्रुतिः "चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहायां त्रीणि निहिता

गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च ।
त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट् ॥ ४१ ॥
किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥ ४२ ॥
मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ।
एतावान् सर्ववेदार्थः शब्द आस्थाय मां [१] भिदाम् ।
मायामात्रमनूद्यान्ते प्रतिषिध्य [२] प्रसीदति ॥ ४३ ॥

इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
एकविंशोऽध्यायः ॥ २१ ॥

भाषा टीका ।

इस लोक में यज्ञों से देवतों का भजन कर के स्वर्ग में जाकर रमण करेंगे उस पुण्य के समाप्त होने पर फिर यहां आकर बड़े घर वाले कुल में उत्पन्न होंगे ॥ ३३ ॥

इस प्रकार से फूल के से वचनों से जिन के मन विक्षिप्त हो रहे हैं वे मनुष्य अभिमानी हैं बड़े ढीठ हैं उन को मेरे प्रसंग की बात भी नहीं सुहाती है ॥ ३४ ॥

ये जो वेद हैं सो कर्म ब्रह्म देवता इन तीन कांड के प्रति पादन कर ने वाले हैं जितने वेद तथा ऋषि छिपा कर कहनेवाले हैं छिपा कर कहना मेरे को प्रिय है ॥ ३५ ॥

वेद रूपी जो शब्द ब्रह्म है सो बड़ा कठिन से जानने योग्य है परा पश्यन्ती मध्यमा वैखरी रूप है उस के पार का अन्त नहीं है बड़ा गंभीर है समुद्र सरीर का अथाह है ॥ ३६ ॥

अनन्त शक्ति वाले भूमा ब्रह्म मैने उस का विस्तार किया है वह वेद सब भूतों मे घोष रूप से प्रवृत्त है जैसे कि कमल नाल के भीतर तन्तु रहता है तैसे लक्षित होता है ॥ ३७ ॥

जैसे मकरी कीड़ा हृदय मे के सूत को मुख से उगिलता है तिसी प्रकार से शब्दवाला प्राण स्पर्श रूपी मन से वेद शब्द को पैदा करता है ॥ ३८ ॥

वह प्रभु परमात्मा छन्दो मय है अमृत मय है सो सहस्र पदवी वाली वेद वाणी को पैदा करता है ओंकार से प्रकाशित स्पर्श स्वर ऊष्मा अन्तस्था इन वर्णों से भूषित है ॥ ३९ ॥

नाना प्रकार की भाषाओं से फैली हुई है और एक-एक से चार चार अधिक अक्षरों से बनी है उस के पार-का अन्त नहीं है बड़ी भारी है उस को वह परमात्मा सृजता है फिर स्वयं प्रलय काल मे समेट लेता है ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेषु कतिचिच्छन्दांसि दर्शयति । गायत्रीति । तत्र चतुर्विंशत्यक्षरा गायत्री ततश्चतुरक्षरवृद्ध्योष्णिगादिच्छन्दांसि अत्यष्टिः अतिजगती अतिविराट् चेत्यर्थः । एतैश्छन्दोभिरुपलक्षितामिति पूर्वेणान्वयः अतो बृहत्यपि साकल्येन स्वरूपतो दुर्ज्ञेया इत्युक्तम ॥ ४१ ॥

अर्थतोऽपि दुर्ज्ञेयत्वमाह । किमिति । कर्मकाण्डे विधिवाक्यैः किं विधत्ते देवताकाण्डे मन्त्रवाक्यैः किमाचष्टे प्रकाशयति ज्ञानकाण्डे किमनूद्य विकल्पयेन्निषेधार्थमित्येव मदन्या हृदयं तात्पर्यं मत्तोऽन्यः कोऽप्यपि न वेद ॥ ४२ ॥

ननु तर्हि त्वं मत्कृपया कथय ओमिति कथयति । मामेव यज्ञरूपं विधत्ते मामेव तत्तद्देवतारूपमभिधत्ते न मत्तः पृथक् यदाऽऽकाशादिप्रपञ्चजातं "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिना विकल्प्यापोह्यते निराक्रियते सदप्यहमेव न मत्तः पृथगस्ति कुत इत्यपेक्षायां सर्ववेदार्थं संक्षेपतः कथयति एतावानेव सर्वेषां वेदानामर्थः तमेवाऽऽह । शब्दो वेदो मां परमार्थरूपमाश्रित्य भिदां मायामात्रमित्यनूद्य "नेह नानास्ति किंचनेति" प्रतिषिध्य प्रसीदति निवृत्तव्यापारो भवति अयं भावः यथाह्यङ्कुरे यो रसः स एव तद्विस्तारभूतनानाकाण्ड-शाखास्वपि तथैव पर्यवस्य योऽर्थः परमेश्वरः स एव तद्विस्ताररूपाणां सर्ववेदकाण्डशाखानामपि संगच्छते नान्य इति ॥ ४३ ॥

नित्यमुक्तः स्वतः सर्ववेदकृत्स्नैकवित् ।
स्वपरज्ञानदाता यस्तं वन्दे गुरुमीश्वरम् ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

१ माऽभिदाम् इति विज० पाठः । २ प्रधाऽस्यतीति वीर० विज० पाठः

श्रीराधारमणदासगोस्वामिविरचिता

दीपिकादीपिनी टिप्पणी

तत्र तेषु छन्दःसु मध्ये ॥ ४१ ॥

अतोऽनन्तपारत्वात् अनूद्यानुवादं कृत्वा । विकल्पयेत् भेदमारोपयेत् । अस्या वैखर्याः ॥ ४२ ॥

मां विधत्ते इत्यत्र कर्म । ओमित्यङ्गीकारे । कथयति काण्डत्रयस्य परमप्रतिपाद्यार्थं स्वमेव प्रतिपादयति श्रीकृष्णः । यज्ञरूपं यज्ञो वै विष्णुरिति श्रुतेः । कर्मकाण्डे विधिवाक्यैः यज्ञात्मकं मामेव विधत्ते । देवताकाण्डे देवतालिङ्गैर्मन्त्रैरिन्द्रवाय्वाद्यन्तर्यामिणं मामेवाभिधत्ते । "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति न्यायात् । विकल्प्याध्यारोप्य तदपोह्याकाशादिप्रपञ्चजातमपि परमार्थरूपं परमार्थसत्तारूपमाश्रित्य आकृष्य । मायामात्रं प्रतीतिमात्रम् । अनूद्यानुवादेनारोपं कृत्वा । तथा पर्यवसाने शुक्ति व्यञ्जनया आह अहम्भाव इति । किञ्चाख्यायसमाप्तौ मङ्गलमाचरति । नित्यमुक्त इति । स्वपरेति स्वविषयकं परविषयकञ्च ज्ञानं ददातीति तथा ॥ ४३ ॥

सर्ववैभवसम्पूर्णो हीनेन्तु श्वपचादपि ।
यः करोति दयालुं तं श्रीचैतन्यं समाश्रये ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकविंशोऽध्यायः ॥ २१ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

किमनूद्य कर्म विधत्ते किन्तत्त्वमाचष्टे इत्यर्थः । विकल्पयेदित्युपलक्षणं किंविकल्पेन विधत्ते किं समुच्चित्य विधत्ते किंसामान्यतो विधत्ते किंञ्चापवर्ग इति चार्थः मत् मत्तः ॥ ४२ ॥

मां विधत्ते मदाराधनरूपं कर्म विधत्ते विचष्टे मां मां तत्त्वं विचष्टे विकल्प्य श्रीहयवादिरूपोऽहमेव विकल्पेन प्रतिपादित इत्यर्थः अहं व्यपोह्यते व्यपोह्यमानमपि वस्तु मदात्मकमित्यर्थः शब्दो वेदः मां परमार्थरूपमाश्रित्य भिदां मायामात्रमनूद्य तत्त्वभावं जीवे प्रतिषिध्य जीवं मायाकारञ्च अन्ते काष्ठाभूते मयि प्रतिषिध्य प्रशाम्यति सर्वतत्त्वविलक्षणामत्प्रतिपादनेन पर्यवसितव्यापारो भवतीत्यर्थः ॥ ४३ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

छन्दांस्येव कानि चिद्दर्शयति । गायत्रीति । अत्यष्टिः अतिजगती विराट् चेति विभागः अयं च शब्दाभिमानकक्षो लौकिकवैदिकशब्दसाधारणः ॥ ४१ ॥

गम्भीरं दुर्विगाह्यमिति योक्तं तदेव प्रपञ्चयति । किं विधत्ते इति । किमाचष्टे किं तत्त्वमाचष्टे इत्यर्थः । किं विकल्पयेदित्युपलक्षणं किं विकल्पेन विधत्ते किं समुच्चित्य विधत्ते किं सामान्यतो विधत्ते किमापादयति किञ्चापवदतीति चार्थः । इतीत्थमस्या हृदयं तात्पर्यं मन्मत्तोऽन्यः कश्चिदपि न वेद ॥ ४२ ॥

तर्हि तस्या हृदयं प्रकाशयेत्यत्राह । मामिति । मां विधत्ते मदाराधनरूपं धर्मं विधत्ते मामेव सर्वशरीरकमभिधत्ते अभिधया वृत्त्या प्रतिपादयति यद्विकल्प्यापोह्यते तदप्यहमिति सम्बन्धः श्रीहयवादिरूपोऽहमेव विकल्पेन प्रतिपादितः अपोह्यमानमपि वस्तु मदात्मकमित्यर्थः । किम्बहुनेत्याह । एतावानिति । सर्वोऽपि वेदतात्पर्यविषयीभूतार्थः एतावानेव कियान् यः शब्दो वेदः मामाख्यायाश्रित्य तात्पर्यतो विषयीकृत्य भिदां देवमनुष्यादिभिदां मायामात्रं प्रकृतिमात्रमनूद्य तां जीवस्वरूपे प्रतिषिध्य जीवगतं चाकारमन्ते काष्ठाभूते मयि प्रतिषिध्य प्रशाम्यतीति सर्वतत्त्वविलक्षणामत्प्रतिपादनेन पर्यवसितव्यापारो भवतीत्येतावानेवेत्यर्थः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गायत्र्यादिच्छन्दसां क्रमोऽपि छन्दोविज्ञिरुक्तविध इत्याशयवानाह । गायत्रीति—

छन्दस्तु नवपादं यज्जगदित्युच्यते बुधैः ।

इतिवचनाज्जगन्नामकच्छन्दो नवपादात्मकमित्यर्थः ॥ ४१ ॥

मुख्यप्राणोऽपि मत्प्रसादादेव वेदार्थं जानाति मुख्यतः सर्ववेदार्थतत्त्वमहमेव जानामीत्याशयवानाह । किं विधत्त इति । विकल्पयेत् विविधरूपत्वेन कल्पयेत् लोके विद्वज्जनमध्ये मदन्यः कः पुरुषः इत्यस्याः श्रुतेः हृदयं तात्पर्यार्थं वेद कोऽपि न वेद वेत्को वायुर्मत्प्रसादाद्वेत्तीत्यर्थः ॥ ४२ ॥

सन्ध्यामुपासीतेत्यादेः सन्ध्योपासनादिविधिलक्षणमर्थमन्तरेणान्यमर्थं भगवान् कथं वेत्तीति तत्राह । मामिति । सन्ध्यामुपासीतेत्यादिविधिलक्षणो वेदो मामुद्दिश्य विधत्ते सन्ध्यावन्दनादेर्मद्विषयत्वात् ध्येयः सदा सवितृमण्डलमध्यवर्तीत्यादेः यदादित्यगतं तेजो जगद्भासयतेऽखिलमित्यादेश्च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिसत्यत्वादिगुणवाचको वेदः सत्यत्वादिगुणविशिष्टं मामभिधत्ते चत्वारि वागित्यादिषु वेदादिवाच्यत्वाद्वागात्मकं मां वागित्यनूद्य चत्वारीति विविधं कल्पयित्वा वासुदेवसंकर्षणादिरूपविशिष्टत्वेन ध्येय इति न सुरां पिबेद्ब्राह्मणो न हन्तव्य इत्याद्यपोहभागः सुर ऐश्वर्ये इति धातोः सुराणामैश्वर्यादिमद्गुणानां पानं मम स्यादिति चिन्तनं वेदैकवेद्यत्वेन ब्राह्मणो विष्णुर्नास्तीति चिन्तनमित्यादिमदप्रियमपोह्य निषिध्यात्मानमेव लोकमुपासीतेत्यादिमद्विषयोपासनं वेदतात्पर्यार्थं इत्यस्याः श्रुतेः हृदयमहमेव वेदेति गतेनान्वयः—

त्रिविभागे हरेः पूजैवाभिधाने च तद्गुणाः ।
विकल्पे तद्गुणत्वञ्चाप्यपोहे तु तदप्रियम् ॥
उच्यते सर्ववेदेषु तच्च वेद स एव हीति वचनात् ॥
सुरा इरेर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम् ।
सुरापानमिति प्रोक्तं तन्न कुर्यात्कथञ्चन ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीत्यभिचिन्तनम्।
ब्रह्महत्या समुद्दिष्टा तां न कुर्यात्कथञ्चन॥
इत्याद्यपोह्यवाक्यार्थश्छिन्द्यो विष्णुर्बुधैर्जनैः।

इतिवचनाच्च। न केवलं कतिपयवाक्यार्थः सर्ववेदार्थोऽप्येवमेवेति भावेनोपसंहरति। एतावानिति। कदा नु वेदस्य विभ्रम इति तत्राह। शब्द इति। निर्दोषः शब्दो वेदः मामिदां मामाश्रित्य सर्वावतारेषु भेदरहितो विष्णुरिति प्रतिष्ठाप्य मायामात्रं मदिच्छोद्भूतादृष्टनिर्मितं शरीरादिकं बन्धमनूद्य निरूप्य तस्य प्रतिषेधार्थमुपासनादिकं विधायान्ते मोक्षे ज्ञानोदयेन जीवस्य शरीरादिकं प्रतिषिध्य प्रशाम्यति हितमितसमुद्भवत्स्वभावोपाहितरूपेण तिष्ठतीत्यन्वयः। न भिदा यस्य सोऽभिदः अभिदश्चायमश्चेत्यभिदाः१ तमभिदाश्वम् इति ब्रह्मेति अनिषेधे पुमान्विष्णाविति यादवः प्रपञ्चनिषेधो वेदस्यार्थोऽनेनोच्यत इति मतम्—

सर्वावतारकरूपेषु निर्भेदत्वाददोषतः।
अभेदो विष्णुरुद्दिष्टस्तमेवोक्त्वा तदिच्छया॥
निर्मितं दैहिकं बन्धं तस्योपासनयैव तु।
प्रतिषिध्य विमोक्षे तु स्वभावोपाहितरूपतः॥
प्रतिष्ठास्यति वेदोऽयं वासुदेवैकसंश्रयः॥

इतिसमाख्यया निरस्तमिति ज्ञातव्यं विद्यात्मनि भिदाबोध इति भेदज्ञानस्य विद्यात्वोक्तेश्चेति॥ ४३॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकविंशोऽध्यायः॥ २१॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदेवं मदुत्पन्नस्य वेदस्य तात्पर्यज्ञश्चाहमेवेत्याह। किं विधत्त इति॥ ४२॥

परममतिगूढमाह श्रीकृष्णरूप एवेत्याह। मां विधत्त इत्यर्धेन। मदाराधनकर्तृत्वेनैव तदाज्ञाविधानादिकं कृत्वा मय्येव पर्यवस्यतीत्यर्थः तदेव दर्शयति। एतावानिति। यतः शब्दो वेदस्तदनुगतश्च स मायामात्रं जगत्प्रतिषिध्य भिदां मद्वचनारादिरूपां चानूद्य तदन्ते मां श्रीकृष्णरूपमेवास्थायावलम्ब्य प्रसीदति कृतकृत्यो भवति तदुक्तं श्रीगीतास्वपि वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहमिति॥ ४३॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकविंशोऽध्यायः॥ २१॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तेषु कानि चिच्छन्दांसि दर्शयति। गायत्रीति। तत्र चतुर्विंशत्यक्षरा गायत्री ततश्चतुरक्षरवृद्ध्या उष्णिगादिच्छन्दांसि अत्यष्टिरतिजगती विराट् चेत्यर्थः। एतैश्छन्दोभिरुपलक्षितामिति पूर्वेणान्वयः॥ ४१॥

बृहती स्वरूपतो दुर्ज्ञेयेत्युक्तम् अर्थतोऽपि दुर्ज्ञेयत्याह। किं विधत्ते श्रुत्या कर्तव्यत्वेन किं विधीयते स्वस्य हितार्थं जीवैरिदमेव कर्तव्यमिति किं कर्तुमादिश्यते इत्यर्थः। किमाचष्टे किमभिधत्ते श्रुत्या किमभिधीयते श्रुत्यर्थस्तावत्क इत्यर्थः। किमनूद्य विकल्पयेत इदमेकं वस्तु इदमपरं वस्तु इदमप्यन्यद्वस्त्विति त्रीणि वस्तूनि निर्दिश्य विकल्पयेत इदं वा कुर्यादिदं वा कुर्यादिति वक्ति तत्किमित्यर्थः। ननु अहरहः संध्यामुपासीत कर्मणा पितृलोक इति दर्शनात् कर्मैव श्रुतिर्विधत्ते चोदनालक्षणो धर्म इति व्याख्यानात् धर्म एव श्रुत्यर्थः व्रीहिभिर्वा यजेत यवैर्वा यजेतेति वैकल्पिको विधिरपि धर्मविषयक एव यद्वा भक्तियोगो निष्कामकर्मज्ञानयोगश्चानूद्य विकल्पितो यथा—

भक्तियोगश्च योगश्च मया मानव्युदीरितः॥
तयोरेकतरेणैव पुरुषः पुरुषं व्रजेदिति।

तत्र रे मूढा! नहि नहीत्याह। अस्याः श्रुतेः हृदयं तद्गतमभिप्रायं मदन्यो नैव कश्चन वेद प्रेयस्या अभिप्रेतमर्थं प्रेयांसं विना को वेदेति भावः॥ ४२॥

ननु तर्हि त्वमेव कृपया कथयेति तत्रोमित्याह। मां विधत्ते भक्तैर्मत्स्वरूपभूतत्वान्मद्भक्तिमेव कर्तव्यत्वेन विधत्ते इत्यर्थः। यागादिविधीनामपि मद्भक्तिविधान एव तात्पर्यात् धर्मो यस्यां मदात्मक इति मदुक्तेः अभिधत्ते मामिति मदेव सर्ववेदार्थ इत्यर्थः विकल्प्यापोह्यते ह्यहमिति योगास्त्रयो मया प्रोक्ता इत्युक्तेः काण्डत्रयेण कर्म ज्ञानं भक्तिश्चानूद्य कर्म कुर्यात् ज्ञानं वा अभ्यसेत् भक्तिं वा कुर्यादिति विकल्प्य पश्चादपोह्यते प्रथमं सकामकर्मापोह्य निष्कामकर्मकरणं ततो ज्ञानारूढत्वे सति निष्कामकर्मणोऽप्यपोहः ज्ञानसिद्धिदशायां ज्ञानमपि संन्यसेदित्युक्तेर्ज्ञानस्याप्यपोहः भक्तेरपोहस्तु न क्वापि समये न केनापि शास्त्रवाक्येन प्रतिपादितो दृष्ट इत्यतः कर्मज्ञानापोहावेवाहमपोह्य इत्युक्तं प्रथमपुरुष आर्षः कर्मज्ञानयोरपि स्वप्रापकमार्गत्वात्तत्राहमच्छब्दः प्रयुक्तः तस्य चिद्रूपत्वान्मायिकरूपत्वाच्च तत्र मायिकरूपस्यैवापोहो युज्यते न चिद्रूपस्य नन्वेतदपि किञ्चित् स्पष्टीकृत्य व्याचक्ष्वेत्यत आह एतावानिति। वेदात्मकः शब्दः मामास्थाय मद्भक्तियोगविधायकत्वेन मामेवाश्रित्य भिदां भक्तोऽपि भिन्नं कर्मयोगं ज्ञानयोगं च मायामात्रमनूद्येति कर्मयोगस्य त्रिगुणमयत्वेन त्वंपदार्थज्ञानपर्यन्ते ज्ञानयोगस्यापि विद्यामयस्य सात्त्विकत्वेन मायामात्रत्वम् अतोऽन्ते प्रतिषिध्य क्रमेण तद्द्वयमपोह्य प्रसीदति निर्गुणाया भक्तेस्तत्त्वमूलवल्याः फलस्य मन्माधुर्यानुभवरूपस्य रसेन सज्जनानामवन् स्वयमपि निर्वृणोतीत्यर्थः। ये त्वेवं व्याचक्षते मामेव कर्मकाण्डयज्ञरूपं विधत्ते मन्त्रवाक्यैर्देवताकाण्डे मामेवाभिधत्ते ज्ञानकाण्डे मत्तः पृथगाकाशादिकं विकल्प्य अपोह्यते तदप्यहमेव तस्मादेतावानेव सर्ववेदार्थः

---

१ हाहाधववत् आकारान्तः पुंलिङ्गोऽयम्।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शब्दो वेदः मां परमार्थरूपमाश्रित्य भिदां मायामात्रमित्यनूद्य नेह नानास्ति किञ्चनेति प्रसीदति निवृत्तव्यापारो भवतीति एतद्व्याख्यानेऽपि मायामात्रस्यैव प्रतिषेधोक्तेर्मत्कार्यां भक्त्युपकरणानां भगवल्लिङ्केतादीनां च मायागात्रत्वाभावान्न कापि क्षतिः ॥ ४३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे ऽश्चैकविंशः सङ्गतः सङ्गतः सताम् ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कानीत्याकाङ्क्षायां तेषु कतिचिद्दर्शयति । तत्र गायत्री चतुर्विंशत्यक्षरा उष्णिक् अष्टाविंशत्यक्षरा एवमाधिक्यमुत्तरोत्तरं ज्ञेयम् अतिजगत् अतिजगती ॥ ४१ ॥

वेदार्थमहमेव जानामि नान्य इत्याह । किमिति । अविरोधप्रकारेण किंविषयं विधत्ते तत्प्राप्त्युपाये च किमाचष्टे किमनूद्य विकल्पयेत् किं हेयमुपादेयं वोपक्रम्य विकल्पयेत् कार्यकारणभावेन विभज्य प्रतिपादयेत् अस्याः श्रुत्याः वाचो हृदयमाशयं मदन्यः कश्चन कोऽपि न वेद अत एवोक्तार्थबोधाय मत्स्वरूपाय आश्रयणीय इति भावः ॥ ४२ ॥

तर्हि मदनुग्रहाय भगवन् । तदर्थं कथयेत्यत्राह । मामिति । अविरोधप्रकारेण मामेव विधत्ते सर्वे वेदा यत्पदमामनन्तीति श्रुतेः कर्मज्ञानभक्त्यादिसाधनेषु अभ्याजमात्रेषु मामेव मत्प्राप्त्युपायमभिधत्ते यमेवैष वृणुते तेन लभ्य इति श्रुतेः यतो वा इमानि भूतानि जायन्ते इति विकल्प्य कार्यकारणभावेन विभज्य हि प्रसिद्धं कार्यं "यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिना हेयत्वमापोह्यते अहमुपादीयते इति शेषः तद्ब्रह्म तद्विजिज्ञासस्व कारणं तु ध्येयः निरञ्जनः परमं साम्यमुपैतीत्यादिभिः प्राप्यत्वेन स्वीक्रियते एतावान् सर्ववेदार्थो भवति फलितार्थमाह । शब्दो वेदः मायामात्रं प्रकृतिकार्यजातं जीवभोग्यं यतो वा इमानि भूतानि जायन्त इत्यादिनाऽनूद्य आद्यन्तवत्तया हेयत्वेनोक्त्वा पुनस्तद्ब्रह्म तद्विजिज्ञासस्वेत्यनेन मां नित्यानन्दघनं तत्पदार्थनियन्तारमाद्यावाभिधोपादेयतयाभिधाय अन्ते त्वम्पदार्थं या भिदा अब्रह्मात्मकत्वबुद्धिस्तां प्रतिषिध्य तत्त्वमसीति तादात्म्योपदेशेन निराकृत्य प्रसीदतीत्यन्वयः एतेन तत्त्वत्रयविषयो वेद इत्युक्तं तथा च श्रुतिः भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदिति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकविंशाध्यायार्थप्रकाशः ॥ २१ ॥

---

भाषा टीका ।

उन छंदों के नाम ये हैं गायत्री उष्णिक् अनुष्टुप् बृहती पंक्ति त्रिष्टुप् जगती अति जगती अत्यष्टी विराट् इत्यादि और भी नाम हैं ॥ ४१ ॥

यह वेद क्या कहता है क्या विधान करता है क्या अनुवाद करता है किसका विकल्प करता है इस प्रकार से इस वेद के अभिप्राय को मेरे बिना दूसरा कोई नहीं जानता है ॥ ४२ ॥

मेरे ही को विधान करता है मेरे ही को कहता है मेरे ही को विकल्प करता है तथा किसी रूप में अपवाद भी करता है इतनाहीं सब वेदों का अर्थ है कि वेद भेदको आश्रय करके प्राकृत पदार्थ को भगवान् की संकल्प रूपी माया को हेय रूप से अनुवाद करके परमात्मा के स्वरूप को बताकर निवृत्त होजाता है ॥ ४३ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध
इक्कीसवें अध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ २१ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

# अथ द्वाविंशोऽध्यायः ।

---

उद्धव उवाच ॥

कति तत्त्वानि विश्वेश ! संख्यातान्यृषिभिः प्रभो ! ।
नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम ॥ १ ॥
केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिम् ।
सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ॥ २ ॥
केचित्सप्तदश प्राहुः षोडशैके त्रयोदश ।
एतावत्त्वं हि संख्यानामृषयो यद्विवक्षया ।
गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥ ३ ॥

श्रीभगवानुवाच ॥

[1]युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ।
मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वाविंशे तत्त्वसंख्यानामविरोधविधोच्यते ।
पुंप्रकृत्योर्विवेकश्च जन्ममृत्युविधादि च ॥

तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य मोक्षपरत्वं निर्णीतम् सन्ति च मोक्षपरत्वेऽपि तत्त्वान्तरविवादाः तथाहि केचित्तत्त्वसंख्यासु विवदन्ते तत्रापि बाह्यार्थसदसत्त्वे आत्मत्वेऽप्येकत्वनानात्वादिषु तत्र किं सत्यमिति जिज्ञासया पृच्छति । कतीति । ऋषिभिरागमेषु बहुधा संख्यातानि तेषु कति युक्तानीत्यर्थः भगवन्मतानुवादपूर्वकं बहुधा संख्यानं प्रपञ्चयति । नवेति त्रिभिः । त्वं तावदष्टाविंशतितत्त्वान्यात्थ तानि च वयं शुश्रुम श्रुतवन्तः ॥ १-२ ॥

एतावतीनां भाव एतावत्त्वं नानात्वमित्यर्थः । यद्विवक्षया यत्प्रयोजनमभिप्रेत्य च गायन्ति आयुष्मन्नित्यमूर्ते । ॥ ३ ॥

विवक्षाभेदेन सर्वं युक्तमेव मायया च किं नाम न युक्तमित्याह । युक्तमिति । यथा ब्राह्मणा भाषन्ते तद्युक्तं न च वस्तुतः यस्मात्सन्ति सर्वत्रान्तर्भूतानि सर्वाणि तत्त्वानि किंच मायामिति असत्त्वेऽपि मायाश्रयत्वाद्घटत एवेत्यर्थः उद्गृह्य स्वीकृत्य नहि मरीचिजलपरिमाणादिविवादे किंचिदघटितमिव भवति॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी

अविरोधविधा अविरोधप्रकारः । विवेकः पृथगात्मत्वं । जन्ममृत्युविधा जन्ममरणप्रकारः । आदिना त्रैगुण्ये द्विविधसंसारादि । तदेवं मुख्यार्थघटनप्रकारेण तत्त्वान्तरविवादाः मोक्षोपयोगितत्त्वविषयकविवादाः । तथाहि विवादमेव स्फुटी करोति । तत्रापि च तत्त्वेष्वपि । बाह्यार्थसदसत्त्वे कार्यवस्तुनः सत्त्वासत्त्वनिरूपणे । विवदन्ते इति पूर्वेणैवान्वयः । तत्र तेषु विवादेषु । कतीत्यर्द्धकम् । युक्तानीत्यध्याहारादित्यर्थं इत्युक्तं नवेति युग्मकम् ॥ १—२ ॥

इदं प्रयोजनम् । आयुष्मन्निति नित्ययोगे मतुप् अत एव नित्यमूर्ते इति व्याख्यातम् ॥ ३ ॥

ब्राह्मणभाषणानुसारेणैव युक्तत्वं नतु परमार्थतः । युक्तत्वे हेतुर्यस्मादिति । वस्तुत्वाभावमाह किंचेति । सतोऽप्रतीतावसतः प्रतीतिकारिणी माया तदाश्रयत्वात् । यथा मरीचिजलमेव नास्ति किमुत तत्परिमाणादिविवादस्तथा ब्रह्मव्यतिरिक्तानि तत्त्वान्येव न सन्ति तत्संख्यायां कुतो विवाद इत्यर्थः ॥ ४ ॥

---

१ युक्तम् इति वीर० विज० पाठः

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कतीति तत्त्वापलापोऽस्ति नवेति प्रश्नाभिप्रायः॥ १—३ ॥

मायामुद्गृह्य प्रकृतिं स्वीकृत्य । किं नु दुर्घटं सर्वमुपपन्नम् अविरुद्धमित्यर्थः ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सांख्येन सर्वभावानां प्रतिलोमानुलोमतः भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति इति महदादितत्त्वविमर्शनतदुत्पत्त्यप्ययानुध्यानयोर्मनःप्रसादहेतुत्वमुक्तं तत्र तत्त्वानां न्यूनाधिकभावेन परिगणनात्तावदप्तानिर्दिधारयिषयोद्धवः पृच्छति । कतीत्यादिभिः सार्द्धैस्त्रिभिः । हे विश्वेश तत्त्वानि कतीति प्रश्नः तत्त्वापलापोऽस्ति नवेति प्रश्नाभिप्रायः तत्र हेतुतया वादिविप्रतिपत्तिमाह । सङ्ख्यातानीति । केश्चिदृषिभिस्तत्त्वानि नव सङ्ख्यातानि केश्चित्पञ्चविंशतिरेकादश केश्चित्पञ्च एवं तु माधामाश्रमनूषान्ते प्रतिषिध्य प्रशास्यतीति श्रीणि तत्त्वान्यास्थ उक्तवानसि इह तत्त्वविषये शुश्रुम इत्थं च बहून् वादान् शुश्रुम इत्यर्थः ॥ १ ॥

उक्तैर्वादैः समुच्चित्यान्यानपि वादान् दर्शयति । केचिदिति सार्द्धेन । सप्त नव षट् चत्वार्येकादशेत्यादीनि द्वितीयान्तानि ज्ञेयानि एके ऋषयः तथापरे ऋषयः ॥ २ ॥

आयुष्मन्निति मङ्गलाशासनविवक्षया सम्बोधनं शिष्टा हि भगवते मङ्गलमाशासते पृथक् पृथगेतावत्सङ्ख्यानं गणनं यद्विवक्षया यत्प्रयोजनमभिप्रेत्य गायन्ति वदन्ति तदिदं नोऽस्मभ्यं त्वं हि वक्तुमर्हसि सर्वज्ञस्त्वमेव जानासीति वक्तुमर्हसीत्यर्थः एवं हीति हिशब्देन सार्वज्ञ्यादिकल्याणगुणगणप्रसिद्धिः श्रौती द्योत्यते ॥ ३ ॥

न्यूनसंख्यावादिनामपि न तत्त्वापलापोऽभिप्रेत इत्यविरोध इति परिहरति । युक्तय इति । यथा ब्राह्मणा ऋषयो भाषन्ते तत्र सर्वत्र सर्वेषु पक्षेषु युक्तयः सन्ति सर्वेऽपि पक्षा युक्ता एवेत्यर्थः । मदीयां मायां प्रकृतिमुद्गृह्य स्वीकृत्य न्यूनाधिकत्वकारणतयाऽनुपगम्येत्यर्थः वदतां किं नु दुर्घटं सर्वमुपपन्नमविरुद्धमेवेत्यर्थः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवत्सृष्टानां तत्त्वानां संख्यानं जीवस्य हरेश्च भेदं निरूपयत्यस्मिन्नध्याये तत्रादौ भगवदुपदेशाज्ज्ञाततत्त्वस्वरूपोऽप्युद्धवः ऋषिभिस्तत्त्वानां बहुधा संख्यायमानत्वात् युक्तिं ज्ञातुकामः पृच्छति । कतीति । त्वं नवेत्यादीनि तत्त्वान्यास्थ वयञ्च शुश्रुम तत्र ऋषिभिः संख्यातानि तान्येव उत्तरार्धे ॥ १ ॥

संख्यानानि समाह । केचिदिति ॥ २ ॥

ऋषिभिस्तत्त्वानां संख्यानामेतावत्त्वं यद्विवक्षया कया युक्त्या पृथग्गायन्ति नोऽस्माकमिदं सयुक्तिकं वक्तुमर्हसि ॥ ३ ॥

ऋषय इति त्वयोक्तत्वात्सर्वेषु पक्षेषु युक्तिशङ्का न कार्येत्याशयेन परिहरति । युक्तय इति । यथा ब्राह्मणा वेदविचारकुशला ऋषयो भाषन्ते सर्वेषामेतासां प्रां वदन्ति तथा सर्वेषु पक्षेषु युक्तयः सन्तीत्यन्वयः स्वकपोलकल्पितत्वेन वदतां मतं प्रमाणं कथं स्यादिति तत्राह । मायामिति । मदीयां मायां मम सामर्थ्यमुद्गृह्य आलम्ब्य नानाविधां तत्तत्संख्यां वदताम् ऋषीणां मते किं नु दुर्घटं किमनुपपन्नं सर्वं प्रामाणिकमेवेत्यर्थः—

> विष्णोः सामर्थ्यमालम्ब्य तत्त्वसंख्यां मुनीश्वराः ।
> चक्रुर्हि तदविज्ञाय विवदन्त्यल्पबुद्धयः ॥
> तत्रापि कारणं विष्णोः शक्तिर्यस्याविकारतः ।
> अव्यक्तादेर्विकल्पोऽयं मनसः सम्प्रजायते ॥
> विरुद्धकल्पनं तच्च वासुदेवैकनिष्ठया ।
> निरहङ्कारता नश्येद्भवाब्धिका भयं हि तत् ॥

इतिवाक्याच्छ्रीनारायणसामर्थ्यमेव मायोच्यते नानिर्वाच्याविद्येति ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं कर्मकाण्डार्थं गुणीभूतमासाद्य स्वयं भगवत्पर्यन्तं ज्ञानकाण्डार्थं मुख्यतया यन्निश्चिकाय तत्र ज्ञानकाण्डार्थेऽप्यवान्तरविवादं परिहर्तुं पृच्छति । तत्र कतीत्यर्द्धकं टीकायां वाह्यार्थसद्सत्त्वे कार्यवस्तुनः सत्त्वासत्त्वनिरूपणे विवदन्त इति पूर्वेणान्वयः ॥ १—२ ॥

आयुष्मन्निति नित्ययोगे मतुप्प्रत्ययः ॥ ३ ॥

तत्र सर्वेणापि मतेन स्वमतमनुवादयंस्तत्तत्प्रशंसति । युक्तमिति । युक्तमेव भाषन्ते यतो ब्राह्मणा वेदज्ञास्ते सर्वत्र यथावदेव भाषन्ते ननु यदि सर्वमेव युक्तं तर्ह्यन्यमतानि परित्यज्य कथं स्वस्वमतं प्रवेशयेयुः तत्राह । मायामिति । मरुमरीचिकादीनामपि तावद्देशपरिच्छिन्नत्वात्परिमाणतारतम्यमस्त्येवेति श्रीभागवतविंशतिपद्यस्य स्थापनीयत्वमस्त्येवेति भावः । मायात्राचिन्त्यशक्तिं त्वसद्व्यञ्जिकाविद्या तामुद्गृह्यालम्ब्य तत्र मदीयामिति तेषां यत्किञ्चित्तदालम्बनात्तद्याः पूर्णाया मदेकाश्रयत्वात् स्वस्वैकदेशा यत्किञ्चिद्युक्तिस्तेष्वप्यस्ति किन्तु मदीययुक्तिरेव सर्वप्रकाशिकेति भावः ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

> द्वाविंशे तत्त्वसंख्यानां विरोधेऽप्यविरोधता ॥
> प्रधानपुंसोर्जिज्ञासा मृत्यूत्पत्त्योश्च वर्णिता ।

तदेवं कर्मकाण्डतात्पर्यमभिज्ञाय स्पष्टतयैव ज्ञानकाण्डतात्पर्यं जिज्ञासमानस्तदवान्तरविवादसमाधानाय पृच्छति । कतीति । ऋषिभिरिति तेषां बहुत्वात् मन्मते एतावन्तीति पृथक्पृथक् निश्चितानि तेषु कति युक्तानीत्यर्थः तत्र कति कति तत्त्वानि के के वदन्तीत्यपेक्षायामाह । नवेति त्रिभिः । ईश्वरो जीवो महदहङ्कारपञ्चमहाभूतानीति नव दशेन्द्रियाणि मनश्चेत्येकादश तन्मात्राणि पञ्च सत्त्वरजस्तमांसि त्रीणीत्येवमष्टाविंशति तत्त्वानि त्वमात्थ तानि शुश्रुम श्रुतवन्तो वयम् अत्र प्रकृतिस्थाने त्वया त्रयो गुणा एव गृहीताः तेभ्यः गुणेभ्य एव क्रमेण त्रिविधमहत्तत्त्वस्याहङ्कारस्य चोत्पत्तिदर्शनात्तद्गुणसाम्यरूपायाः प्रकृतेरिति स्वदभिप्रायोऽवगम्यते॥१।२

नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा ।
एवं विवदतां हेतुं [1] शक्तयो मे दुरत्ययाः ॥ ५ ॥
यासां व्यतिकरादासीद्विकल्पो वदतां पदम् ।
प्राप्ते शमदमेऽप्येति वादस्तमनु शाम्यति ॥ ६ ॥
परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ ! ।
पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥
एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च ।
पूर्वस्मिन् वा परस्मिन् वा तत्त्वे तत्त्वानि सर्वशः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतावतीनां भाव एतावत्त्वं नानात्वमित्यर्थः । यद्विवक्षया यत्प्रयोजनमभिप्रेत्य च गायन्ति हे आयुष्मन्निति नित्ययोगे मतुप् नित्यमूर्तित्वेन हे सर्वकालव्यापिन्नित्यर्थः । तेन तेषामृषीणामाद्यन्तमध्यवर्तित्वात्त्वमेव सर्वमताभिप्रायं विद्वान् प्रष्टव्य इति भावः ॥ ३ ॥

तेषां विवादेऽपि वस्तुतो न विवाद इत्याह । युक्तमिति । यथा ब्राह्मणा भाषन्ते तत् युक्तमेव यतः सन्ति सर्वत्रान्तर्भूतानि सर्वतत्त्वानि कस्तर्हि विवादे हेतुरितिचेन्मन्माया मोहि तत्त्वमेवेत्याह । मायामिति । तया तयोद्भाहसामर्थ्यमप्यावन्द्रार्कं मन्माययैव तेभ्यो ददातीति भावः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

येदं तत्त्वत्रयपरं श्रुत्वान्यानि तद्वान्तरतत्त्वानि पृच्छति । कतीति त्रिभिः । हे विश्वेश । हे सर्वेश्वर एष सर्वेश्वर इति श्रुतेः तत्त्वानि कति सन्तीति प्रश्नः तत्र तावत् एकोनविंशाध्याये भूतेषु अष्टाविंशतितत्त्वानि तेष्वपि परमकारणमेकं तत्त्वमुक्तवानसि पुनरिह पूर्वाध्याये त्वं त्रीणि तत्त्वान्यात्थ उक्तवानसि हे प्रभो ! इति सम्बोधनेन त्वन्मते श्रद्धावानस्मीति सूच्यते ऋषिभिस्तु केश्चित्पञ्च तत्त्वानि केश्चित्षड्विंशतितत्त्वानि व्याख्यातानि ॥ १ ॥ २ ॥

यद्विवक्षया यदभिप्रायेण एतावतीनां भावः एतावत्त्वं गायन्तीत्यन्वयः हे आयुष्मन् ! नित्यमूर्ते ! तदिदं पृथक् विविच्य नोऽस्माकं वक्तुमर्हसि ॥ ३ ॥

उत्तरमाह । युक्तय इत्यादिना । यथा ब्राह्मणाः उभयब्रह्मविदः भाषन्ते तथा सर्वत्र तत्तन्मतेषु युक्तयः सन्ति मदीयां मायां मुद्धूय मच्छक्तिं न्यूनाधिकतत्त्वसंख्याविवक्षानुसारतः स्वीकृत्य वदतां किन्तु दुर्घटं न किमपीत्यर्थः ॥ ४ ॥

---

भाषा टीका ।

उद्धव उवाच हे विश्वेश । हे प्रभो ! सब ऋषियों ने कित ने तत्त्व कहे हैं आपने तो नौ ग्यारा पांच तीन ऐसे अठाइस तत्त्व कहे हैं सो हमने सुने हैं ॥ १ ॥

कोई छब्बीस कहते हैं कोई पचीस कहते हैं कोई सात कहते हैं कोई छै कहते हैं कोई चार कहते हैं कोई ग्यारह कहते हैं ॥ २ ॥

कोई सतरा कहते हैं कोई शोलह कहते कोई तेरा कहते हैं इतने प्रकार की तत्त्वों की संख्या को ऋषि लोग जिस अभिप्राय से अलग अलग कहते हैं हे अनन्त आयुष्मन् ! इसका भेद आप मेरे से कहिये ॥ ३ ॥

श्री भगवान् उवाच जिस प्रकार से ब्रह्मज्ञानी मुनि कहते हैं वे सब युक्तही हैं क्योंकि इच्छा रूपी माया को ग्रहण करके कहने वालों को इन तत्त्वों में कुछ भी असंभव नहीं है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु यदि सर्वमपि युक्तं तर्हि कुतो विवादो यदि च मायैवालम्बनं तर्हि कुतो हेतुं प्रति विवादस्तत्राह । नैतदेवमिति । हेतुं प्रति च विवदमानानां मदीया दुरतिक्रमाः शक्तयः सत्त्वाद्या अन्तःकरणवृत्तिविशेषरूपेण परिणता एव हेतुरित्यर्थः ॥ ५ ॥

तासां विवादहेतुत्वमुपपादयति । यासामिति । यासां व्यतिकरात्क्षोभाद्वदतां पदं विषयो विकल्पो भेद आसीत्कल्पः कल्पान्तुशिविकल्पो वा तन्मूलभूतः एतदेव व्यतिरेकेण द्रढयति । शमदमयोर्लक्षणम् तस्मिन् प्राप्ते विकल्पोऽप्येति लीयते तं च विकल्पनाशमनु वादः शाम्यतीति ॥ ६ ॥

सन्ति सर्वत्रेति यदुक्तं तत्प्रपञ्चयति । परस्परेति द्वाभ्याम् । अन्योऽन्यस्मिन्ननुप्रवेशाद्वक्तुर्यथा विवक्षितं तथा पूर्वं कारणमपरं कार्यं कार्यकारणभावेन प्रसंख्यानं भवति यद्वा पूर्वा अल्पसंख्या पराधिकसंख्या तयोर्भावः पौर्वापर्यं तेन प्रसंख्यानं गणनमिति ॥ ७ ॥

अनुप्रवेशं दर्शयति । एकस्मिन्नपीति । पूर्वस्मिन् कारणभूते तत्त्वे कार्यतत्त्वानि सूक्ष्मरूपेण प्रविष्टानि मृदि घटवत् अपरस्मिन् कार्यतत्त्वे कारणतत्त्वान्यनुगतत्वेन प्रविष्टानि घटे मृद्वत् ॥ ८ ॥

---

[1] हेतुरिति वीर० विज० पाठः

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

हेतुं युक्तिं प्रति । यद्वा । हेतुं कारणं प्रति जातावेक-वचनं समुदितानां हेतुत्वाद्धेतुरित्येकवचनम् ॥ ५ ॥

तासां शक्तीनां यासां सत्त्वादिशक्तीनां भेदमुद्दिश्य वाद-प्रवृत्तेः वादस्य भेदो विषयः प्रपञ्चात्मकमेव व्यतिरेकेण विकल्पाभावे वादाभावरूपेण शमश्च बुद्धेर्भगवन्निष्ठता दमश्च बाह्येन्द्रियनिग्रहः तस्मिन् प्राप्ते सति सर्वविलक्षणेश्वरत-त्त्वमात्राग्रहात्तादमूलो विकल्पो क्षीयते अपगच्छति विकल्प-मनुवादकारणीभूतविकल्पनाशानन्तरम् ॥ ६ ॥

कार्यकारणयोरन्योन्यप्रवेश एव विवक्षितो ननु कार्य-कारणभावेन प्रसङ्ख्यानमतो यदीति तथा चाल्पायाः सङ्ख्यायाः प्रथमोपस्थितत्वात् पूर्वत्वमाधिकतर सङ्ख्यायाः पश्चादुप-स्थितत्वादुपरत्वं तेन गणनम् ॥ ७ ॥

सूक्ष्मरूपेणेति यदि कार्यस्य सूक्ष्मरूपेण कारणे स्थितिर्न स्यात्तदा तत्र तस्यासत्त्वदृत्त्वादुत्पत्त्याद्यनुपपत्तेरित्यर्थः । अनु-गतत्वेन व्यापकत्वेन ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हेतुपक्षस्य: हेतुसामर्थ्यानि दुरत्ययाः केवलयुक्त्योऽप्रतिष्ठिता इत्यर्थः ॥ ५—६ ॥

व्यतिकरात् प्रावरवदौर्वल्याविवेकात् न्यूनसंख्यावादिनामपि न तत्त्वापलापोऽभिप्रेतः अपि तु उक्तेष्वनुक्ततत्त्वान्तर्भावोऽभिप्रेत इत्यविरोध इति परिहरति । परस्परानुप्रवेशादिति ॥ ७ ॥

एकस्मिन् काष्ठादौ अग्न्यादयः प्रविष्टा दृश्यन्ते अतस्त-त्त्वान्तर्भावो युक्त इत्याह । पूर्वस्मिन् वेति ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतो यत्संख्यानमात्थ विरुद्धमित्युक्तवानसि तदेतदेवं न विरुद्धं भवति यत्संख्यानं तत्तथाऽविरुद्धं यथा भवति तत्तथाह वच्मि वदतामिति कृत्स्नं युक्तनानाविधत्वाद्धेतुरित्यत आह । एवमिति एवं विवदतां हेतुरनेकविधत्वाद्धेतुः दुरत्यया दुरतिक्रमणीयाः मम शक्तय एव सर्वत्रानुगन्तव्या इत्यर्थः । शक्तयोऽत्र प्रकृतिपुरुष-कालमहदहङ्कारादयः प्रकृत्यादीनामात्मशक्तित्वं कार्योपयुक्तत्वे सत्यात्माऽपृथक्सिद्धविशेषणत्वेनान्वगन्तव्यं तदेव हि शक्ति-शब्दप्रवृत्तिनिमित्तम् ॥ ५ ॥

शक्तीनां हेतुत्वमेवोपपादयति । यासामिति । यासां शक्तीनां व्यतिकराद्विवदतां वादिनां पदं विषयः विकल्पः पक्षभेद आसीत् व्यतिकरोऽन्योऽन्यस्मिन्नन्तर्भावः अयमव्यतिकरत्वाद्युप-लक्षणम् अन्तर्भावानन्तर्भावाभ्यां न्यूनाधिकतत्त्वप्रसंख्याने वाद-भेदः प्रवर्तत इत्यर्थः । स तर्हि कदा निवर्तते इत्यत्राह । प्राप्त इति । शमदमयोर्द्वन्द्वैक्यं तस्मिन् प्राप्ते सति विकल्पोऽप्येति विली-यते समपियन्तं विकल्पमनु वादः प्रशाम्यति शमदमादिसम्प-न्नस्य सर्वं चिदचिदात्मकं जगन्मच्छरीरत्वेन पश्यतो न विकल्प-वादी इव इत्यर्थः ॥ ६ ॥

यासां व्यतिकरादासीद्विकल्प इत्येतदेव प्रपञ्चयति । परस्प-रेति । हे पुरुषर्षभ ! तत्त्वानां परस्परानुप्रवेशादिति व्यतिकरणो-क्तार्थं उक्तः वक्तुर्वादिना यथा विवक्षितं तथा पौर्वापर्यप्रसंख्यानं पूर्वाल्पसंख्या अपरा अधिकसंख्या तयोर्भावः पौर्वापर्यं तेन गणनं भवति ॥ ७ ॥

नन्वन्यस्मिन्नन्यस्यान्तर्भावः किं क्वचिद्दृष्टचरः तत्राह । एक-स्मिन्निति । एकस्मिन् काष्ठादौ इतराण्यग्निजलादीनि प्रविष्टानि दृश्यन्तेऽतस्तत्त्वान्तर्भावो युक्त इत्याह । पूर्वस्मिन् कारणभूते पर-स्मिन् कार्यभूते वा तत्त्वे सर्वशः सर्वाणि तत्त्वानि प्रविष्टानि यथा मृदि कारणभूतायां घटादयः सूक्ष्मरूपेण प्रविष्टाः यथा च घटादौ कार्यभूते मृदादिकङ्कारणभूतमनुगतत्वेन प्रविष्टं तद्व-दिति भावः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु प्रामाणिकं लौकिकमिति विप्रतिपद्यन्ते इत्याशङ्क्य तन्म-तत्स्वापरिज्ञानादिति भावेनाह । नैतदिति । त्वं यथात्थ एतदेव न भवति दुष्टत्वादहं यद्वच्मि तत्तथा निर्दोषत्वादिति तदवि-ज्ञाय विवदन्त्यल्पबुद्धयः इत्यत्रापि मच्छक्तिरेव हेतुरित्याह । एवमिति । तत्रापि कारणं विष्णोः शक्तिरिति ॥ ५ ॥

सत्त्वादिभेदेन यासामिति बहुवचनं यासां मच्छक्तीनां सकाशाज्जाताव्यक्तादितत्त्वानां व्यक्तादितत्त्वानां व्यतिकरा-द्विकारान्मनसो यो विकल्पः विरुद्धकल्पो मिथ्याज्ञानलक्षणः स एव विवदतां विवदमानानां पदमाश्रय आसीत् तत्त्वसं-ख्याविवक्षाभेदेन बहुविधान्मनोविकाराद्भवतीत्यर्थः । यस्या विका-रतः अव्यक्तादेर्विकल्पोऽयं मनसः सम्प्रजायते विरुद्धकल्पन-मिति कदा नु विकल्पोपशम इत्यत आह । प्राप्त इति । दमः इन्द्रियनिग्रहः तद्द्वारा शमे प्राप्ते मन्निष्ठायां प्रवृद्धायां स विकल्पो ऽप्येति नश्यति तमनु विकल्पनाशानन्तरं विवादोऽपि शाम्यति तच्च वासुदेवैकनिष्ठया निरहङ्कारया नश्येत् विवा-दैकाश्रयं हि तदिति ॥ ६ ॥

तत्त्वानामनेकविधसंख्याने युक्तिमाह । परस्परानुप्रवेशा-दिति । कार्यकारणरूपाणां तत्त्वानां परस्परानुप्रवेशात् कारणेषु कार्यानुप्रवेशात् क्वचित्कार्येषु कारणानुप्रवेशात् अन्तर्भावाच्च तथा प्रवेशेन पृथगेवावस्थानाच्च पौर्वापर्यप्रसंख्यानं न्यूनाधि-कत्वेन तत्त्वानां गणनं वक्तुर्विवक्षितं यथा तथा क्रियते पूर्वा संख्या अल्पा अपरा बह्वी तत्सम्बन्धित्वं पौर्वापर्यम् ॥ ७ ॥

एतदेव विवृणोति । एकस्मिन्निति । इतराणि तत्त्वानि एकस्मिन् पूर्वस्मिन् कारणे तत्त्वे अपरस्मिन् कार्ये तत्त्वे वा प्रविष्टानि दृश्यन्तेऽपि यस्मात्तस्मादमीषां तत्त्वानां गणनाभिकृतां पौर्वापर्यं पूर्वापरसम्बन्धिप्रसंख्यानमपि युज्यत इत्यर्थः । नन्विदमार्षमतं तव चित्तेऽङ्गीकार्यमुत नेति तत्राह । वदतीति । ऋषिभिरुक्तमिदं यथावदेव विविक्तं पृथक् पृथक् स्पष्टम् अत एव युक्तं चेति । यद्यस्मात्तस्माद्बुद्धिमः हेतुं स्पष्टयति । युक्तिसम्भवादिति । यदुक्तं यथा विविक्तं तत्तथा बुद्धिमः कुतो युक्तिसम्भवादिति वा ॥ ८—९ ॥

---

**पौर्वापर्यमतोऽमीषां प्रसंख्यानमभीप्सताम् ।**
**यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसम्भवात् ॥ ६ ॥**

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तथैवाह । नैतदिति । मम शक्तयो नानातर्करूपा एव हेतव इत्यर्थः ॥ ५ ॥

तदेव योजयति । यासामाचिन्त्यानां शक्तीनामेव व्यतिकरा-दासङ्गाद्धेतोः सर्वोऽपि विकल्पो मतभेदो भेदमात्रं वा वदतां वा विवशो भवति स तु विकल्पः शमदमे मन्निष्ठान्तःकरण-विहितवाह्येन्द्रियनिग्रहे प्राप्ते सति लीयते अपगच्छति सर्वविल-क्षणेश्वरतत्त्वमात्राग्रहात् ततः स्वत एव तदनुवादः शाम्य-तीति ॥ ६ ॥

वक्तुर्यथा विवक्षितं तथा प्रसंख्यानं भवतीति शेषः ॥ ७ ॥

एकस्मिन् तत्त्वे इतराणि तत्त्वानि प्रविष्टानि दृश्यन्ते एक-स्मिन् पूर्वस्मिन् परस्मिन् वेत्यन्वयः यथेत्यतदधिकमाशावध्याहृत्य पूर्वस्मिन् कारण इत्यादिटीका योज्या ॥ ८—९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विवादमभिनयेन दर्शयति । नैतदिति । विवदतां तेषां विवादे तु मच्छक्तयो माया शक्तिवृत्तय एव तत्तत्तर्करूपा अविद्या एवेत्यर्थः यदुक्तं हंसगुह्ये—

यच्छक्तयो वदतां वादिनां वा विवादसंवादभुवो भवन्ति ।
कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥

इति ॥ ५ ॥

व्यतिकरादासङ्गाद्विकल्पः एवं वा एवं वा एवं नेत्येवं सहस्रविधः विवादास्पदं किञ्च शमश्च दमश्चेति द्वन्द्वैक्यं तस्मिन् प्राप्ते सति शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयम इत्युक्ते-र्मय्यात्मन्निष्ठबुद्धित्वे सति इन्द्रियसंयमे अहङ्कारोपरमे विक-ल्पोऽप्येति सर्वः संशयो नश्यति तमनु तत्पश्चाद्वादः विवा-दश्च शाम्यति ॥ ६ ॥

सन्ति सर्वत्रेति यदुक्तं तत्प्रपञ्चयति । परस्परेति द्वाभ्याम् परस्परस्मिन् तत्त्वानामनुप्रवेशात् पौर्वापर्यं भवति मतभेदेषु मध्ये कस्मिंश्चिन्मते कार्यस्य कारणे प्रवेशात् पूर्वत्वं कस्मिं-श्चिन्मते कारणस्य कार्ये प्रवेशादपरत्वं ततश्च प्रकृष्टं न्यूनम-धिकं वा संख्यानं स्यात् पौर्वापर्यं च प्रसंख्यानं चेति द्वन्द्वैक्यं ननु तत्त्वानां कारणे कार्ये वा किं प्रवेशेन संख्याया न्यूनत्वे प्रकर्षेण आधिक्ये वा किं तत्राह । वक्तुर्वादिनो यथा विव-क्षितं वक्तुमभीष्टं तथैव तत्तन्मतं पृथगभूदित्यर्थः ॥ ७ ॥

एतत्श्लोकार्थं विवृणोति । एकस्मिन्नपीति द्वाभ्याम् पूर्वस्मिन् कारणभूते तत्त्वे कार्यतत्त्वानि सूक्ष्मरूपेण प्रविष्टानि मृदि घटवत् अपरस्मिन् कार्यतत्त्वे कारणतत्त्वानि अनुगतत्वेन प्रविष्टानि घटे मृद्वत् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वस्वपक्षेऽतिदुराग्रहेण विवदताम् मे शक्तयः प्रकृतिमह-दाद्याः हेतुः वादे निमित्तम् ॥ ५ ॥

यतो यासां व्यतिकरात् परिणामात् वदतां पक्षाश्रयः विक-ल्पः आसीत् दुराग्रहादिसर्वदोषघातिपरतत्त्वनिष्ठा शमः तद्बुद्ध्या-नार्थेन्द्रियनिग्रहो दमः शमदमयोर्द्वन्द्वैक्यं तस्मिन् प्राप्ते सति विकल्पोऽप्येति विलीयते तमनु वादः शाम्यति पक्षपाताभा-वात् ॥ ६ ॥

युक्तयः सन्ति सर्वत्रेति यदुक्तं तत्प्रपञ्चयति । परस्परेति त्रिभिः । हे पुरुषर्षभ । तत्त्वानामन्योऽन्यस्मिन् अनुप्रवेशात् वक्तुर्वादिनो यथा विवक्षितं तथा पौर्वापर्यप्रसंख्यानम् पूर्वाल्पा अपराधिका संख्या, तयोर्भावस्तत्त्वं तेन गणनं भवति ॥ ७ ॥

परस्परानुप्रवेशं दर्शयति । एकस्मिन्निति । एकस्मिन्नपि पूर्वस्मिन् कारणे तत्त्वे इतराणि कार्यभूतानि सर्वशः सर्वाणि तत्त्वानि सूक्ष्मरूपेण प्रविष्टानि अपरस्मिन् कार्यभूते इतराणि कारण-तत्त्वानि च दृश्यन्ते ॥ ८ ॥

---

भाषा टीका

जैसा तुम कहते हो तैसा नहीं है जैसा मैं कहता हूं सोई ठीक है ऐसे विवाद करने वाले पुरुषों के लिये मेरी दुस्तर शक्ति ही हेतु होजाती हैं ॥ ५ ॥

जिन शक्तियों के संक्षोभ होने से कहने वालोंका आश्रय भेद होगया है उनहीं को जब शम दम प्राप्त होजाता है तब वह विकल्प चला जाता है उसी के पीछे विवाद भी शान्त हो जाता है ॥ ६ ॥

हे पुरुषर्षभ ! तत्त्वों के परस्पर मे प्रवेश होनेसे थोड़ी बहुत की संख्या होजाती है जैसी वक्ताकी इच्छा होवे तैसी संख्या होजाती है ॥ ७ ॥

एकही तत्त्व मेंही औरभी तत्त्व प्रवेश हुये दीखते हैं पूर्व कारण मे अथवा परकार्यमे सब में सब तत्त्व दीखते हैं ॥ ८ ॥

---

श्रीवरस्वामिकृतभावार्थदीपिका ।

अविरोधमुपसंहरति । अतोऽमीषां तत्त्वानां पौर्वापर्यं तत्कार्यकारणभावं प्रसंख्यानं च न्यूनाधिकमभीप्सतां वादिनां मध्ये यथा विवक्षया यद्वक्त्रं यस्य मुखं प्रवर्तते तत्सर्वं विविक्तं निश्चितं वयं गृह्णीमः उक्तन्यायेन सर्वत्र युक्तेः सम्भवात् ॥ ९ ॥

अनाद्यविद्यायुक्तस्य पुरुषस्याऽऽत्मवेदनम् ।
स्वतो न सम्भवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् ॥ १० ॥
पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ।
तदन्यकल्पनापार्था ज्ञानं च प्रकृतेर्गुणः ॥ ११ ॥
प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः ।
सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

ननु कार्यकारणतत्त्वानां पृथक्त्वापृथक्त्वविवक्षया भवतु नाम संख्याभेदः जीवेश्वरयोस्तु कथं भेदाभेदविवक्षा यथा षड्विंशतिपञ्चविंशतिपक्षौ प्रवृत्तावत आह। अनादीति। स्वतो न सम्भवत्यतस्तु सम्भवात्स्वतः सर्वज्ञः परमेश्वरोऽन्यो भवितव्य इति षड्विंशतिपक्षाभिप्राय इत्यर्थः ॥ १० ॥

कथं तर्हि पञ्चविंशतिपक्षस्तत्राऽऽह। पुरुषेति। वैलक्षण्यं विसदृशत्वं नास्ति, द्वयोरपि चिद्रूपत्वात्ततस्तयोरत्यन्तमन्यत्वकल्पना अपार्था व्यर्था एवं पञ्चविंशतिपक्षः प्रवृत्त इत्यर्थः। नन्वेवमपीश्वरस्वभावज्ञानस्य पृथक्त्वात्पक्षद्वयमपि न घटतेऽत आह। ज्ञानं चेति। सत्त्वगुणवृत्तित्वात्तदन्तर्भूतमित्यर्थः ॥ ११ ॥

ननु ज्ञानं जीवधर्मः कथं प्रकृतेर्गुणः स्यादत आह। प्रकृतिरिति। गुणसाम्यं हि प्रकृतिस्ततस्तद्विशेषरूपा गुणास्तस्या एव न त्वात्मनो जीवस्य अकर्तृत्वात्तस्य स्थित्यादिहेतुभूतगुणाश्रयत्वानुपपत्तेः ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

अतोऽन्योन्यप्रवेशात्। यथा विवक्षया अल्पाधिकविवक्षया वक्तृ वादिनः तत् सर्वं कार्यकारणत्वं न्यूनाधिकत्वञ्च। उक्तन्यायेन कार्यकारणयोरन्योऽन्यप्रवेशसिद्धान्तेन। सर्वत्र अल्पसंख्यायामधिकसंख्यायाञ्च ॥ ९ ॥

कथमिति जीवस्य कार्येऽनित्यत्वापत्तेः प्रवेशासम्भवादित्यर्थः। यथा भेदाभेदविवक्षया आत्मवेदनमपि न सम्भवति कुतः परमात्मवेदनमित्यर्थः। जीवादन्यतः परमात्मनस्तु ईश्वराख्यपरमात्मपर्यन्तज्ञानसम्भवात् ॥ १० ॥

अत्रैषु तत्त्वेषु मध्ये [illegible] चिद्रूपत्वे विसदृशत्वं नास्ति विभुत्वाणुत्वादिवैशिष्ट्यमस्त्येवेत्यर्थः। किन्तु वैशिष्ट्यं योगमतादिकानामेतन्मतमिति ज्ञेयम्। अतश्चिन्मात्ररूपत्वेनावैशिष्ट्यात्। अत्यन्तमिति व्यक्तिद्वयेनान्यत्वमस्त्येव चिन्मात्ररूपत्वेन न त्वैक्यमेवेत्यर्थः। पक्षद्वयमपि न घटतेति ज्ञानतत्त्वस्य पार्थक्ये पञ्चविंशतिपक्षे षड्विंशतिपक्षप्रसक्तिः षड्विंशतिपक्षे सप्तविंशतिपक्षप्रसक्तिरित्येवं पक्षद्वयमपि न सङ्गच्छत इत्यर्थः। सत्त्वगुणवृत्तित्वात् सत्त्वगुणकार्यत्वात् तदन्तर्भूतं प्रकृत्यन्तर्गतमित्यर्थः तथाच पक्षद्वयेऽपि न तत्त्ववृद्धिरिति भावः ॥ ११ ॥

अतः प्रकृतेर्गुणसाम्यत्वात् तद्विशेषरूपाः प्रकृतेः क्षोभेण तत्कार्यरूपाः सत्त्वादयो गुणाः प्रकृतेरेव धर्मास्तथा च सत्त्वात् सञ्जायते ज्ञानमित्युक्तेर्ज्ञानं प्रकृतेरेव धर्मो न त्वात्मनः तस्य जीवस्याकर्तृत्वाद्गुणानाञ्च स्थित्यादिहेतुभूतत्वात्तदाश्रयत्वमकर्तुर्जीवस्य न सम्भवतीति गुणानां तत्कार्यज्ञानादीनां च प्रकृतेरेव धर्मत्वं न जीवस्येत्यर्थः ॥ १२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

पौर्वापर्यमिति। व्यवहितस्यानन्तरोक्तियुक्ता व्यवधायकस्य तत्त्वस्य पूर्वस्मिन्नन्तर्भावात् अत एव संख्यान्यूनाधिकभावाश्चाविरुद्धा इत्यर्थः ॥ ९ ॥

अन्य इति। अन्यः परमात्मा स्वतो ज्ञः स्वत एव च सर्वज्ञः ज्ञानप्रदश्चेत्यर्थः ॥ १० ॥

यदा जीवः परमात्मप्रसादलब्धज्ञानतया सर्वज्ञः तदा मुक्तावस्थायां जीवपरयोर्ज्ञत्वसर्वज्ञत्वरूपवैषम्यकल्पना यद्वा स्वनिष्ठभेदकल्पना आपार्था अर्थशून्या स्वनिष्ठात्मभेदो नास्तीत्यर्थः स्वातन्त्र्यग्रहहेतुरज्ञानञ्च प्रकृतेः संसर्गोपाधिकम् अतस्तन्निवृत्तावज्ञानं निवर्तत इत्यभिप्रायेणाह। अज्ञानं च प्रकृतेर्गुण इति प्रकृतेः कार्यभूतमित्यर्थः ज्ञानञ्चेति पदच्छेदे भ्रान्तिज्ञानमित्यर्थः ॥ ११ ॥

प्रकृतेर्नात्मनो गुणाः ॥ १२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उपपादितमविरोधमुपसंहरति। पौर्वापर्यमिति। अतोऽमीषां तत्त्वानां पौर्वापर्यं न्यूनाधिकसंख्यत्वं यथा तथा प्रसंख्यानं गणनमभीप्सतां वादिनां मध्ये यस्य वक्तुं मुखं यथा विवक्षा विवक्षानुसारं प्रवर्तते तत्सर्वं गृह्णीमः अनुमन्यामहे कुतः युक्तिसम्भवात् अन्तर्भावात्मकयुक्तेः सम्भवात् विविक्तामिति पाठे वक्तृ वक्तुं यथा वदति तद्विविक्तं निश्चितं गृह्णीम इत्यर्थः ॥ ९ ॥

तत्र परस्परानुप्रवेशपक्षे कति तत्त्वानीत्यभिप्रायमाश्रित्य प्राकृतानि तत्त्वानि चतुर्विंशतिसंख्यानि जीवात्मपरमात्मानौ द्वाविति सम्भूय षड्विंशतिरित्यभिप्रेत्य जीवपरयोः स्वरूपभेदं तावत्प्रतिक्षिपति। अनाद्यविद्यायुक्तस्येति। अनादिरविद्याऽज्ञानं देहात्मभ्रमस्वतन्त्रात्मभ्रममूलं तद्युक्तस्य पुरुषस्य जीवस्य स्वत एवात्मवेदनं स्वपरयाथात्म्यज्ञानं न सम्भवेत् किन्त्वन्यः पुरुषादन्यो यः स्वतः ज्ञः स्वत एव सर्वज्ञः स एव पुरुषस्य ज्ञानदः स्वपरयाथात्म्यज्ञानप्रदो भवेत् अयं भावः वैधर्म्यमेव हि स्वरूपभेदा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्दं तत्र जीवस्यानाद्यविद्यायोगस्तत्प्रयुक्तः संसारश्च परमात्मनस्तु स्वतः सार्वज्ञ्यं सार्वज्ञ्याद्यहत्वं चेतीदं वैधर्म्यं तयोः स्वरूपाभेदं वारयतीति तौ भिन्नावेव "ज्ञाज्ञौ द्वावजावीशानीशा" विति श्रुतेरिति भावः ॥ १० ॥

कथं तर्हि पञ्चविंशतितत्त्वप्रसंख्यानपक्षप्रवृत्तिरित्यभिप्रायमाशङ्क्याह । पुरुषेश्वरयोरिति । अत्रैवं वैधर्म्ये सति पुरुषेश्वरयोरण्वीषदपि वैलक्षण्यं वैधर्म्यं नास्ति निषेधस्य विहितव्यतिरिक्तविषयत्वात्स्वरूपतः स्वभावतश्च वैलक्षण्यं नास्ति उभयोरपि ज्ञानरूपत्वात् ज्ञानगुणकत्वाच्चेति भावः ज्ञत्वाज्ञत्वाणुत्वविभुत्वादिरूपवैधर्म्येऽपि ज्ञानस्वरूपत्वज्ञानगुणकत्वादिसाधर्म्यान्मुक्त्यवस्थायां परमसाम्याच्च जीवस्य परमात्मांशत्वेन तदपृथक्सिद्धत्वविवक्षया च जीवपरयोरेकत्वविवक्षया पञ्चविंशतितत्त्वप्रसंख्यानपक्षप्रवृत्तिरिति भावः एतदेव स्पष्टयति तदन्यति तदन्यकल्पना जीवपरयोरज्ञत्वसर्वज्ञत्वकल्पनारूपवैषम्यकल्पना यद्वा स्वनिष्ठभेदकल्पनाऽपार्थार्थशून्या स्वनिष्ठात्मभेदो नास्तीत्यर्थः । न वैलक्षण्यमणवपीति निषेध्यः स्वनिष्ठात्मभेद एवेति भावः । जीवस्य स्वातन्त्र्यग्रहणहेतुरज्ञानं च प्रकृतेः संसर्गोपाधिकमतस्तन्निवृत्त्याऽज्ञानं निवर्तत इत्यभिप्रायेणाह । अज्ञानं च प्रकृतेर्गुणाः प्रकृतेः कार्यभूतमित्यर्थः ज्ञानं चेति छेदे भ्रान्तिज्ञानमित्यर्थः परमात्मप्रसादात्प्रकृतिकार्याज्ञाननिवृत्तौ मुक्त्यवस्थायामज्ञत्वसर्वज्ञत्वरूपवैलक्षण्याभावाज्ज्ञानस्वरूपस्वभावत्वरूपसाम्याज्जीवपरयोरेकतत्त्वतेति पञ्चविंशति तत्त्ववाद्यभिप्राय इति भावः ॥ ११ ॥

नन्वेवमपि सत्त्वादिगुणकृतवैलक्षण्यमस्त्येवेत्यत आह । प्रकृतिरिति । गुणसाम्यावस्थमचिद्द्रव्यमेव प्रकृतिरतः सत्त्वादयो जगत्स्थित्यादिहेतवः प्रकृतेरेव गुणाः नत्वात्मनः सत्त्वादीनां प्रकृतिगुणत्वकथनेन तेषां तदन्तर्भावात् पञ्चविंशतितत्त्ववादे तैः सहाधिकतत्त्वप्रसङ्ग इति द्योतितम् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तैस्तैर्मुनिभिरप्यनाद्यविद्याबद्धादस्वतन्त्राज्जीवात्सर्वथान्यः परमेश्वरः स्वीकर्तव्य इति भावेनाह । अनादीति । अनादिकालमारभ्याविद्याकामकर्मयुक्तपुरुषस्य पुराणि शरीराणि सरतो जीवस्यात्मवेदनं स्वस्वरूपाविर्भावलक्षणं ज्ञानं तथात्मनः परमात्मनोऽपरोक्षलक्षणं ज्ञानं च स्वतः स्वशक्त्या न सम्भवेत् उक्तहेतोरिति यस्मात्तस्मात्पुरुषः । पूर्णषड्गुणो विष्णुस्ततो जीवादन्यो भवेदित्यङ्गीकर्तव्यम् ॥ १० ॥

अत्रेदमप्यनुसन्धेयमित्याह । पुरुषेति । हृदि स्थित्वा जीवानां ज्ञानोत्पादनात्पुरुषनाम्नो बहिः स्थित्वा ज्ञानफलमुक्तिदानादीश्वरनाम्नश्चायर्थापि वैलक्षण्यं न द्रष्टव्यं भेददर्शनेऽनर्थमाह । तदन्यति । तयोः पुरुषेश्वरयोः अन्यत्वकल्पना भेददृष्टिलक्षणा अपार्था तत्स्वरूपादपगमनप्रयोजनानर्थकारिणीत्यर्थः ज्ञानात्मनो जीवस्य ज्ञानोत्पादनं कथं घटत इति, तत्राह ज्ञानञ्चेति । प्रकृतेर्गुणाः सत्त्वगुणजन्यम्—

> स्वरूपभूतं ज्ञानं तु सदा जीवस्य विष्णुना ।
> नियतं प्राकृतं ज्ञानं भक्त्या तेनैव दीयते ॥

इतिवचनात् ॥ ११ ॥

जन्यज्ञानस्य प्राकृतत्वं साधयति । प्रकृतेरिति । तुशब्दो विशेषद्योतकः प्रकृतेर्गुणसाम्ये प्रलये वर्तमानस्य आत्मनो जीवस्य यथा सत्त्वं रजस्तम इति प्रकृतेर्गुणा आवरका न भवन्ति ईश्वरेच्छानियतप्रवृत्तिशून्यत्वात् तथा स्वरूपज्ञानादिगुणा अपि भवन्ति तथा सृष्टिकाले जीवस्वरूपं तैर्गुणैरावृतं भवति गुणानां वीर्यमाह । स्थितीति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मवेदनमपि न सम्भवति कुतः परमात्मवेदनमित्यर्थः ततश्चानिर्मोक्षप्रसङ्गादीश्वराख्यपरमात्मपर्यन्तज्ञानाय जीवाख्यपुरुषादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् सम्भाव्यते स तु स्वयं प्रकाशज्ञान ईश्वर इति भावः ॥ १० ॥

अन्ये तु पूर्वोक्तवैशिष्ट्यमबुद्ध्वा किन्तु चिन्मात्ररूपत्वेनावैशिष्ट्यं बुद्ध्वैव वदन्तीत्याह । पुरुषेति । तर्हि तन्मते पुरुषस्य ज्ञानं कुतः स्यात् तत्र चैवं वदन्तीत्याह । ज्ञानं च तत्प्रकृतेरेव गुणाः ततश्च तद्गुणगणप्रवाहेषु भ्रमतस्तस्य कदाचित्तेन सम्बन्धः स्यान्नदीप्रवाहे भ्रमतस्तारककाष्ठादिनेवेति भावः ॥ ११ ॥

तर्हि भगवन्मताष्टाविंशतिपक्षोद्ग्राहकः षड्विंशतिपक्षः कथं सिध्यतीत्याशङ्क्य तन्निरस्यन् पुनः पूर्वमतं स्थापयति । प्रकृतिरिति सार्द्धेन । गुणानां सत्त्वादीनां साम्यमेव प्रकृतिः प्रकृतेर्गुणास्ते त्वात्मनो न सम्भवन्तीति ये प्रकृतेर्गुणाः सत्त्वादयस्ते आत्मनः पुरुषस्य ये गुणा ज्ञानानन्दादयस्ते प्रकृतेर्नेति किमुतेश्वरगुणानां वार्तेत्यर्थः प्रकृतेर्गुणाश्च केवलं प्रपञ्चस्थित्यादिहेतव इत्याह सत्त्वं रज इत्यर्द्धेन अन्त्यार्द्धेनात्यन्तिकप्रलयरूपो मोक्षोऽपि गृह्यते तमः कारणस्यैव प्रलयस्य क्रमप्राप्तत्वात् मोक्षस्य ज्ञानहेतुकत्वात् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतोऽमीषां तत्त्वानां पौर्वापर्यं तत्तत्कारणकार्यगतत्वं प्रवेशस्थानं न्यूनमधिकं चाभीप्सतां वादिनां मध्ये यथा यथा विवक्षया यद्यद्युक्तं यस्य मुखं प्रवर्तते तत्सर्वं वयं विविक्तं सविवेकं गृह्णीमः उक्तन्यायेन सर्वत्र युक्तेः सम्भवात् ॥ ९ ॥

ननु प्राकृतानां तत्त्वानामुक्तन्यायेनानुप्रवेशात् संख्याभेदो भवतु जीवेश्वरयोस्तु कथं भेदविवक्षा यया षड्विंशतिपक्षः प्रवृत्तस्तत्राह । अनादीति । अनाद्यविद्यया अयुक्तस्य युक्तस्य वा पुरुषस्य जीवस्य आत्मवेदनमिति षष्ठ्यर्थे प्रथमा आत्मवेदनस्य स्वतः स्वेन न सम्भवात्तेतोः स्वतः सर्वतत्त्वज्ञः । परमेश्वरोऽन्यो भवेदेवमन्येनद्वैष्णवानां मतम् ॥ १० ॥

कथं तर्हि पञ्चविंशतिपक्षस्तत्राह । पुरुषेश्वरयोर्जीवात्मपरमात्मनोः अत्र उक्तलक्षणे भेदे वर्तमानेऽपि न वैलक्षण्यमपि

सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ।
गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥
पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः ।
ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ॥ १४ ॥
श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ।
वाक्पाण्युपस्थपाय्वङ्घ्रिः कर्माण्यङ्गोभयं मनः ॥ १५ ॥
शब्दः स्पर्शरसो गन्धो रूपं चेत्यर्थजातयः ।
गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अभेदोऽपि कीदृशः अणु अल्पमात्रं चिद्रूपत्वेन शक्तिशक्तिमत्त्वेन वा ऐक्यात् तयोर्भेदेऽपि अल्पमात्र स्वत्वभेदो वर्त्तते एवेति भावः अत-स्ततः परमेश्वराद्द्वयोरत्यन्तभिन्न एव जीव इति कल्पना अपार्था व्यर्था नन्वेवमपि ईश्वरप्रसादाल्लभ्यस्य ज्ञानस्य पृथक्त्वात् पञ्चत्रयमपि न घटते अत आह । ज्ञानं चेति । सत्त्वगुणवृत्तित्वात् ज्ञानं प्रकृतावेवान्तर्भूतमित्यर्थः ॥ ११ ॥

ननु ज्ञानं जीवधर्म इति प्रसिद्धं कथं प्रकृतेर्गुण इति ब्रूषे तथा कर्मापि जीवकृतमेव अज्ञानमपि जीवस्यैव न प्रकृते-र्नापीश्वरस्येत्यत एतानि तत्त्वानि जीव एवान्तर्भावनीयान्यन्यथा सर्वमत एव तत्त्वबुद्धिः स्यादत आह । प्रकृतिरिति सार्द्धेन । गुणानां साम्यं हि प्रकृतिस्तत्तद्विशेषरूपा गुणास्तस्या एव नत्वात्मनो जीवस्य स्थित्युत्पत्त्यन्तहेतव इति जीवस्य स्थित्यादिहेतुभूत गुणाश्रयत्वानुपपत्तेरिति भावः । सत्यमेतत किमायातमत आह सत्त्वमिति । ज्ञानमिति यत्प्रसिद्धं तत् सत्त्वकार्यत्वात् सत्त्वमेव एवं कर्म रज एव अज्ञानन्तु तम एवेत्येतानि प्रकृतेरेव धर्मा स्तदाश्रयीने जीवे ते एवमत एतानि प्रकृतावेवान्तर्भा-व्यानि ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतो हेतोः अमीषां तत्त्वानां पौर्वापर्यं न्यूनाधिकसंख्यत्वं यथा तथा प्रसंख्यानं गणनमभीप्सतां वादिनां मध्ये यद्यस्य यत्र यत्रोपपन्नाच्चित वाक्यं यथा तथा युक्तिसम्भवात् विविक्तं निश्चितं वयं गृह्णीमः ॥ ९ ॥

अथ नानापक्षाणां यत्रान्तर्भावः तं स्वपक्षं दर्शयति । अना-दीति । त्रीण्येव चिदचिद्ब्रह्माभेदात्तत्त्वानि तत्र चेतनं तत्त्वमाह । अनाद्यविद्यया जडस्वरूपया प्रकृत्या युक्तस्य आत्मवेदनं स्वतो न सम्भवति एवं चेतनतत्त्वमुक्त्वा सर्वज्ञं ब्रह्मतत्त्वमाह । अन्यस्त-त्त्वज्ञः सम्भाति ज्ञानदो भवेदिति ॥ १० ॥

ननु तयोर्भेदे सति कथं तत्त्वमसीत्युच्यते इत्यत आह । पुरुष इति । अल्पज्ञत्वेन भिन्नत्वेऽपि पुरुषस्य जीवस्य ईश्वराश्र-यस्येश्वरानिरपेक्षस्वरूपस्थित्या तदन्यकल्पनापार्थेति तस्य पुरुष-स्येश्वरनिरपेक्षस्वरूपस्थित्यादिमत्त्वेनान्यकल्पना तु अपार्था निर-र्थिका तस्मात्पुरुषेश्वरयोर्भेदेऽपि तत्त्वमस्यादिवाक्यविरोधो नास्ति ज्ञानं च पुरुषेश्वरयोरेव न तत्त्वान्तरम् अचेतनं तत्त्वं प्रतिपाद-यन् सत्त्वादीनां तत्रैवान्तर्भावमाह । प्रकृतेर्गुणा इत्यादिना गुणाः सत्त्वादिः प्रकृतेरेव ॥ ११ ॥

ननु सात्त्विकोऽयं पुरुष इति सत्त्वादेः पुरुषगुणत्वेन प्रती-तिरत आह । प्रकृतिर्गुणसाम्यमिति ॥ १२ ॥

---

भाषा टीका ।

इसी हेतु से जो जैसी संख्या की इच्छा करै तिसकी पूर्व तथा परभाव के होने से जैसी वक्ता की इच्छा होवे तैसीही संख्या के कहने सभी युक्ति से सम्भव होने से हम निश्चय से मानते हैं ॥ ९ ॥

अनादि कालकी कर्म शक्तिसे जीव को यथार्थ ज्ञान स्वयं नहीं होता है और ईश्वर तो ज्ञान के देने वाला तत्त्व-ज्ञानी है तिससे जीव तथा ईश्वर का नित्यसिद्ध भेदही है ॥ १० ॥

इहांपर जीव तथा ईश्वर दोनों के आकार ज्ञान गुणवाला होनेसे कुछभी जड चेतन सरीकी विलक्षणता नहीं है तिस से इन दोनों की अत्यन्त भेद दृष्टि व्यर्थ है और जो ज्ञान है सो सत्त्वादि वृत्तियुक्त होनेसे प्रकृति के अन्तर्गत होजा-ताहै ॥ ११ ॥

गुणोंकी साम्य अवस्था प्रकृति है और गुण तीनों जो सत्त्वरजः तम उत्पत्ति स्थिति प्रलय के हेतु हैं वेतो प्रकृति के गुण हैं ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतः सत्त्वं सत्त्वमयं ज्ञानं प्रकृतेर्गुणः इति पूर्वेणान्वयः ननु तात्त्विकं कर्म ज्ञानं चतत्त्वान्तरं स्यात् न रजः कर्म रजसो

श्रीधरस्वामिकृतभावार्थदीपिका ।

वृत्तिः अज्ञानं च तमसः अतः कर्मज्ञानयोरजस्तमोऽत्रा प्रकृतावेवान्तर्भाव इति भावः । तथापि कालस्वभावयोस्तत्त्वान्तरता स्यात् न गुणव्यतिकर इति गुणानां व्यतिकरो यस्मात्स ईश्वर एव कालो नाम स्वभावो नाम सूत्रं महत्तत्त्वमेव तस्य सर्वशक्तिमत्त्वात् तदेव ज्ञानादीनां यथायथमन्तर्भावान्न पक्षद्वयेऽपि तत्त्ववृद्धिरेतस्य पक्षान्तरेऽपि क्रमम् ॥ १३ ॥

स्वमते तु गुणानामागमापायित्वात्प्रकृतेर्भेदो विवक्षितोऽतो गुणास्त्रीणि तत्त्वान्यपराणि पञ्चविंशतितत्त्वानि पूर्वोक्तपक्षत्रयसाधारणानि दर्शयति । पुरुष इति सार्धद्वाभ्याम् । व्यक्तं महत्तत्त्वम् नभआदीनि पञ्च तन्मात्राणि मे मया ॥ १४ ॥

एकादश दर्शयति । श्रोत्रमिति । दर्शनं चक्षुः ज्ञानशक्तयो ज्ञानेन्द्रियाणि पञ्च वागादिपाय्वन्तानि द्वन्द्वैकवद्भावेनोक्तानि चत्वार्यङ्घ्रिश्चेति कर्माणि कर्मेन्द्रियाणि पञ्च उभयात्मकं मनः उभयेन्द्रियसाधारणमित्यर्थः । अङ्ग हे उद्धव । एवमेतान्येकादश ॥ १५ ॥

पञ्च दर्शयति । शब्द इति । शब्दादीनि विषयतया परिणतानि पञ्च महाभूतानि ननु गत्यादिभिस्तत्त्वाधिक्यं पक्षत्रयेऽपि स्यादित्याह । गतीति । गतिश्च उक्तिश्च उत्सर्गो च शिल्पं च तानि कर्मायतनानां कर्मेन्द्रियाणां सिद्धयः फलानि न तत्त्वान्तराणीत्यर्थः ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

अतः गुणानां प्रकृतिधर्मत्वात् तन्निवर्ष्य ज्ञाननिराश्यं अतः कर्मज्ञानयोरजस्तमोवृत्तित्वात् सूत्रं क्रियाशक्त्यात्मकगुणत्रयप्राधान्यं तस्य महत्तत्त्वस्य यथायथं पूर्वोक्तप्रकारेण पक्षद्वये पञ्चविंशतिषड्विंशतिपक्षद्वये एतस्य ज्ञानादीनामन्तर्भावनम् ॥ १३ ॥

महत्तत्त्वं ज्ञानशक्त्यात्मकम् ॥ १४ ॥

उभयात्मकं ज्ञानकर्मात्मकम् ॥ १५ ॥

अर्थजातयो विषयप्रभेदाः फलानि कार्याणि ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रकृतिगुणसत्त्वादेरप्यन्तर्भावं वदन् प्रथमं साकल्येन तत्त्वाह । गुणव्यत्यय इति । गुणव्यत्ययजनकः सर्वपदार्थानां कालसम्बन्धस्य नियतत्वात् स्थितिहेतुत्वात् कालस्य स्वभावसूत्रशब्दवाच्यत्वम् ॥ १३ ॥

पुरुषो जीवः व्यक्तं महान् ॥ १४ ॥

ज्ञानशक्तयः ज्ञानजननशक्तानि ज्ञानेन्द्रियाणीत्यर्थः कर्माणि कर्मेन्द्रियाणि ॥ १५ ॥

कर्मायतनसिद्धयः कर्मायतनफलानि न तत्त्वान्तराणीत्यर्थः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

के पुनः सत्त्वादिगुणा इत्यतस्तान्कार्यमुखेन लक्षयति सत्त्वमिति ज्ञानजनकत्वं सत्त्वमित्यर्थः एवं रजःकर्मतमोऽज्ञानमित्यत्रापि वक्तव्यम् अज्ञानमित्यत्र ज्ञानं चात्र यथावस्थितवस्तुज्ञानं तद्विपरीतमज्ञानम् अथ न्यूनसंख्यावादे तत्त्वानां परस्परान्तर्भाववदत्साकल्येन तत्त्वान्याह । गुणव्यतिकर इति । गुणव्यत्ययजनकः कालः एवं स्वभावः सूत्रमिति चोच्यते सर्वपदार्थानां कालसम्बन्धस्य नियतत्वात् स्थितिहेतुत्वाच्च कालस्य स्वभावसूत्रशब्दवाच्यत्वं सप्तविंशमत्र पर इति श्रुत्यनुरोधात्कालेन सह सप्तविंशतितत्त्वानीति भावः ॥ १३ ॥

पुरुषो जीवः तस्य स्वस्माद्भेदः पूर्वमेव प्रतिपादित इति स्वस्यापि तत्त्वान्तरत्वमुक्तप्रायमेव प्रकृतिर्गुणसाम्यावस्थचिद्द्रव्यं व्यक्तं महान् पुरुषादीनि नव तत्त्वानि मे मयोक्तानीति साकल्येन तत्त्वप्रसंख्यानप्रकारोऽन्न वत्तत्त्वप्रसंख्यानपक्ष उक्तः अस्मिन् पक्षे पुरुष इति जात्यभिप्रायमेकवचनं पुरुषादिशब्दैर्जीवादिशरीरकः परमात्मा च विवक्षितः आकृत्यधिकरणन्यायेन सर्वबुद्धिशब्दानां परात्मपर्यन्तत्वात् महदहङ्कारे तत्कार्याणामिन्द्रियाणामन्तर्भावः आकाशादिषु शब्दादीनाम् एवं तत्त्वानां नवत्वमवगन्तव्यम् ॥ १४ ॥

श्रोत्रमिति । दृश्यते अनेनेति दर्शनं चक्षुः श्रोत्रादयः पञ्च ज्ञानशक्तयः ज्ञानशक्तानि ज्ञानकरणानि ज्ञानेन्द्रियाणीति यावत् वागादिपाय्वन्तानि द्वन्द्वैकवद्भावेनोक्तानि चत्वार्यङ्घ्रिश्चेति पञ्च कर्माणि कर्मेन्द्रियाणि उभयं ज्ञानकर्मेन्द्रियानुग्राहकं मनः अङ्ग हे उद्धव ॥ १५ ॥

शब्दादयः पञ्चार्थजातयः श्रोत्रादीनां विषयजातयः शब्दादीनामवान्तरभेदेन बहुविधत्वात्सर्वेषां संग्रहाय जातिपदं प्रयुक्तं क्रमस्त्वत्र न विवक्षितः दर्शनस्य रूपं विषयः घ्राणस्य गन्धः जिह्वाया रस इति विभागः गत्यादीनि कर्मायतनसिद्धयः कर्मायतनानां कर्मेन्द्रियाणां सिद्धयः कार्यभूतानि तत्रोत्सर्गभेदेन मूत्ररेतसोरुत्सर्गः पुरीषस्य च विवक्षितः तत्राद्य उपस्थस्य द्वितीयस्तु पायोः सिद्धिरिति विभागः । अत्रापि न क्रमो विवक्षितः तेन गतिरङ्घ्रेः सिद्धिः उक्तिर्वाचः पाणेः शिल्पमुत्सर्गः पायूपस्थयोरिति विभागः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रमागतमनेन प्रकृत इत्यत्राह । सत्त्वमिति । इह सृष्टिकाले सत्त्वं ज्ञानं सत्त्वगुणजन्यं रजोगुणजन्यं कर्म तमोगुणजन्यमज्ञानमित्युच्यते प्रलयकालात् सृष्टिकालेऽयं विशेष इति वाक्यार्थं प्राकृतमितिसिद्धं यद्वा प्रलयेऽपि सृष्टावपि प्रकृतेर्गुणाः आत्मनः परमात्मनो न विशेषापादकाः किन्तु जीवस्यैव कथमत्राह । सत्त्वमिति । सत्त्वादयो जीवस्य बाह्यज्ञानादिविशेषजनका इति—

अत्र[1]स्वयः पुरुषो नाम ज्ञानदः सर्वदेहिनाम् ।

१ पुरुषेश्वरयोरिति श्लोकार्थं सिंहावलोकनन्यायेन प्रमाणमाह अत्र इयोरिति ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वाहस्थ ईश्वरो नाम ज्ञानादिफलदो हरिः ॥

इति वाक्यात्—

पुरुषाख्यो हृद्गतस्तु विष्णुर्जीवविबोधकः ।
फलदाता तु बाह्येन च ईशेन भिदां वदेत् ॥
तथैवान्यस्वरूपेषु विष्णोर्यो भेददर्शकः ।
ये च जीवेश्वराभेदं पश्यन्तेऽनयभोगिनः ॥

इति वाक्याच्च पुरुषेश्वरावुक्तार्थाविति सिद्धमिदानीम् ऋषिभिरुक्ततत्त्वानां संख्याभेदं वक्ष्यन् तत्त्वकारणस्वरूपं तावदाह । गुणव्यतिकर इति । सत्त्वादिगुणानां महदाद्यात्मना व्यतिकरो स्वभाव इति । स्वतन्त्रो भावः स्वभावः स्वरूपभूतो भावो भूतिरैश्वर्यं यस्य स तथा इति वा स्वाधीनो भावः सत्ता यस्य स तथेति वा स्वनियतो भावो जन्मादिलीला यस्य स तथेति वा वायुना वै गौतम ! सूत्रेणायमादेवयोरेव सर्जनादिप्रतीतेः कथमयमेव सर्वकर्तेति तत्राह । सूत्रमिति । सूत्रं सर्वाधारः "अन्तरमस्वरान्तभृतः" इति सूत्रादेतल्लिङ्ग भगवदर्शनिष्ठमिलवशब्देनावधारयति वयब्देन यो देवानामिति श्रुतेर्घोषशब्दः सावकाश इति दर्शयति ॥ १३ ॥

नवैकादश पञ्च त्रीनित्यत्र नव तत्त्वानि वक्ति । पुरुष इत्यादिना पुरुषो हिरण्यगर्भः प्रकृतिर्गायत्री, व्यक्तो रुद्रः अहङ्कारः स्कन्दः—

यद्वा पुरुषशब्देन विरिञ्चस्यैव वाच्यता ।
परस्य पृथगुक्तेव व्यक्तस्तत्र तु शङ्करः ॥
तदाहङ्कारशब्देन स्कन्दस्यैव वचो भवेत्—

इति वाक्यादयं नियमः प्रामाणिक इत्यर्थः ॥ १४ ॥

एकादशतत्त्वान्याह । श्रोत्रमित्यादिना ज्ञानशक्तयः ज्ञानेन्द्रियाणि कर्माणि कर्मेन्द्रियाणि उभयं सङ्कल्पविकल्पात्मकं मनः ॥ १५ ॥

एषां विषयानाह । शब्देति । अर्थजातयः विषयसामान्यानि अनेन पञ्च तत्त्वान्युक्तानि कर्मायतनसिद्धयः कर्मेन्द्रियविषयाः वायूपस्थयोर्विसर्गानन्दसर्गशब्देनोक्तौ १ द्विविधत्वात्पञ्चकत्रयं पञ्चस्थानेन क्रियाप्रतिपत्तिः पञ्चपञ्चेति । तथा च शब्दादिशिल्पान्तानि दश तत्त्वानि ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पक्षे सत्त्वं ज्ञानं रजः कर्म तमः अज्ञानमिति तदपीह प्रपञ्च एवोच्यते येन व्यपदिश्यते मार्गो ननु वस्तुविचारे सतीति भावः । तत्सम्बन्धस्य प्रकृतेरपि जडत्वात् प्रकाशचिद्‌भासस्वरूपत्वेनैव ज्ञानत्वव्यपदेशाच्च तच्च न परोक्षस्य तज्ज्ञानस्य हेतुः तदा स्फुरत्यपि तस्मिंस्तदनुपपत्तेः नतरां चापरोक्षस्य नहि गृहान्तर्गतस्वप्रकाशाभावेन सूर्यः प्रकाश्यते अपि तु स्वप्रकाशतयैवेति ततः स यदजया त्वजामित्याद्युक्तदिशा अनाद्यविद्यायुक्तत्वेन पिहितज्ञानस्य पुरुषस्य मोक्षार्थमपेक्ष्यो ज्ञानदोऽन्य ईश्वर एवावशिष्यते एवमेवानुसन्धेयं अत्रापि स्वतो ज्ञानं हि जीवानामिति "परामिथ्या नातु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इत्यत्र परेणैव दृढीकृतं तदेवं च ज्ञानं

१ तात्पर्योक्तं स्ववाक्यमनुवादयमाह ।

सच्चिदानन्दस्वरूपशक्तेरंशत्वात्तदन्तःपातित्वेति गुणत्रयं च त्रैगुण्यस्य प्रकृतेरङ्गत्रयमिति तत्त्वाधिक्यमपीति भावः । तदेवं षड्विंशतिपक्ष एव तु विविक्त इति दर्शितम् एवं षड्विंशतिपक्षं स्थापयित्वा तत्र च प्रकृतेर्गुणा इत्युक्ता गुणत्रयस्याधिक्यं बाध्यमानो नवैकादश पञ्च त्रीणि यात्थ त्वमिति शुश्रुम तत्प्रश्नानुवादेन गणशःस्वमतं गणयति गुणेति त्रयेण । तत्र स्वमताधिकसंख्याहेतून् त्रीणि तत्त्वानि प्रथमतो दर्शयत्यर्द्धेन । गुणेति गुणानां व्यतिकरः क्षोभो यस्मात् एवम्भूतः कालः कालाख्यस्वचेष्टात्मक ईश्वरस्तावदेकः स्वभावस्तत्तद्वैशिष्ट्यप्राप्तिहेतुः कर्मवासना द्वितीयं वक्ष्यते च संख्यकथने मया कालात्मना धात्रा कर्मयुक्तमिदं जगदिति सूत्रं क्रियाशक्त्यात्मकमुख्यप्राणाख्यं तृतीयं वक्ष्यते च महान् सूत्रेण संयुत इति ॥ १३ ॥

अथ नवैकादशपञ्चक्रमेण गणयति । पुरुष इति सार्द्धद्वयेन पुरुषो जीवः व्यक्तं महत्तत्त्वं ज्ञानशक्त्यात्मकं नभआदीनि महाभूतानि ॥ १४—१६ ॥

शब्दादयो विषयाः भूतसूक्ष्माणीत्यर्थः । इतीश्वरादयोऽष्टाविंशतिरुक्ताः तत्र गत्यादीनामाधिक्यं निरस्यति । गतीति । एतत्त्वोपलक्षणमन्यनिरसनार्थमिति ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु तदपि कालस्वभावावतिरिच्येते तौ कुत्रान्तर्भाव्यौ तत्राह गुणानां व्यतिकरो यस्मात् स ईश्वर एव कालो नाम स्वभावो नाम कर्मपरिणामः सच सूत्रं महत्तत्त्वमेव तस्य सर्वशक्तिमत्त्वात् तौ तयोरन्तर्भाव्याविति सर्वमतेष्वपि ज्ञानादितत्त्ववृद्धिपरिहार उक्तः ॥ १३ ॥

प्रथमं पञ्चविंशतितत्त्वमतमाह । पुरुष इति सार्द्धाभ्याम् व्यक्तं महत्तत्त्वं मे मया ॥ १४ ॥

दर्शनं चक्षुः ज्ञानशक्तयो ज्ञानेन्द्रियाणि पञ्च च वागादिवाद्यन्तानि मुख्यत्वेनोक्तानि चत्वारि अङ्घ्रिश्चेति कर्माणि कर्मेन्द्रियाणि पञ्च उभयमुभयात्मकं मन इत्येकादश ॥ १५ ॥

अर्थजातयः ज्ञानेन्द्रियाणां विषयाः पञ्चेति पञ्चविंशतितत्त्वपक्षः ननु गत्यादिभिस्तत्त्वाधिक्यं पक्षद्वयेऽपि स्यात्तत्राह । गतिश्च उक्तिश्च मूत्रपुरीषोत्सर्गौ च शिल्पाख्यः शुक्रोत्सर्गश्च शिल्पं चेति पञ्च कर्मायतनानां कर्मेन्द्रियाणां सिद्धयः फलानि नतु तत्त्वान्तराणीत्यर्थः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जीवे सत्त्वादिप्रतीतिस्तु तत्संसर्गजत्वाद्याथैन सत्त्वं ज्ञानं ज्ञानोदयनिमित्तत्वात्तस्मिन्नपि ज्ञानत्वोपचारः रजः कर्म कर्मनिमित्तत्वात् तमोऽज्ञानमज्ञाननिमित्तत्वात् अस्मिन्पक्षे अप्राकृतकालादीनां यथायथमन्तर्भावः अथ पञ्चतत्त्वपक्षमाहार्द्धेन । गुणा इति । पूर्वोक्तं तत्त्वत्रयं प्रकृतिगुणानां व्यतिकरः क्षोभो यस्मात्स कालः प्रकृतेः रूपान्तरप्राप्तिः स्वभावः प्रकृतिमहत्तत्त्वयोरन्तराले सूत्रमेव एवं कालस्वभावयोः पृथग्ग्रहणेन पञ्चतत्त्वानि भवन्ति ॥ १३ ॥

विंशतितत्त्वपक्षमाह । पुरुष इति द्वाभ्याम् । पुरुषः पर-

सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ।
सत्त्वादिभिर्गुणैर्धत्ते पुरुषो व्यक्त ईक्षते ॥ १७ ॥
व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया ।
लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् ॥ १८ ॥
सप्तैव धातव इति तत्रार्थाः पञ्च खादयः ।
ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः[1] ॥ १९ ॥
षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान् ।
तैर्युक्त आत्मसम्भूतैः सृष्ट्वेदं समुपाविशत् ॥ २० ॥
चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ।
जातानि तैरिदं जातं जन्मावयविनः खलु ॥ २१ ॥
संख्याने सप्तदशके भूतमात्रेन्द्रियाणि च ।
पञ्च पञ्चैकमनसा आत्मा सप्तदशः स्मृतः ॥ २२ ॥
तद्वत्षोडशसंख्याने आत्मैव मन उच्यते ।
भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश ॥ २३ ॥
२ एकादशत्वमात्माऽसौ महाभूतेन्द्रियाणि च ।
अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ ॥ २४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मा जीवस्य तदंशत्वात्तत्रैवान्तर्भावः व्यक्तं महत्तत्त्वम् मे मया ॥ १४ ॥

दर्शनं चक्षुः ज्ञानशक्तयः ज्ञानेन्द्रियाणि वाक्पाणयुपस्थपायुश्च अत्र द्वन्द्वैक्यम् कर्माणि कर्मेन्द्रियाणि अङ्ग हे उद्धव! उभयमुभयेन्द्रियानुग्राहकं मनः अत्र तन्मात्राणि स्वकार्येषु नभआदिष्वन्तर्भावितानि एवं विंशतितत्त्वानि तन्मात्राणां पृथक् सङ्कलनेन पञ्चविंशतितत्त्वपक्षः पुरुषो जीवेश्वरभेदाद्द्विविध इति षड्विंशपक्षश्च ज्ञेयः ॥ १५ ॥

त्रिष्वपि पक्षेष्विन्द्रियार्थैस्तत्त्वाधिक्यशङ्कां वारयति । स्पर्शोत । अर्थजातयः ज्ञानेन्द्रियार्थाः गतिश्चोक्तिश्चोत्सर्गौ च शिल्पञ्च तानि कर्मायतनानां कर्मेन्द्रियाणां फलानि एते उभयेन्द्रियार्थाः पृथक् तत्त्वानि नेत्यर्थः ॥ १६ ॥

### भाषा टीका ।

सत्व गुण ज्ञान है रजोगुण कर्म है तमोगुण अज्ञान इहां कहा गयाहै गुणों के क्षोम करने वाला काल है सूत्र महत्तत्त्वही स्वभाव है ॥ १३ ॥

पुरुष प्रकृति महत्तत्व अहंकार आकाश पवन अग्नि जल पृथिवी ये नो तत्व मेरे मतमे कहे हैं ॥ १४ ॥

कर्ण श्रोत्र त्वचा चक्षु नासिका जिह्वा ये पांच ज्ञानेन्द्रिय हैं वाक् पाणि पाद लिंग गुदा ये पांच कर्मेन्द्रिय हैं मन दोनों के साथ में है ॥ १५ ॥

शब्द स्पर्श रस गन्ध रूप ये पांच विषय जाति ज्ञानेन्द्रियों की हैं चलना बोलना मलमूत्र का त्यागना काम करना ये पांच कर्म इन्द्रिय के विषय हैं ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं मतत्रयेऽपि तत्त्वसंख्याभेदं निरूप्य यथोक्तत्वया गायन्तीति यत्पृष्टं तत्तन्मततात्पर्यं दर्शयति । सर्गादाविति । कार्याणि षोडश विकाराः कारणानि महदादीनि सप्त तद्रूपिणी सती प्रकृतिरस्य विश्वस्य सर्गादौ गुणैः मृत्पिण्डादिवत् धत्ते उपादानकारणरूपत्वात् पुरुषस्त्वव्यक्तोऽपरिणामी निमित्तभूतः केवलमीक्षते अतः परिणामिन्याः प्रकृतेः पुरुषो भिन्न इति ॥ १७ ॥

तत्त्वैरारब्धकार्यस्य तदन्तर्भावमभिप्रेत्याऽऽह । व्यक्तादय इति । व्यक्तादयो महदादयः प्रकृतेरुत्पन्ना ये धातवस्ते विकुर्वाणाः पुरुषेक्षणेन लब्धवीर्याः संहता अण्डं सृजन्ति प्रकृतेर्बलात्सामर्थ्यादित्यर्थः ॥ १८ ॥

१ नैकमेकतरं क्वापि विद्यावेद्योपलभ्यते इति शुकपक्षीय वीरराघवयोः पाठः । २ इदं वीरराघवीये प्रक्षिप्तमनन्तरं पठितं विजयध्वजीये मङ्गपाठेच नास्त्येव ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं स्वमतमुपसंहृत्य मतान्तरेष्वपि सामान्यतो निरूपितां घटनां विशेषतः सतात्पर्यां दर्शयति । सप्तैवेति । ज्ञानं जानातीति द्रष्टा जीवः उभयोर्द्रष्टृदृश्ययोराधार आत्मा चेति सप्त तत्र प्रकृत्यादीनां कारणत्वेन खादिष्वन्तर्भावः इतरेषामन्तर्भावार्थमाह ततस्तेभ्यः सप्तभ्यो देहेन्द्रियासवः सर्वकार्याणि जायन्ते ॥ १९ ॥

षडिति मतेऽपि भौतिकस्य भूतान्तर्भावं जीवस्य च परमात्मान्तर्भावमाह । तैर्युक्त इति ॥ २० ॥

अत्र पृथ्वी आत्मनो जातानि आत्मना सह चत्वारि तत्त्वानि अन्तर्भावार्थमाह । तैरिति अवयविनः कार्यस्य ॥ २१ ॥

भूतानि च मात्राणि च इन्द्रियाणि च पञ्च पञ्च एकेन मनसा सह आत्मा सप्तदश्यः ॥ २२ ॥

आत्मैव सङ्कल्पयन्मन उच्यते त्रयोदशपक्षे भूतानि तन्मात्रैरेकीकृतानि पञ्चैव इन्द्रियाणि तत्प्रकाशकानि पञ्चैव मनश्चैकमिन्द्रियाधिष्ठातृ आत्मा च द्विविधः एवं त्रयोदश ॥ २३ ॥

एकादशत्वपक्षे पञ्च महाभूतानि पञ्चेन्द्रियाणि जीवमनसोश्चाऽऽत्मान्तर्भावेनैतान्येवैकादश नवपक्षे अष्टौ प्रकृतयः पुरुषश्च विकाराणां तदन्तर्भावः ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता
### दीपिकादीपिनी टिप्पणी

तत्तन्मततात्पर्यं तेषां तेषां तत्त्वसंख्यावादिनां मततात्पर्यं प्रकृतिपुरुषविवेकलक्षणं सर्गादौ जन्मस्थितिभङ्गे सृज्यत्वावस्थां सृज्यपाल्यसंहार्यत्वावस्थां विकाररूपां धत्ते । अतः साक्षित्वात् सर्वमतसाधारणमिदम् ॥ १७ ॥

कार्याण्यण्डस्य । तदन्तर्भावं तत्त्वान्तर्भावम् । आरब्धण्डमिति धातवस्तत्त्वानि । इदमपि सर्वसाधारणम् । संहताः मिलिताः ॥ १८ ॥

परस्परानुप्रवेशलक्षणां घटनाम् सतात्पर्यां साभिप्रायां तत्र सप्ततत्त्वपक्षे । आत्मा च परमात्मा तत्र सप्तसु मध्ये । इतरेषां देहादिकार्याणाम् ॥ १९ ॥

आत्मसम्भूतैः स्वस्मात् संजातैः । तैः पञ्चमहाभूतैः इदम् देहादिकं समुत्पाद्य प्राविशत् जीवस्याभेदो विवक्षितः । "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति श्रुतेः ॥ २० ॥

तत्रापि चतुस्तत्त्वमतेऽपि । आत्मना परमात्मना सह चत्वारीति जीवस्य परमात्मन्यन्तर्भावः विस्फुलिङ्गानां वह्नाविव । तैश्चतुर्भिस्तत्त्वैः कार्यस्य देहेन्द्रियादेः जन्म भवतीत्येवमिदं विश्वं जातमित्यन्वयः । अन्यथा पौनरुक्त्यापत्तिः । अत्राकाशस्येन्द्रियागोचरत्वात्तत्त्वेनामननम् । वायोस्तु तेजसः सूक्ष्मावस्थात्वमेवेति त्रयाणामेव परिग्रहः ॥ २१ ॥

आत्मा परमात्मा । सप्तदशेति जीवान्तर्भावो विवक्षितः ॥ २२ ॥

द्विविधः जीवेश्वरभेदेन आत्मान्तर्भावेण परमात्मन्यन्तर्भावस्वीकारेण । एतानि भूतेन्द्रियादीन्येवैकादशेति व्याख्यानमेव दृष्ट्वा केचित् एकादशत्व इति पद्यं क्षेपकमाचक्षते । अत एवं कचिन्नास्त्यपीदं पद्यं सत्वे च व्याख्यातमेव । विकाराणां कार्याणाम् ॥ २३ ॥ २४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कर्मेन्द्रियाकारेण भूतानि धत्ते पुरुषः परमपुरुषः ॥ १७ ॥

व्यक्तादयः महदादयः एवं सप्तविंशमथापर इतिश्रुत्यनुरोधात् कालेन सह सप्तविंशतितत्त्वान्युक्तानि ॥ १८ ॥

अथ संख्यातारतम्यविवक्षां कथयति । सप्तैवेति । ज्ञानं ज्ञानस्वरूपो जीवः आत्मा परमात्मा उभयाधारः चिदचिदाधारः ततो देहेन्द्रियासवः इन्द्रियाणि देहान्तर्भूतानि देहश्च धातुभ्यः अतो देहारम्भकद्रव्यविवक्षायां सप्तत्वोक्तिरित्यर्थः । तत्रान्तर्भाव एव विवक्षितः नापलाप इत्याह । नैकमिति ॥ १९ ॥

षडिति शरीरत्वेन परशरीरत्वात्परमात्मन्यन्तर्भावो विवक्षितः ॥ २० ॥

अत्र पृथिवी अवयविन इति भावः ॥ २१—२३ ॥

एकादशत्वे एकादशसंख्यायामात्मैव मनः इति आत्मन्यन्तःकरणस्यान्तर्भाव इत्यर्थः ॥ २४ ॥ २५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एभ्य एव तत्त्वेभ्यो ब्रह्माण्डतदन्तर्गतव्यष्टिप्रपञ्चोत्पत्तिरित्याह । सर्गादाविति द्वाभ्याम् । अस्य व्यष्टिप्रपञ्चस्य सर्गादौ सृष्टेः प्राक्कार्याणि नभआदीनि मनःपर्यन्तानि षोडशकारणानि कार्यप्रकृतिव्यक्ताहङ्कारास्तदुभयरूपिणी प्रकृतिः सत्त्वादिभिर्गुणैर्युक्ता धत्ते बिभर्ति व्यष्टिप्रपञ्चं बिभर्तीत्यर्थः तदेवोपपादयति । पुरुष इत्यादिना । अव्यक्तः व्यक्तैरिन्द्रियैर्नव्यज्यत इत्यव्यक्तः प्रत्यक्षादिप्रमाणान्तरागोचरः केवलवेदान्तैकसमधिगम्यः सार्वज्ञ्यसर्वशक्तित्वादिगुणाश्रयः परमपुरुषः ईक्षते बहु स्यां प्रजायेयेत्यैक्षतेत्यर्थः ॥ १७ ॥

एवं विधात्सदीक्षणाज्जाता व्यक्तादयो धातवस्तत्त्वानि तस्य पुरुषस्येक्षया लब्धवीर्याः लब्धं सृष्टिसामर्थ्यं यैस्तेऽत एव संहताः विकुर्वाणाः प्रकृतेः स्वकारणभूतायाः बलाद्यदण्डं ब्रह्माण्डं सृजन्ति पुरुषेक्षया लब्धवीर्याः संहताः सृजन्तीत्यनेन नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः समेत्यान्योऽन्यसंयोगमित्याद्यभिवचनार्थः स्मारितः ॥ १८ ॥

अथ तत्त्वसंख्यातारतम्यादिपक्षान् दर्शयति । सप्तैवेति । धातवस्तत्त्वानि सप्तैवेति प्रतिज्ञा तत्रेत्यादिना तदुपपादनं तथाहीत्यर्थः खादय आकाशादयः पञ्च ज्ञानं ज्ञानस्वरूपो जीव उभयाधारः खादीनां ज्ञानस्य चाधारोऽन्तः प्रविश्य धारक आत्मा परमात्मा चेति सप्तैव तत्त्वानीत्यर्थः । ततस्तेभ्य एव सप्तभ्यस्तत्त्वेभ्यो देहेन्द्रियासवो भवन्तीति शेषः । इन्द्रियाणि देहान्तर्भूतानि तथा प्राणा अपि देहस्य स्वकारणभूतधातुष्वन्तर्भावः धातुभ्यः प्रकृत्यादीनां कारणानां कार्येषु खादिष्वेवान्तर्भावः अतः सप्ततत्त्वोक्तिरिति भावः अत्रान्तर्भाव एव विवक्षितो नापलाप इत्याह । नैकमिति । अन्यतमं देहेन्द्रियादीनामन्यतममपि तत्त्वं खादीनां मध्ये एकमपि विहाय नोपलभ्यते ॥ १९ ॥

षडित्यत्रापीति । षडेव तत्त्वानीति पक्षेऽपि भूतानि खादीनि पञ्च परः पुमान् परमपुरुषः षष्ठः जीवस्य शरीरत्वात्परमात्मन्यन्तर्भावो विवक्षितः देहेन्द्रियादीनां सप्ततत्त्वपक्ष इव खादिष्वन्तर्भाव इति भावः । स च परमपुरुषः आत्मन एकाग्रात्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सम्भूतैस्तैर्भूतैर्युक्तः योगोऽत्र शरीरात्मभावसम्बन्धरूपः इदं त्वयि जगत्सृष्ट्वा उपाविशदित्यस्यार्थमन्तरात्मतया प्रविष्टवान् सृष्ट्यर्थानुप्रवेशस्य सृष्टेः पूर्वत्वात्सृष्ट्वा तदेवानुप्राविशदित्यत्राप्ययमेवार्थः ॥ २० ॥

चत्वार्येवेति । चत्वारि तत्त्वानीति पक्षस्तत्राप्यात्मनः परमात्मनः सकाशात्तेजआदीनि त्रीणि जातानि तत्राप्पृथिवी आत्मना सह चत्वार्येव तत्त्वानीति भावः । अन्तर्भावविवक्षयाह । तैरिति तेजोऽबन्नैः परमात्मसहकृतैरिदं जगज्जातं तत्राकाशवाय्वोस्तेजआदिष्वन्तर्भावः इतरेषां तु पूर्ववत् इदं जातमित्येतदुपपादयति । जन्मेति अवयविनश्चाक्षुषावयविनः स्थूलकार्यस्येत्यर्थः । सूक्ष्माज्जन्मावश्यम्भावीत्यर्थः । एकादशत्व इति तत्त्वैकादशत्वपक्षेऽपि अत्रात्मा परमात्मा महाभूतानि खादीनि पञ्च इन्द्रियाणि श्रोत्रादीनि पञ्च सम्भूयैकादशेति भावः अत्रापि पूर्ववदितरेषामन्तर्भावोऽवगन्तव्यः ॥ २१ ॥

संख्यान इति सप्तदशके संख्याने भूतानि खादीनि मात्राणि शब्दादीनि इन्द्रियाणि श्रोत्रादीनि ज्ञानेन्द्रियाणि पञ्च पञ्चेति पञ्चदश मनसा सह षोडश आत्मा परमात्मा तु सप्तदश इतरेषामन्तर्भावस्तु पूर्ववत् ॥ २२ ॥

तद्वत्सप्तदशत्वपक्ष इव षोडशसंख्यानेऽप्यात्मना सह भूतमात्रेन्द्रियाणि षोडशेति समानम् अयन्तु विशेष इत्याह । आत्मैव मन उच्यत इति । आत्मन्यन्तःकरणस्यान्तर्भाव इत्यर्थः । त्रयोदशतत्त्वपक्षमाह । भूतानि । खादीनीन्द्रियाणि ज्ञानेन्द्रियाणि प्राणः पञ्चवृत्तिः मनः आत्मा परमात्मा चेति त्रयोदशेत्यर्थः ॥ २३—२४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्रीनिति सत्त्वादिगुणास्त्रीणि तत्त्वानि इति वक्तुं सत्त्वादिगुणप्रवृत्तिमाह । सर्गादाविति । अस्य जगतः सर्गादौ उपादानकारणात्मकजडप्रकृत्यभिमानिनी चित्प्रकृतिर्हरिसन्निमित्तकारणरूपिणी अन्तर्नियन्तृरूपेण प्रवेशात्कार्यरूपिणी च सत्त्वादिभिः त्रीन्गुणानिति रूपभेदेन सत्त्वादिगुणाभिमानिनी सृष्टे जगदिति शेषः । एवं च पुरुषादितमोगुणान्तानि हरिणा सह चतुर्विंशत्तत्त्वानीति भागवतं मतं परस्परानुप्रवेशादित्युक्तयुक्तिं विवृणोति । पुरुष इत्यादिना कालादिनाम्ना हरिणानुगृहीतः पुरुषनामा हिरण्यगर्भः सृष्ट्यर्थमव्यक्तनाम्नीं सरस्वतीमीक्षते संक्षोभ्य इति मत्वा अव्यक्तादितत्त्वानि सरस्वतीं निमित्तीकृत्य सृजतीत्यर्थः ॥ १७ ॥

अत एव कार्यकारणरूपेण सृष्टा व्यक्तादयो धारणशीलत्वाद्धातुनामानस्तत्त्वविशेषाः पुरुषेच्छया पुरुषस्य हरेः कटाक्षगोचरत्वेन संहताः संश्लिष्टाः प्रकृतेर्वशानुकुर्वाणाः [illegible] कार्यकारणयत्नान्विताः अण्डं ब्रह्माण्डं सृजन्तीत्यन्वयः यद्वा जडप्रकृतिरस्य जगतः सर्गादौ सत्त्वादिगुणैर्जगत्सृष्टे पुरुषो विष्णुः स्वयं प्रकृतिमीक्षते तदीक्षिता धातवोऽण्डं सृजन्तीति कार्यकारणभावादन्योऽन्यानुप्रवेशो युक्त इति वक्तुं सृष्टिकथनं सृज्यसृष्टिस्वरूपत्वादन्योऽन्यानुप्रवेशिनः तिष्ठन्ति तात्त्विका देवा विशेषप्रीतिकारणादिति वचनात् अतस्तत्त्वानामल्पसंख्यावत्त्वं युक्तम् ॥ १८ ॥

तत्र सत्त्वादीन् गुणादींश्च विना हरिणा सहितानि षड्विंशतितत्त्वानि महदहङ्कारौ ब्रह्मरुद्रावङ्गीकृत्य स्वकर्तृं विना परमात्मना सह पञ्चविंशतिः अव्यक्तं विना चतुर्विंशतिरित्येतानि न्यूनसंख्याकतत्त्वानि सिद्धवत्कृत्य सप्तैकं इत्यादिन्यूनसंख्यानि कथयति । सप्तैवेति । अत्र यस्मिन् पक्षे सप्तैव धातवस्तदेवं गणनं कर्तव्यं शब्दाद्यर्थाः खादयश्चैकीकारं गताः पञ्च षष्ठो ज्ञाननामा ब्रह्मा सप्तमः उभयाधारः अभिमन्यमानाभिमानिनामाधारः आत्मा परमात्मा इति सप्ततत्त्वं ततः शब्देन ज्ञानात्मानावनुकृष्येते दशेन्द्रियाण्येकीकृत्यैकं तत्त्वमसवः पञ्च प्राणाः देह इति । देहाभिमानी दिवाकरः ज्ञानात्मा वागिति नव तत्त्वानि ज्ञानशब्दोदितो ब्रह्मा तदाधारो हरिः स्मृत इति सर्वदेहाभिमानी तु देहिनां तु दिवाकर इति च इन्द्रियात्मेन्द्र एवैकः प्राणो नाम प्रजापतिरिति च देहप्राणौ पञ्चेन्द्रियाणि वा ज्ञानात्मभ्यां नवेति वा यद्वा वागादीनां मनोऽधीनत्वेन मनसैकत्वं पञ्च श्रोत्रादीन्द्रियाणि देहप्राणौ परमात्मना सहेति नव ॥ १९ ॥

षडित्यत्रैवं संख्यानं महदादिकारणानां कार्यानुप्रवेशेन पञ्चाकाशादिभूतानि परमपुरुषः षष्ठ इति षट् नव सप्त त्रयोदशत्वे केषाञ्चित्कार्याणां कारणानुप्रवेश इति ज्ञेयमात्मनः सम्भूतैस्तैराकाशादिपञ्चभूतैर्युक्तः आत्मा इदं सृष्ट्वा समनुप्राविशत् ॥ २० ॥

चत्वार्येवेति । तानि कानीत्यत आह । यत्रापीति । तत्रापि पञ्चस्वप्यात्मनो जातानि तेजआपोऽन्नमिति त्रीणि आत्मैक इति चत्वारि अन्नं पृथिवी अवयविन इदं जन्म तैः तेजआदिभिः जातं व्यक्तं खलु अवयवी देहः ॥ २१ ॥

सप्तदशसंख्याने त्वेवं गणनं पञ्च भूतानि पञ्चमात्राः पञ्च श्रोत्रादीन्द्रियाणि इति पञ्चदश एकेन मनसा सह आत्मा परमात्मा सप्तदश इति सप्तदशकं भूतमात्रत्वेनैकादशतत्त्वसंख्यानमपि ज्ञेयं पञ्च भूतानि मात्राश्चैकः परमात्मेति । भूतानि मात्राश्च परस्तत्त्वैकादशकं स्मृतमिति ॥ २२ ॥

षोडशसंख्यानि तत्त्वानि तद्वत् भूतमात्रेन्द्रियाणि पञ्च पञ्चेत्युक्तवत् तर्हि पूर्वस्मात्को विशेष इत्यत उक्तमात्मनेति । आत्मनः सन्निधिस्थत्वान्मनसस्तयोरेकत्वेन—

> आत्मनः सन्निधिस्थत्वान्मनस्तु तदुक्तितः ।
> उक्तो भवेत्परात्मा तु तत्त्वं षोडशकं यदेत्युक्तेः ॥

एवशब्दो वीप्साद्योतकः भूतानि पञ्चेन्द्रियाणि पञ्च मन आत्मा ब्रह्मा परमात्मा चेति त्रयोदश तत्त्वानि—

> भूतेन्द्रियाणि च मनो ब्रह्मा विष्णुस्तथैव च ।
> एवं त्रयोदशैवाहुस्तत्त्वानि मुनयो वराः ॥

इति—

> आत्मेति परमात्मा च विरिञ्चश्चापि कथ्यते ।
> वायुर्मनश्च देहश्च क्षयमित्यपि कुत्रचित् ॥

इति ॥ २३ ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्गादाविति क्रमेण सर्वेषां विवक्षितमुक्तम् ॥ १७—२० ॥

सप्तानामेवेति । यन्मतं तत्रापि पक्षे आत्मनः सकाशात्तेजोबन्नानि जातानि पुनस्तैस्त्रिभिरवयविनः कार्यस्य जन्मेत्यत इदं जगज्जातमित्यर्थः । अत्राकाश इन्द्रियागोचरत्वान्न मतः वायुस्तेजसः सूक्ष्मावस्थैवेति भावः २१—२७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पञ्चविंशत्या गायन्तीति यत्पृष्टं तत्तन्मततात्पर्यं दर्शयति । सर्गादाविति । कार्याणि षोडश विकाराः कारणानि महदादीनि सप्त तद्रूपिणी सती प्रकृतिरस्य सर्गादौ गुणैः सृज्यत्वावस्थां धत्ते उपादानकारणत्वात् पुरुषस्त्वव्यक्तः अपरिणामी निमित्तभूतः केवलमीक्षते अतः परिणामिन्याः प्रकृतेः पुरुषो भिन्न इति ॥ १७ ॥

महदाद्याविर्भावस्य महत्तत्त्वादिष्वेवान्तर्भावमभिप्रेत्याह । व्यक्ताद्य इति । प्रकृतेर्बलात् तामेवाश्रित्येत्यर्थः ॥ १८ ॥

सप्तैव धातवः तत्त्वानीति मते जानातीति ज्ञानं जीवः उभयोर्जीवब्रह्मणोः आधार आश्रय इति सप्त तत्र प्रकृत्यादीनां कारणत्वेन खादिष्वन्तर्भावः उक्तरेषामन्तर्भावार्थमाह । तत्त्वेभ्यः ॥ १९ ॥

षडिति मतेऽपि भूतानि पञ्चेति तेष्वेवान्येषां तत्त्वानामन्तर्भावः परः पुमान् इति तस्मिन् जीवस्य ॥ २० ॥

अप् पृथ्वी आत्मनः परमात्मनः सकाशात् अवयविनः कार्यस्य जन्म जातमभूत ॥ २१ ॥

भूतानि च पञ्च मात्राणि च पञ्च इन्द्रियाणि च पञ्च एकेन मनसा सह आत्मा सप्तदशः ॥ २२ ॥

आत्मा जीव एव संकल्पजन्मन उच्यते त्रयोदशे भूतानि तन्मात्रैरेकीकृतानि पञ्चैव इन्द्रियाणि च पञ्चेति दश एकं मनः जीवः परमात्मेति त्रयोदश ॥ २३ ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चविंशत्या गायन्तीति यत् पृष्टं तत्र कारणं तु ज्ञेयमिति श्रुतेः जगत्कारणे भक्त्युत्पादनायैव एव तत्त्वेभ्यो विश्वोत्पत्त्यादि जीवानुग्रहार्थं भगवान् करोति बोधोत्पत्तये अस्मत्तानुसारेण तत्त्वानि प्रतिपादयन्तीत्याशयेनोत्तरमाह । सर्गादाविति द्वाभ्याम् । पुरुषः चेतनाचेतनशक्तिमान् अव्यक्तः अनभिव्यक्तशक्तिः अस्य चेतनाचेतनात्मकस्य विश्वस्य सर्गादौ सृष्टेः प्राक् "तदैक्षत बहु स्यां प्रजायेय,, इतीक्षते तदा तच्छक्तिरूपाद्वितमात्मलक्षणजीवगर्भा कार्यकारणरूपिणी सृष्टिसंहारयोः कार्यकारणरूपाभ्यां जातुं योग्या प्रकृतिः गुणैः महदादिकार्यरूपाणि धत्ते ॥—१७ ॥

एते महदादयः प्रकृतेः विकुर्वाणाः प्रकृतेरुत्पन्नाः धातवो विश्वमूलभूताः संहता अपि स्वतः अकिंचित्कराः पुरुषेक्षया तु लब्धवीर्याः सन्तः बलात् पुरुषबलादण्डं सृजन्ति ॥ १९ ॥

सप्तैव धातवः सर्वविश्वमूलभूतानि तत्त्वानि एवकारोऽन्ययोगव्यवच्छेदपरः प्रकृत्यादीनां तत्त्वानां कारणतया खादिष्वेवान्तर्भावादिन्द्रियादीनां सकारणभूतेऽहङ्कारेऽन्तर्भावाच्च सप्ततत्त्वसिद्धिं द्योतयन्ति के ते धातव इत्यपेक्षायामाह । तत्रेति । अर्था ज्ञेयाः पदार्थाः ज्ञानं भोक्ता जीवः उभयोर्भोक्तृभोग्ययोराधारः आश्रयः परमात्मा चेति तनन्तेभ्यो देहेन्द्रियासवः देहाद्युपलक्षितं सर्वं विश्वजातमित्यर्थः ॥ १९ ॥

षडित्यत्र षट् तत्त्वपक्षेऽपि भूतानि खादीनि पञ्च अंशस्य ज्ञानस्याशिष्यन्तर्भावात् षष्ठः परश्चेति तैर्भूतैः इदं विश्वं सृष्ट्वा नियन्तृतया समुपाविशत् ॥ २० ॥

खवाय्वोरपि कारणतया तेजस्यन्तर्भावाच्चतुस्तत्त्वपक्षप्रवृत्तिरित्याह । चत्वारीति । आत्मनः परमेश्वरात्तेजआदीनि जातानि अप् पृथ्वी चतुर्थः आत्मा परमेश्वरः एवं चत्वारि तत्त्वानि तैस्तत्त्वैः इदं विश्वं जातम् अस्मिन् पक्षेऽपि इत्थं अवयविनः विश्वस्य जन्म ॥ २१ ॥

सप्तदशतत्त्वपक्षमाह । संख्यान इति । भूतानि च मात्राणि च एकेन मनसा सह षोडश आत्मा सप्तदशः ॥ २२ ॥

आत्मनि सर्वकारणे मनसोऽन्तर्भावे सति षोडशत्वपक्षसिद्धिरित्याह । तद्वदिति । त्रयोदशतत्त्वपक्षं दर्शयति । भूतानि पञ्च ज्ञानेन्द्रियाणि पञ्च मनश्च आत्मा परमेश्वरो जीवश्चेति ॥ २३ ॥

एकादशतत्त्वपक्षं दर्शयति । आत्मा महाभूतानि ज्ञानेन्द्रियाणि च इत्यमेकादशत्वम् नवतत्त्वपक्षं दर्शयति । प्रकृतिमहदहङ्काराः त्रीणि तत्त्वानि पञ्चतन्मात्राणि परमेश्वरश्चेति ॥ २४ ॥

---

भाषा टीका ।

सृष्टि के आदि मे महदादि कारण रूपवाली भूतादि षोडश विकार वाली प्रकृति सत्त्वादि गुणों से सृष्टि करने के लायक होती है पुरुष केवल ज्ञान से इच्छा मात्र करता है ॥ १७ ॥

उस पुरुष के इच्छा से महदादिक धातु विकार को प्राप्त होकर पराक्रमी होकर प्रकृति के बल से ब्रह्मांड को पैदा करते हैं ॥ १८ ॥

महदादिक सातही धातु हैं आकाशादि पाञ्च अर्थ ज्ञान जीव तथा आत्मा आधार तैसे देह इन्द्रिय प्राण ये उनसे होते हैं ॥ १९ ॥

छै तत्त्वों के पक्षमे भी पांच भूत छठवां आत्मा है उन पांच भूतों से युक्त परमात्मा इस जगत को बनाकर, इसके भीतर में प्रविष्ट होगया है ॥ २० ॥

चार तत्त्वों के पक्ष मेंभी अग्नि जल पृथिवी ये तीनों आत्मा से पैदा भये फिर यह सब जगत भया तिन से यह सब कार्य के अवयवी से भये ॥ २१ ॥

सतरा की संख्या में पञ्चभूत पांच तन्मात्र पांच इन्द्रिय एक मन एक आत्मा ऐसे सतरह होगये ॥ २२ ॥

तैसेही सोलहकी संख्या मे आत्मा हीको मन मान लिया तो सोलह भये पांच भूत इन्द्रिय मन आत्मा परमात्मा इस प्रकार से तेरा तत्त्व भये ॥ २३ ॥

इति नाना प्रसंख्यानं तत्त्वानामृषिभिः कृतम् ।
सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥ २५ ॥

उद्धव उवाच ॥

प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ।
अन्योऽन्यापाश्रयात्कृष्ण ! दृश्यते न भिदा तयोः ॥
प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथाऽऽत्मनि ॥ २६ ॥
एवं मे पुण्डरीकाक्ष ! महान्तं संशयं हृदि ।
छेत्तुमर्हसि सर्वज्ञ ! वचोभिर्नयनैपुणैः[1] ॥ २७ ॥
त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः[2] ।
त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः ॥ २८ ॥

भाषा टीका ।

पञ्च महाभूत पञ्च इन्द्रिय एक आत्मा ऐसे ग्यारह होगये आठ प्रकृति और पुरुष के मानने से नौ तत्त्व हो गये ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपसंहरति । इतीति । इति एभिः प्रकारैः प्रकृतिपुरुषभेदज्ञापनायेत्यर्थः ॥ २५ ॥

ननु गुणसाम्यं प्रकृतिस्तस्याः सत्त्वादयो गुणा नत्वात्मन इति तयोर्भेदाप्रतीतेः कथं ज्ञातुं शक्यत इत्युद्धवः पृच्छति । प्रकृतिरिति ।, आत्मना जडाजडस्वभावेन विलक्षणौ अन्योऽन्यापाश्रयात्परस्परपरिहारेणेत्यर्थः । अन्योऽन्यापाश्रयत्वमेवाऽऽह । प्रकृताविति । प्रकृतौ तत्कार्ये देहे प्रकृतिश्चाऽऽत्मनि तेन विना तस्या अप्रतीतेः अहमित्यभेदप्रतीतेर्न देहात्मनो भेदो लक्ष्यत इत्यर्थः ॥ २६ ॥

हृदि वर्तमानं संशयम् नये युक्तौ नैपुण्यं प्रावीण्यं येषां तैः ॥२७॥

अर्हसीत्युक्तं तत्र हेतुमाह । त्वत्त इति । हि यस्मात् त्वत्प्रसादादेव अत्र ज्ञाने प्रमोषो भ्रंशश्च ते शक्तितो मायातः ननु स्वप्रकाशस्याऽऽत्मनः कथं ज्ञानप्रमोषः ज्ञानदाने तत्प्रमोषे वा मम किंप्रयोजनं तत्राऽऽह । त्वमेवेति ॥ २८ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

प्रकृतिपुरुषेति सर्गादाविव्यक्तमेव तात्पर्यं व्याख्यातम् ॥ २५ ॥

तत्र प्रकृतिपुरुषभेदज्ञापने । परस्परपरिहारेणान्योऽन्यस्यातेन भिन्नतया ज्ञानादित्यर्थः तदेव प्रकृतिपुरुषभेदादर्शनमेव तेन भिन्नेत्यादि यथासंख्यं हेतुद्वयम् । तेनात्मना तस्या देहावस्थायाश्च मायायाः प्रकृतेः । हेतुद्वयस्याध्याहारादेवेत्यर्थ इत्युक्तम् ॥ २६ ॥

युक्तावर्थापत्त्यनुमानाभ्यतमायां प्रावीण्यमबाधितत्वम् ॥ २७ ॥

तत्र संशयच्छेदनार्हत्वे स्वप्रकाशस्य चिदेकरूपस्यात्मनो जीवस्य । तत्प्रमोषे ज्ञानभ्रंशे त्वमेवेति । मायादूरीकरणेन ज्ञानदाने तवैव शक्तिमत्त्वात् । तत्संमुखादन्यत्रैव मायाया अभिभवसामर्थ्यादिति भावः ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मविलक्षणौ विलक्षणात्मानौ विलक्षणस्वरूपौ स्वतो विलक्षणौ इति वा ॥ २६ ॥ २७ ॥

श्रीतृशक्तितः श्रीतृणामस्मरणशक्तितः ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमुपपादितान् पक्षानुपसंहरति । इतीति । इतिशब्दः प्रदर्शनाभिप्रायकः एवं त्रित्वपञ्चत्वषेऽप्यवगन्तव्ये इत्यर्थः । तत्र त्रित्वपक्षे प्रकृतिपुरुषेश्वररूपाणि त्रीणि तत्त्वानि पञ्चत्वपक्षे चतुस्तत्त्वपक्षोक्तानि चत्वारि वायुरेक इति पञ्चेत्येवम् ऋषिभिः कृतं सर्वं प्रसंख्यानं न्याय्यं न्यायादनपेतं कुतः युक्तिमत्त्वात् अन्तर्भावानन्तर्भावात्मकयुक्तियुक्तत्वात् अतः किं विदुषामशोभनं किं दुर्घटमित्यर्थः न किञ्चिदिति भावः ॥ २५ ॥

कात्स्न्र्येन तत्त्वगणनायां पुरुषः प्रकृतिर्व्यक्तमिति प्रकृतिपुरुषौ पृथक् कीर्तितौ तत्र यद्यपि प्रकृतिपुरुषौ विलक्षणस्वरूपस्वभावौ तथापि देवोऽहं मनुष्योऽहमिति तादात्म्यप्रतीतेः किङ्कारणं यदि तद्दुर्निरूपं तर्हि तयोर्न भेदः प्रतिष्ठितो भवतीति पृच्छति । प्रकृतिः पुरुषश्चोभाविति । आत्मविलक्षणौ विलक्षणात्मानौ विलक्षणस्वरूपौ स्वतो विलक्षणौ इति वा अन्योऽन्येत्यस्य तथापीत्यादिः हे कृष्ण ! अन्योऽन्यापाश्रयात्परस्परपरिहारेणाप्रतीतेरित्यर्थः तयोः प्रकृतिपुरुषयोर्भिदा न दृश्यते ॥ २६ ॥

१ छेत्तुमर्हसि पद्मवचोभिस्तत्त्वनैपुणैः    २ प्रमोषस्तुनशक्तितः इति वि०पाठः ३ प्रमोषः श्रोतृशक्तितः इति शुकप०पाठः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेव व्यनक्ति। प्रकृताविति। प्रकृतौ तत्कार्ये देहे आत्मा तथा प्रकृतिश्चात्मनि लक्ष्यते परस्परपरिष्वङ्गेणाप्रतीतेरित्यर्थः। देवोऽहमित्यभेदप्रतीतेश्च न देहात्मनोर्भेदो लक्ष्यत इत्यर्थः। एवमित्थंभूतं हृदिस्थं महान्तं संशयं नये युक्तौ नैपुण्यं प्रावीण्यं येषां तैर्वचोभिः छेत्तुमर्हसि अर्हत्वं हेतुतया सम्बोधयति सर्वज्ञेति ॥२७॥

सर्वज्ञत्वमेवान्वयव्यतिरेकाभ्यामुपपादयति। त्वत्त इति। जीवानामस्माकं ज्ञानं यथावस्थिततत्तदर्थविषयज्ञानं त्वत्तस्त्वत्प्रसादादेवेत्यर्थः। स्वभावतस्तु तेषामत्र ज्ञाने ते तव शक्तितः अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते इत्युक्तायाः शक्तेर्हेतोः प्रमोषः संकोचः त्वत्तोऽन्ये सर्वे संकुचितज्ञाना एवेति त्वमेव सर्वज्ञ इति भावः। आत्ममायायाः स्वमायाया गतिं मार्गं याथात्म्यमिति यावत्त्वमेव वेत्थ जानासि इतरेतु सर्वे त्वन्मायया मोहिता न जानन्तीति भावः। तदेवाह। नचापर इति ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उपसंहरति। इतीति ॥ २५ ॥

उद्धव एवं तत्त्वसंख्याविषयानुपपत्तिशङ्कापरिहारश्रवणेन छिन्नसंशयोऽपि शङ्कोऽपीदानीं प्रकारान्तरेण शङ्कते। प्रकृतिरिति। अत्र पुरुषो विष्णुः प्रकृतिर्जडसंज्ञा तावुभौ यद्यप्यात्मविलक्षणौ स्वरूपत एव भिन्नौ "अन्तरङ्गं भिदा चेति वैलक्षण्यं प्रकीर्तितम्" इति अतो वैलक्षण्यं भेदःतथाप्यनयोरन्योऽन्यापाश्रयात् भिदा न दृश्यते तत्कृत इति चोद्याभिप्रायः ॥ २६ ॥

अन्योऽन्याश्रयत्वं विवृणोति। हिशब्दो हेतौ हरेः प्रकृत्याधारत्वेन तत उत्तमत्वं प्रकृतेस्तदधीनत्वेन तदवरत्वमनयोरेवानयोरन्योऽन्याधारत्वमेव दृश्यते हि मन्दमास्तमाम्मन्दमतेर्मे संशयं छेत्तुमर्हसीत्यन्वयः पद्मेशेत्यनेन हरेः प्रकृत्युत्तमत्वं किंलक्षणमिति जानन्नप्युद्धवो लोकविषयमन्दमतिरथमात्मन्युपचरतीति ज्ञातव्यम् ॥ २७ ॥

एतदेव प्रामाणिकमिति भावेनाह। त्वत्त इति। तच्छक्तितोऽल्पबुद्धित्वात्तामसाविद्यारूपया ज्ञानस्य प्रमोषोऽपि त्वत्तः शक्तिः कात्स्नर्ये लक्ष्मीरिति कात्स्नर्येणाकुण्ठत्वात् तु शक्त्यभिधानाच्छक्तिशब्देन बुद्धिरित्युच्यते आत्ममायायाः स्वसामर्थ्यस्य त्वदधीनप्रकृतेर्वा गतिं स्थितिम्

> आधारः प्रकृतेर्विष्णुर्नाधारस्तु हरेः क्वचित्।
> तथाप्यन्योन्यकगो यद्वत् दृश्यते मन्दचेतसाम् ॥

इति पाद्मोक्तवचनात् मुख्याधारत्वं हरेरितरत्र मन्दमतिविलक्षणेति द्वितीयवृत्त्येन दर्शयति ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एवमिति यदुक्तं तत्र श्रीभगवन्मतं जीवेश्वरभेदपक्षमेव हेतुत्वेन दर्शयति। त्वत्त इति। शक्तिता मायाहृदिस्थ एवेति तस्य तत्रानाद्यस्य नैपुण्यं निरस्तं ननु मायावृतानां मत्तः कथम् ज्ञानं स्यात् कथं वा स्वकार्यात्मनो मायया ज्ञानप्रमोषस्तत्राह। त्वमेवेति। पूर्वत्र मायादूरीकरणे तवैव शक्तिरुत्तरत्र मायायास्त्वदङ्गीकृतादन्यत्राभिभवसामर्थ्यमस्त्येवेति ध्वनितं तदेवमष्टाविंशतिसहायः षड्विंशतिपक्ष एवमनेन दृढीकृतः ॥२८-३२॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

उपसंहरति। इतीति ॥ २५ ॥

तत्त्वविचारोत्थं संशयान्तरमाह। प्रकृतिर्माया पुरुष ईश्वरः आत्मना स्वरूपेणैव जडत्वेन चविलक्षणावेव यद्यपि शास्त्रदृष्ट्या ज्ञायेते तदपि देहेष्वनयोरन्योऽन्यापाश्रयात् परस्पराश्रितत्वात् भिदा भेदो न दृश्यते अन्योऽन्यापाश्रयं विवृणोति। प्रकृतौ तत्कार्ये देहे लक्ष्यते तथा प्रकृतिकार्यो देहश्च आत्मनीति तयोरन्योऽन्याधिष्ठातृत्वेनान्योऽन्याश्रितत्वम् ॥ २६ ॥

छेत्तुमर्हसि प्रकृतेः सकाशात् परमात्मानं पार्थक्येन दर्शयित्वेति भावः। नये युक्तौ नैपुण्यं प्रावीण्यं येषां तैः ॥ २७ ॥

त्वत्तो ज्ञानं त्वयैव विद्याशक्त्या ज्ञानप्रदानमित्यर्थः। तेऽत्र शक्तितः प्रमोषः इति तव या शक्तिरविद्या तयैव ज्ञानस्य चौर्यमित्यर्थः। ननु मच्छक्तेर्ज्ञानचौर्येण किम्प्रयोजनं तत्राह। त्वमेवेति ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधम् क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते उत्तमः पुरुषस्त्वन्य इति श्रुतिमतं मूलभूतं संक्षेपतो विस्तरतश्च प्रतिपादयद्भिः ऋषिभिः नानाप्रसंख्यानं कृतम् ॥ २५ ॥

उक्तेऽर्थे शङ्कते। हे कृष्ण! अनाद्यविद्यायुक्तस्येत्यत्र प्रकृतिः पुरुषश्चेत्युभौ पदार्थौ भगवता दर्शितौ तौ आत्मविलक्षणौ आत्मना स्वरूपेण विलक्षणौ यद्यपि तव वचनप्रामाण्यात् तदपि अनयोर्भिदा दृश्यते कुतः अन्योऽन्यापाश्रयात् परस्परैक्यप्रतीतेः स्थूलोऽस्मीत्यादि प्रतिबन्धः अतः प्रकृतौ देहरूपायां पुरुषः आत्मनि पुरुषे प्रकृतिश्चाभिन्नतया लक्ष्यते ॥ २६ ॥

एवम्भूतं संशयं हे सर्वज्ञ! त्वमेव छेत्तुमर्हसि नयेन युक्त्या नैपुण्यं येषां तैः ॥ २७ ॥

त्वमेव छेत्तुमर्हसीत्युक्तं तत्र हेतुमाह। जीवानां ज्ञानं त्वत्तः सर्वज्ञादेव भवति अत्र संसारे प्रकर्षः मोषः अपहारः ज्ञानस्येति शेषः ते तव शक्तितः मायया अपहृतज्ञाना इति श्रीभगवदुक्तेः तस्याः गतिं त्वमेव वेत्थ अपरो जीवो न वेत्ति ॥२८॥

### भाषा टीका।

इस प्रकार से ऋषि जनों ने नाना प्रकार से तत्वों की संख्या की है युक्ति युक्त होने से सबही उचित है क्योंकि विद्वान् जनों को कौनसी बात शोभित नहीं होगी ॥ २५ ॥

उद्धव उवाच-प्रकृति तथा जीव ये दोनों यद्यपि स्वभाव

श्रीभगवानुवाच ॥

प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ !।
एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ २९ ॥
ममाङ्ग ! माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते ।
वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ ३० ॥
दृग्रूपमार्कं वपुरत्ररन्ध्रे परस्परं सिध्यति यः स्वतः खे ।
आत्मा यदेषामपरोऽयमाद्यः स्वयाऽनुभूत्याऽखिलसिद्धसिद्धिः॥
एवं त्वगादिश्रवणादिचक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ॥ ३१ ॥
योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः ।
अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ॥ ३२ ॥

भाषा टीका ।

से भिन्न हैं तोभी हे कृष्ण ! इन दोनों का आपस मे आश्रय होने से कोई भेद नहीं दीखता है देह मे आत्मा का भान होता है आत्मा मे देह का भान होता है ॥ २९ ॥

हे पुण्डरीकाक्ष ! हे सर्वज्ञ मेरे हृदय मे वर्तमान इस महा संशय को नीति से निपुण निज वचनों से आप दूर करने को योग्य हो ॥ २७ ॥

आप के ही कटाक्ष से जीवों को ज्ञान होता है आपके ही शक्ति से ज्ञान का नाशभी होता है आपही अपनी माया की गति को जानते हो दूसरा कोई नहीं जानता है ॥ २८॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विकाराविकाराभ्यां नानात्वैकत्वाभ्यां सापेक्षानिरपेक्षत्वाभ्यां प्रकाश्यप्रकाशाभ्यां चात्यन्तं भेदं वक्तुमाह । प्रकृतिः पुरुषश्चेति। विकल्पोऽत्यन्तभेद एव कुत इत्यपेक्षायां प्रकृतिशब्दोक्तदेहादिसंघातस्य विकारित्वं तावद्दर्शयति । एष इति द्वाभ्याम् । एष सर्गः सृज्यत इति सर्गो देहादिसंघातो वैकारिको विकारवान् अत्र हेतुः गुणव्यतिकरात्मको गुणक्षोभकृतः ॥ २९ ॥

नानात्वमाह । ममेति विकल्पं भेदं तद्बुद्धीश्च अनेकधात्वं प्रपञ्चयति वैकारिकोऽनेकविकारवानपि स्थूलेन मार्गेण तावत्त्रिविधः त्रैविध्यमाह । अध्यात्ममिति एकंरूपम् ॥ ३० ॥

तानि रूपाणि दर्शयति । दृगध्यात्मम् रूपमधिभूतम् अत्र रन्ध्रे चक्षुर्गोलके प्रविष्टमार्कं वपुरंशोऽधिदैवमिति सापेक्षप्रकाशतामाह । परस्परमिति । चक्षुषा रूपं ज्ञायते तदन्यथाऽनुपपत्त्या चक्षुः तत्प्रवृत्त्यन्यथाऽनुपपत्त्या तदधिष्ठात्री देवता ततश्च चक्षुषः प्रवृत्तिस्ततो रूपज्ञानमित्येवमेतत्त्रयं परस्परं सिध्यति अत्र रन्ध्रे इति विशेषणव्यावर्त्यमाह । दृष्टान्तोपयोगितया यस्तु खे आकाशे अर्को वर्तते मण्डलात्मा स तु स्वतः सिध्यति चक्षुर्विषयत्वेऽपि प्रतियोग्यपेक्षाभावमात्रेण स्वत इत्युक्तम् इदानीमात्मनो विकारित्वाद्यभावेन भेदमाह । यद्यस्मादात्मा एषामध्यात्मादीनामाद्यः कारणमत एकरूपोऽभिन्नश्च तस्मादेतेभ्योऽपरो भिन्नः स्वप्रकाशत्वादपीत्याह । स्वयाऽनुभूत्या स्वतः सिद्धप्रकाशेनाखिलानां सिद्धानां परस्परप्रकाशकानामपि प्रकाशकः सर्वेषामपि सामान्यतश्चित्प्रकाशविषयत्वात् अत एव स्वप्रकाशत्वं सिद्धम् चक्षुषि दर्शितं त्रैविध्यमिन्द्रियान्तरेष्वप्यतिदिशति । एवमिति । यथा चक्षुरेवं त्वगाद्यपीत्यर्थः । त्वक् स्पर्शो वायुरिति श्रवणं शब्दो दिश इति जिह्वा रसो वरुण इति नासा गन्धोऽश्विनाविति चित्तेन युक्तमन्तःकरणान्तरमपि तत्र चित्तं चेतयितव्यं वासुदेव इति मनो मन्तव्यं चन्द्र इति बुद्धिर्बोद्धव्यं ब्रह्मेति अहङ्कारोऽहङ्कर्तव्यं रुद्र इत्येवं त्रिविधमित्यर्थः ॥ ३१ ॥

ननु पुनरपि वैलक्षण्यमात्रमेवोक्तम् त्रिविधप्रपञ्चव्यतिरिक्तात्मप्राप्तिस्तु कुतः स्यात् अहंकारनिवृत्त्या तत्कुतः त्रिविधविकल्पनिवृत्त्येवेत्याशयेनाऽऽह । योऽऽसावहमहंकारः तमेवाऽऽह गुणक्षोभं करोतीति तथा ततः परमेश्वरात्कालाख्यात् निमित्तात् प्रधानं मूलमुपादानं यस्य तस्मान्महतः प्रसूतो विकारः स त्रिवृत् त्रिविधो मोहमयस्य विकल्पस्य हेतुः त्रिवृत्त्वमेवाह । वैकारिक इति ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

प्रकृतेर्विकारित्वम् आत्मनोऽविकारित्वं नाभ्याम् आत्मत्वे नानात्वम् आत्मन एकत्वं ताभ्याम् प्रकृतेः सापेक्षप्रकाशत्वम् आत्मनस्तु निरपेक्षप्रकाशत्वं ताभ्यां च अत्र प्रकृतेर्विकारित्वे ॥ २९ ॥

विधत्ते सृजति । तद्बुद्धीश्च भेदज्ञानानि । वैकारिक इत्यत्र सर्ग इति विशेष्यं पूर्वश्लोकादनुवर्तनीयम् । तदन्यथेति तस्य रूपज्ञानस्य अन्यथा चक्षुर्विनाऽनुपपत्त्या सिद्ध्या अतीन्द्रियम् चक्षुर्ज्ञायतेऽनुमीयते अयं चक्षुष्मान् रूपज्ञानाद्यथैव तथैवमिति ॥ ३० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

तत्प्रवृत्तीति तस्य चक्षुषो रूपदर्शने या प्रवृत्तिस्तस्या अधिष्ठातृदेवतामन्तराऽसिद्ध्या चक्षुरधिष्ठात्री अर्करूपदेवतानुमीयते इदं चक्षुः साधिष्ठातृकं जडत्वेऽपि प्रकाशमानत्वाद्गृहादिवत् यन्नैवं तन्नैवमिति। ततो देवतातः तत्स्वतुषः। अत्र रन्ध्रे इति विशेषणान्तु अर्कवपुषो ज्ञेयम्। यथा भूतले घटो नास्तीत्यत्र, भूतलस्य विशेषणत्वम् अभावस्य विशेष्यत्वं भूतलानुयोगिको घटप्रतियोगिकोऽभाव इति तथा कीदृशार्कं वपुः अत्र रन्ध्रो एतद्रन्ध्राधारकमिति। तथा चैतद्विशेषणेन यद्व्यावर्त्यं मेयं तदाह तत्र हेतुः दृष्टान्तस्य वा दार्ष्टान्तिके उपयोगिता उपकारकत्वं तथा यथाकाशस्थत्वेनं चक्षुर्दोषापरकत्वं किन्तु चक्षुष्यस्यैव तथान्तःकरणावच्छिन्नस्यैव जीवस्य पुण्यपापाद्युपरक्तत्वम् न परमात्मन इति भावः। ननु यदि स्वतः सिद्ध्यति तर्हि तमन्धाः कथं न पश्यन्तीति चेत्तत्राह। चक्षुर्विषयत्वेऽपीति। यथा चक्षुरवच्छिन्नाधिदैवतस्य प्रतियोगिनः सम्बन्धिनश्चक्षुरपेक्षा न तथा गगनस्यस्येश्चक्षुरपेक्षाऽस्तीत्येतावन्मात्रेण स्वत इत्युक्तं चक्षुर्विषयत्वमस्त्येवेत्यर्थः। अतः सर्वकारणत्वात् एकरूपः विश्वाधिष्ठानत्वेनाविकृतस्वरूपः कार्याणामिव च तस्माद्विकारित्वाभावात्। एतेभ्योऽध्यात्मादिभ्यो भिन्नः आत्मनः स्वप्रकाशत्वात् स्वव्यवहारे परानपेक्षत्वात् अपि आत्मा भिन्न इत्याह। अतएव सर्वप्रकाशकत्वाच्च। तस्य आत्मनः एवमित्यत्रैकम्। अतिदिशति उपादिष्टमर्थमन्यत्र नयति। त्वगध्यात्मकं स्पर्शोऽधिभूतं वायुरधिदैवम् एवमग्रेऽपि ॥ ३१ ॥

नैलक्षण्यवामिति घटकुड्यां प्रभातमिति न्यायेन विलक्षणत्वमेवोक्तम् स्यादिति पर्यन्तं शङ्काभासः। अहङ्कारेत्यादिसमाधानग्रन्थः। विकल्पस्य भेदस्य ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

विकल्पः भेद एवेत्यर्थः। एष सर्गः प्रपञ्चः वैकारिकः विकारस्थः ॥ २६ ॥ ३० ॥

अध्यात्मादिकं विवृणोति। दृगिति दृक् चक्षुरध्यात्मं रूपमधिभूतं तदुभयगार्के वपुः अधिदैवमर्कः तत्सम्बन्ध्यार्के परस्परात्सिध्यति परस्परोपकार्योपकारकभावात् कार्यकरं भवति आत्मा तु स्वतः सिध्यति स्वप्रकाशः दृगाद्युपरमेऽपि स्थितः अखिलसिद्धिसिद्धः अखिलप्रकाश्यप्रकाशकः इत्युक्तं परस्परोपकारादिकमिन्द्रियान्तरादिष्वतिदिशति। एवं त्वगादीति। आदिशब्दैरधिभूतं विषयः अधिदैवं च विवक्षितम् ॥ ३१ ॥

अहङ्कारस्य देहात्मभ्रमहेतुत्वं वदन् प्रश्नोत्तरं निगमयति योऽसाविति। यः स अहङ्कारः सात्त्विकादिभेदेन त्रिवृत् वैकृतः राजसः मोहविकल्पहेतुः देवत्वाद्याकारारोपहेतुः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं मम सर्वज्ञत्वोपपादनाय दुर्विज्ञेयगतिर्माया त्वयाभिहिता तत्कार्यभूतोऽहङ्कार एव देहात्मनोस्तादात्म्यप्रतीतिकारणमित्युत्तरमाह। प्रकृतिः पुरुषश्चेति। विकल्पः भेद एवेत्यर्थः। तत्र तावदेष सर्गः सृज्यत इति सर्गः अधिभूताध्यात्माधिदैवश्च वैकारिकः प्रकृतिविकारात्मकाहङ्कारारब्धः गुणव्यतिकरात्मकः इच्छाभिद्वेष्मीत्यात्मगुणानामिच्छादीनां स्थौल्यादीनां देहगुणानां च व्यतिकर एकधर्मिनिष्ठतया सङ्कीर्णतया च प्रतीतिर्यस्मात्स आत्मा स्वरूपं यस्य तथाभूतः ॥ २६ ॥

न केवलं मदीया माया स्वविकाराहङ्कारद्वारा गुणव्यतिकरकरैवापि त्वात्मनि देवत्वमनुष्यत्वस्वतन्त्रत्वादिभेदबुद्धिकरी चेत्याह। ममेति। अङ्ग हे उद्धव! गुणैः सत्त्वादिभिः कोऽसौ वैकारिक इत्यत आह। वैकारिक इति। अध्यात्ममेकमधिभूतं द्वितीयमधिदैवं तृतीयमित्येवं यस्त्रिविधः स वैकारिक इति सम्बन्धः ॥ ३० ॥

अध्यात्मादिकं विवृणोति। दृगिति। दृक् चक्षुरध्यात्मं रूपमधिभूतम् मार्कमर्कस्य सम्बन्धी यद्वपुः शरीरं तदधिदैवं राजसाहङ्कारसहकृतात्तामसात्सात्त्विकाच्चाहङ्काराद्दृगादीनामिन्द्रियाणां सृष्टिः रूपादीनां तद्विषयाणामधिष्ठातॄणां देवानां च प्रकरणेषु सृष्टिस्तत्र तत्राभिहितस्याहङ्कारस्याध्यात्मादिप्रकारता स्मारिता एतेषां त्रयाणां परस्परोपकार्योपकारकभावेनैव ज्ञानजननरूपकार्यकरत्वमित्याह। यत्रेति। यत्र शरीरे रन्ध्रे चक्षुर्गोलके परस्परात्सिध्यति परस्परोपकार्योपकारकभावात् सिध्यति कार्यकरं भवति अर्कवपुषा रश्मिद्वाराधिष्ठितयोरेव चक्षुस्तद्विषययोर्ग्राह्यग्राहकभावः। अतस्तयोरधिदैवोपकार्यत्वम् अनतिविप्रकृष्टस्याव्यवहितस्य च रूपस्यैव सुग्राह्यत्वात्तदुपकार्यत्वं चक्षुष एवं त्रयाणामन्यतमं विनान्यतमस्य ज्ञानजनकत्वासम्भवात्परस्परोपकार्योपकारकत्वमवगन्तव्यम् अध्यात्मादिशब्दानां विभक्त्यर्थेऽव्ययीभावानामधिकरणशक्तिप्रधानत्वेऽपि तच्छक्तेराधेयनिरूप्यत्वादाधेयपरत्वम् इन्द्रियाणां देहेऽवस्थानादध्यात्मत्वं विषयाणां तु रूपादीनां तेजःप्रभृतिभूतनिष्ठत्वादधिभूतत्वम् अधिष्ठातृदेवतावपुषोऽर्कादाक्यस्येन्द्ररूपदेवतानिष्ठत्वादधिदैवत्वं यद्यध्यात्मादीनां परस्पराद्रूपादिप्रकाशो भवति कुतस्तर्ह्यात्मप्रकाश इत्यत आह। यः स्वतः ख इति। हृदयाकाशे य आत्मा "हृदिस्थयमात्मा प्रतिष्ठित" इति श्रुतेः स स्वतः सिध्यति स्वयं प्रकाशते इत्यर्थः कुतः यद्यस्मादयमात्मा एषां दृगादीनां त्रयाणामाश्रयः प्रकाशकत्वे हेतुतया वर्तमानः दृगाद्युपरमे व्यवस्थितस्मात् एतेभ्योऽपरः भिन्नः अत्यन्तविलक्षणः तदेवाह। स्वया स्वासाधारणयानुभूत्या ज्ञानेन अखिलसिद्धसिद्धिरखिलप्रकाश्यप्रकाशकः एवं चक्षुष्युक्तं परस्परोपकार्योपकारकभावमिन्द्रियान्तरेष्वप्यतिदिशति। एवमिति। चक्षुर्यथा परस्परात्सिध्यत्येवं त्वगादीत्यर्थः। आदिशब्दैरधिभूताधिदैवे विवक्षिते तत्र त्वगिन्द्रियस्याधिभूतं स्पर्शोऽधिदैवं वायुः श्रोत्रस्याधिभूतं शब्दोऽधिदैवं दिशः जिह्वाया अधिभूतं रसः प्रचेता अधिदैवं नासाया अधिभूतं गन्धोऽधिदैवमश्विनौ इत्यूह्यं चक्षुरादीनां मनःसहकृतानामेव कार्यकरत्वमित्यभिप्रेत्य विशिनष्टि। चित्तयुक्तमिति। तत्र मनसोऽधिभूतमनुध्येयो विषयश्चन्द्रमा अधिदैवम् ॥ ३१ ॥

अहमेव सतः किमित्यतोऽहङ्कारस्य देहात्मतादात्म्यप्रतीतिहेतुत्वं वदन् प्रश्नोत्तरं निगमयति योऽसाविति। योऽसावहमहङ्कारः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स मोहविकल्पहेतुरिति सम्बन्धः । मोहो देहात्मनोरभेदभ्रमः विकल्पः आत्मनि देवत्वमनुष्यत्वादिभेदारोपः तयोर्हेतुः महदहङ्कारं विशिनष्टि । गुणानां सत्त्वरजस्तमसां क्षोभो वैषम्यं तेन कृतो विकारस्तदात्मकः प्रधानं प्रकृतिर्मूलं कारणं यस्य तस्मान्महतो महत्तत्त्वात्प्रसूतः वैकारिकस्तामस ऐन्द्रियश्चेति त्रिवृत् त्रिप्रकारः वैकारिकः सात्त्विकः ऐन्द्रियस्तैजसः राजसाहङ्कारस्येन्द्रियोत्पत्तावनुग्राहकत्वाभिप्रायेणैन्द्रिय इत्युक्तम् एवं देहात्मनोरभेदप्रतीतौ कारणमुक्तम् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मविलक्षणाविति यत्त्वयुक्तं तत्तथैवेति भावेन परिहरति । प्रकृतिरिति । चशब्दो वैलक्षण्यानुकर्षार्थोऽवधारणार्थश्च प्रकृतिपुरुषावन्योऽन्यविलक्षणावित्यर्थः वैलक्षण्याविवेकः किंकृत इति तत्राह । विकल्प इति मिथ्याज्ञानकृतः ननु विकल्पः किंकारणक इति तत्राह । एष इति । एष विकल्पः तमःकारणक इति प्रतिज्ञायते तथाहि गुणव्यतिकरात्मक एष सर्गो वैकारिकः विकारनिमित्तः स च गुणव्यतिकरस्त्रिविधः सत्त्वरजस्तमसामेकैकप्राधान्येन त्रैविध्यं तत्र तमःप्रधानानामेव सत्त्वानां विरुद्धकल्पनं यस्मात्तस्मात्तम एव कारणम् ॥ २९ ॥

न केवलं तम एव प्रकृतिरीश्वरेच्छा च कारणमित्याह । ममेति । अङ्ग उद्धव । मम माया ममेच्छा गुणमयी ज्ञानादिगुणमयी सत्त्वादिगुणमयी माया मदधीना प्रकृतिश्च गुणैर्गुणभूतैर्महदहङ्कारादिभिः सत्त्वादिगुणैर्वानेकधा विकल्पबुद्धिं विधत्ते करोति महत्तत्त्वविकाराज्जातस्त्रिवैकारिकोऽहङ्कारस्त्रिविधः महत्तत्त्वाद्विकुर्वाणादहं तत्त्वमजायत इत्यादिना प्रसिद्धम्—

वैकारिको महांश्चैव तथाहङ्कार एव च ।
तथैव सात्त्विकश्चांशो वैकारिक इति त्रिधेति ॥

च सोऽयं त्रिविधोऽपि त्रिविधः अध्यात्मादिभेदेन ॥ ३० ॥

एतत्त्रैविध्यं शृङ्गग्राहिकयैव दर्शयति । दृग्रूपमिति । रन्ध्रे गोलके दृक् चक्षुरिन्द्रियं तदध्यात्ममुपलक्षणमेतत् अध्यात्ममिन्द्रियाणि तैजसाहङ्कारस्वरूपाणि तैरेव विपरीतज्ञानं जायते अहङ्कारे विद्यमाने भ्रमो भवति नान्यदेति वचनात् परत्र देहाद्धियद्रूपं तदाधिभूतं तामसं परत्र दिवि योऽर्कस्तदधिदैवतं वैकारिकम् अनेन किंप्रयोजनमत्राह । परस्परामिति । अध्यात्मादिगतचक्षुराद्वीतरापेक्षया सिद्ध्यति । ज्ञानाख्यं प्रयोजनं भवति असौ सिद्धिः स्वतो न एकैकस्मात्स्यात् चक्षुराद्यन्यतमाभावे ज्ञानं नोदेतीत्यर्थः । नैतावता परस्परसिद्धिः पूर्यत इत्याह । आत्मेति । यदात्मा प्रयत्नो जडाहङ्कारो वाञ्छित तदा त्रिवर्गं वैकारिकं ज्ञानं प्रकृतिप्राकृतव्यतिरिक्तं जीवपरमात्मस्वरूपं कदा नु विशदं दृश्यत इत्यत्राह । एषामिति । आत्मेत्यनुवर्तते यद्येषां प्रकृतिप्राकृतानाम् उपरमः अत्यन्तोच्छेदनलक्षणा मुक्तिस्तदा स्वयानुभूत्या स्वरूपज्ञानेनात्मा जीव आद्यः आत्मा परमात्मा च ज्ञायत इति शेषः कीदृशो दृष्टसिद्धस्य सिद्धयसिद्धौ ज्ञानाज्ञाने यस्मात्स तथा सर्वस्य ज्ञानाज्ञानहेतुरित्यर्थः—

सम्यक् ज्ञानं हरेः शक्त्या तन्मुक्तस्य विशेषतः ।
देवतानुग्रहो नित्यो मुक्तस्यापि ह्यपेक्ष्यते ॥
नित्यं तत्प्रतिबिम्बत्वाज्जीवानामेव कृत्स्नशः ।
बाह्यज्ञानं च मुक्तस्य न जडाहंकृतेः क्वचित् ॥
किन्तु स्वरूपशक्त्यैव देवेभ्यश्चाभिजायते ।

इतिवचनात् उक्तन्यायमर्थं दर्शयति एवामिति । चक्षुर्जिह्वादिना सह त्वगादिश्रवणादिचैवमध्यात्मादिभेदेन त्रिविधं भाविचानित्यमन्योऽन्यापेक्षत्वात् कीदृशं त्वगादि चित्तयुक्तम् अनेन चित्तं मनोऽपि त्रिविधमिति ज्ञायते चक्षुरिति पुनर्वचनमवधारणार्थम्[१] ॥ ३१ ॥

तामसाहङ्कारोऽपि विकल्पहेतुरिति सूचितं पुरस्तात्तदिदानीं स्पष्टयति । योऽसाविति । योऽसौ मोहविकल्पहेतुरज्ञानान्यथाज्ञानहेतुर्विकारः सत्त्वादिगुणक्षोभो महत्तत्त्वं तेन कृतः सोऽहमहङ्कारस्त्रिवृत् त्रिरूपत्वेन वर्तते त्रिः प्रकारमाह । वैकारिक इति । वैकारिकस्तामस ऐन्द्रियोत्पत्तिहेतुः तैजसश्चेति । प्रयोजनमाह । जगत इति । जगतः प्रसूतिः सृष्टिस्तस्यारम्भः तथा जगत्सृष्टिहेतुरित्यर्थः अनेन प्रकृतेः कारणत्वं गतमत्राह । प्रधानं प्रकृतिर्मूलस्महत्तत्त्वद्वारा कारणं यस्य स तथा ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रकृतिपुरुषयोर्विकारित्वाविकारित्वाभ्यां नानात्वैकत्वपरस्परापेक्षत्वानपेक्षत्वाभ्यां परप्रकाश्यत्वस्वप्रकाशत्वाभ्यां चात्यन्तभेदं वक्तुमाह चतुर्भिः । प्रकृतिः पुरुषश्चेति विकल्पो भेदः प्रकृतेः सकाशात् पुरुषो भिन्न एव तदपि दृश्यते न भिदानयोरिति कथं अवोचीति भावः । कुत इत्यपेक्षायामाह । एष सृज्यत इति सर्गो देहादिसंघातः प्रकृतिकार्यत्वात् प्रकृतिशब्दवाच्यः वैकारिकः नानाविकारवान् यतो गुणव्यतिकरात् गुणक्षोभादेव आत्मा स्वरूपं यस्य सः गुणक्षोभकृत इति प्रकृतौ विकारो दर्शितः पुरुषस्तु केवलमीक्षमाणो निर्विकारः प्रसिद्ध एवेति भावः ॥ २९ ॥

नानात्वमाह । ममेति । विकल्पं भेदं तद्वुद्धिश्च वैकारिकः अनेकविकारवानपि स्थूलतस्त्रिविधः तत्राध्यात्ममित्येकम् अपरमाधिभूतमिति द्वितीयम् आधिदैवमन्यत् तृतीयम् ॥ ३० ॥

त्रैविध्यं दर्शयति । दृक् अध्यात्मरूपमधिभूतम् आर्कः सवितुः कांशोऽधिदैवम् अत्र रन्ध्रे चक्षुर्गोलके परस्परापेक्षत्वमाह । परस्परं सिद्धयतीति चक्षुषा रूपं ज्ञायते रूपज्ञानान्यथानुपपत्त्या तदधिदैवं रूपं ततश्चक्षुषः प्रवृत्तिस्ततो रूपज्ञानमित्येतत्त्रयं परस्परं सिद्धयति परमात्मा तु निरपेक्ष एव तत्र दृष्टान्तः । य इति । यस्तु खे आकाशे अर्को वर्तते मण्डलात्मा स तु स्वत एव सिद्धयति तथैवात्मा परमात्मा यत् यस्मादेषामध्यात्मादीनामाद्यः कारणं एकवचनादेकः योऽपरः कारणत्वादेव एतेभ्यो भिन्नः स्वयानुभूत्या स्वतः सिद्धप्रकाशेन अखिलानां सिद्धानां परस्परप्रकाशकानामध्यात्मादीनामपि सिद्धिर्वस्तुतः प्रकाशो यस्मात् सः तेन निरपेक्षत्वादेकत्वात् स्वप्रकाशत्वादन्यप्रकाशकत्वाच्च पुरुषः प्रकृतेर्भिन्न इति प्रतिपादितम् । चक्षुषि वर्णितं तत्त्रैविध्यमिन्द्रियान्तरेष्वप्यतिदिशति । एवमिति । यथा

---

१ चित्तयुक्तत्वावधारणार्थमित्यर्थः ।

आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः।
व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥ ३३ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चक्षुरिति चक्षू रूपमर्कांशः एवं त्वगादि त्वक् स्पर्शो वायुरिति श्रवणादि श्रवणं शब्दो दिश इति जिह्वादि जिह्वा रसो वरुण इति नासादि नासा गन्धोऽश्विनाविति चित्तयुक्तं चित्तादि च चित्तं चेतयितव्यं वासुदेवांश इति उपलक्षणमेतत् मनो मन्तव्यं चन्द्र इति बुद्धिर्बोद्धव्य ब्रह्मेति अहंकारोऽहंकर्तव्यं रुद्र इति एवमन्यदपि सर्वं त्रिविधमिति ॥ ३१ ॥

नन्वसौ नानाविकारमयः प्राकृतः प्रपञ्चः सत्यो मिथ्या वा वादिनां मतवैविध्यान्निश्चेतुमशक्यत्वात् पृच्छ्यते इत्याकाङ्क्षायामनुवादपूर्वकमाह। योऽसाविति द्वाभ्याम्। गुणक्षोभकार्यः विकारमयः प्रपञ्चप्रधानमूलात् प्रधानहेतुकात् महतः सकाशात् प्रसूतः उद्भूतो योऽहङ्कारस्तस्मात्त्रिवृत् त्रिरूपीभूतः त्रिवृत्त्वमेवाह। वैकारिकस्तामस ऐन्द्रियश्चेति आधिदैवाधिभूताध्यात्मादिमयः सहि मोहविकल्पहेतुः मोहेन अज्ञानेन हेतुना सत्यो वा मिथ्या वा नित्यो वेत्येवं विकल्पस्य हेतुः ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

परिहरति। प्रकृतिः पुरुषश्चेति। विकल्पो भेद एव पुरुषर्षभेति सम्बोधनेन जडाजडयोरैक्यं शङ्कितुं योग्यो न भवानिति सूच्यते अचेतनत्वविकारत्वादिधर्मैर्ययाः भिन्न एव पुरुष इत्याह। एष इति सार्धद्वाभ्याम्। एष जडत्वेन प्रसिद्धः देहादिरूपः अनात्मवर्गः वैकारिकः विकारवान् सृज्यते इति सर्गः गुणानां व्यतिकरः क्षोभः आत्मा कारणं यस्य स गुणव्यतिकरात्मकः गुणक्षोभज इत्यर्थः ॥ २९ ॥

स च मम शक्तिभूतायाः मायायाः वेशभूतः इत्याह। ममेति। अङ्ग हे उद्धव। मम माया देवमनुष्यपश्वादिरूपैः अनेकधा भवति अत एव गुणैः देवत्वादिभिः विकल्पेषु जीवभिन्नेषु देवोऽस्मि मनुष्योऽस्मि अयं पशुः इत्याद्याः बुद्धीः धत्ते जीवानेव व्यामोहयतीत्यर्थः। स च वैकारिकः विकारवान् देहादिसंज्ञानः त्रिविधः तदुपपादयति। अध्यात्ममेकम् अत्राव्ययं विभक्तिसमीपसमृद्धीत्येनेन अध्यात्मादिशब्दानां विभक्त्यर्थेऽव्ययीभावः आत्मनि देहे वर्तमानमध्यात्मं चक्षुरादि अधान्यत् भूतेषु तेजःप्रभृतिषु संस्थितमधिभूतं चक्षुरादिग्राह्यं रूपादि रविरधिदैवं चक्षुराद्यधिष्ठातृ देवतारूपम् ॥ ३० ॥

तानि जडानि तद्द्रष्टा पुरुषस्तेभ्योऽन्य इत्याह। हगिति हगध्यात्मम् रूपमधिभूतम् अत्र हग् गोलकं प्रविष्टमर्कं वपुरधिदैवम् रूपग्राहकमिन्द्रियं हक् हग्ग्राह्यो गुणो रूपम रूपग्रहणे उपकारकमर्कं वपुरित्येवमध्यात्मादिकं परस्परं तेनैव द्रष्टा सिध्यति केन यः आत्मा स्वतः अनात्मभूतहगादिनैरपेक्ष्येण खे हृदि वर्तते हृद्ययमात्मेति श्रुतेः विषयेषु प्रेर्यमाणानां प्रेरकः अत एव एतेभ्योऽपरो भिन्नः किं बहुना स्वानुभूत्या ज्ञानेनाखिलसिद्धीनां सिद्धिः अनुकाशकः चक्षुषि दर्शितं त्रैविध्यं त्वगादिष्वपि दिशति एवमिति। चक्षुश्चक्षुरादित्रिकं यथा परस्परं सिध्यति एवं त्वगाद्यपीत्यन्वयः चक्षुरादीनां मनः सहकृतानामेव शब्दादिग्रहणे कारणत्वं द्योतयितुमाह। चित्तयुक्तमिति ॥ ३१ ॥

अथ प्रकृतिपुरुषाभेदशङ्कायां पुरुषेश्वरयोरत्यन्तभेदशङ्कायां च अहङ्कार एव हेतुरित्याह। य इति। अहमहङ्कारः मोहविकल्पयोर्हेतुः तत्र प्रकृतिपुरुषयोरैक्यभ्रमो मोहः पुरुषेश्वरयोरत्यन्तभेदभ्रमः विकल्पः ॥ ३२ ॥

---

### भाषा-टीका।

श्रीभगवान् उवाच हे पुरुषश्रेष्ठ! उद्धवजी प्रकृति और पुरुष इनका तो आपस में बड़ा भेद है यह जो प्रकृति का विकार देहादिक है सो तो गुणों के क्षोभ होने से बनता है ॥ २९ ॥

हे उद्धव! हमारी प्रकृति माया गुणमयी है सो अनेक प्रकार की भेद बुद्धियों को पैदा करती है तिसमें तीन भेद ये हैं एक अध्यात्म एक अधि दैव एक अधिभूत यही उसके विकार हैं ॥ ३० ॥

वे तीनों इस प्रकार से हैं जैसे रूप के देखने में नेत्र अध्यात्म है रूप अधिभूत है उस नेत्र में जो सूर्य देवता का अंश सो अधिदैव है ये तीनों आपस में एक के आश्रय के विना एक सिद्ध नहीं होता है औ जो आकाश में सूर्य है वह तो स्वयं ही सिद्ध होरहा है और जो आत्मा है सो तो इन तीनों से भिन्न है आद्य है अपने प्रकाश से सब प्रकाश होने वालों का प्रकाशक है जैसे नेत्र का कहा है तैसे ही त्वचा श्रवण चक्षु जिह्वा नासिका इनके व्यापारों में भी अध्यात्मादिक तीनों को जानना चाहिये ॥ ३१ ॥

यह जो गुणों के क्षोभका किया विकार है प्रधान कारण वाले महत्तत्व से पैदा भया है तिस में अहंकार मोह का, हेतु है सो सात्त्विक राजस तामस ऐसे तीन प्रकारका है ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

स कुतो निवर्तते आत्माज्ञानविलसितत्वात्तज्ज्ञाननिरस्याशयेनाऽऽह। आत्मा परिज्ञानमय इति। ननु कथं मोहमयत्वं विकल्पस्याहंकारस्य वा कैश्चित्सत्यत्वाङ्गीकारादेत्याऽऽह। विवाद इति। अयं भिदा अर्थनिष्ठो विवादोऽध्यात्मा परिज्ञानमय इत्यन्वयः यद्वा विवादः सर्वोऽपि भिदर्थनिष्ठ एव

उद्धव उवाच ॥

त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ! ।
उच्चावचान्यथा देहान् गृह्णन्ति विसृजन्ति च ॥ ३४ ॥
तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः ।
न ह्येतत्प्रायशो लोके विद्वांसः सन्ति वञ्चिताः ॥ ३५ ॥

श्रीभगवानुवाच ॥

मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् ।
लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु वस्तुमात्रनिष्ठः अतः परस्परं युक्तिभिरेवं भेदस्य निराकृतत्वान्मोहमयत्वं सिद्धमिति ननु यद्यहंकारो विकल्पश्च नास्ति अलन्तर्हि तन्निवृत्तिप्रयासेन तत्राऽऽह । व्यर्थोऽप्यर्थरहितोऽपि स्वरूपभूतात्मनो बहिर्मुखानां नैवोपरमेत् प्रत्युत तत्कृतः कर्मभिरुच्चनीचदेहेषु संसरन्तीति ॥ ३३ ॥

तत्र पृच्छति । त्वत्त इति । व्यापकस्यात्मनो देहाद्देहान्तरगमनमकर्तुः कर्माणि नित्यस्य च जन्ममरणादीनि कथमिति भावः ॥ ३४ ॥

एतद्विद्वांसो न सन्ति हि यस्मात्मायया वञ्चिता मोहिताः ३५

लिङ्गशरीराध्यासेन सर्वं घटत इत्युत्तरमाह । मन इति । प्रधानत्वेन पञ्चभिरिति निर्देशोऽन्येषामप्युपलक्षणार्थम् देहाद्देहान्तरं प्रति याति ततोऽस्य पश्चादात्मा तन्मनोऽनुवर्तते अहङ्कारेणानुगच्छति ॥ ३६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

सोऽहङ्कारः आत्माज्ञानविलसितत्वादात्मस्वरूपाऽज्ञानेन रचितत्वात् । तदज्ञानेन आत्मज्ञानेन अहङ्कारः आत्मापरिज्ञानमयः आत्माऽज्ञानविलसितः । मोहमयत्वमज्ञानविलसितत्वं केश्चिन्मीमांसकसांख्यवैशेषिकादिभिः । पूर्वार्थेऽपेरध्याहारः । आत्मेत्यादिपूर्वोक्तित्यगौरवमतो यद्वेति । अतो वस्तुमात्रनिष्ठत्वाभावात् । परस्परयुक्तिभिरिति भेदो नाम वस्तुनः स्वरूपं, तद्धर्मो वा आद्ये हस्तः कर इति वदूवदो भेद इति पर्यायापत्तिः । द्वितीये भेदस्यापि भेदस्य तद्धर्मत्वात् पुनस्तस्यापीत्यनवस्थेत्यादियुक्तिभिः । तन्निवृत्तिप्रयासेन अहङ्कारस्य विकल्पस्य च निवृत्तिसाधनश्रमेण प्रत्युतेत्यवयं वैपरीत्ये तत्कृतैः अहङ्कारकृतैः ॥ ३३ ॥

त्वत्त इति युग्मकम् । अत्र बहिर्मुखानां संसरणे । एतद्विद्वांसः व्यापकस्य कर्तुः संसरणं कथमित्यत्र सिद्धान्तवेत्तारः ॥३४ ॥३५॥

सर्वव्यापकस्यापि देहाद्देहान्तरगमनमकर्तुः कर्म नित्यस्य जन्ममरणादिकं च अन्येषां मायाबुद्धिकर्मेन्द्रियाणाम् । तत्ो मनःप्रधानाल्लिङ्गशरीराद्भिन्नः । मूलं कर्ममयं कुर्वद्रूपम् । यथाकाशस्य विभुत्वेन गमनासम्भवेऽपि घटाद्युपाधिगमनेनाकाशोऽपि गच्छन्निव प्रतीयते तद्वदत्रापीति भावः । वैष्णवानान्तु मते अणोरपि गमनं निरीहस्य न सम्भवति इति आक्षेपः उत्तरन्तु यथा स्थितमेव ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रियैरिति । भूतसूक्ष्माणामप्युपलक्षणम् लोकाल्लोकान्तरं शरीराच्छरीरान्तरम् ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत एवमतो देहादत्यन्तविलक्षण एवात्मेत्याह । आत्मेति । परिज्ञानमयः परितः कार्त्स्न्येन ज्ञानस्वरूपः परिच्छेदेन प्रदेशभेदेनापि जडत्वव्यावृत्तिः देहस्तु परितो जड इति भावः । विवादः अहम्प्रत्ययेन सर्वैः सम्प्रतिपन्नः परितो ज्ञानमय इत्यनेनैकरूप्यलाभात्तस्य विकाराभावप्रयुक्तत्वात्तत्प्रयुक्तं सदादिशब्दव्यपदेश्यत्वं देहस्य तु अचेतनपरिणामात्मकस्य पूर्वपूर्वविकाराणामुत्तरोत्तरेष्वभावावाश्रितशब्दव्यपदेश्यत्वं तथा तत्तद्वस्थाविषयाश्रितशब्दव्यपदेश्यत्वञ्च ध्वनितं तदाह । अस्तीति नास्तीति भिदार्थनिष्ठः नास्तीत्यस्य व्यपदेश इति शेषः उभयविधो व्यपदेशः भिदार्थनिष्ठः भिदया भेदेनावस्थितो योऽर्थः देवमनुष्यादिशरीररूपस्तन्निष्ठस्तद्विषय इत्यर्थः अस्तीति नास्तीत्येवंरूपो भेदव्यपदेशः अर्थनिष्ठः देवमनुष्यादिदेहरूपार्थनिष्ठ इति भावः यद्वा परिज्ञानमय आत्मा देहविलक्षणोऽस्ति नास्तीति विवादमात्रम् अस्त्येवेत्यर्थः भिदात्वर्थनिष्ठः लिङ्गत्रयस्य भावः अर्थनिष्ठ इत्यनेनात्मस्वरूपनिष्ठस्तन्निष्ठतया प्रतीतिस्तु भ्रम इति सूचितं सचात्मयाथात्म्यसाक्षात्कारेण निवर्तते ऽन्यथा तु न निवर्तत इत्याह व्यर्थ इति । व्यर्थोऽव्यर्थशून्योऽप्यात्मन्यविद्यमानोऽपि स्वस्य लोकसाक्षात्कारो यस्मात् तस्मात्त्वत्तः पराङ्मुखा विमुखा धीर्येषां तेषां पुंसां नैवोपरमेत् किन्त्वनुवर्तत एवेति भावः ॥ ३३ ॥

एवं भगवद्विमुखानां देवमनुष्यादिदेहसम्बन्धवियोगरूपसं-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वारानुवृत्तिरुक्ता तत्र पृच्छतीत्वत्त इति श्लोकाभ्याम् । त्वत्तः पराङ्मुखधियः उच्चावचानुत्कृष्टापकृष्टान् देहान् यथा गृह्णन्ति यथा च विसृजन्ति किंपूर्वदेहेनेन्द्रियैरपि विमुक्तो देहान्तरमिवेन्द्रियाण्यपि गृह्णाति उत तैरिन्द्रियैः संसारित्वको देहान्तरं गृह्णाति विसृजति चेति प्रश्नार्थः ॥ ३४ ॥

तत्रत निश्चितं मह्यमाख्याहि त्वयैव कथनीयमित्यभिप्रेत्य विशिनष्टि । अनात्मभिः तदत्यर्थकोऽत्र नञ् अल्पबुद्धिभिर्दुर्विभाव्यं दुरध्यवसेयं किञ्चैवं विद्वांसः प्रायशो लोके न सन्त्यत्र कुतः यतः सर्वे वञ्चिताः त्वन्माययेति शेषः ॥ ३५ ॥

मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः गृहीत्वैतानि संयाति ॥

इतिगीतोक्तं परिहारमाह । मन इति । कर्ममयं कर्मवासनाप्रचुरं पञ्चभिर्ज्ञानेन्द्रियैर्युक्तमेव मनः लोकाल्लोकं शरीराच्छरीरं प्रयाति तदोऽस्य एवात्मा तन्मनोऽनुवर्ततेऽनुयातीत्यर्थः । इन्द्रियैरिति भूतसूक्ष्माणामप्युपलक्षणं पञ्चभिरित्यनेन कर्मेन्द्रियाणां तत्र देहेऽनुगमनं सूचितम् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महदादिकार्यानुगतस्य हरेरपि गुणक्षोभकृतो विकारः स्यादिति तत्राह । आत्मेति । आत्मा परमात्मा गुणक्षोभकृतविकारवान् न परिज्ञानमयत्वात् पूर्णज्ञानस्वरूपत्वात् विकाराभिमानित्वमन्तरेण ज्ञानस्वरूपत्वेन आत्मा जीवोऽपि न गुणक्षोभकृतविकार इति विकल्पस्वरूपमाह । विवाद इति । जीवेश्वराभेदं जगन्मिथ्यात्वादिकमसदस्ति जीवेश्वरभेदप्रपञ्चादिकं सत्यास्तीति मिथ्या वस्तुयाथार्थ्यादिविपर्ययेणार्थनिष्ठः पदार्थनिष्ठो विवादो विकल्पो भवति केषामित्यत उक्तं व्यर्थ इति सविकल्पोऽयथार्थोऽप्यविद्यमानविषयोऽपि तथा निष्प्रयोजनोऽपि स्वलोकात् स्वाभयात्मत्तः पराङ्मुखधियामपगतबुद्धीनां पुंसां नोपरमेत पुनः पुनर्वर्तेत इत्यर्थः । असदस्ति च सत्यास्तीत्येवं भेदाभेदवादं सदैव हरिपादाब्जविमुखानां प्रवर्तते इति मानं हृदयङ्गमम् ॥ ३३ ॥

त्वद्विमुखानां स्वकृतकर्ममूढानामेषां पुनर्भवोऽस्तीति सिद्धं तत्र नित्यानां जीवानां जन्ममृती कीदृश्यौ कर्मतत्कारणं च किमिति पृच्छत्युद्धवः । त्वत्त इति । त्वत्तः पराङ्मुखधियः स्वतो नित्या जीवा अहं जातोऽहं मृत इत्यभिमानेन स्वकृतैः कर्मभिर्यथोच्चावचान् देहान् गृह्णन्ति विसृजन्ति च ॥ ३४ ॥

तद्धृदयादिकं तथा ममाख्याहि बुधिवत्त्वैर्बुधैर्दुर्ज्ञेयं चेदपि बुद्धिमत्त्वः भोक्तुं शक्यत्वादिकमिति ममाख्येयमिति निबन्ध इति तत्राह । नहीति । नाञ्जन्ति नावगच्छन्ति न जानन्तीत्यर्थः अञ्चुगति पूजनयोरिति धातुः गतिश्चार्थः वञ्चिता मोहितास्त्वयेति शेषः ॥ ३५ ॥

नित्यानां जीवानां देहग्रहणादौ कारणं कर्म इतरन्मनोऽपीत्याशयवान् परिहरति । मन इति । मरणकाले कर्ममयं कर्मसंस्कारोपचितं लिङ्गात्मकं सूक्ष्मैः पञ्चभिरिन्द्रियैर्युतं मनो लोकादिहावस्थं लोकं देहं प्रयाति तदात्मा जीवः तन्मनोऽनुवर्तते कर्मश्वरस्तन्मयं तत्प्रधानं तत्प्रेरितमिति वा मनादितः प्रकृतिमयेन तेन बद्धत्वात्तदनुवर्तनं युक्तम् ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सोऽहङ्कारः केन निवर्तते उच्यते भयं द्वितीयाभिनिवेशतः स्यादित्याद्यनुसारतो मद्बहिर्मुखतानिदानत्वेन मदन्तर्मुखतयैवेत्याह । आत्मा परिज्ञानमय इति । स्वलोकात् स्वाभयादपि मत्तः पराङ्मुखधियां पुंसां यत् आत्मापरिज्ञानं स्वस्वरूपास्फूर्तिस्तन्मयो यो निजमतपरमतयोरस्तीति नास्तीति भिदार्थनिष्ठो विवादः सोऽर्थशून्योऽपि नैवोपरमेतेति मद्बहिर्मुखतायां सत्यां विवादमात्रं प्रसवेत्तु ज्ञानमुदयाति मदन्तर्मुखतायां ज्ञानमप्यानुषाङ्गिकतयोदयेत् परमपुरुषार्थलक्षणमत्प्राप्तिस्तु मुख्यतयेत्यर्थः ॥ ३३ ॥

त्वत्त इति युग्मकम् तच्च तैः तत्र स्वमते व्यापकस्येश्वरस्य निरीहस्येति वाच्यम् ॥ ३४—३५ ॥

तदनुवर्तते तदारूढश्चलति तदारूढत्वात्तच्चलनेनैव चलति ३६—३९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

संशयच्छेत्तारो ये विद्वांस एव तत्त्वनिश्चायका इतिचेत्तेषामपि विवादो नोपशाम्यतीत्याह । आत्मेति । प्रपञ्चोऽयमस्तीति सत्य इति कश्चिदुपपत्त्यानिनिश्चिनोति तन्मतं दूषयित्वा नास्तीति मिथ्येति कश्चिन्निश्चिनोतीति विवादो ह्यात्मनः परमात्मतत्त्वस्यापरिज्ञानसूचक इत्यर्थः । आत्मनि अनुभवगोचरीकृते विवादानुपपत्तेः भिदार्थे माद्दृश एव अर्थे प्रयोजने नतु मयि निष्ठा नितरां स्थितिर्यस्मात् सः यद्वा भिदा विदारणं परमतखण्डनमेवार्थस्तत्रैव निष्ठा यस्य सः किञ्च व्यर्थो विफलः तस्मात् न पुण्यं न पापं न स्वर्गो न नरकश्चेत्येवं निष्प्रयोजनोऽपि नोपरमेतेति मन्मायाशक्तेरेव स्वभाव इति भावः । यदुक्तं यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्तीति किञ्च बहुसम्मतान्ते मत्प्रापकं मार्गं प्राप्यापि ते ते ततश्च्युता भवन्तीत्याह । मत्तः पराङ्मुखधियामिति वेदशास्त्रार्थौ हि मत्प्रापको मार्ग एव तं विद्वांसस्तेमां प्राप्तुं प्रवृत्तधियोऽपि मध्ये विवादमङ्गीकृत्य मत्तः सकाशात् पराङ्मुखधियो भवन्तीभावः । मत्तः कीदृशात् स्वलोकतः स्वान् भक्तानेव लोकेता कृपया पश्यति नान्यानिति तथा तस्मात् भक्ताश्च विवादानुत्पातिन एव तेन मच्चिन्तनादिनैव स्वायुः सफलयितव्यं नतु विवादस्य प्रपञ्चस्य तत्त्वनिश्चयजिज्ञासया तद्विफलयितव्यमिति व्यञ्जितम् ॥ ३३ ॥

त्वत्त इति । यदि बुद्धिस्त्वत्तः पराङ्मुखा तदैव तेषां कर्मभिर्बन्धः ततश्च उच्चावचान् उत्तमाधमान् देहान् स्थूलान् यथा गृह्णन्ति यथा विसृजन्तीति तद्विमुखानां जन्ममरणयोः

१ध्यायन्मनोऽनुविषयान् दृष्टान् वाऽनुश्रुतानथ ।
उद्यत्सीदत्कर्मतन्त्रं स्मृतिस्तदनुशाम्यति ॥ ३७ ॥
विषयाभिनिवेशेन नाऽऽत्मानं यत्स्मरेत्पुनः ।
जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ३८ ॥
जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ! ।
विषयस्वीकृतिं प्राहुर्यथा२ स्वप्नमनोरथः ॥ ३९ ॥
३स्वप्नं मनोरथं४ चेत्थं प्राक्तनं न स्मरत्यसौ ।
तत्र पूर्वमिवाऽऽत्मानमपूर्वं चानुपश्यति ॥ ४० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रकारं ब्रूहीत्यर्थः । अनात्माभिरस्पबुद्धिभिर्दुर्विभाव्यं भावयितुमप्यशक्यं किं पुनर्वक्तुमित्यर्थः । ननु लोके विज्ञा बहवः स्युस्त एवैतत् प्रष्टव्यास्तत्राह । नह्येति वञ्चितास्त्वन्मायया मोहिताः ॥३४।३५॥

मनो मनःप्रधानं सूक्ष्मशरीरमेव लोकाल्लोकान्तरं याति कर्म कर्माधीनम् आत्मा जीवोऽन्यस्ततो भिन्नोऽपि तदुपाहितत्वादेव तत् सूक्ष्मशरीरमनुवर्त्तते अनुगच्छति ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ पुरुषेश्वरयोरत्यन्ताभेदं पुरुषेश्वरयोरत्र नवैलक्षण्यमण्वपीति वाक्येन प्राप्तं प्रसङ्गान्निराकरोति । आत्मा जीवः परमात्मनोऽश स अंशत्वावच्छिन्नेन निजरूपेण भिन्नोऽपि अंशिनिरपेक्षस्थितिप्रवृत्त्याद्यभावादभिन्नः "अंशो नानाव्यपदेशादन्यथाचापी"त्यादिन्यायात् एवं भूतस्य परमेश्वराद्भिन्नस्वेऽप्यभिन्नस्य आत्मनः यदपरिज्ञानं तन्मय एव कः पुरुषेश्वरयोर्भिदा भेदरूपो योऽर्थस्तन्निष्ठः अस्तीति नास्तीति विवादः ननु यथार्थं त्वन्मतमाश्रित्येमं विवादं कुतो न त्यजन्तीत्यत्र मत्पराङ्मुखत्वान्मम मतं न जानन्त्यतो न त्यजन्तीत्याशयेनाह । व्यर्थोऽपीति । स्वलोकात् स्वकीयानन्यजजनरमणात्यानान्मत्तः पराङ्मुखधियां बहिर्बुद्धीनां व्यर्थोऽपि निरर्थोऽपि केवलमेववादः केवलाभेदश्च नैवोपरमेत ॥ ३३ ॥

भगवत्पराङ्मुखबुद्धित्वेन तेषां जन्ममरणप्रवाहलक्षणः संसार एव भवतीति सूचितं तत्र पृच्छति । त्वत्त इति । यथा गृह्णन्ति विसृजन्ति च तन्ममाख्यातुमर्हस्यच्युतेत्यन्वयः ॥ ३४ ॥

एतद्विद्वांसः प्रायो बहुधा न हि सन्ति हि यतो वञ्चिताः त्वन्माययेति शेषः ॥ ३५ ॥

मनः कर्ममयं कर्मप्रधानं फलोन्मुखकर्मप्रेरितम् पञ्चभिरित्युपलक्षणं पञ्च तन्मात्राणां पञ्चकर्मेन्द्रियाणां च मनः प्रधानं लिङ्गशरीरमित्यर्थः । लोकात्स्थूलदेहाल्लोकान्तरं देहान्तरं प्रयाति तर्हि तदेवात्मा किं नेत्याह । अन्य इति । तल्लिङ्गशरीरित्वेनानुवर्त्तते यथा ग्रामाद्ग्रामान्तरं रथः प्रयाति रथी तमनुवर्त्तते तद्वत् ॥ ३६ ॥

आत्मा जो है सो तो ज्ञान स्वरूप है उस के विषय में अस्ति नास्ति ऐसा सब लोगों का विवाद रहता है और उस के अर्थ में भेदभी है जिन लोगों की बुद्धि मेरे से बहिर्मुख है उन का यह विवाद मिटता नहीं है॥३३

उद्धव उवाच हे प्रभो ! तुमारे से जिन की बुद्धि बहिर्मुख है वे लोग जैसे ऊंच नीच शरीरों को धारण करते हैं और छोडते हैं ॥ ३४ ॥

हे गोविन्द ! सो बात आप मेरे से कहो ये जिस को अज्ञानि लोग नहीं जान सकते हैं इस के जानने वाले पंडित नहीं हैं जो हैं सो तुमारी माया के भुलाये भये हैं ॥ ३५ ॥

श्रीभगवान् उवाच मनुष्यों का जो कर्म मय मन है सूक्ष्मशरीर सो पांच इंद्रियों से युक्त है वह लोकों से लोकांतर को जाता है उसी के पीछे आत्माभी जाता है ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु मनसोऽपि पूर्वदेहवियोगो देहान्तरयोगश्च कथं भवतीति चेत्स्मृतिवियोगयोगाभ्यामिति वक्तुं तयोः कारणमाह । ध्यायदिति । कर्मतन्त्रत्वात्कर्मोपस्थापितान् दृष्टान् वा अनुश्रुतान् वेदोक्तान् विषयाननुध्यायत् अथानन्तरं ध्यायमानेषूद्भवाविर्भवत्पूर्वं विषयेषु च सीदल्लीयमानं भवति तदनन्तरं तस्य स्मृतिः पूर्वापरानुसन्धानं नश्यति ॥ ३७ ॥

ततः किमत आह । विषयेति । कर्मोपस्थापितदेवादिदेहाभिनिवेशेनाऽऽत्मानं पूर्वदेहं पुनर्न स्मरेदिति यत्सैव यातनादिदेहाभिनिवेशेन वा हर्षतर्षादिहेतोः पूर्वदेहेऽत्यन्तविस्मृतिरहङ्कारनिवृत्तिस्तदभिमानिनो जन्तोर्जीवस्य मृत्युरुच्यते न तु देहनाशः ॥ ३८ ॥

जन्म तु विषयस्य देहस्यात्मतया स्वीकृतिमभिमानं प्राहुर्न तु देहस्योत्पत्तिः नच पुत्रादिदेहवत्प्रीत्यतिशयमात्रेण किं तु सर्वभावेनाभेदेन अभिमानमात्रेणोत्पत्तिमरणयोर्दृष्टान्तद्वयम् यथा स्वप्नश्च मनोरथश्चेत्यर्थः ॥ ३९ ॥

दृष्टान्तौ विवृणोति । स्वप्नमिति । तत्र वर्त्तमाने स्वप्नादौ पूर्वं

१ ध्यायमानोऽनु इति वीर०पाठः २ स्वप्नः ३ तस्मादिति शुकपक्षीय०पाठः ४ चार्थं वि०पाठः

श्रीधरस्वामिकृतभावार्थदीपिका ।

वेति अपूर्वमिवेतिचान्वयः पूर्वसिद्धमप्यात्मानमपूर्वमिवाद्य-जातमिव पश्यतीत्यर्थः ॥ ४० ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

तयोः स्मृतिवियोगयोगयोः । कारणमिति तत्र स्मृतेः कारणं कर्मवशादागामिदेहानुध्यानं विस्मृतेस्तु भयशोका-दिहर्षान्तर्वादि चेति ज्ञेयम् । कर्मतन्त्रत्वात् कर्माधीनत्वात् । अनन्तरं ध्यानानन्तरं । तदनन्तरं लयानन्तरम् तस्य मनसः ३७

ततः स्मृतिनाशात् । सैव विस्मृतिरेव । कस्यचिद्धेतो-रित्यस्य व्याख्या यातनादेहाद्यभिनिवेशेनेत्यादिः । तदभिमा-निनो देहाभिमानिनः ॥ ३८ ॥

आत्मतया स्वामित्वतया । मूले यथा स्वप्नमनोरथ इत्येव पाठः स्वामिसम्मतो लक्ष्यते । सर्वोऽपि द्वन्द्वो विभाषयैकवद्भ-वतीति न्यायेन "ऊकालोऽज्ह्रस्वदीर्घप्लुत„ इतिवत् पुंस्त्वेऽप्ये-कवचनम् मत एवेत्यर्थ इत्युक्तम् । स्वप्नमनोरथाविति क्वचित् पाठः ॥ ३९ ॥

इयं पूर्वदेहविशेषणावच्छिन्नप्रकारेण । असौ स्वप्नमनो-रथवान् । वर्त्तमाने स्वप्नादौ स्थित इति शेषः । पूर्वे चेत्युक्त्या विषयोः वैपरीत्या योजनं कृतम् । तथाच पूर्वे चापूर्वमिवेत्यन्वयोऽभ्युपेतः तस्यैव व्याख्यानं पूर्वसिद्धमेवेत्यादि वाक्यव्याख्यानपतितत्वं विमृश्येत्यर्थ इत्युक्तमिति ज्ञेयम् ॥४०॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१ [ अविशदःअहंप्रत्ययेनसर्वसंप्रतिपन्नः ] उद्यत्सीदत्कर्मतन्त्रं स्मृतिः उद्यदपि विषय प्रावण्यात् सीदत्कर्मतन्त्रं स्मृतिर्यस्य सः ॥ ३७ ॥

मृत्युरत्यन्तविस्मृतिः मरणकाले अत्यन्तज्ञानलोपो भवती-त्यर्थः ॥ ३८ ॥

जन्मात्त्वेति । सर्वभावेन सर्वविधमनोवृत्त्या आत्मतया विषय-स्वीकृतिम् आत्मत्वेन देहात्माभिमानिनो जन्मकालप्रभृतिदेहा-त्मभ्रमेण स्यात् देहात्माभिमानस्य भ्रान्तित्वे दृष्टान्तमाह । यथा स्वप्नमनोरथ इति ॥ ३९ ॥

तस्मादिति । तस्मात् मरणस्यात्यन्तज्ञानलोपहेतुत्वादित्यर्थः प्राक्तनं मनोरथं मनोवृत्तिं तद्देहात्माभिमानिनमिह जन्मनि न स्मर-तीत्यर्थः । तत्रेति इवशब्द उपपदार्थेनेति पूर्वस्मिन् जन्मनि सन्तम् आत्मानमपूर्वमिव पूर्वमसन्तमिदानीं सञ्जातमिव पश्यतीत्यर्थः ॥४०

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदि पौर्वदैहिकान्येव ज्ञानेन्द्रियाणि देहान्तरेऽनुवर्त्तन्ते कथं तर्हि पूर्वजन्मविस्मृतिरित्यत्राह । ध्यायन्निति । कर्मतन्त्रं कर्म वासनावशं मनः दृष्टान् श्रुतान् वा विषयान् ध्यायद्ध्यानन्तरं उदयद्विषयसांनिध्ये सति तुष्यत् सीदत्तदसांनिध्ये क्लिश्यच्च भवति तदनु तत्पश्चात् स्मृतिः पूर्वपूर्वस्मृतिः शाम्यति अपे-क्षकमिदमेव जन्मतीर्थं किमुत नितरां विस्मृतिकरदेहवियोगा-द्वाविति भावः ॥ ३७ ॥

विषयाभिनिवेशेनेति । यस्मात् यस्य मनः विषयाभिनिवेशेनात्मानं न स्मरेद्देहविलक्षणमात्मानं नानुसंदध्यात्तस्य जन्तोः कस्य चिद्धेतोः कस्माच्चित्कारणान्मृतिरत्यन्तविस्मृतिर्मरणकालेऽत्यन्तज्ञानलोपो भवतीत्यर्थः । कस्यचिद्धेतोरित्यनेन जीवनावसाननिमित्त कर्म विवक्षितम् ॥ ३८ ॥

ननु, मृतावत्यन्तज्ञानलोपेऽपि पुनर्देहान्तरसम्बन्धरूपजन्मा-न्तरे तेषामेव मनः षष्ठानामिन्द्रियाणामनुवृत्तेः पूर्वजन्मस्मृतिः स्यादेवेत्यत आह । जन्मेति । हे भूरिद पुंसः सर्वभावेन सर्वविधमनो-वृत्त्या आत्मतया विषयस्वीकारं देहस्वीकारं जन्म प्राहुः जन्मकालप्रभृतिदेहात्माभिमानः स्यादित्यर्थः । देहमेवात्मानमभि-मन्यमानस्य देहविलक्षणात्मनः पूर्वोत्तरजन्मानुसन्धातुरप्रती-यमानत्वात् मृतिविषयस्वीकृत्योः स्मृतिरिति भावः । देहात्मा-भिमानस्य भ्रान्तित्वे दृष्टान्तमाह । यथा स्वप्नमनोरथाविति यद्वा मृतिविषयस्वीकृत्योः पूर्वस्मृतितिरस्कारकत्वे दृष्टान्तः । यथा स्वप्नो यथा मनोरथश्च योऽस्वप्नमसमित्येवं विधां स्मृतिं तिरस्करोति मृति स्वीकृतिहेतुभूतयोस्तत्सामाना धिकरण्यनिर्देशस्तत्त्वाद्वा पाद ॥ ३९ ॥

दृष्टान्तौ विवृणोति स्वप्नमिति मनोरथं चित्तस्य कुर्वन्निति शेषः असौ पुमान्प्राक्तनं ब्राह्मणत्वाद्याकारं न स्मरति यद्वा स्वप्नं पश्यन्प्राक्तनं स्वप्नं न स्मरति तथा मनोरथं कुर्वन्प्रा-क्तनं न स्मरति तद्वत् यथा स्वप्नमनोरथौ इत्यत्राप्यपमे-यार्थः तस्मान्मनोरथं चेत्थमिति पाठान्तरं तत्र तस्मान्मृतिः विषयस्वीकृत्योरत्यन्तज्ञानलोपहेतुत्वात्प्राक्तनं मनोरथं मनोवृत्तिं तद्देहाभिमानमिह जन्मनि न स्मरति इत्यर्थः किं तर्हि स्मर-तीत्यत आह । तत्रेति । इव शब्दोऽपूर्वमित्यनेनान्वेति तत्र सति-जन्मान्तरे पूर्वे पूर्वस्मिन् जन्मनि सन्तमप्यात्मानमपूर्वमिव पूर्व-मसन्तमिदानीं सञ्जातमिवानु पश्यतीत्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मनः प्रधानः पुरुषोऽनुवर्तत इत्यनेन मनसः प्रयोजकत्वं प्रती-यते तत्कथमत्राह । ध्यायन्निति । मनोदृष्टानथवा श्रुतान्विषय-वान् ध्यायन् स्यादिति हि यस्मात्कस्मात्पुरुषप्रवृत्तौ मनः प्रयोजक-मितिशेषः इतोऽपि मनःप्रयोजकमित्याह । अथेति । अथ यदा कर्मतन्त्रं विषयसंस्कारसमुद्गमं मनः सीदद्विपन्नमात्मनो देहा-द्भुतं भवति तदा तदनु मनोऽनु जीवस्य स्मृतिरर्थस्मरणं शाम्यति नश्यति देहान्तराभिमानपर्यन्तमिति शेषः ॥ ३७ ॥

मरणमेव स्पष्टयति । विषयेति । कस्यचित्कर्महेतोर्यत्सरदेह प्रवेक्ष्यन् विषयाभिनिवेशेन उत्तरदेहनिवेशेन जन्तोर्मन आत्मानं पूर्वदेहं न स्मरेत् स्मरणासमर्थं न स्यादिति यत् सात्यन्ताविस्मृतिर्मृत्युरित्यन्वयः । वा इत्यनेन जातस्य हि ध्रुवो मृत्युरिति-स्मृतिप्रसिद्धिं द्योतयति ॥ ३८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं जन्म स्पष्टयति । जन्मेति । पुंसो देहादिष्वहं ममेदमित्याद्यात्मतयात्मीयत्वेन सर्वभावेन सर्वचेष्टया समस्ताभिप्रायेण विषयस्वीकृतिं देहाभिमानं जन्म प्राहुरित्यन्वयः । देहादिस्वयं स्वकीयश्च न भवति परमात्माधीनत्वादिति तुशब्देन विशेषितेऽर्थे उदाहरति । यथेति । जाग्रदिदमित्ययं स्वप्नो यथा अविद्यमानो यथा च मनोरथविषयोऽप्यविद्यमानो न त्वनिर्वचनीयः परस्यापि जीवस्यातो जन्ममृतियुक्ते इति भावः । स्वाप्नं इति पाठे स्वप्ने जायमानो जाग्रत्त्वप्रत्ययो यथा अविद्यमान इत्यर्थः ॥३९॥

अत्यन्तविस्मृतिं सोदाहरणां स्पष्टयति । स्वप्नमिति । यथा स्वप्नादेरुत्थितः स्वप्नदृष्टं मनोरथं च प्राक्तनमर्थं तद्विषयं चासौ स्वप्नादिदृक् न स्मरति तथा तत्र देहान्तराभिमाने सति पूर्वं पुरातनमात्मानं देहं न स्मरति इवशब्दः केषां चिन्महात्मनां स्मरणं सम्भवतीत्येतमर्थं अस्मरणे कारणमाह । अपूर्वमिति चशब्द एवार्थे अपूर्वं पश्चात्तनं नूतनं देहमेवानुपश्यति यस्त इति यद्वा विषयाभिनिवेशमेव स्पष्टयति । स्वप्नमिति । प्राक्तनं स्वप्नं मनोरथं च यथा न स्मरति असौ तथा प्राक्तनजन्मानुभूतमर्थं विषयं च न स्मरति किं तत्र निमित्तमत्राह । तत्रेति । तत्र देहान्तरप्राप्तौ पूर्वमनादिमेवात्मानम् अपूर्वं सादिमिवानुपश्यति इति यस्मात्तस्माद्विषयाभिनिवेश एव कारणमित्यर्थः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वप्नमिति । तैः तत्र पूर्वं चेत्यादौ पूर्वं चापूर्वमिवेत्यन्वय इत्येव वक्तव्यम् ॥ ४०—४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं सर्वदैव सूक्ष्मशरीरानुवर्तिनो जीवात्मनः स्थूलशरीरेण वियोग एव मृत्युः संयोग एव जन्मेति ब्रुवंस्तयोरपि स्थूलवियोगसंयोगयोः सर्वथा स्मृतिवियोगस्मृतिसंयोगवेव कारणमित्याह । ध्यायन्निति । कर्मतन्त्रं कर्माधीनं मनः कर्मोपस्थापितान् दृष्टान् विषयान् मर्त्यलोकस्थान् परदारादीन् श्रुतान् देवलोकस्थान् तानेव ध्यायत् सत् अथ क्षणानन्तरं ध्येयेषु तेष्वेव उद्यत्सत्कारीभवत् सीदत् पूर्वेभ्यस्तेभ्यो विषयेभ्यः सर्वथा विच्युती भूतं भवति तदनु तदनन्तरं तस्य स्मृतिः पूर्वापरानुसन्धाने नश्यति ॥ ३७ ॥

ततः किमत आह । विषयेति । कर्मोपस्थापितेषु देवादिदेहेषु यातनादेहेषु वा अत्यन्ताभिनिवेशेन आत्मानं पूर्वदेहं पुनर्मनो न स्मरेदिति यत् स मृत्युः । स्थूलदेहवियोगः । अत्यन्ता आत्यन्तिकी पूर्वदेहविषया विस्मृतिर्यतः सः । कस्यचिद्धेतोः प्रारब्धकर्मसमाप्तेरित्यर्थः ॥ ३८ ॥

जन्मत्विति । विषयस्य कर्मोपस्थापितदेहस्य सर्वभावेन आत्मतया स्वीकृतिम् आत्यन्तिकमभिमानमेव जन्म प्राहुः । अभिमानमात्रेणोत्पत्तिमरणयोर्दृष्टान्तद्वयम् । यथा स्वप्नश्च मनोरथश्च सः । सर्वोऽपि जन्तोः विभाव्यैकवस्तुवतीत्येकवचनम् ॥ ३९ ॥

दृष्टान्तौ विवृणोति । स्वप्नमिति वर्तमानो देहस्थो जीवो यथा प्राक्तनं स्थूलदेहं न स्मरति इत्थमेव वर्तमानस्वप्नस्थो मनोरथस्थो वा जीवः प्राक्तनं स्वप्नं मनोरथं वा न स्मरति कश्चित् कदाचित् स्वप्ने पूर्वकं स्वप्नं च स्मरतीति चेत् कश्चित् कदाचित् जातिस्मरश्च पूर्वदेहं स्मरतीति न सर्वथा नियमः किञ्च तत्र वर्तमानदेहस्थो जीवः पूर्वसिद्धमेवात्मानम् अपूर्वमिव अनुपश्यति अहं षाड्वार्षिक इति साप्तवार्षिक इति इतः पूर्वमहं नासमिति प्रतिक्षणमात्मानं जानातीत्यर्थः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु पूर्वदेहादिकमात्मा कुतो न स्मरतीत्यत आह । ध्यायदिति तस्यात्मनः कर्मतन्त्रं मनः कर्मोपस्थापितान् दृष्टान्वाभोग्यतया श्रुतान् वा विषयान् अनुध्यायन् ध्यायमानेषु विषयेषु उद्यत् आविर्भवत् अन्यत्र सीदत् स्मृतिहीनं भवति एवमेकस्मिन्नेव जन्मनि विषयस्मृतिरनुशाम्यति किमुत जन्मान्तरीयदेहादिविषयेत्यर्थः ॥ ३७ ॥

ननु आत्मा देहाद्देहान्तरं गच्छति चेत्तर्हि देवदत्तो मृतः जातः इति लोकप्रसिद्धयोर्जन्ममरणयोः को विषय इतिशङ्कां निराकरोति । विषयेति द्वाभ्याम् । यत् यः जन्तुः देही विषयाभिनिवेशेन अहमित्यहङ्कार विषये देहे योऽभिनिवेशः देहोऽहमित्याग्रहस्तेन आत्मानं देहेन्द्रियादिविलक्षणं न स्मरेत् तस्य जन्तोः पुनः कस्यचिद्धेतोः विस्मृतिः देहवियोगो मृत्युरित्यर्थः ॥ ३८ ॥

जन्मेति । जन्म तु विषयस्य देहस्य आत्मतया स्वीकृतिं प्राहुः पूर्वदेहादिस्मृतिविनाशकं देहान्तरात्माभिमानं जन्म अथैनमेते प्राणा अभिसमायन्ति अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वेत्याद्याः श्रुतयः प्राहुरित्यर्थः । पृथग्भूतस्यापि पुत्रादेरात्मतया स्वीकरणं सम्भवत्यत आह । सर्वभावेनेति । सम्पूर्णेन देहात्मभावेनेत्यर्थः दृष्टान्तमाह । यथा स्वप्नमनोरथ इति । स्वप्ने मनोरथः रूपान्तराभिनिवेशः पूर्वरूपस्मृतिनिर्नाशको यथा तद्वदित्यर्थः ॥३९॥

पूर्वदृष्टान्तानुवादपूर्वकं दृष्टान्तान्तरमाह । स्वप्नमिति । असौ पुमान् स्वप्नं मनोरथं च प्राप्य प्राक्तनमात्मानममुकनामामुकनामरूपगोत्रोऽहमासमिति न स्मरति तत्र स्वप्ने मनोरथे च पूर्वमिव अपूर्वमात्मानं पश्यति चकारात्पूर्वगृहादिवदपूर्वं गृहादिकमपि पश्यति ॥ ४० ॥

---

भाषा टीका ।

पुरुष का मन विषयों का ध्यान करता रहता है तब देखे सुने विषयों के ध्यान करने से वह मन कभी कार्यों में उद्यत होता है कभी लय होजाता है तब ऐसे कर्म वश होने से उसकी स्मृति नष्ट होजाती है ॥ ३७ ॥

विषयों के अत्यन्त अभिनिवेश होने से अपने को फिर नहीं स्मरण करता है ऐसे इस मनुष्य को किसी हेतु से अत्यन्त विस्मरण वाला मृत्यु होजाता है ॥ ३८ ॥

[१]इन्द्रियायनसृष्टेयदं त्रैविध्यं भाति वस्तुनि ।
बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ॥ ४१ ॥
नित्यदा ह्यङ्ग ! भूतानि भवन्ति न भवन्ति च ।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥ ४२ ॥
यथाऽर्चिषां स्रोतसां च फलानां वा वनस्पतेः ।
तथैव सर्वभूतानां [२]वयोऽवस्थादयः कृताः ॥ ४३ ॥
सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम् ।
सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ॥ ४४ ॥

भाषा टीका ।

हे भूरिद ! उद्धवजी पुरुष का सब प्रकार से जो मन में विषयों का स्वीकार करना है उसी को जन्म कहते हैं जैसे कि स्वप्न का देखना है अथवा कोई मनोरथ का करना है ॥ ३९ ॥

स्वप्न में तथा मनोरथ में इस प्रकार के पहिले मनोरथ को नहीं स्मरण करता है तहां पर अपने आत्मा को पहिले सरीका अपूर्व ऐसा जानने लगता है ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपसंहरति । इन्द्रियाणामयनं मनस्तस्य देहान्तराभिनिवेशेन वा सुषुप्तिरूपावस्थितया वस्तुन्यात्मनि तदभिमानेनेदं त्रैविध्यमुत्तममध्यमनीचत्वमसदेव भातीत्यन्वयः एवंभूत आत्मा बाह्याभ्यन्तरभेदहेतुश्च भवति बाह्यविषयानान्तरान् सुखादींश्च पश्यतीत्यर्थः यथा जनो जीवः स्वप्ने बहूनसतो जनान् देहान् कुर्वन् पश्यन् बहुरूपो भाति तद्वत् यद्वा इदं त्रैविध्यमवस्थात्रयरूपं भाति असज्जनकृद् दुष्टपुत्रोत्पादको जनः पिता स्वयं समोऽपि पुत्राभिमानसहस्राभिरमित्रादिषु यथा भेदहेतुर्भवति तद्वदिति अन्यत्समानम् ॥ ४१ ॥

तदेवं लोकप्रसिद्धौ जन्ममृत्यू निरूप्य सूक्ष्मावदृष्टावपि तौ वैराग्याय निरूपयति । नित्यदा प्रतिक्षणं भूतानि शरीराणि उत्पद्यन्ते नश्यन्ति च कालस्यातिसूक्ष्मत्वात्तत्कृतं भवनमभवनं चाविवेकिभिर्न लक्ष्यते ॥ ४२ ॥

सतोर्जन्ममरणयोर्ज्ञाने कारणमेतद्रूपेण सत्त्वमेव तयोः कुतः एवाशङ्क्यानुमानेन साधयति । यथेति । अर्चिषां परिणामादिभिः स्रोतसां रूपादिभिः फलानां रूपादिभिर्वयोऽवस्थाविशेषाः कृताः कालेनेति पूर्वस्यानुषङ्गः आदिशब्देन तेजोबलकामक्रोधादीनामुपादानम् विमतं प्रतिक्षणोत्पत्तिविनाशवत् अवस्थाभेदवत्त्वाद् दीपज्वालादिवदित्यनुमानम् ॥ ४३ ॥

कथं तर्हि प्रत्यभिज्ञा तद्वदेव सादृश्यावलम्बिनीत्याह । सोऽयमिति । सादृश्यादर्चिषामेव यथा सोऽयं दीप इति प्रत्यभिज्ञा यथा च स्रोतसां प्रवाहजलानामेव तदिदं जलमिति तथा सोऽयं पुमानिति गीर्धीश्च मृषा नृणां बहूनां शरीरिणां मृषा व्यर्थमायुर्येषामविवेकिनां तेषां भवति ॥ ४४ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

तदभिमानेन देहान्तराविष्टमनोऽभिमानेन । एवं भूतः देहाध्यासवान् । पूर्वोऽसत्त्वरूपस्याख्यानपरत्वं स्वप्न इत्युदाहारः त्रैविध्यत्वेनाप्राकृतोत्तमत्वादिपरिग्रहश्चातो वदेति । तद्वदिति पुत्रस्य शत्रुमित्रादिष्वित्यर्थः । अन्यत् अथापीष्टमिन्द्रियत्वादिपदत्रयम् । समानमुभयपक्षेऽपि तुल्यार्थकम् ॥ ४१ ॥

तदेवं मनोऽध्यासनिबन्धनजन्मादिप्रकारेण तौ जन्ममृत्यू तत्कृतम् अतिसूक्ष्मकालकृतम् । भवनं जन्म । अभवनं मरणम् ॥ ४२ ॥

सतोर्वर्तमानयोः एतत् कालस्यातिसूक्ष्मत्वम् । सत्त्वमस्थितत्वम् । तयोर्जन्ममरणयोः । साधयति सूक्ष्मजन्ममृत्यु अनुमापयति । विमतं विवादास्पदं शरीरमिति पक्षस्योद्देशः प्रतिक्षणोत्पत्तिविनाशवदिति साध्यस्य । अवस्थाभेदवत्त्वादिति हेतोः । दीपज्वालादिवदिति दृष्टान्तस्य । यदवस्थाभेदवत्तत् प्रतिक्षणोत्पत्तिविनाशवद्यथा दीपज्वालादीत्यन्वयव्याप्तिः । यन्नैवं तन्नैवं यथात्मेति व्यतिरेकव्याप्तिः ॥ ४३ ॥

यदि प्रतिक्षणोत्पत्तिविनाशवत्तर्हि प्रत्यभिज्ञा ज्ञानोत्तरम् ज्ञानम् तस्या एकवस्तुविषयत्वात् भिन्नभिन्नशरीरे सा कथं सङ्गच्छेदित्याशङ्का । तदेवेति सिद्धान्तग्रन्थः । तद्वदेव दीपादिष्वेव सादृश्यात् हस्तपादादि सन्निवेशसाम्यात् । दृष्टान्तेऽपि प्रकाशतरङ्गवेगादिसाम्यात् । अर्चिषामेव सम्बन्धी । मृषा भ्रममयी । सादृश्यस्य भ्रमहेतुत्वादिति ॥ ४४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रियार्थाविति अयनशब्दो भौतिकदेहपरः शरीरमिन्द्रियमन्तःकरणं चेति त्रैविध्यमस्ति तस्मिन् एवात्मवस्तुनि बाह्या-

[१]इन्द्रियार्थौ मनश्चेति इति शुकप०पाठः । [२]वयोऽवस्था च तत्कृता इति वि०पाठः ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

णोति १ सोऽयमिति । यथा प्रतिक्षणमग्निज्वालादीनामागमवि- गमभावत्वात्सोऽयमपि दीप इति प्रत्यभिज्ञानं मृषेति तत्रोऽध्याहारः स एवायं दीप इत्यादिप्रत्यभिज्ञा मृषा तथा भूतागोभिर्मृषायुषां पुंसां केषां चिद्विशेषणामागमात् केषां चित्रपगमात् स एवायं पुमानिति देहविषयो व्यवहारो मृषा विवेकिनां स चायं देह इत्यादिको न मृषा स चायमिति तु ज्ञानं न मृषायं स एव तु ज्ञातिज्ञानमृषैव कथादित्यादेर्विशेषविवेकोयुज्यते ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपसंहरति । इन्द्रियायनस्य इन्द्रियाश्रयस्य देहस्य सृष्ट्यैव इदं त्रैविध्यं विश्वतैजसप्राज्ञत्वं वस्तुनि जीवे भाति आविद्यं कीदृशं बहिरन्तर्भिदाहेतुः बहिर्भिदानां जागरे श्रोत्रा- दीन्द्रियगुणसंज्ञानामन्तर्भिदानां स्वप्नसुषुप्त्योर्मनोबुद्धिगुणभेदानां हेतुरुत्पादकं जनो यथा असज्जनकृत अभद्रपुत्रोत्पादकः इन्द्रि- यमनोबुद्धिगुणभिदानां तिसृणामप्यभद्रत्वात् सङ्गत एव दृष्टान्तः ॥ ४१

लोकप्रसिद्धौ जन्ममृत्यू निरूप्य प्रतिक्षणवर्त्तिनौ तौ सूक्ष्मौ वैराग्यार्थं निरूपयति । नित्यदा प्रतिक्षणं भूतानि शरीराणि भवन्ति उत्पद्यन्ते न भवन्ति नश्यन्ति च ननु प्रतिक्षणमुत्प- त्तिविनाशौ देहानां न लक्ष्येते तत्राह । अलक्ष्यवेगेनेति सूक्ष्म- त्वात् कालवेगो यथा दुर्लक्ष्यस्तथा तत्कालकृतावुत्पत्तिविनाशा- वित्यर्थः ॥ ४२ ॥

उत्पत्तिविनाशयोरलक्ष्यत्वेऽपि तावदवस्थादिभिरेवानुमीयेते इति सदृष्टान्तमाह । यथेति । अर्चिषां परिणामादिभिः स्रोतसां गत्यादिभिः फलानां रूपादिभिर्यथा अवस्था विशेषाः कृताः कालेनेति पूर्वस्यानुषङ्गः तथैव भूतानां देहानां वयोऽवस्थादयः कौमारादिवयस्यादयःआदिशब्देन तेजोबलकामकौशलानि ग्राह्याणि भूतानि प्रतिक्षणोत्पत्तिविनाशवन्ति अवस्थाभेदवत्त्वाद्दीपज्वा- लावदित्यनुमानम् ॥ ४३ ॥

प्रत्यभिज्ञा तु सादृश्यावलम्बिनी भ्रान्तिरेवेत्याह । सोऽयमिति । अर्चिषां क्षणमात्रेणैव सहस्रश उद्भूयोद्भूयलयं गतानां ज्योतिः किर- णानां पुञ्ज एव क्षणान्तरे सोऽयं दीप इति स्रोतसां स्रोतो युक्तजलानां क्षणमात्र एव क्रमशो दूरगतत्वेऽपि क्षणान्तरेऽपि नदीदं जलमिति प्रतीतिर्यथा तथैव कौमारे दृष्टे यौवनेऽपि सोऽयं पुमानिति तेन तत्राभेदावलम्बिनी धीर्ज्ञानं गीर्वाक्च मृषा अविवेकिवृजिकमतस्यार्थः मृषा एतादृगविवेकवशान्नमायुर्येषां तेषाम् ॥ ४४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तस्यात्मतया देहस्वीकरणलक्षणस्य जन्मनः फलमाह । इन्द्रियेति । इन्द्रियायणस्य सृष्ट्या इन्द्रियाणामयनस्य देहस्य सृष्ट्या जन्मना आत्मतया देहस्वीकरणलक्षणेन इदं त्रैविध्यमु- त्तममध्यमाधमत्वं वस्तुनि आत्मनि भाति जनः आत्मतया देहस्वीकारकर्ता बहिरन्तर्भूतानामुपद्रवाणां भिदायाः भेदस्य हेतुर्भवति स्वकृतेन देहात्माभिमानेनोक्तत्रैविध्यं बाह्याभ्यन्तरो- पद्रवांश्च प्राप्नोतीत्यर्थः असज्जनजनको यथा असज्जनेन हेतुभू- तेन बाह्याभ्यन्तरसन्तापान् प्राप्नोति तद्वत् ॥ ४१ ॥

देहिनो देहात्माभिमानेन क्षणभङ्गुरेषु देहेषु स्थिरत्वभ्रान्तिज्ञाना- दिना तन्निवृत्त्यर्थमाह । नित्यदेति सप्तदशभिः । हे अङ्ग नित्यदा प्रतिक्षणं भूतानि शरीराणि भवन्त्यवस्थान्तरं प्राप्नुवन्ति न भवन्ति पूर्वावस्थां त्यजन्ति तदुभयं सूक्ष्मत्वान्न दृश्यते ॥ ४२ ॥

एतदेव दृष्टान्तेन स्फुटीकरोति । यथेति । यथा अर्चिषां दीपा- दिगतानां पूर्वपूर्वज्वालानामपायः उत्तरोत्तरज्वालानामागमः यथा च स्रोतसां पूर्वपूर्वप्रवाहजलानामपायः उत्तरोत्तरप्रवाह- जलानामागमः यथा च वनस्पतेः फलानां पूर्वपूर्वावस्थापायः उत्तरोत्तरावस्थागमः कालेन कृताः न दृश्यन्ते इति दृश्यते ऽनेनैवान्वयो वचनव्यत्ययतो बोध्यः तथैव सर्वभूतानां पञ्च- भूतमयानां देहानां वयसा कालेन कृताः अवस्थाः निषेकाद्याः आदिना तत्तद्गुणादेर्भेदश्च सूक्ष्मत्वान्न दृश्यन्ते देहात्मवादिनः अनित्येषु देहादिषु नित्यभ्रान्तिर्भवतीति भावः ॥ ४३ ॥

अनित्ये नित्यभ्रान्तिमेव दर्शयति । सोऽयमिति । मृषा आत्मना- त्मविवेकानुपयोगित्वेन व्यर्थमायुर्येषां तेषाम् ॥ ४४ ॥

---

### भाषा टीका ।

इंद्रियों के भोग की सृष्टि से ऐसा त्रैविध्य वस्तु आत्मा में भान होता है सोइ बाहिर भीतर के भेद का हेतु होता है जैसे कि असज्जन-पुत्र को पैदा करने वाला जन होता है ॥ ४१ ॥

हे उद्धव ! नित्यही सब भूत प्राणीके शरीर होते हैं और जाते हैं जिस का वेग लखा नहीं जाता है ऐसे काल के वेगसे सूक्ष्म होने से नहीं दीखता है ॥ ४२ ॥

जैसे अग्नि की ज्वाला और जल का स्रोत और वृक्ष के फल होते हैं तैसे ही सब भूतों की अवस्था भी बद- लती है ॥ ४३ ॥

जैसे ज्वालाओं में अग्नि दीखती है जैसे प्रवाह में वही जल दीखता है तिसी प्रकार से मनुष्यों का वही मनुष्य है कर के मिथ्या आयुवालों की मिथ्या बुद्धि मिथ्या वाणी भी होती है ॥ ४४ ॥

---

१ सोऽयमित्यश्लोके सोयं पुमानिति देहविषयकप्रत्यभिज्ञाया: भ्रान्तित्वमुक्तं तदनुपपन्नं तथात्वे देहस्य क्षणिकत्वापत्ते- रिति शङ्कानिरासकत्वेन अवृत्तत्वपर्यानुरोधेन प्रत्यभिज्ञा- द्वयं प्रदर्शयोजयामि । तथा च प्रत्यभिज्ञाप्यवधारणानिर- वधारणा चेति द्विविधा । आद्या भ्रमरूपा । जडे भेदाभेदसद्भा- वात् । द्वितीयाविरोधित्वात्प्रमैव ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

रेतो द्वारा पञ्चमाहुत्यनुप्रवेशः गर्भस्तत्रोपचयः बाल्यमापञ्चमाब्दात्कौमारमाषोडशाब्दात्ततो यौवनमाचतुर्विंशतेः वयोमध्यमाषष्टिवर्षात्तदुपरि जरा तदुपरि मृत्युः इति तनोर्नवावस्था नत्वात्मनः ॥ ४६ ॥

किं तर्ह्येवं विधनानावस्थदेहसम्बन्धतद्वियोगात्मकसंसृतिकारणमित्यत आह। एता इति। अन्यस्य देहस्य सम्बन्धिनीः मनोरथो मनोवृत्तिस्तत आगता मनोरथमयीः "तत आगत" इत्यधिकारे "मयट् च" इति मयट् टित्त्वात् ङीप्—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय! सदा तद्भावभावितः॥

इतिन्यायादन्तिमप्रत्ययप्रयुक्ता इत्यर्थः एताः परिदृश्यमाना उच्चावचा यद्वा एता निषेकाद्यवस्थाः अन्याश्चासनशयनाद्यवस्थास्तनूश्च कश्चित्कदाचित्तत्तत्सम्बन्धनिमित्तकर्मपरिपाकदशायामुपादत्ते कश्चिज्जहाति च कश्चिदित्यनेन तदुपादानपरित्यागौ बद्धस्यैव न तु मुक्तनित्यसिद्धयोरित्यभिप्रेतं गुणसङ्गादित्यनेन मनोरथमयीरित्यनेन च यं यं वापीति पूर्वोक्तन्यायेन गुणपरिणामात्मकशब्दादिविषयानुध्यानं त्यागोपादानकारणमित्युक्तं भवति॥४७॥

केवलमुपादत्ते जहाति च न तु तावुपादानत्यागौ साक्षात्करोति विवेकेन तु केवलमनुमिनोतीत्याह। आत्मन इति। स्वस्य भवाप्ययौ देहसम्बन्धतद्वियोगात्मकजन्ममरणे पितृपुत्राभ्यां दृष्टान्ताभ्यामनुमेयौ पुत्रोत्पत्तिदर्शनात्स्वोत्पत्तिरनुमेया पितृमरणदर्शनात्स्वमरणमनुमेयं न तु स्वजन्ममरणे साक्षात्करोति तदानीं मोहग्रस्तत्वादिति भावः तदेवाह। नेति। भवाप्ययवस्तूनां स्वजन्ममरणादिवस्तूनां नाभिज्ञः तदा मोहाविष्टत्वादनभिज्ञ इत्यर्थः। तदाप्यद्वयलक्षणः स्वयं जन्ममरणभाक्स्वरूपश्च न भवति जन्ममरणयोर्देहगतत्वादिति भावः॥ ४८॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ननु देहस्यैव विकारश्चेदहं जातोऽहं मृत इति प्रतीतिः कथमत्राह। माद्य इति। माद्य उत्पत्तिरहितोऽमरो मरणरहितः आद्यन्तशून्य इत्यर्थः अव्ययः शरीरसंयोगवियोगयोरपि वृद्धिक्षयादिरहितः स जीवः स्वकृतकर्मवशाज्जन जायते म्रियते चेति व्यवहारो भ्रान्त्या विवेकज्ञानराहित्येन यथा दारुसंयुक्तोऽग्निरुत्पत्तिविनाशवानित्युच्यते तस्मान्नित्यस्य जीवस्य जननमरणप्रतीतिरविवेककृतेत्यर्थः—

स चायमिति तु ज्ञानं न भूपायं स एव तु।
इति ज्ञानं मृषैव स्याद्देहाभेदौ यतस्तनोः॥
अभेद एव जीवस्य नित्यं प्रत्येकशः पृथक्।
देवदीपनदीवारिफलादीनां पृथक्त्वतः॥
भेदाभेदौ परिज्ञेयौ कार्यकारणयोरपि।
गुणस्य गुणिनश्चैव जातिव्यक्त्योस्तथैव च॥
तथावयव्यवयवयोः क्रियावास्तद्वतस्तथा।
एवं जडेषु नियमाच्चिद्रूपेष्वभिदैव तु॥
ये धर्मा नियमेनैव धर्मिणो न वियोगिनः।
जडस्था अप्यभिन्नास्ते भिन्नाभिन्ना वियोगिनः॥

इति वचनात् यावद्द्रव्यभाविनामभेदो यावद्द्रव्यभाविनां भेदाभेदाविति निर्णय इति॥ ४५॥

जन्मादिकं जीवस्य नैवेत्युक्त्वा देहस्य लिङ्गं द्रढयति। निषेकेति॥ ४६॥

चिद्रूपस्य। जीवस्य जडशरीरसम्बन्धः कथं घटत इति तत्राह। एता इति। अन्यस्य हरेरधीना मनोरथमयीरेतास्तनूः सत्त्वादिगुणसङ्गादुपादत्ते अभिमनुते अभिमानं जहाति च हरेरिच्छागुणसंगश्च घटक इत्यर्थः॥ ४७॥

अभिमानस्वीकारो जन्म तदत्यन्तविस्मृतिर्मरणमित्युक्तं तदुक्तं निष्प्रमाणकत्वेन मायामयं किं न स्यादत्राह। आत्मन इति। आत्मनो देहस्य भवाप्ययौ जन्मनाशौ पितृपुत्राभ्यां लिङ्गाभ्यामनुमेयौ तथाहि स्वदेहात् पुत्रदेहो जातः यस्मात्तस्माज्जन्मसिद्धं यथा च पितृशरीरं विनष्टं पुत्रेण दृष्टं यस्मात्तस्मादपि प्रत्यक्षसिद्धमेवं देहस्य जननमरणे सिद्धे इति भावः। ननु तर्हि देहस्य विद्यमाने जातो मृत इति चेतनविषयत्वेन कथं व्यपदिश्यत इति तत्राह। भवाप्ययाविति। वस्तूनां नित्यानां जीवानां जातोऽहं मृतोऽहमिति व्यपदिश्यमानौ भवाप्ययौ अभिज्ञाद्वयलक्षणौ अभिज्ञाद्वयं जातो मृत इति अभिमानद्वयमेव लक्षणं ययोस्तौ तथाहि यस्मात्तस्माद्व्यपदेश इति[1] भावः॥ ४८॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

मा स्वस्येति तैः तत्र तदभावादिति रज्जुसर्पवत् सर्वाभावादित्यर्थः॥ ४५—५१॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

वस्तुतस्तूपाधिसम्बन्धेनैव जीवस्य जन्ममृत्यू स्त इत्याह। मेति। स्वस्य कर्मरूपेण बीजेन अयं पुमान् जीवः मा जायते मा म्रियते च किन्त्वयं भ्रान्त्या अजन्मापि जायते अमरोऽपि म्रियते यथा महाभूततेजोरूपोऽग्निराकल्पान्तमवस्थितोऽपि दारुयोगवियोगाभ्यामेव जन्मनाशौ प्राप्नोति तद्वत्॥ ४५॥

यत्सम्बन्धादेव जीवोऽवस्थाश्चानुभवते तस्यास्तनोरवस्था गणयति। निषेको जठरे प्रवेशः गर्भस्तन्मध्ये वृद्धिः जन्म जठरान्निष्क्रामः बाल्यमापञ्चमाब्दात् कौमारं पौगण्डकैशोरात्मकमाषोडशवर्षात् ततो यौवनमापञ्चचत्वारिंशतः ततो वयो मध्यमाषष्टिवर्षात् ततो यावज्जीवनं जरैव ततो मृत्युरिति॥ ४६॥

देहसम्बन्धाज्जन्ममरणादीनीत्युपपादितमर्थमुपसंहरति। एता इति। हि स्पष्टं मनोरथमयीः कर्मप्रापितमनोध्यानप्राप्ताः अन्यस्य देहस्य तनूरवस्था गुणसङ्गाद्यविद्याहेतुकात् उपादत्ते कश्चिद्भगवदनुगृहीतो जहाति च॥ ४७॥

ननु देहस्यैता अवस्था देहिना दृश्यन्त एव किंतु निषेकगर्भजन्ममरणानि न दृश्यन्ते तत्राह। आत्मन इति। पितृदेहस्यौर्ध्वदेह-

[1] तथाचायम्प्रयोगः मदीयो देहः उत्पत्तिमान् पुत्रदेहत्वात्। मत्पुत्रदेहवत्। मदीयो देहः विनाशवान् पितृदेहत्वात् मत्पितृदेहवत् इति।

तरोर्बीजविपाकाभ्यां यो विद्वान् जन्मसंयमौ ।
तरोर्विलक्षणो द्रष्ट एवं द्रष्टा तनोः पृथक् ॥ ४६ ॥
प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् ।
तत्त्वेन स्पर्शसम्मूढः संसारं प्रतिपद्यते ॥ ५० ॥
सत्त्वसंगादृषीन् देवान् रजसासुरमानुषान् ।
तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥ ५१ ॥
नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् ।
एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्यते ॥ ५२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किं कर्म कुर्वता ऽप्ययदर्शनात् पुत्रदेहस्य च जातकर्मणि जन्मदर्शनात् आत्मनः स्वदेहस्यापि भवाप्ययावनुमेयौ अत्र भवशब्देन निषेकगर्भजन्मान्युपलक्षितानि एवं च द्रष्टत्वे सति भवाप्ययवतां वस्तूनां देहानामसौ द्रष्टा अपक्षयः देहलक्षणवान भवति ॥ ४८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मानात्मविवेकं दर्शयति । भेति । अपि निश्चितं अस्य देहस्य कर्मरूपेण बीजेन अयं देह एव जायते म्रियते च संदेहः पुमान् भ्रान्त्योपलक्षितोऽपि मा नैव म्रियो जायते च यतोऽमरः यथाग्निः अरण्याख्यदारुसंयुतोऽपि न तेन सह जायते म्रियते च तद्वदित्यर्थः ॥ ४५ ॥

कास्ताः सर्वभूतानां वयोऽवस्था इत्याकाङ्क्षायामाह । निषेक इति निषेकः मातृजठरे प्रवेशः गर्भो जठरस्थत्वम् जन्म मातृजठरान्निर्गमनत्वापाद्यात्वम् बाल्यं प्रथमपञ्चाब्दपरिच्छेद्यत्वम् कौमारमाषोडशाब्दात् यौवनमाचत्वारिंशदब्दात् वयोमध्यमापष्टिसंवत्सरात् तत उपरि जरा मृत्युः पञ्चत्वमायुः सापेक्ष्य तनोर्देहस्य ॥ ४६ ॥

ननु तनोरेव अवस्था चेत्तर्हि बालोऽस्मि कुमारोऽस्मीत्यादि कथं घटेतेत्यत आह । एता इति । एताः पूर्वोक्ताः अन्यस्य आत्मव्यतिरिक्तस्य तनोरवस्थाः गुणसङ्गादुपादत्ते स्वीकरोति संसारे परिभ्रमतीति फलितोऽर्थः जीव इति शेषः । अत एव मनोरथमयीः भ्रान्तमनोरथप्रचुराः जीवधर्मत्वेन गृहीता इत्यर्थः काश्चित्कश्चिदात्मानात्मस्वरूपयाथात्म्यबोधे सति ॥ ४७ ॥

तद्विवेकमेवोपदिशति । आत्मन इति । पितृपुत्राभ्याम् आत्मनः पूर्वमात्मतयाङ्गीकृतस्य स्वदेहस्येत्यर्थः । भवाप्ययौ अनुमेयौ अतो नानाभूतमयो देहः भवाप्ययधर्मकः ननु भवाप्ययधर्मयोर्विवयभूतानां वस्तूनां भौतिकानां देहादीनामभिज्ञः अक्षयलक्षणः नानाभूतमयदेहादिविलक्षणस्वरूपः क्षेत्रज्ञः भवाप्ययजनक इत्यर्थः प्रयोगस्तु नानाभूतमयो देहो जातः न त्वहम् भौतिकत्वात्पुत्रदेहवत् देहो मरिष्यति न त्वहम् भौतिकत्वात्पितृदेहवदिति ॥ ४८ ॥

1 निकाराभ्यां मिति द्विज० पाठः

---

### भाषा टीका ।

अपने कर्म बीज से यह पुरुष पैदा नहीं होता है न मरता है यह आत्मा अमर है भ्रांति से सब होता है जैसे अग्नि काष्ठ में रहने से उत्पन्न तथा नष्ट माना जाता है ॥ ४५ ॥

गर्भाधान गर्भवृद्धि जन्म बाल्यावस्था कौमार अवस्था यौवन अवस्था मध्यम अवस्था वृद्धावस्था मरण इस प्रकार से शरीर की नौ अवस्था होती हैं ॥ ४६ ॥

इतने ए शरीर ऊंचे नीचे मनोरथ मय हैं जीव इन को गुणों की आसक्ति से कहीं ग्रहण करता है कहीं कोइ छोडदेता है ॥ ४७ ॥

अपने पिता तथा पुत्र को देखकर अपने भी जन्म तथा मरण का अनुमान करना नाश उत्पन्न दोनों वस्तुओं का जानने वाला कोइ यथार्थ से नहीं है ॥ ४८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एतदेव दृष्टान्तेन स्पष्टयति । तरोरिति । तरुशब्दो नौद्भिज्जमात्रस्योपलक्षणं किन्तु फलपाकान्तस्य व्रीह्यादेरित्यर्थः । यथा तरोरेवान्त्यः परिणामो विपाकः बीजाज्जन्म विपाकात्संयमं नाशं च विद्वान् द्रष्टा तरुद्रष्टा एवं तनोर्द्रष्टा ततः पृथक् अतस्तत्र वर्तमानोऽपि भवाप्ययाभ्यां न सम्बध्यते ॥ ४९ ॥

अविवेकिनः संसारं प्रपञ्चयति । प्रकृतेरिति पञ्चभिः । तत्त्वेन तत्त्वतोऽविविच्य तत्सदृष्ट्या स्पर्शेषु विषयेषु सम्मूढ इति वा ॥ ५० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणभेदेन त्रिविधं तत्रापि च तत्तारतम्येनैकत्र द्विविधं संसारमाह । सत्त्वेति ॥ ५१ ॥

नन्वकर्तुरात्मनः कुतः कर्मभिर्भ्रमणं तत्राऽऽह । नृत्यतो गायतो जनान् पश्यन्ननुकरोति तद्गतस्वरतालादिगतिं शृङ्गारकरुणादिरसं च मनस्यनुवर्तयतीत्यर्थः । अनुकार्यते गुणैर्बलादित्यर्थः । अनेन दृष्टान्तेन दृश्यधर्मो द्रष्टरि स्फुरतीति कथितम् ॥ ५२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

एतदेव द्रष्टृदृश्यधर्मानाक्रान्तत्वमेव । पूर्वार्धे तरुशब्दस्य फलपाकान्तमात्रे लक्षणा अतो यद्वेति । विपाकादन्त्यपरिणामात् ॥ ४९ ॥

अविविच्य पृथक्त्वेनाज्ञात्वा पूर्वार्धे तत्त्वेनेति । परमपुरुषार्थकमतो येति ॥ ५० ॥

तत्रापि त्रैविध्येऽपि । तत्तारतम्येन गुणानां न्यूनाधिकत्वेन । एकैकत्र एकैकस्मिन् गुणे द्विविधम् ऋषित्वदेवत्वादियोन्यात्मकम् ॥ ५१ ॥

तद्गतेति । नर्तकगायकनिष्ठा ये स्वरतालादयस्तेषां गतिं परिपाटीमादिना ग्रामत्रयैकविंशतिमूर्च्छनादिग्रहः । शृङ्गारकरुणादीत्यादिना रौद्रवीरभयानकादिग्रहः । अनेन नर्तकगायकादिदृष्टान्तेन दृश्यधर्मो बुद्धिधर्मः सुखदुःखादिरूपः द्रष्टरि आत्मनि । यथा दृश्यानां नर्तकानां गायकानां धर्माः स्वरतालादयः शृङ्गारादयश्च द्रष्टृषु सभ्येषु स्फुरन्ति तद्वदिति ॥५२॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तरोरिति बीजविपाकः फलपाकपरिणामः यस्योत्पत्तिविनाशावनुमेयौ तस्मादात्मा भिन्नः यथा वृक्षोत्पत्त्यभिज्ञो देवदत्तो वृक्षाद्भिन्नः तद्वद् देहोत्पत्तिविनाशाभिज्ञो देवदत्तो देहाद्भिन्न इत्यर्थः ॥ ४९—५१ ॥

अनुकरोति स्वयमपि नृत्यन्निव भवति बुद्धिगुणान् बुद्ध्युपस्थापितान् देहगुणान् स्थूलादीन् ॥ ५२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत एवात्मा देहाद्भिन्नः सिद्ध इति सदृष्टान्तमाह । तरोरिति । विपाकः फलपरिणामः यथा यः पुमान् बीजविपाकाभ्यां तरोर्जन्मसंयमावुत्पत्तिविनाशौ बीजाज्जन्म विपाकात्संयमं विद्वान्स तरोर्विलक्षणो भिन्नो दृष्टः एवं तनोर्देहस्य पञ्चभूतसंघातात्मकाद्बीजादुत्पत्तिं विपाकान्नाशं च द्रष्टा पश्यन्नात्मा ततः पृथग् भिन्नः ॥ ४९ ॥

इत्थं देहाद्भिन्नमात्मानं यो न विविनक्ति स संसरती-त्याह । प्रकृतेरिति । प्रकृतेर्देहादात्मानं तत्त्वेन यथावस्थिताकारेणाविविच्यात एवाबुधः । अत एव स्पर्शेन शब्दादिविषयानुभवेन संमूढः समित्येकीकारे देहात्मनोरैक्याभिमानात्मकमोहयुक्तः संसारं प्रतिपद्यते ॥ ५० ॥

संसारप्रतिपत्तिमेव प्रपञ्चयति । सत्त्वसङ्गादिति । सत्त्वसङ्गः शमो दमस्तितिक्षा तपः सत्यमिति वक्ष्यमाणसत्त्वकार्यशमदमाद्यभिनिवेशस्तस्मात्कर्मभिस्तदनुरूपकर्मभिः देवानृषींश्च याति देवत्वमृषित्वं वा प्राप्नोति रजसा रजःकार्यकामाद्यभिनिवेशेन तदनुरूपकर्मभिरसुरमानुषान् यात्यसुरयोनिं मनुष्ययोनिं वा प्राप्नोति तमसा तमःकार्यशोकमोहादिना तत्प्रयुक्तैः कर्मभिश्च भूततिर्यक्त्वं पिशाचत्वं पशुपक्ष्यादित्वं वा प्राप्नोति इत्थं भ्रामितो भवति यद्वा कर्मभिः पुण्यापापात्मकैः भ्रामितः प्रकृतिमण्डले संचालितो जीवः सत्त्वादिसङ्गाद्देवत्वादिकं प्राप्नोतीति सम्बन्धः ॥ ५१ ॥

कथं निष्क्रियस्यात्मनो भ्रमणमित्यत्राह । नृत्यत इति । यथा नृत्यतो गायतश्च जनान् पश्यन् पुमान् ताननुकरोति स्वयमपि बुद्ध्या नृत्यन्निव गायन्निव च भवति तथानीहः निष्क्रियोऽप्यात्मा बुद्धिगुणान् स्वस्मिन् बुद्ध्युपस्थापितान् गुणांश्चेष्टाविधर्मानित्यर्थः पश्यन् स्वगतत्वेनाध्यवस्यन्ननुकार्यते चेष्टमान इव वर्तते ॥ ५२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ॥

अभिमानमात्रसमर्थनेन किंप्रयोजनमित्याशङ्क्य अभिमानपरित्यागेनैव संयमलक्षणोऽर्थ इति भावेनाह । तरोरिति । यस्तरोर्जन्मसंयमौ बीजविकाराभ्यां बीजाद्विकाराच्च विद्वान् जानाति यथा तेन विदुषा तदन्तःस्थित आत्मा तन्नियामकः परमात्मा च तरोर्विलक्षणो दृष्टः एवं देहस्य जन्मसंयमौ द्रष्टा जीवः तन्नियामकः सर्वज्ञः परमात्मा च ततः पृथक् भिन्न इत्यर्थः । अनेन तरोर्बीजविकारदृष्टान्तेन विद्वान् देहाभिमानं त्यक्त्वा संयमं याति सर्वस्मादन्यमेवं जानातीत्युक्तमत्र किंप्रमाणमित्यतो वाह । तरोरिति । विद्वद्वाक्यं मानमित्यर्थः । यो बीजविकाराभ्यां जन्मसंयमौ विद्वांस्तरोरवस्थां गतस्तरोर्विलक्षणो यथा दृष्ट एवं देहस्य जन्मादेर्द्रष्टा जीवाच्छरीराद्भिन्न इति स्वानुभवसिद्धमुक्तमिति भावः ।—

> बीजाद्यवस्थासंयुक्ताद्वृक्षाद् द्रष्टा यथा पृथक् । एवं
> विकारिणो विष्णुर्जीवश्चापृथगेव त्विति वचनात् ॥ ४९ ॥

विकारिणो देहाज्जीवपरमात्मादिभेदेन ज्ञानं मुक्तिसाधनं तदभेदज्ञानं संसारकारणमित्याह । प्रकृतेरिति । प्रकृतेर्देहादेरात्मानं जीवं परमात्मानं च तत्त्वेनाविविच्य सम्यक् भिन्नमज्ञात्वा अत एवाबुधः पुमान् संसारं प्रतिपद्यते अज्ञाननिमित्तमाह । स्पर्शेति । स्पर्शा विषयाः तत्संसक्त्या संमूढः ॥ ५० ॥

संसारतारतम्यमपि सत्त्वादिगुणनिमित्तमित्याह । सत्त्वसङ्गादिति । सत्त्वसङ्गात्सात्त्विकसङ्गात्पुण्यकर्मणा सुरादीन् प्राप्नोति रजसा राजसकर्मणा आसुरमानुषानासुरादिकं प्राप्नोति । तामसकर्मणा अङ्गारसुरादिभूततिर्यग्योनित्वमाप्नोति ॥ ५१ ॥

यथाऽम्भसा प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ ५३ ॥
यथा मनोरथधियो विषयानुभवो मृषा ।
स्वप्नदृष्टाश्च दाशार्ह ! तथा संसार आत्मनः ॥ ५४ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ५५ ॥
तस्मादुद्धव ! मा भुङ्क्ष्व विषयानसदिन्द्रियैः ।
आत्माग्रहण[१]निर्भातं पश्य वैकल्पिकं भ्रमम् ॥ ५६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतः सात्त्विकानां सुरादीनां दुःखित्वमितरेषां सुखित्वमित्यादिविपरीतानुभवः कथमत्राह । नृत्यत इति । यथा लोके नर्तनादि कुर्वतः पश्यन् स्वयं च तान् पुरुषाननुकरोति नृत्यादि करोति एवमनीहोऽपि दुःखाद्यनुभवायोग्योऽपि बुद्धिगुणान् दुःखादीन् पश्यन्ननुभवन्नहं दुःखीत्यादि ममत्वेनानुकार्यते हरिणेति शेषः—

दुःखं शोकादयः सर्वे ज्ञेया बुद्धिगुणा इति ।
सुखज्ञानं तु जीवस्य शक्तिस्नेहस्तथैव च ॥
विपर्ययेणासुराणां जीवबुद्धिगुणा मताः ।
आत्मनोऽपि गुणा बुद्धिकृता बुद्धिगुणा इति ॥
उच्यन्ते सुखदुःखाद्याः परमात्मकृता इति ।

इति वचनात् ॥ ५२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नृत्यत इति । बुद्धिगुणातोऽन्यदपि ज्ञानं जीवस्य दर्शितं द्रष्टृदृश्ययोर्मिथो भिन्नगुणत्वात् ॥ ५२—५५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतदेव दृष्टान्तेन स्पष्टयति । तरोरिति । तरुशब्देनोद्भिज्जमात्रमुच्यते ततो वनस्पतेः फलपाकान्तस्य व्रीह्यादेरित्यर्थः बीजाज्जन्म विपाकात् लयम् नाशं च विद्वान् ॥ ४९ ॥

अविवेकिनः संसारं प्रपञ्चयति । प्रकृतेरुपाधेः सकाशादात्मानं स्वंस्पर्शसम्मूढः विषयाविष्टः ॥ ५० ॥ ५१ ॥

द्रष्टुर्जीवस्य दृश्यात् पार्थक्येऽपि दृश्यधर्मग्रहणे दृष्टान्तमाह-नृत्यतो गायतो जनान् पश्यन् बालो यथा अनुकरोति तद्गतस्वरतालादिगतिं शृङ्गारादिरसं च मनस्यनुवर्तयतीत्यर्थः अनुकार्यते गुणैर्बलादित्यर्थः ॥ ५२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एतदेव दृष्टान्तेन स्पष्टयति । तरोरिति । यस्तरोः बीजाज्जन्म विपाकात्संयमं नाशं च विद्वान् स द्रष्टा तरोर्विलक्षणः एवं तनोर्जन्मसंयमौ यो विद्वान् स ततः पृथगेव ॥ ४९ ॥

एवमात्मानात्मविवेकं संसारनिवृत्तये उपदिश्य आत्मानात्मविवेकाभावे तु संसरत्येवेत्याह पञ्चभिः । तत्त्वेन स्वस्वरूपयाथात्म्येन अविविच्य अत एव अबुधः अनात्मज्ञः देहात्माभिमानवान् स्पर्शेषु येषु संमूढः संसारं जन्ममरणप्रवाहं प्रतिपद्यते प्राप्नोति ॥ ५० ॥

संसारं प्रपञ्चयति । सात्त्विकादिकर्मभिश्चालितश्चालितः कश्चित् सात्त्विकेन कर्मणा राजसादिभावाच्चालितस्तस्मादेव सत्त्वाद्दर्षीन् देवान् याति रजसा च ऋष्यादिभावाच्चालितः असुरादीन् याति ततस्तमसा भूतादीन् एवं पुनः पुनः संसारं प्राप्नोतीत्यन्वयः ॥ ५१ ॥

ननु ऋषित्वादिधर्मविहीनो जीवः कथं तान् तान् धर्मान् प्राप्नोतीत्यत आह । नृत्यत इति । नृत्यतः नर्तकान् गायतः गायकान् पश्यन् यथा अनुकरोति एवं बुद्धिगुणान् बुद्धिं गतान् ऋषित्वदेवत्वादीन् धर्मान् ऋष्यादिदेहात्माभिमानेन आत्मधर्मतया पश्यन् यथा देहात्माभिमानेनानुकार्यते देहधर्मान् आत्मधर्मत्वेन स्वीकरोतीति फलितोऽर्थः ॥ ५२ ॥

### भाषा टीका ।

वृक्षके पैदा होने तथा धान्यादिकों के पककर सुखजाने को देखकर अपने जन्म मरण को जान जावे कि जैसे उस पेडसे देखने वाला अलग है तैसे शरीरसे भी देखने वाला अलगही है ॥ ४९ ॥

अज्ञानी पुरुष इस प्रकार से प्रकृति से ठीक भिन्न आत्मा को न जान कर विषय सुखोंमे मोहित होकर संसार को प्राप्त होता है ॥ ५० ॥

सत्व गुणकी आसक्ती से ऋषि देवता होता है रजोगुणसे असुर मनुष्य होता है तमोगुण से भूत पशु आदि योनिको प्राप्त होताहै ऐसेही कर्मों से घूमता हुआ जाताहै ॥५१॥

जैसे नाच में बैठा मनुष्य उनके नाच गान को देखकर मन में गाता नाचता सा होजाता है इसी प्रकार से अकर्ता भी आत्मा बुद्धि गुणोंका अनुकरण करता है तो उस सरीका होता है ॥ ५२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वाविधर्मोऽप्रोपहितेऽवभासन्ते इत्यत्र दृष्टान्तमाह यथाम्म-

[१] निभात इति विजयध्वज पाठः ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्रोतेति । तटस्थास्तरवो धावन्त इव दृश्यन्ते जले प्रतिबिम्बिता वा चञ्चला इवेति विषयग्राहकेण मनसा परिकल्पिता एवं तेषु लावण्यादयो गुणा न वस्तुतः सन्त्यतो मनोनिबन्धन एव संसार इत्यभिप्रेत्य ग्राहकगुणा ग्राह्येऽवभासन्त इत्यत्र दृष्टान्तमाह । चक्षुषेति ॥ ५३ ॥

भोगस्यापि मिथ्यात्वे दृष्टान्तद्वयमाह । यथेति । यथा एताः प्रसिद्धा मनोरथधियः स्वप्नदृष्टाश्च धियो मृषा एवमात्मना विषयानुभवः संसारो मृषा ॥ ५४ ॥

ननु यदि मृषा तर्हि किं तन्निवृत्तिप्रयत्नेनेत्यत आह । अर्थेहीति अध्यात्मनः ॥ ५५ ॥

अतो भोगोद्यमो न कर्तव्य इत्याह । तस्मादिति ॥ ५६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

उपाधिवृत्तेः धर्माः जाग्रदादयो दुःखादयश्चोपहिते उपाध्यनुरक्ते आत्मनि । तीरस्था अम्भस्युपाधौ चलति सति तीरे तरुस्थास्तरवोऽपि नौकास्थजनैश्चला इव दृश्यन्ते किन्तत्र नौकोपाधिरेव मुख्यो नत्वम्भ इति कल्पनागौरवमतः प्रतिबिम्बिता वेत्युक्तम् । तेषु मनोग्राह्येषु कलत्रादिषु । ग्राहकगुणाः ग्राहकस्य मनसो धर्माः लावण्यादयः । ग्राह्ये विषये कलत्रादौ । मूढे चक्षुषा ग्राहकेण । भूर्ग्राह्या ॥ ५३ ॥

एताः प्रसिद्धा इति व्याख्यानादेता इति पाठः स्वामिसम्मतो लक्ष्यते किन्तु यथेत्येव सर्वत्र दृश्यते ॥ ५४ ॥

अर्थे विषयानुभवरूपे संसारे । तन्निवृत्तिप्रयत्नेन संसारनिवृत्त्यर्थं शमदमादिसाधनप्रयत्नेन । अस्य निरन्तरपद्योक्तस्य ॥ ५५ ॥

अतो विषयध्यानस्यानर्थकत्वात् । असदिन्द्रियैः बहिर्मुखेन्द्रियैः । आत्माऽग्रहणनिर्भातं स्वरूपाज्ञानविलसितम् । वैकल्पिकं मेदविषयम् । श्रीवैष्णवानां मते तु नोद्धवोऽप्यपि मन्न्यून इत्यादि भगवन्मनोवृत्तेः श्रीमदुद्धवव्याजेन अन्यान् प्रत्येवायमुपदेश इति व्यज्यते । तथा आत्मस्वाप्नेव मातृत्वादात्मा हि परमो हरिरिति तन्त्रोक्तेः । श्रीहरिविस्मृतिजन्यं देहादिविषयकं विप्रोऽहं क्षत्रियोऽहमिति भ्रमं पश्य तेन तन्निवर्तकं तत्स्मरणमेव कुर्विति व्यज्यते ॥ ५६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यथाम्भसेति ॥ ५३ ॥

अन्यधर्मस्यान्यत्राध्यासे दृष्टान्तः मनोरथधियः मनोरथरूपा स्वप्नदृष्टाश्च विषयानुभवाः मृषा मिथ्याविषयाः एवमात्मनः संसारो जन्ममरणादिरपि मृषेत्यर्थः ॥ ५४ ॥

अर्थे ह्यविद्यमानेऽपि शब्दादिविषयेष्वनुपनतेष्वपि तान् चेतसा ध्यायतः संसृतिर्न निवर्तते स्वप्ने कन्यकाभावेऽपि तदुपभुक्त्या दुःखावगमादित्यर्थः ॥ ५५ ॥



आत्माग्रहणनिर्भातमिति । आत्मग्रहणाभावाय क्षिप्तेनात्मज्ञानविरोधिभूतमित्यर्थः ॥ ५६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्यधर्मस्यान्यत्राभासे दृष्टान्तमाह । यथेति । प्रचलताम्भसा हेतुना तीरस्थास्तरवोऽपि प्रचलन्त इव दृश्यन्ते यथा च भ्राम्यमाणेन चक्षुषा हेतुना भूः पृथ्वी भ्राम्यतीव दृश्यते तथा देहात्मतादात्म्यमध्यस्यमानया बुद्ध्या हेतुना देहधर्मा जन्ममरणादय आत्मनि प्रतीयन्ते इत्यर्थः ॥ ५३ ॥

यथेति यथा मनोरथधिय इति यथा च स्वप्नद्रष्टुर्विषयानुभवो मृषा मिथ्यार्थविषयः अनित्य इत्यर्थः यतो देहधर्मा आत्मन्यध्यस्ता अत एव अध्यासहेतुनिवृत्तौ निवर्तन्ते इति सदृष्टान्तमाह । तथा हे दाशार्ह उद्धव । आत्मनः संसारः देहधर्माध्यासात्मकः मृषा अध्यासहेतुनिवृत्त्या निवर्तेत इत्यर्थः ॥ ५४ ॥

कस्तर्ह्यध्यासहेतुरित्यपेक्षायां देहात्मतादात्म्यशब्दादिविषयानुध्यातृमनः सम्बन्ध एवेति यदस्तन्निवृत्तौ नाध्यासात्मकसंसारनिवृत्तिरिति सदृष्टान्तमाह । अर्थे इति । अर्थे शब्दादिविषयेऽविद्यमानेऽसंनिहितेऽपि विषयान् शब्दादीन् ध्यायतः अस्य जीवस्य संसृतिर्न निवर्तते अपितु ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते । सङ्गात्संजायते काम इत्याद्युक्तरीत्या वर्धत इतः संसृतिः अनुवर्तेत एवेति भावः । तत्र दृष्टान्तः । स्वप्न इति । नह्यनुवर्तमाने सति स्वप्ने देशान्तरगमनशिरश्छेदाद्यनर्थपरम्परा निवर्तते अपित्वनुवर्तेत एव तद्वदित्यर्थः ॥ ५५ ॥

असत्यपि विषये तदनुध्यानस्वभावमनः सम्बन्धे सति नाध्यासो निवर्तेत इत्यभिप्रायेणार्थे ह्यविद्यमान इत्युक्तं किं तर्हि विषयानेवानुध्यायतो मनसस्तन्निवृत्तिकारणमित्यपेक्षायां विषयाननुभव एवेति यदस्तदभिनिवेशं च वारयति । तस्मादिति । तस्माद्विषयध्यानस्य संसृतिवर्धकत्वादसदिन्द्रियैरसद्भिः विषयप्रवणैरिन्द्रियैर्विषयान्माभुङ्क्ष्व तदनुभवस्य तदनुध्यानकारणत्वादिति भावः । मास्त्वस्य कर्मबीजेन जायत इत्यादिनोपपादितमात्मनि जन्ममरणाद्यवस्थाकल्पननिमित्तं भ्रममात्माग्रहणनिर्भातमिति आत्माग्रहणेन देहविलक्षणात्मपरमात्मयाथात्म्याग्रहणेन निर्भातमुदितं पश्य निश्चिनु आत्माग्रहणेन निर्भातमवभासमानं वैकल्पिकं पाक्षिकं भेदभ्रमं भ्रममूलकं पश्य भेदस्यात्मग्रहणदशायामप्रतीतेः पाक्षिकत्वाद्वैकल्पिकमित्युक्तम् ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वतः सुखादिरूपाणां चेतनानां दुःखादिरूपत्वप्रत्ययो भ्रान्त इत्येवं बहुदृष्टान्तैः समर्थयते । यथेत्यादिना । यथा प्रचलता जलेन तीरस्थास्तरवोऽपि चलाचलनधर्मवन्त इव दृश्यन्ते यथा च भ्राम्यमाणेन चक्षुषा भूर्भ्राम्यतीव दृश्यते ॥ ५३ ॥

यथा च मनोरथधियो मनोरथविषयाः मृषा वृथा यथा च स्वप्नदृष्टो विषयानुभवोऽपि मृषा हे दाशार्ह उद्धव । आत्मनो

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जीवस्य संसारोऽपि वृथा अल्पप्रयोजनः "अल्पप्रयोजनं यत्स्यात्स्वल्पमेवेत्येव तदुच्यते" इति वचनात् ॥ ५४ ॥

असत्स्वरूपत्वे किमिति न निवर्तत इति तत्राह । अर्थे इति । अर्थे दुःखित्वादिलक्षणे विषये अविद्यमानेऽपि संसृतिः संसृष्टदुःखित्वादिप्रत्ययो न निवर्तते किन्तु वर्तत एव अनिवृत्तौ निमित्तमाह । ध्यायत इति । निरन्तरं शब्दादिविषयध्यानमनिवृत्तौ कारणमित्यर्थः । तत्कुत्र दृष्टमत्राह । स्वप्न इति । ध्यायत इत्यनुवर्तते जाग्रद्दृष्टतुरगाद्यर्थध्यानात् स्वप्नेऽप्यर्थागमस्तुरगाद्यर्थागमो यथा न निवर्तते उपादानादिव्यवहारानुभवात् अत्र यथाम्भसेत्यादिदृष्टान्तानां प्रपञ्चमिथ्यात्वे न तात्पर्यं किंतु देहसम्बन्धात्सुखरूपाणां जीवानां अहं दुःखीत्यादिप्रत्ययस्य यथा स्वतः शुक्लः शङ्खोऽपि जपाकुसुमसन्निधानाल्लोहित इति शङ्खविषये लौहित्यप्रत्ययस्य मिथ्यात्वं इदं तथात्रापीति । सन्तोष्टव्यम् ॥ ५५ ॥

फलितमाह । तस्मादिति । आत्मनोर्जीवपरमात्मनोः स्वरूपाग्रहणेन निष्पन्नं वैकल्पिकं विरुद्धकल्पनाजनितं भ्रमं पश्यन् ॥ ५६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मादुद्धव माभुङ्क्ष्वेति स्फुटमेव तमुपलक्ष्यान्यान् प्रत्युपदेशो व्यज्यते नोद्धवोऽयमपि मन्यून इत्यादिश्रीभगवन्मनोवृत्तेः ॥ ५६ ॥ ५८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अन्यधर्मा अन्यत्रावभासन्ते इत्यत्र दृष्टान्तमाह । यथेति । अम्भसा प्रचलतेव तत्र नौकारूढैर्जनैस्तत्तीरस्थास्तरवो यथा चला इव दृश्यन्ते एवं कर्तृत्वभोक्तृत्वादय उपाधिधर्मा एव तद्ग्राह्ये जीवे सर्पभूताद्याविष्टत्वात् सर्पादिग्राह्ये मनुष्ये सर्पादिधर्मा इवावभासन्त इत्यत्र दृष्टान्तमाह । चक्षुषेति ॥ ५३ ॥

तद्वत् विषयभोगा उपाधिधर्मा एव जीवे मृषा प्रतीता इत्यत्र दृष्टान्तद्वयमाह । यथेति । विषयानुभवो विषयभोगः संसारः संसारबन्धः ॥ ५४ ॥

संसारबन्धस्य मिथ्यात्वेऽपि तदुत्थं दुःखं न निवर्तत इत्याह । अर्थे उपाधिसम्बन्धे अविद्यमाने अवस्तुभूतेऽपि संसृतिः संसारबन्धोत्थं दुःखं न निवर्तते कस्य विषयान् भोगबुद्ध्या ध्यायतः अस्य जीवस्य अवस्तुभूतस्यापि दुःखदत्वे दृष्टान्तः स्वप्नेऽनर्थागमः सर्पादिदंशः ॥ ५५ ॥

यस्माद्भोगबुद्ध्या विषयध्यानमनर्थहेतुस्तस्मात्त्वं तत्त्यजेत्याह तस्मादिति । विकल्पाद्द्वैताभ्यासादुद्भूतं भ्रममज्ञानं पश्य कीदृशं आत्मनो जीवस्य अग्रहणमप्राप्तिस्तत्र निमित्तं विराजमानं तद्विलापकमित्यर्थः ॥ ५६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्यधर्मस्यान्यत्र प्रतीतौ दृष्टान्तद्वयमाह । यथेति । तथा ऋषिरस्मि देवोऽस्मि असुरोऽस्मीत्यादिदेहात्माभिमानेन ऋषित्वादयो धर्मा आत्मधर्मत्वेन प्रतीयन्ते ॥ ५३ ॥

किंबहुना यथा मनोरथधियः नरोऽस्म्यसुरोऽस्मीत्यादिमनोरथधियः स्वप्नदृष्टाश्च व्याघ्रोऽस्मीत्यादिधियः तत्र तत्र देवादिस्थिता अपि मृषा नरः सुरो व्याघ्रो वा न भवति तथात्वासम्भवात् तथा विषयाणां शुभाशुभानामनुभवो यस्मिन् स संसारः ऋषित्वदेवत्वमनुष्यत्वादिरूपः जातत्वमृतत्वादिरूपश्च आत्मनः ऋषिर्वा देवो वा मनुष्यो वा मृगो वा न भवति ॥ ५४ ॥

ननु तस्य मृषात्वे तन्निवृत्त्युपायविषयकशास्त्रस्य वैयर्थ्यं स्यादत आह । अर्थे इति । अर्थे । ऋषित्वदेवत्वादेः जातत्वमृतत्वादेरात्मनि अविद्यमानत्वेऽपि अस्य देहात्माभिमानिनः संसृतिः ऋषिरस्मि देवोऽस्मि असुरोऽस्मि मरिष्यामीत्यादिरूपा न निवर्तते यथा स्वशिरश्छेदाद्यनर्थाभावेऽपि स्वप्ने तादृशानर्थागमोऽस्त्येव ननु आत्मपरमात्मविषयकशास्त्रश्रवणादिना ऋषित्वादयो जाग्रत्त्वादयश्च देहधर्मा अहन्तु परमात्मांशभूतस्तैर्धर्मैरस्पृष्टस्वरूपः इति ज्ञात्वा परमात्मध्यानेन मुक्तः कुतो न भवेदित्यत आह । ध्यायतो विषयानिति । विषयासक्तस्योक्तसाधनेऽधिकारो नास्ति अतःसंसृतिर्न निवर्तते इत्यर्थः ॥ ५५ ॥

अतो विषयभोगो न कर्तव्य इत्याह । तस्मादिति । असद्भिर्विषयैः कनिष्ठैरिन्द्रियैः विषयानिन्द्रियार्थान् वैकल्पिकं विकल्पं आत्मभिन्ने देहभ्रमं आत्मभ्रान्तिं पश्य संसारहेतुत्वेनावेक्षस्व ॥ ५६ ॥

---

### भाषा टीका ।

जैसे जलके हिलने से वृक्ष भी हिलते से दीखते हैं तथा अपने घूमने से नेत्रों से भूमी घूमतीसी दीखती है ॥ ५३ ॥

जैसे केवल मनोरथ की बुद्धि तथा विषयों के अनुभव झूठे हैं हे दशार्ह उद्धव ! स्वप्न के देखे पदार्थ जैसे क्षणिक हैं तिसी प्रकार से अपने मोह से मात्र आत्मा को संसार का बन्धन है ॥ ५४ ॥

यथार्थ अर्थ नहीं दीखने से भी संसार निवृत्त नहीं होता है विषयों के ध्यान करने से बन्धन होता है जैसे स्वप्न में भयादिक अनर्थ की प्राप्ति होती है ॥ ५५ ॥

हे उद्धव ! तिस से खोटी इन्द्रियों से विषयों को मत भोगो परमात्मा में प्रीति न होने से यह सब संसार का शत्रु मित्र भ्रम है ऐसा जानो ॥ ५६ ॥

---

क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथवा ।
ताडितः सन्निबद्धो वा वृत्त्या वा परिहापितः ॥ ५७ ॥
निष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ॥ ५८ ॥

उद्धव उवाच ।

यथैवमनुबुध्येयं वदनो वदतांवर ! ।
सुदुःसहमिमं मन्य आत्मन्यसदतिक्रमम् ॥ ५९ ॥
विदुषामपि विश्वात्मन् ! प्रकृतिर्हि बलीयसी ।
ऋते स्वधर्मनिरतान् शान्तांस्ते चरणालयान् ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुःखप्रतीकारोद्यममपि परित्यज्य परमेश्वरनिष्ठयैव भाव्यमित्याह । क्षिप्त इति द्वाभ्याम् । क्षिप्त आक्षिप्तो दुष्ट इति वा प्रलब्ध उपहसितः ॥ ५७ ॥

निष्ठितो निष्ठीवनविषयीकृतः मूत्रितो मूत्रेणाऽऽर्द्रीकृतः प्रकम्पितः परमेश्वरनिष्ठातः प्रच्यावितोऽपि कृच्छ्रगतः कृच्छ्रं प्राप्तोऽपि ॥ ५८ ॥

एवं त्वदुक्तं यथा अनुबुध्येयं तथा नोऽस्मान् सर्वान् प्रति वद ५९

स्वधर्मनिरतान् ऋते विदुषामप्यसद्भिः कृतमतिक्रममपराधं दुःसहं मन्ये इत्यन्वयः प्रकृतिः स्वभावः ॥ ६० ॥

निरस्य सर्वसन्देहमेकीकृत्य सुदर्शनम् ॥
प्रकाशितरहस्यं तं भजाम गुरुमीश्वरम् ॥ १ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

क्षिप्त इति युग्मकम् । आक्षिप्तः वाचा तिरस्कृतः अवमानितः अनुत्थानाद्यभावेनानादृतः ॥ ५७ ॥ ५८ ॥

न इत्येकत्वे बहुवचनम् "अस्मदो द्वयोश्च", इति सूत्रात् । विविक्त उपलक्ष्येति निर्जनसम्भाषकः अतएवात्रापि मनुबुध्येयमित्येकवचनान्त एव लिङ्प्रयोग इति । स्वामिव्याख्यायां तु श्रोतृवृन्दजनतानुसारेण नः सर्वानिति बहुवचनोपगमः ॥ ५९ ॥

ऋते स्वधर्मनिरतानिति स्वच्छन्दवर्णकीर्तनादि निष्ठा येषु तेष्वस्माकं न विस्मयः अतस्ते तु भवता नाशोदाहार्याः किन्त्वन्य एवेति भावः ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

क्षिप्तः वाचा क्षिप्तः प्रलब्धः विप्रलब्धः असूयितः गुणेष्वारोपितदोषभावः वृत्त्या द्रव्यरूपेण जीवितेन ॥ ५७—५८ ॥

वदतस्तवानुवृत्त्या स्वमतानुसारेणापि दुःसहमसदतिक्रमं मन्ये ॥ ५९—६० ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मानुग्रहणाभिमानमित्यनेन श्रमनिवृत्तये सर्वात्मना यत्नवता भवितव्यमिति सूचितं तत्र विघ्नोपनिपातेऽप्यात्मग्रहणेन आत्मानमुद्धरेदित्याह द्वाभ्याम् । क्षिप्त इति । अज्ञैर्दुर्जनैः क्षिप्त आक्षिप्तः तिरस्कृतोऽधिक्षिप्तः प्रलब्धः उपहसितः असूयितः गुणेष्वारोपितदोषभावः वृत्त्या जीवितेन परिहापितः त्याजितो वा ॥ ५७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निष्ठितः निष्ठीवनविषयीकृतः मूत्रितः मूत्रेणार्द्रीकृतः अत्रैवं बहुधा प्रकम्पितश्चालितोऽपि श्रेयस्कामश्चेत् कृच्छ्रगत उक्तविधामापदं प्राप्तोऽपि आत्मयाथात्म्यावलोकनविषयभूतेनात्मना हेतुना स्वात्मानमुद्धरेत् ॥ ५८ ॥

क्षेपादीनां दुःसहतां मन्यमानस्तदुपायं पृच्छति । यथैवेति हे वदतांवर ! यथा क्षेपादीन् सोढुमनुबुध्येयं स्वात्मानं परमात्मानं च यथावज्जानीयां तथा नोऽस्मान्प्रति वद तदुपायमुपदिशेत्यर्थः।किमिति क्षेपादिक्षमोपायं पृच्छसि चेत्तत्राह ।सुदुःसहमिति । आत्मनि स्वस्मिन्नसद्भिः कृतमतिक्रमं क्षेपादिरूपं सुदुःसहं सुतरां दुःसहमहं मन्ये ॥ ५९ ॥

कुत इत्यपेक्षायामाह । विदुषामपीति । हि यस्मात् हे विश्वात्मन् ! विदुषामपि प्रकृतिर्बलीयसी प्रकृतिसम्बन्धप्रयुक्ता देहात्माभिमानरागद्वेषादयो बलीयांस इत्यर्थः । किं सर्वेषामपि विदुषां नेत्याह । ऋत इति । त्वद्धर्मे भगवद्धर्मास्तेषु नितरां रतान् त्वच्चरणावेवालयमाश्रयो येषां तानत एव शान्तान् जितान्तःकरणानृते विना इतरेषां विदुषामपि प्रकृतिर्बलीयसीति सम्बन्धः ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुः सहाविषयोपद्रवेऽपि तत्परिहारप्रयत्नो न कार्यः किन्तु विषयेभ्यः प्रत्याहृतमनसा स्वात्मानं संसारादुद्धर्तुं प्रयतेतेति शिक्षयति । क्षिप्त इत्यादिना ॥ ५७—५८ ॥

विषयाः सोढव्या इति यद्धरिणोक्तं तत्रोद्धवश्चोदयति । यथेति । यथावत्स्पष्टीकुरुते चरणालयान् चरणैकशरणानृते इतरेषां विदुषामप्यसतामात्मन्यतिक्रमं दुःसहं मन्ये तत्र हेतुगर्भविशेषणमाह । प्रकृतिरिति । प्रकृतिर्बलीयसी हि अहंममेति देहाभिमानस्वभावो बलिष्ठोऽपरिहार्यो यस्मात्तस्मादिति शेषः ॥ ५९—६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न इत्येकत्वे बहुवचनम् "अस्मदो द्वयोश्च" इति सूत्रात् पूर्वं हि विविक्त उपसङ्गम्य इत्यादिना निर्जन एव सम्वादोऽयमिति व्यञ्जितं अत्रैव चानुबुध्येयमेकवचनान्त एव विद्वद्योग इति ॥ ५९ ॥

ऋत इति त्वद्धर्मनिरतानिति ये त्वच्छरणाः कीर्तनादितत्परास्तेष्वस्माकं न विस्मयः अतस्तत्तु भवता नात्रोदाहार्याः किन्त्वन्य एवेति भावः ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विषयभोगरहितः कीदृशास्तितिक्षुरित्यपेक्षायामाह । क्षिप्त इति द्वाभ्याम् । क्षिप्त आक्षिप्तः बहिर्निःसारितो वा प्रलब्ध उपहसितः असूयितः गुणेषु दोषारोपविषयीकृतः वृत्त्या जीविकया रहितीकृतः निष्ठितः निष्ठीवनपात्रीकृतः ॥ ५७ ॥ ५८ ॥

यथा अनुबुध्येयं तत्तत्सहने यथाविवेकं प्राप्नुयाम् एवं वद ॥ ५९ ॥

विदुषाम् असदतिक्रमसहने उपायं जानतामपि प्रकृतिः अममात्मकः स्वभावः त्वद्धर्मणि रतान् । त्वद्भक्तान् विनेति तेषां त्वत्साम्यप्राप्त्या प्रकृतिरकोपनैवेत्याह । शान्तान् तत्र हेतुस्त्वच्चरणनिवासात् ॥ ६० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशेऽत्र द्वाविंशः सङ्गतः सङ्गतः सताम् ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तितिक्षुर्भूत्वा वैकल्पिकभ्रमनिवर्तकात्मज्ञानप्रदेन परमात्मना आत्मानमुद्धरेदित्याह । क्षिप्त इति द्वाभ्याम् । क्षिप्तः हस्तादिना गलादियोजितेन दूरीकृतः अवमानितः अनादरः प्रलब्धः उपहसितः असूयितः गुणवत्त्वेऽपि निन्दितः वृत्त्या जीविकया परिहापितः परित्याजितः ॥ ५७ ॥

निष्ठितः निष्ठीवनविषयीकृतः मूत्रितः मूत्रेणार्द्रीकृतः प्रकम्पितः प्रकम्पोपलक्षितामतिपीडां प्रापितः एवं बहुधा कृच्छ्रगतः कष्टं प्रापितोऽपि श्रेयस्कामो मुक्तिकामः आत्मना ज्ञानभक्तिप्रदेन गुर्वादिरूपिणा परमात्मना हेतुभूतेन आत्मानमज्ञानग्राहगृहीतं संसारादुद्धरेदित्यर्थः ॥ ५८ ॥

एवं भवदुपदिष्टं यथा यथावदनुबुध्येयं तथा वद ॥ ५९ ॥ त्वद्धर्मनिरतान् तत्रापि त्वच्चरणालयान् अत एव शान्तान् ऋते विना विदुषामपि असद्भिः कृतमतिक्रममपराधं सुदुःसहं मन्ये इत्यन्वयः हि यतः प्रकृतिर्मनोरूपा बलीयसी दुर्जया ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वाविंशाध्यायार्थप्रकाशः ॥ २२ ॥

---

भाषा टीका।

असत्पुरुष चाहे खोटे बचन कहैं चाहे अपमान करैं चाहे हंसी करैं चाहे गुणों को दोष बतावैं चाहे मारैं चाहे बांधैं चाहे जीविका छुडा देवैं ॥ ५७ ॥

चाहे ऊपर थूक डालें चाहे मूत्र करैं ऐसे नाना प्रकार से दुखि करैं तो भी अपने कल्याण को चाहने वाला पुरुष ऐसे कष्ट में पडने पर भी अपनी बुद्धि से आत्मा का उद्धार करे ॥ ५८ ॥

उद्धव उवाच।

हे वक्ताओं में श्रेष्ठ कृष्णचन्द्र मैं तो असत्पुरुषों के किये अपने अपमान को बडा कठिन समझता हूं इस के सहने का उपाय मेरे से कहिये ॥ ५९ ॥

हे विश्वात्मा बडे विद्वानों को भी यह सहना कठिन हैं क्योंकि प्रकृति सम्बन्ध बडा बलवान् है परन्तु जो पुरुष आप के चरण के आश्रय करते हैं और शांत हैं और आप के भागवत धर्मों में निरत हैं वहतो ऐसे तिरस्कार को सह सकते हैं ॥ ६० ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध

बाइसवें अध्याय की पं० लक्ष्मणाचार्यकृत

भाषा टीका समाप्त ॥ २२ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

## अथ त्रयोविंशोऽध्यायः ।

—:*:—

बादरायणिरुवाच ॥

स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः ।
सभाजयन्भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः ॥ १ ॥

श्रीभगवानुवाच ॥

बार्हस्पत्य ! स वै नात्र साधुर्वै दुर्जनेरितैः ।
दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ २ ॥
न तथा तप्यते विद्धः पुमान् बाणैः सुमर्मगैः ।
यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ ३ ॥
कथयन्ति महत्पुण्यमितिहासमिहोद्धव ! ।
तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥ ४ ॥
केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः ।
स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ॥ ५ ॥
अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ।
वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥
ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः ।
शून्यावसथ आत्माऽपि काले कामैरनर्चितः ॥ ७ ॥
दुःशीलस्य कदर्यस्य द्रुह्यन्ते पुत्रबान्धवाः ।
दारा दुहितरो भृत्या विषण्णा नाचरन् प्रियम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोविंशे तिरस्कारसहनोपाय ईर्यते ।
भिक्षुगीतप्रकारेण मनसः संयमो धिया ॥
दुर्जनोपद्रवो नूनं दुःसहो हि महीयसाम् ।
अतश्चतुर्भिरध्यायैः सहनोपायवर्णनम् ॥

तत्र तावदस्मिन्नध्याये भिक्षुगीतया मनोविजय उत्तरस्मिन् प्रकृतिपुरुषविवेकस्ततुत्तरस्मिन् गुणवृत्तिविजयस्ततः परस्मिन्नैलगीतया विषयसङ्गत्यागेन सत्सङ्ग इति क्रमेणोपाया भगवता वर्ण्यन्ते आशंसितः प्रार्थितो भृत्यस्य वचः सत्कुर्वंस्तं भृत्यं प्रति आबभाषे ॥ १ ॥

तत्र तावदङ्गीकारस्तस्योद्धवः सम्पूजयति द्वाभ्याम् । हे बार्हस्पत्य । बृहस्पतेः शिष्य अत्र लोके स साधुर्नास्ति यो दुर्जनोक्तैर्भिन्नं क्षुभितं मनः समाधातुमीश्वरः स्यात् ॥ २ ॥

कुत इत्यत आह । नेति । यथा मर्मस्था मर्मस्वेव नित्यं स्थिताः परुषोक्तिरूपा इषवस्तुदन्ति व्यथयन्ति तथा इतरे बाणा न तुदन्ति अतस्तैस्तथा न तप्यत इत्यर्थः ॥ ३ ॥

तथाऽपि मया वक्ष्यमाणैरुपायैः सर्वं सोढुं शक्यमित्यभिप्रायेणेतिहासं प्रस्तौति । महद्यथा भवति तथा पुण्यमितिहासं गाथां कथयन्ति ॥ ४—५ ॥

स भिक्षुः पूर्वं धनाढ्यः कृच्छ्रार्जितस्य धनस्य नाशेन सन्तप्यमानो निर्विण्णः सन्प्रव्रज्य भिक्षार्थमटन् दुर्जनैरुपद्रुतः पश्चात्तापयोगिनीं गाथामगायदिति वक्तुं तस्य पूर्वचरितमाह । अवन्तिष्वित्यादिना । अवन्तिषु मालवेषु वार्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य कदर्यस्तु स्मृतावुक्तः "आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् । देवताऽतिथिभृत्यांश्च स कदर्य इति स्मृतः" इति ॥ ६ ॥

तस्य ये ज्ञातयो बान्धवा अतिथयोऽभ्यागताश्च तेन नार्चिता इत्यर्थः । शून्यावसथे धर्मकर्महीने गृहे देहे वा ॥ ७—८ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

मनःसंयम एव सहनोपाय इतीर्यते । नरवरेऽपि तदुपायाः सन्ति न वर्त्मान्तराणाम् अध्यायचतुष्टयार्थमपि संगृह्णाति दुर्जनेति । महीयसामपि दुःसह इत्यन्वयः मनो दुःसहत्वात् । तत्र अध्यायचतुष्टयमध्ये तावत् प्रथमम् । अस्मिन्नर्थो विशेषः । उत्तरस्मिंश्चतुर्विधः । तदुत्तरस्मिन् पञ्चविधः । ततः परस्मिन् षड्विधः ॥ १ ॥

तत्र दुर्जनोपद्रवस्य दुःसहत्वे तावदादौ । तदुक्तः उद्धववाक्यम् ॥ २ ॥

नित्यं स्थिता इति प्रसिद्धबाणास्तु निःसरन्ति तत्क्षतमपि कालान्तरे शाम्यति अत इतरे बाणा न तुदन्ति । अतस्तथा तोदन कर्तृत्वाभावात् मर्मगैरित्यपि क्वचित्पाठः ॥३॥

तथापि दुर्जनोपद्रवस्य दुःसहत्वेऽपि । प्रस्तौति प्रकरणागतं करोति वर्णयतीत्यर्थः । कथयन्तीति युग्मकम् ॥ ४ ॥-५ ॥

प्रश्नस्य संन्यस्य । प्रस्तुतोपयोगिनीं सहनोपयुक्ताम् । तस्य कदर्यस्य ॥ ६ ॥

तस्येति कर्तरि षष्ठी अतस्तेनेत्यर्थः कृतः ॥ ७ ॥

द्रुह्यन्ते कदा मरिष्यतीति द्रोहं कुर्वन्ति । प्रियं सुखम् ॥८॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—५ ॥

बार्हस्पत्यः बृहस्पतिशिष्य ईश्वरः समर्थः लुब्धः अर्थाभिनिविष्टः कदर्यः सिद्धेऽपि विभवे विनियोगविमुखः ॥ ६ ॥

शून्यावसथे अतिथिपूजारहितगृहे आत्मा शरीरम् ॥ ७ ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यमुद्धवेन पृष्टस्तमभिनन्द्य तं प्रति श्रीभगवानाहेत्याह मुनिः । स इति । इत्थं भागवतमुख्येनोद्धवेनाशंसितः पृष्टो दाशार्हर्षभः अनवद्यं वीर्यं विश्वप्रकाशकं चेष्टितं यस्य स मुकुन्दः भृत्यस्योद्धवस्य वचः समाजयन् संमानयंस्तमुद्धवमाबभाषे ॥ १ ॥

भाषणमेवाह । बार्हस्पत्येत्यादिना । यदुक्तं दुर्विषहमिमं मन्य आत्मन्यसदतिक्रमम् इति तत्रापि सत्यमेवेत्याह । बार्हस्पत्येति द्वाभ्याम् । हे बार्हस्पत्य बृहस्पतेः शिष्य ! स साधुर्विद्वान् नास्त्येव कोऽसौ यो दुर्जनानां दुरुक्तैः भिन्नमात्मानं मनः समाधातुमीश्वरः समर्थः । अनेन समाहिते स्वात्मनि सुखदुःखे न स्त इति सूचितम् स्वनिजकर्मानुवर्ति मन एव सुखदुःखकारणमिति फलितम् ॥ २ ॥

कुत इत्यत आह । न तथेति । मर्मगैर्दुर्वाक्यैः प्राप्तैर्बाणैर्विद्धोऽपि न तथा तप्यते कथमित्यत्राह । यथाऽसतां दुर्जनानां सवर्णिनः परुषवाक्यरूपाः इषवः मर्मस्थाः सन्तः तुदन्ति व्यथयन्ति दुःखयन्तीत्यर्थः । केवलेषुभ्यः परुषेषुभिर्नितरां तप्यते इति विवक्षितोऽर्थः ॥ ३ ॥

यद्यप्येवं तथापि जनैः सुखदुःखयोरसाधारण्याभिमर्शनात्मानं समाधातुं प्रभवत्येवेति वक्तुमितिहासं प्रस्तौति । कथयन्तीति । महत्पुण्यं श्रवयतां महत्पुण्यावहमितिहासं कथयन्ति स एव त्वदाहननयोस्तदमितिभावः । अतस्तामितिहासं वर्णयिष्यामि सुसमाहितः सन्निबोध शृणु ॥ ४ ॥

इतिहासं विशिनष्टि । केनचिदिति दुर्जनैः परिभूतेन केनचिद्भिक्षुणा तदभिन्ना गीतामितिहासमिति पूर्वेण सम्बन्धः भिक्षुं विशिनष्टि । धृतियुक्तेन विघ्नोपनिपातेऽपि कृत्यसमापनसामर्थ्यं धृतिस्तया युक्तेन निजकर्मणां विपाकं विपच्यन्ते निष्पद्यन्ते फलान्यनेनेति तथा तमहङ्काराभिमानकारिणामीश्वरनिग्रहानुग्रहमूलानां निजकर्मणां वशीकृतमन्तःकरणमेव पारिशेष्यन्यायेन सुखदुःखसाधनमिति स्मरतेत्यर्थः ॥ ५ ॥

कोऽसौ तिनिहास इत्यत आह । अवन्तीष्वित्यादिना अवन्तीषु देशेषु श्रिया धनादिसम्पत्त्या आढ्यतमः समृद्धतरः कश्चिद्द्विज आसीत् तं विशिनष्टि । वार्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य सः कदर्यः केवलं स्वोदरपोषणमात्रपरः यद्वा—

आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन् ।
देवतातिथिभृत्यांश्च स कदर्य इति स्मृतः ॥

इत्युक्तविधः तत्र हेतुः केवलं वित्तकामी लुब्धश्चेति किञ्चातिकोपनः ॥ ६ ॥

अत एव तस्य सम्बन्धिनो ज्ञातयोऽतिथयश्च वचनमात्रेणापि तेन नार्चिताः शून्यावसथेऽतिथिपूजारहिते गृहे तस्यात्मा देहोऽपि कामैर्भोगैर्नार्चितो न लालितः ॥ ७ ॥

दुःशीलस्येति एवंविधस्य तस्य पुत्रादयः द्रुह्यन्तेऽद्रुहन्तापचक्रिरे इत्यर्थः दारादयोऽपि विषण्णाः सन्तोऽस्य प्रियं नाचरन्त चक्रुः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिमन्तरेण सर्वसंन्यासो दुःखहेतुरित्येतस्मिन्नध्याये समर्थ्यते तत्र एव कृष्णः उद्धवं किमाहेति राज्ञो मानसीं शङ्कां परिहरति । स एवमिति । आशंसितः प्रष्टुरभीष्टाभिवदनायाकाङ्क्षा कारितः ॥ १ ॥

किमाहेति तत्राह । बार्हस्पत्य अत्र जीवराशौ बाह्यान्तर्भञ्जनः बाह्यान्तः शत्रुशोषकरः साधुर्वै साधुश्चेत्यभिमतश्च सज्जनो वा दुर्जनोच्चारितैर्दुरुक्तैर्भिन्नमात्मानं मनः समाधातुमीश्वरः समर्थः यद्वा यो दुरुक्तैर्भिन्नमात्मानं समाधातुमीश्वरः स साधुः सज्जनो वै कुतः बाह्यान्तर्भञ्जनो हीति ॥ २—३ ॥

अत्र श्रीकृष्णः सुखबोधायेतिहासं वक्ति । कथयन्तीति । इह स्वपृष्टेऽर्थे ॥ ४ ॥

विपाकं फलनिष्पत्तिम् ॥ ५ ॥

वार्ता वृत्तिः कृष्यादिवैश्यजीवनोपायत्वात् कदर्यः दारिद्र्यभावेनोपेतः कामी परवित्तस्पृहावान् ॥ ६ ॥

लुब्धत्वे हेतुमाह । ज्ञातय इति । अत्र कैमुत्यमाह । शून्येति निजधनजातमन्यत्र निधाय स्वयं धनशून्यगृहे तिष्ठन्नात्मा स्वयं कामैः काम्यैरन्नादिभिः ॥ ७ ॥

पुत्रादिभिरपि कृतप्रियो न भवति । किमुतान्यैरिति भावेनाह दुःशीलस्येति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥ ३ ॥

तथैवोदाहरति । कथयन्तीति युग्मकमिदं ॥ ४—९ ॥

तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः ।
धर्मकामविहीनस्य चुक्रुधुः पञ्चभागिनः ॥ ९ ॥
तदवध्यानविस्रस्तपुण्यस्कन्धस्य भूरिद ! ।
अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

"श्रयोविशेकदर्थस्य धनक्षानाप्ययोदयो ।

गीतं दुःखहरश्लोकं दुर्जनाप्ततिरस्कृतेः" आसंशितं प्रार्थितम्॥१॥

हे बार्हस्पत्य ! बृहस्पतेः शिष्येति सोपपत्तिकं त्वद्वाक्यहमनुमानमेव किन्तु पारमार्थिकोऽयं मार्गस्त्वद्गुरुणा तेनाप्यगम्यो मत्त एव त्वया शिक्षितव्य इति भावः ॥ २ ॥

परुषेषवः परुषोक्तिरूपा इषवः ॥ ३ ॥

यद्यप्येवमेव सर्वत्र दृष्टं तदपि परुषेषुवैयर्थ्यकरमुपाख्यानं श्रावयित्वाह । कथयन्तीति विपाकं फलम् ॥ ४ ॥ ५ ॥

अवन्तिषु मालवेषु वार्त्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य सः कदर्यो विगीतः बन्धुकृत्य आत्मानं धर्मकृत्यं च पुत्रदारांश्चपीडयन् । देवतातिथिभृत्यांश्च स कदर्य इति स्मृत इति ॥ ६ ॥

शून्यावासथे धर्मकामशून्ये गृहाश्रमे ॥ ७ ॥

दुःशीलस्य दुःशीलाय द्रुह्यन्ते द्रुह्यन्ति ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथास्मिन् त्रयोविंशोऽध्याये भिक्षुगीतया मनसो विजयः वर्ण्यते स श्रीकृष्णः एवमुक्तप्रकारेणासंशितः प्रार्थितः भृत्यस्योद्धवस्य वचः सभाजयन् सत्कुर्वस्तमुद्धवं प्रत्याबभाषे इत्यन्वयः ॥ १ ॥

तद्वचः सभाजयति । बार्हस्पत्य इति द्वाभ्याम् । हे बार्हस्पत्य! बृहस्पतेः शिष्य ! सत्यं वदसीति सम्बोधनाभिप्रायः अत्र लोके स साधुर्नास्ति यो दुर्जनैरितैर्दुरुक्तैर्भिन्नं विकारं प्रापितमात्मानं मनः समाधातुं निर्विकारं कर्तुमीश्वरः समर्थो भवेत् ॥ २ ॥

परुषेषवः पुरुषवाग्बाणाः तथोक्तं महाभारते—

वाक्सायका वदनान्निः पतन्ति यैराहतः शोचतिराऽयहानि ।
परस्य वै मर्मसु ते पतन्ति तान् पण्डितो नावसृजेत्कदाचित्
कर्णिनालिकनाराचानुद्धरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदि शयो हि सः ।

इति ॥ ३ ॥

तथापि मयोऽत्रमोननोपायेन मनःसमाधातुं मुमुक्षुरीशः स्या दित्यभिप्रायेणेतिहासं प्रोक्तीति कथयन्तीति महद्यथाभवति तथा पुण्यमितिहासं कथयन्ति ॥ ४ ॥ ५ ॥

अवन्तिषु मालवेषु वार्त्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य सः आत्मानं धर्मकरं च पुत्रदारांश्च पीडयन् ।

देवतातिथिभृत्यांश्च स कदर्य इति स्मृत इति स्मृत्युक्त लक्षणः कदर्योऽतिलुब्धः ॥ ६ ॥

तस्य कदर्यस्य ये ज्ञातयो बन्धव अतिथयः पूज्यार्हाः ते वाङ्मात्रेणापि तेन नार्चिताः शून्यावसथे धर्मकामवर्जिते गृहे आत्मापि नार्चितः धर्मेण कामेन वा न तोषितः ॥ ७ ॥ ८ ॥

---

भाषा टीका ।

श्रीशुक उवाच सब भागवतों में श्रेष्ठ उन उद्धवजी से इस प्रकार के कथन करने से यादवों मे श्रेष्ठ श्री मुकुंद कृष्णचंद्र जी जिन के कि चरित्र श्रवण कीर्तन के योग्य हैं वे अपने भृत्य के वचनों की प्रसंसा करके फिर बोलने लगे ॥ १ ॥

श्रीभगवान् उवाच हे बृहस्पति के शिष्य उद्धवजी ऐसा साधु कोई संसार मे नहीं है जोकि दुर्जनों के कहे वचनों से दुखित मनका समाधान करसके ने को समर्थ होवे ॥ २ ॥

बाणों के लगने से पुरुष मर्मो मे वेधित होवे तोभी ऐसा नहीं दुखित होता है जैसे कि मर्म मे लगेहुवे असत् पुरुषों के परुष वचन रूपी बाणों से ताडित होनेसे दुःखित होता है ॥३॥

हे उद्धव ! इस विषय मे बडे पवित्र एक इतिहास को महात्मा जन कहते हैं तिसको मैं कहूंगा तुम सावधान हो कर सुनो ॥ ४ ॥

यहगीत किसी सन्यासी का गाया है जिसको कि दुर्जनोंने तिरस्कार किया तब उस भिक्षुकने अपने कर्मफलों को स्मरण किया और फिर इस गीतको धैर्य धारण करके गान किया है ॥ ५ ॥

उज्जैन के देशों मे सम्पत्ति से बडा धनी एक कोई खेति आदि जीविका करने वाला अति क्रोधी कामी लोभी कंजूस एक ब्राह्मण होताभया ॥ ६ ॥

उसने अपने बन्धु तथा अतिथि जनोंको वचन सेभी कभी सत्कार नहीं किया शून्य अपने घरमे रहा करताथा कभी मनारथों से उसने अपनी भी तृप्ति की ॥ ७ ॥

उस दुःसील कदर्य के पुत्रादि सब बांधव द्रोह करते थे भार्या पुत्री भृत्य सब उससे विमुख रहते थे कोई भी प्रीति नहीं करता था ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य पञ्चभागिनः पञ्चयज्ञदेवताः ॥ ९ ॥

ज्ञातयो जगृहुः किञ्चित्किंचिद्दस्यव उद्धव ! ॥
दैवतः कालतः किंचिद्ब्रह्मबन्धोर्नृपार्थिवात् ॥ ११ ॥
स एवं द्रविणे नष्टे धर्मकामविवर्जितः ।
उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥ १२ ॥
तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः ।
खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् ॥ १३ ॥
स चाहेदमहो कष्टं वृथाऽऽत्मा मेऽनुतापितः ।
न धर्माय न कामाय यस्यार्थायास ईदृशः ॥ १४ ॥
प्रायेणार्थाः कदर्याणां न सुखाय कदाचन ।
इह चाऽऽत्मोपतापाय मृतस्य नरकाय च ॥ १५ ॥
यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ।
लोभः स्वल्पोऽपि तान् हन्ति श्वित्रो रूपमिवेप्सितम् ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेषामवध्यानमनादरस्तेन विध्वस्तो विशीर्णः पुण्यस्य स्कन्धोऽर्थलाभमात्रहेतुरंशो यस्य बह्वायासैः कृष्यादिभिः केवलं श्रमो यस्मिन् सः ॥ १० ॥

कुतो निधनमगच्छत्तदाह । ज्ञातय इति । दैवतो गृहदाहादिना कालतो निखातधान्यादि नृणां च पार्थिवानाञ्च द्वन्द्वैक्यम् तस्मात् ॥ ११—१२ ॥

नष्टरायः नष्टो रा अर्थो, यस्य तस्य तपस्विनः सन्तप्तस्य ॥१३॥

मे मया आत्मा देहः वृथा वृथैव आत्मानुतापं प्रपञ्चयति न धर्मायेत्यादिना यस्य ईदृशोऽर्थायासस्तेन मया ॥ १४ ॥

नरकाय सत्यप्यर्थे धर्माननुष्ठानात् ॥ १५ ॥

श्वित्रः श्वेतकुष्ठम् ॥ १६ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

पञ्चयज्ञदेवताः देवर्षिपितृमनुष्यभूतानि ॥ ९ ॥

अर्थलाभेति द्रव्यलाभमात्रहेतोरंशस्यावगमात् सद्वासनाहेतोर्भगवदर्पितत्वलक्षणविशेषस्याविध्वंसं बोधयति ॥ १० ॥

ब्रह्मबन्धोः कदर्यस्य नरश्च पार्थिवाश्च तेषां समाहारो नृपार्थिवं तस्मात् ॥ ११ ॥

उपेक्षितस्यकः निर्वेदः अर्थेऽर्थबुद्ध्या स्वावज्ञानम् ॥१२ ॥१३॥

ईदृशः लोभातिशयः अर्थार्थमायासो न धर्माय न कामायाभूत्तेन मया वृथैवात्मानुतापित इत्यन्वयः ॥ १४ ॥ १५ ॥

श्वेतकुष्ठं कर्तृ ईप्सितमभीष्टं रूपं यथा हन्ति तद्वत् ॥१६॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पञ्चभागिनः देवपितृभूतमनुष्यब्रह्मर्षयः ॥ ९ ॥

बह्वायासपरिश्रम इति बहुलायासपरिश्रमसाध्य इत्यर्थः ॥ १० ॥

ब्रह्मबन्धोरिति । धनमिति शेषः दैवतः किञ्चिदिति नष्टमिति शेषः । ॥ ११—१२ ॥

नष्टरायो नष्टधनस्य ईदृश आत्मा इत्यन्वयः ॥ १३ ॥

नार्थाय अर्थाय च नासीत् अर्थस्यापि विनाशादित्यर्थः ॥१४-१६॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य उभयलोकतोऽस्मादमुष्माच्च लोकाच्च्युतस्योभयत्राप्यसंभावितसुखस्य तत्र हेतुः धर्मकामविहीनस्येति पञ्चभागिनः देवर्षिपितृभूतमनुष्यब्रह्मर्षयाः पञ्चमहायज्ञदेवताः चुक्रुधुरर्जितस्य वित्तस्य पञ्चमहायज्ञैस्तत्तद्देवताराधनं हि प्रयोजनं तदभावात्ते चुक्रुधुरित्यर्थः ॥ ९ ॥

तत्क्रोधफलमाह । तदिति । तेषां भागिनामवध्यानमनादरस्तेन विध्वस्तः पुण्यस्कन्धः अर्थलाभमात्रहेतुभूतपुण्यस्कन्धस्तत्प्राकाश्यं यस्य हे भूरिद ! बह्वायासगर्भैः कृष्यादिभिः परिश्रमो यस्मिन् सोऽर्थो धनमपि निधनं नाशमगच्छत् ॥ १० ॥

निधनप्राप्तिप्रकारमेवाह । ज्ञातय इति । दस्यवश्चोराः दैवतो गृहदाहादिना कालतः निखातधान्यादि तथा नृपार्थिवात्तथा नृणां पार्थिवानां च द्वन्द्वैक्यं तत्र पार्थिवा राजानः नराश्चान्ये स्वजनः ब्रह्मबन्धोरर्थः किञ्चित्किंचिन्निधनमगच्छदिति पूर्वेण सम्बन्धः यद्वा दैवादिभ्य इत्येवं ब्रह्मबन्धोर्द्रविणे नष्टे सतीत्युत्तरेण सम्बन्धः ॥ ११ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पूर्वमेव धर्मकामाभ्यां विवर्जितः स्वजनैरुपेक्षितश्च ततोऽर्थक्षयाच्च दुरत्ययामपारां चिन्तां प्राप्तवान् ॥ १२ ॥

नष्टो रा धनं यस्य तस्यात एव दीर्घं विलम्बितं यथा तथा चिन्तयतः अत एव तपस्विनस्ततस्स्यात एव खिद्यतः अत एवाश्रुपूर्णकण्ठस्य सुमहान् शुभावहो निर्वेदोऽभूज्जातः ॥ १३ ॥

स च जातनिर्वेदोऽपि विप्र इदमाह उक्तमेवाह । अहो इत्यादिना खट्वाङ्गः समसाधयदित्यन्तेन अहो ममेदं कष्टं मे मया आत्मा देहो वृथैवानुतापितः अनुतापमेव प्रपञ्चयति न धर्मायेति । यस्य मम ईदृशः अर्थार्जनायासो धर्माय कामाय च नाभूत् ॥ १४ ॥

युक्तं चैतदित्यभिप्रायेणाह । प्रायेणेति । कदर्याणां मान्द्यानामर्थो धनं प्रायेण कदाचिदपि सुखाय न भवति नापि स्वोपभोगाय चापि तु मृतस्य नरकाय भवति ॥ १५ ॥

यशस्विनां यशिर्मलं यशः ये च गुणिनां श्लाघ्या गुणास्तान् स्वल्पोऽपि लोभो हन्ति यथा श्वित्रः श्वेतकुष्ठं रोगः ऊर्जितं श्लाघ्यं रूपं सौन्दर्यं हन्ति तद्वदित्यर्थः ॥ १६ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलं कुपिताः पुत्रादयः प्रियं न चेरुः पञ्चयज्ञभागभुजो देवा अपीति वक्ति । तस्येति । तस्यार्थे यक्षवित्तस्य यक्षवित्तवत्तदुपभोगविरतस्य ॥ ९ ॥

ततः किमभूदत्राह । तदवध्यानेति । तदवध्यानेन तेषां देवादीनां अवज्ञाजातकोपेन विस्रस्तः क्रमेण विनष्टः पुण्यस्कन्धः पुण्यसमूहो यस्य स तथा तस्य पुण्यस्कन्धः पुण्यलक्षणभुजाशिरो वा विस्रस्तं शिथिलबन्धनं वा सुकृतनाशफलमाह । अर्थ इति ॥ १० ॥

नाशप्रकारमाह । ज्ञातय इति । नृपार्थिवात् नृराजात् ॥ ११ ॥

भोग्यस्य धननाशो वैराग्यहेतुरित्याशयेनाह । स इति ॥१२॥

तपस्विनः सन्तापवतः ॥ १३ ॥

निर्वेदप्रकारमाह । स चेति । आत्मा देहो यस्य मे ॥ १४ ॥

न सुखायेत्युक्तं स्पष्टयति । इह चेति ॥ १५ ॥

अर्थलोभोऽपि यशआदिगुणसर्वस्वहानिकर इत्याह । यश इति । श्वित्रः श्वेतकुष्ठम् ॥ १६ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विस्रस्तपुण्यस्कन्धस्येत्यंशमात्रापगमात्सद्भावनहेतुर्यो मुमुक्षया भगवत्यर्पितो विशेषस्तस्याविस्रंसं बोधयति ॥१० — १२ ॥

अतः कदर्यस्यापि सर्वापराधमतिक्रम्य प्राचीनः संस्कारविशेषोऽयमुद्बुद्ध इत्याह । तस्यैवमिति ॥ १३—२७ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तेषामवध्यानमनादरः यक्षाद्यैः कृष्यादिभिः परिश्रमो यस्मिन् सः ॥ ९ ॥ १० ॥

दैवतो दाहादिना किञ्चित् कालतः कालेनापि निखातभाण्डादिकं किञ्चित् नृपार्थिवादिति द्वन्द्वैक्यं नृभ्यश्चौरादिभ्यो राजभ्यश्च निधनमगच्छदिति पूर्वेणान्वयः ॥ ११ ॥ १२ ॥

कदर्यस्यापि तस्यापराधस्थगितस्तद्योगान्ते प्राचीनःसंस्कारविशेषोऽयमुद्बुद्ध इत्याह । तस्येति । नष्टरायो नष्टधनस्य तपस्विनः सन्तप्तस्य ॥१३॥ १४ ॥

नरकाय व्ययभीत्या नित्यनैमित्तिककर्माननुष्ठानात् ॥ १५ ॥

श्वित्रः श्वितकुष्ठम् ॥ १६ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमुक्तप्रकारेण यक्षवित्तस्य यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य उभयलोकतश्च्युतत्वे हेतुः धर्मकामविहीनस्येति । पञ्चयज्ञदेवताः ॥ ९ ॥

तदवध्यानेन पञ्चभागधनादरेण विस्रस्तो विशीर्णः पुण्यस्कन्धः पुण्यमूलमैश्वर्यं यस्य अतः वन्हाबासेन कृषिवाणिज्यादिरूपेण केवलं श्रमो यस्मिन् सः अर्थोऽपि निधनं नाशमगच्छत् ॥ १० ॥

तथानाशमेवाह । ज्ञातय इति । नृपार्थिवयोर्द्वन्द्वैकवत्त्वम् ॥ ११ ॥ १२

नष्टः रायोऽर्थो यस्मात् तस्य तपस्विनः नानातापवतः ॥१३॥

मे मया ॥ १४ ॥ १५ ॥

श्वित्रः श्वेतकुष्ठम् ॥ १६ ॥

---

## भाषा टीका ।

इस प्रकार से यक्ष की नाईं धन रखने वाले तथा इसलोक परलोक दोनों से भ्रष्ट धर्म काम से रहित उस ब्राह्मण के पंच यज्ञ के भागी देवता संपूर्ण क्रोध को प्राप्त भये ॥ ९ ॥

हेभूरिद ! उद्धव उनके अवज्ञा करने से उसकी पुण्य की जड नष्ट होगई तब परिश्रम से कमाया धन सब नाश को प्राप्त हो गया ॥ १० ॥

कुछ धनतो कुटुंबियों ने लेलिया हे उद्धवजी ! कुछ चोरों ने लेलिया कुछ देवतों के अग्नि लगने से कुछ गडे रहने से कुछ राजा से कुछ मनुष्यों के छीनने से धन नष्ट होगया ॥ ११ ॥

इस तरह से धन के नष्ट होने से वह धर्म काम से रहित होगया तब उसके कुटुंबियों ने उसको छोड़ दिया तब बड़ी चिंता को प्राप्त भया ॥ १२ ॥

उस के धन के नष्ट होजाने से सन्ताप करने से खिन्न होने से कण्ठ गद्गद होने से बहुत देरतक ध्यान करने से बडाभारी वैराग्य उत्पन्न होगया ॥ १३ ॥

तब बोला अहो बडा कष्ट है कि मैंने अपने आत्मा को स्वयं ही परितापित किया है जिस मैंने कि न धर्म

अर्थस्य साधने सिद्धे उत्कर्षे रक्षणे व्यये।
नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ १७ ॥
स्तेयं हिंसाऽनृतं दम्भः कामः क्रोधः स्मयो मदः।
भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥ १८ ॥
एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम्।
तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ १९ ॥
भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा।
एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः ॥ २० ॥
अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः।
त्यजन्त्याशु स्पृधो घ्नन्ति सहसोत्सृज्य सौहृदम् ॥ २१ ॥
लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम्।
तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम् ॥ २२ ॥
स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान्।
द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥ २३ ॥
देवर्षिपितृभूतानि ज्ञातीन् बन्धूंश्च भागिनः।
असंविभज्य चाऽऽत्मानं यक्षवित्तः पतत्यधः ॥ २४ ॥

भाषा टीका।

के लिये न काम के लिये व्यर्थ धन कमाने में इतना परिश्रम किया ॥ १४ ॥

प्राय कर के इससे कृपण पुरुषों के धन कभी सुखदायक नहीं होते हैं इस लोक में अपने सन्ताप देने को होते हैं मरे पीछे नरकदायक होते हैं ॥ १५ ॥

यशवाले पुरुषों का जो यश है गुण वालों के जो प्रशंसित गुण हैं इन सबको थोड़ा भी लोभ हो तो नाश कर देता है जैसे की सुन्दर रूप वाले के रूप को कोढ रोग नाश मिट कर देता है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सिद्धेऽप्यर्थे तस्य उत्कर्षे सम्बर्धने नाशोपभोगयोर्द्वन्द्वैकवत्। नाशे उपभोगे चेत्यर्थः। साधनोत्कर्षयोरायासस्तत्रासश्चिन्ता च नाशे भ्रम इति ॥ १७ ॥

किञ्च अर्थप्राप्त्यर्थास्तेयादयः षडनर्थाः प्राप्तेऽर्थे स्मयादयो व्यसनैः सह नव व्यसनानि स्त्रीद्यूतमद्यविषयाणि त्रीणि ॥ १८—१९ ॥

भेदवैरस्पर्धाः प्रपञ्चयति द्वाभ्याम्। भिद्यन्ते स्नेहं त्यजन्ति कथंभूता एकाः स्निग्धाः एके एकप्राणास्तेऽपि च ते आस्निग्धा अतिप्रिया इत्यर्थः कुतः काकिणिना पुंस्त्वमार्षम् विंशतिवराटिका काकिणी तया ॥ २० ॥

संरब्धाः क्षुभिताः स्पृधः स्पर्धमानाः ॥ २१ ॥

इह तावदर्थनिष्ठानामेतेऽनर्थाः परलोकेऽप्यनर्था एवतेषामित्याह। लब्ध्वेति त्रिभिः। मानुष्यं जन्म तत्रापि द्विजाग्र्यतां ब्राह्मण्यम् स्वार्थं घ्नन्ति आत्माहितं न कुर्वन्ति ये ते यान्ति ॥ २२ ॥

अमरप्रार्थ्यत्वं दर्शयन्नाह। स्वर्गेति। लोकं देहम् अनुषज्जेत आसक्तिं कुर्यात् ॥ २३ ॥

ऋषयो मनुष्ययज्ञब्रह्मयज्ञयोर्देवताः देवपितृभूतानि इतरेषु ज्ञातयः सगोत्राः बन्धवो विवाहादीनां सम्बन्धास्तान् अन्यांश्च भागिनो भागार्हान् आत्मानं चासंविभज्य आशादिभिरदत्त्वा ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

अर्थस्य साधने तथाऽर्थे सिद्धेऽपि तस्योत्कर्षे वर्धने आयासः श्रमः। रक्षणे उपभोगे च चिन्ता। व्यये त्रासः नाशे भ्रम इति यथायथं योज्यम् ॥ १७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतो मित्रैर्मर्त्यैः सह विग्रहोऽसतां भवतीत्याशयेनाह । तमिति अयमक्षरार्थः अत्र जीवराशौ केचिद्विमूढास्तामसाः पूर्वापरदिग्विगनभिज्ञास्तस्यामेव मनसोऽस्तं तामसमनोलक्षणं शत्रुं सुखविरोधिनं न विजित्य मित्रैर्मर्त्यैरसद्विग्रहं कुर्वन्ति । कीदृशं शत्रुं दुर्जयं दुष्टेन पापिना कालनेमिना जितत्वाद्वशीकृतत्वाज्जेतुमशक्यत्वादत एवासह्यवेगं वायुवन्मुष्टिग्रहणायोग्यमरुन्तुदं चर्तनिहितव्रणवद् दुःखकरम् अनेन शत्रुशब्दो विवृतः विष्णुप्रसादेन विजयीत्याह । उदासीनेति । विष्णुभक्तावुदासीनानां रिपुं न तु भक्त्या तदुपास्तौ यतमानानामित्यर्थः । प्रस्तुतसारिद्विक्रमतो विहाय तामसमतः परामर्शः कथं युज्यत इतीयमाशङ्का "एकस्थानाधिपत्ये तु भिन्नानामपि युज्यते।अभेदेन परामर्शः सादृश्ये चापि वस्तुनो" रित्यनेनापि परिहर्तव्या यद्वा तन्मनस्तं तमोऽभिमानिनं कालनेमिनं न विजित्य मित्रैरसद्विग्रहं कुर्वन्ति । कीदृशं तं शत्रुमनेन शत्रुमजित्वा मित्रकलहो बालकलहवत् परिहासहेतुरित्युक्तं भवति ॥ ४९ ॥

दुष्टाभिमानवशोपचितशक्तितामसमनोनिर्मितदेहाभिमानमात्रगोचरपरमिथ्याज्ञानेन जीवस्य नित्यनिरयप्राप्तिहेतुत्वात् स एव जेतव्य इति भावेनाह । देहमिति । इदमित्यव्ययं मनोमात्रं मनसा निर्माणमुपगतं देहं गृहीत्वा ममेदमहमिति स्वातन्त्र्यभ्रमेण एव देहोऽहमित्यनात्मनः आत्मभ्रमेणान्योऽदेहोऽयमित्यपि भ्रमेणाहमन्य इति आत्मनोऽनात्मभ्रमेण मिथ्याज्ञानेनान्धधियोऽसद्भूतयथार्थज्ञाना मनुष्याः दुरन्तपारे तमसि पतित्वा भ्रमन्ति पुनः पुनर्दुःखसमुद्र एव मग्ना वर्तन्त इत्यतो बुद्धिमता तज्जये एव प्रयतितव्यमिति भावः । देहमात्रं स्वमात्मानं यः परश्च प्रपश्यति "अन्धे तमसि मग्नस्य नोत्थानं तस्य कुत्रचि"दितिवचनान्मिथ्याज्ञानिनामन्धन्तमो नियतमिति ज्ञायते ॥ ५० ॥

एवं मनसः सुखदुःखकारणत्वमुक्तं तत्र तर्हि तस्य प्रतीयमानं सुखदुःखकारणत्वमभिमाननिमित्तमेवेति जानता स्वकृतसुकृतज्ञानेन पुरुषेण सोढव्यं तत्र कोपो न कार्य इत्याह । जन इत्यादिनाग्रन्थेन । अस्य जीवस्य सुखदुःखयोर्हेतुर्जनः परदेहश्चेद्यदि तर्हि अत्र देहे वर्तमानस्य देहव्यतिरिक्तस्यात्मनो निर्मुक्तपापवनादिफलवत् किमेतस्य किंस्विच्च किमपि दुःखं स्यात्तर्हि कस्य तदत्राह । हीति । तद्दुःखं विवेकेन विचारिते सति । भौमयोः पृथिवीकार्ययोस्ताड्यताडकयोरेव हि अस्मादस्मात्स्वात्मनोऽभिमानकृतं दुःखमिति । जानतेषां मध्ये कतमाय कुप्येदित्यन्वयः तत्रोदाहरणम् । जिह्वामिति । स्वदद्भिः स्वदन्तैः स्वयं जिह्वायां वेदनायां सत्यामनेन देहस्याचेतनत्वेनाभिमानजन्यं दुःखमित्युक्तं भवति । "जनशब्दः स्वतो जीवे क्वचिद्देहे च वर्तते ,, इति वचनाज्जनशब्दोऽत्र देहवाची ॥ ५१ ॥

देहस्याचेतनत्वेन दुःखहेतुप्रवृत्त्ययोगात् अभिमानस्य च पराधीनत्वेनायुक्तमुक्तं किन्तु देवतायाः सर्वकर्मप्राधान्येन तद्धेतुत्वमुचितमित्याह । दुःखस्येति । यदि दुःखस्य हेतुर्देवतेत्युच्यते तद्वचनमस्तु विचारिते न घटते तत्राह विकारयो विकाराभिमानिनोर्देवयोः सकाशादुत्पद्यमानदुःखमभिमाननिमित्तमेव तत्र निरभिमानस्यात्मनस्तेन किं स्यादतः स्वामिदेवान् प्रतिकोपो न कार्य इतिभावः । तत्रोदाहरणम् । यदङ्गमिति । यदा स्वदेहे विकाराभिमानीन्द्रादिदेवताभिमन्यमानहस्ताद्यङ्गेन चक्षुराद्यङ्गं क्वचिद्विहन्यते तदा तत्सोढव्यमेव अन्यथा पुरुषः कस्मै कुप्येत हस्तादेरकारणत्वादयोग्यकोपादेमन एव कारणमत्रेति—

अविकाराश्च ते देवा विकारा इति शब्दिताः ।
अभिमानाद्विकारस्य स्वतः शक्ता अपि ध्रुवम् ।

इति वाक्याद्विकारशब्दवाच्यत्वं युक्तं देवानाम् ॥ ५२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जनस्त्विति । आत्मनो जीवस्य आत्मन एव प्राधान्येन सर्वाणि चेत्राणीति विचारे तु सुतरां न कोऽप्यवकाश इत्याह । जिह्वामिति । एवमुत्तरत्रापि ॥ ५१ ॥

दुःखस्येति । तैः तत्र हस्तेनेति कस्य चिद्धस्तेनान्यतरस्य मुखेऽभिहत इत्यर्थः । देवतानां चेति आत्मनः सविकारादित्वेऽपि य इन्द्रादिर्मम देहे स एवान्यस्य देहे ततो ममाङ्गान्येव देवतास्ता इति क्रोधविषया न स्युरेवेत्यर्थः ॥ ५२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अरुमर्मं तत्तुदति व्यथयतीत्यरुन्तुदस्तं न विजित्य अजित्वा एवाजिताखेतोः केचिन्मूढाः मर्त्यैः सहासद्विग्रहं कुर्वन्ति तत्र चानुकूलप्रतिकूलादीनन्यान् मित्रादीन् कुर्वन्ति ॥ ४९ ॥

ततश्चानेन प्रकारेणाविद्यया भ्रष्यमाणा भवन्तीत्याह । देहमिति । मनसो मात्रा वृत्तयः इन्द्रियादयो यस्मिंस्तं देहमिमम् अहमिति पुत्रादिदेहं च ममेति गृहीत्वा स्वीकृत्य तमसि संसारे ॥ ५० ॥

तदेवं मनस एव सुखदुःखयोः कारणत्वमुपपाद्येदानीं जनादीनां पूर्वोक्तानां षण्णामकारणत्वं प्रपञ्चयति । जनस्त्विति जनादीनां षड्भिः हेतुरिति जन एव जनं सुखयति जन एव जनं दुःखयतीति चेत् अत्र च अभिमन्तापि पक्षे आत्मनो जीवात्मनः किं न किञ्चिदपि यस्तत्सुखदुःखकर्तृत्वं सुखदुःखकर्मत्वं च भौमयोर्भूविकारदेहयोरेव न त्वात्मनः अमूर्तस्य देहाद्भिन्नत्वाद्वस्तुतो निरभिमानिनस्तस्य ताडनादिषु कर्तृत्वकर्मत्वानुपपत्तेः ननु तदपि पीडात्वात्मन एव प्रसज्जीभवतीत्यत आह । जिह्वामिति । तद्वदनायां तत्र वेदनायां पीडायामात्मगामिन्यां सत्यां कतमाय कुप्येत् किं पीडकेभ्यो दन्तेभ्यः किंवा पीड्यमानायै जिह्वायै तत्र यथा पीड्यमानायै जिह्वायै कोपस्यानौचित्यात् पीडकेभ्यो दन्तेभ्यः कोपो न क्रियते तथैवात्रापि कोपो न कर्तव्य इति भावः । दुःखं त्वात्मनो लिङ्गाध्यासमूलकं सोढव्यमेव लिङ्गं तु मन एवेति तस्मै अन्यस्मै दोषो न देय इत्यग्रिमश्लोकेषु सर्वेष्वपेव ज्ञेयम् ॥ ५१ ॥

यदि देवता अस्तु नाम तत्रापि पक्षे आत्मनः किं यतो विकारयोर्विक्रियमाणयोर्देवतयोरेव तत् हस्तेन मुखे अभिहते तेन च श्विभ्रमादित्वादि हस्तेऽभिहते तदभिमानिनोरिन्द्राग्न्योर्देवतयोरेव तद् दुःखं भवतु न त्वात्मनस्ततः पृथग्भूतस्य

आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः ।
नह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्क्रुध्येत कस्मान्न सुखं न दुःखम् ॥ ५३॥
ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै ।
ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥
कर्मास्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तद्धि जडाजडत्वे ।
देहस्त्वचित्पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्ममूलम् ॥ ५५ ॥
कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ ।
नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रुध्येत कस्मान्न परस्य द्वन्द्वम् ॥ ५६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवतानां च सर्वदेहेष्वभेदान्न कोपविषयोऽस्तीति स्वदेहे दृष्टान्तमाह । यत् यदा अङ्गं मुखादिकमङ्गेन हस्तादिना इन्द्राद्यधिष्ठानेन विनिहन्यते चेदित्यत एव पूर्वत्र देवताधिष्ठानरूपभूविकारदन्तोदाहरणम् ॥ ५२ ॥

विकाररूपे आत्माभिमानिनोरेव भवति आत्मनः परात्मनिष्ठावतः किं न किमपि सर्वस्य सर्वात्मभूतभगवदात्मकत्वेन द्वेषविषयाभावात् यथा कश्चित्कदाचित्स्वदेहे यदा अङ्गं मुखादि अङ्गेन हस्तादिना निहन्यते तदा पुरुषः कस्मै कुप्येत हस्तादेः परकीयत्वाभावात् ॥ ५२ ॥

भाषा टीका

कोई लोग उस दुर्जय नहीं सहने वडे बल वाले मर्म भेदन करने वाले मनरूप शत्रु को नहीं जीतकर इस लोक में मनुष्यों के साथ मित्र शत्रु उदासीन भाव करके वैर करते हैं वे लोग मूर्ख हैं ॥ ४९ ॥

मनमात्र के संसर्ग से इस देह को अहंकार से ग्रहण करके मेरा यह है मैं इसका स्वामी हूं ऐसे अन्ध बुद्धि वाले होकर बहुत से मनुष्य यह मै हूं वह दूसरा है ऐसे भ्रम से अपार तमोगुण सागर मे घूमते रहते हैं ॥ ५० ॥

यदि देही जनकोइ सुखदुःख का कारण होवे तो उस से आत्माका क्या सम्बन्ध है वहतो पृथिवी विकारों का है यदि कदाचित अपने दातो से जीवमे दबने से चोट लगे तो उस के दुख होने से किसपर कोप करेगा ॥ ५१॥

यदि देवता, दुःख का हेतु होवे तो उससे भी आत्मा को क्या है वहभी इन्द्रिय अधिष्ठाता देवता विकार का है यदिभी अपने शरीर से अपने शरीर मे चोटलगे तो किसे पर कोप करेगा ॥ ५२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु वासुदेवभक्त एव तद्ध्यानेन मनो वशे युञ्ज्यात्तर्हि तदभक्तानां का गतिरित्यतस्ते संसारे भ्रमन्तीत्याह । तमिति द्वाभ्याम् । यस्मात् असह्यं मर्मव्यथाजनकमान्तरीयं शत्रुम् विजित्य अविजित्य मर्त्यैर्लोकजनैः विग्रहं मित्राद्युदासीनान् रिपूंश्च कुर्वन्ति तत्तस्मात्ते मूढाः ॥ ४९ ॥

यतो यतो धावति दैवचोदितमनो विकारात्मकमापपञ्चसु ।
गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥
इत्युक्तप्रकारेण मनोमात्रं कर्मानुसारतः सङ्कल्पानुरूपं देहमहमिति गृहीत्वा गेहादि ममेति च गृहीत्वा तमसि संसारे भ्रमन्ति ॥ ५० ॥

अथ "आत्मेति तूपगच्छन्ति ग्राहयन्ति च„ इतिसूत्रकारीनयातिसकलश्रुतिसिद्धान्तजीवब्रह्मतादात्म्यानुसन्धानवतः न जनादयः सुखदुःखहेतव इत्याह । जन इति षड्भिः । जनः सुखस्य कश्चित्दुःखस्य च हेतुश्चेत् अत्र हि अस्मिन् पक्षेऽपि भौमयोः भूमिविकारयोः देहात्मवादिनेः "अन्नमयं हि सोम्य मनः" इति श्रुतेः मनआत्मवादिनोर्वा तत्सुखदुःखदातृत्वं तत्प्राप्त्या प्रीतिद्वेषकर्तृत्वं च भवति आत्मनः ब्रह्मात्मत्वेन ब्रह्माभिन्नत्वानुसन्धानवत एतां समास्थाय परात्मनिष्ठामिति वक्ष्यमाणात् किं न किमपि सुखदुःखदातृत्वं तत्प्राप्त्या प्रीतिद्वेषकर्तृकत्वं च न भवति द्वितीयाभावात् यथा कश्चिद्देही स्वजिह्वां स्वकीयैर्दद्भिः कश्चिद्दशति तदा कतमाय दन्तजिह्वैकतराय कुप्येत् स्वदेहगतत्वेन सदनन्यत्वात् ॥ ५१ ॥

देवता इन्द्रियाधिष्ठातृरूपा अस्मिन् पक्षेऽपि तत्सुखदुःखदातृत्वं तत्प्राप्त्या प्रीतिद्वेषकर्तृत्वं च विकारयोः देहे मनसि वा

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मनः सुखदुःखाद्याकारपरिणामोऽस्तु स एव यदि हेतुः स्यात्तत्र तस्मिन् पक्षे अन्यतः किं न किञ्चिदन्यतो भवति यस्मै कुप्येदित्यर्थः । यतो निज एव स्वभावः सः न ह्यात्मनस्तथा परिणामोऽन्यनिमित्तो भवतु तोऽस्ति कोपविषय इति चेत्तत्राऽऽह । नहीति । आत्मव्यतिरिक्तं नास्त्येव यदि स्यात्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कारस्य स्वयं प्रकाशस्वरूपस्य किं न तस्य सुखदुःखे तन्मूलशुभाशुभकर्माणि च न स्त इत्यर्थः तथा देहस्याप्यचेतनस्य प्रवृत्त्यक्षमस्येति भावः । जडाजडत्वे जडस्याजडत्वे जडस्य देहस्यात्मत्वे सति हि तस्यात्सुखदुःखादिकं स्याज्जडाजडयोरैक्यमनुपपन्नं मिथो विरुद्धस्वरूपस्वभावत्वादित्यर्थः । देहस्तु अचिज्जडः पुरुषो जीवः सुपर्णस्तद्वत्प्रकाशस्वरूपः अतः कर्म न मूलं न हेतुः अतः कस्मै कुप्येत जनादिषु कस्मैचिदित्यर्थः । यद्यपि ततश्च कर्माणि विलक्षणानीति कर्मणां स्वानुरूपसृत्यापादनद्वारा हेतुत्वमुक्तम् एवं कर्मणो—

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥

इत्युक्तरीत्या देहादिपञ्चकनिष्पाद्यत्वमिति देहात्मादीनामपि हेतुत्वं वक्ष्यत इति तन्निराकरणं विरुद्धं तथापि कर्मणो निदानमसमाहितं मन एवेति निर्णयाय तन्निरास इत्यवगन्तव्यम् ॥ ५५ ॥

तर्हि वशीकृतसर्वप्रपञ्चः काल एव हेतुरित्याशङ्क्य प्रतिषेधति । कालस्त्विति । आत्मनः किं स्वरूपतः सुखदुःखान्वयरहितस्य ज्ञानैकस्वरूपस्यात्मनः सुखदुःखक्रियायां कर्तृत्वकर्मत्वादिकं न किंचिदस्तीत्यर्थः । तत्र हेतुत्वेनात्मानं विशिनष्टि । तदात्मक इति । असावात्मा तदात्मकः स उक्तविध आत्मा स्वरूपं यस्य सः तावद्भौमयोरित्यनेनात्माऽजड इति सूचितं विकारयोस्तदित्यनेन विकाररहित्यमुक्तम् अजरस्येत्यनेन उत्पत्तिविनाशरहितत्वं पुरुषोऽयं सुपर्ण इत्यनेन स्वप्रकाशस्वरूपत्वं यदि स्वरूपतः सुखदुःखान्वयरहितोऽप्यात्मा कालवशत्वेन सुखदुःखसम्बन्धं भजते तर्हि तत एव हेतोरग्नेस्तापो न स्यात् हिमस्य तत्प्रसिद्धं शैत्यं न स्यात् शीतोष्णभावयोर्हिमाग्न्योस्तौ स्वभावौ न स्यातामित्यनेन तद्विपरीतस्वभावौ स्यातामिति च विवक्षितं नहि कदाचित्कालवशादेवं दृष्टमतो न हेतुः काल इति भावः जनादीनामहेतुत्वं निगमयति । न परस्य द्वन्द्वमिति । अत्र परत इत्यध्याहर्तव्यं तथाग्रे दर्शनात् परतो जनादिषु षट्स्वन्यतमात् न कस्य न सुखदुःखे भवत इत्यर्थः ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मनसोऽपि सुखादिहेतुत्वमभिमानमन्तरेणाविचारादहमित्याह । आत्मेति । यद्यात्मा मनो दुःखादिकारणं स्यादिति मतं तत्र पृच्छामः दुःखादिकारणं भवन्मनः स्वतो वा परतो वा नाद्य इत्याह । किमन्यत इति । अन्यतो दुःखस्वभावत्वेन विलक्षणान्मनसस्तत्र सुखस्वभावे आत्मनि चेतने किम्भवति न किमपि उभयोः सुखादिस्वभावः सिद्ध इति भावेनाह । निज इति । चेतनस्य सुखस्वभावो मनसो दुःखस्वभावो निजो नित्यः सदातन इत्यर्थः । निजमात्मीयानित्ययोरिति यादवः द्वितीयं प्रत्याह । नहीति । आत्मनोऽन्यत्र दुःखकारणं नहि अहं दुःखी स्यामिति दुःखं दृश्येत यदि तथापि तन्मृषा स्यात् शुक्तिरजतवत् अन्यस्यान्यात्मत्वं न दृष्टचरमित्याह । न सुखमिति । सुखं सुखरूपं दुःखं दुःखरूपं न भवति । दुःखरूपं सुखरूपं न भवत्यतोऽभिमानं विनान्यन्निरूपणम् अप्रामाणिकमिति विद्वान् कस्मै कुप्येतेत्यन्वयः—

जीवस्य सुखरूपस्य न दुःखं कचिदिष्यते ।
अतो मनोऽभिमानेन दुःखी भवति नान्यथा ॥

इति वाक्यमत्र मानं यद्वा यदि मनःसुखादिहेतुस्तर्हि तत् स्याद्दुःखं हि मनोऽभिमाननिमित्तं तत् दुःखं विना तत्र सुखस्वभावः आत्मन्यन्यतो मनसो दुःखं स्यात्किं न स्यादेव कुतोऽत्राह । निज इति । मनोधर्मो दुःखमात्मनो निजस्वभावो न हि कुतः तदात्मनोऽन्यत्र प्रतीयमानस्य का गतिरत्राह । यदीति । जपाकुसुमसामीप्याच्छङ्खस्य लौहित्यमिव मृषा स्यादतोऽन्यस्यान्यत्वं नेत्याह । न सुखमिति । "जीवस्य सुखरूपस्य न दुःखं कचिदिष्यते,, इत्यादेरभिमाननिमित्तं दुःखमन एव दर्शयतीत्यङ्गीकार्यम् ॥ ५३ ॥

देहस्य दुःखादिहेतुत्वे बाधकमाह । ग्रहा इति । गृह्यमाणत्वाद्ग्रहाः देहाः आत्मनो दुःखादेर्निमित्तं स्वदविवेकदृशावामस्तु अजस्य स्वतो जन्मादिरहितस्य न ममेति विवेकिनो जनस्य जीवस्य ते देहाः दुःखादेर्निमित्तं स्युः किं चैन स्युः अतो ग्रहैर्देहैः पीडाः देहनिमित्तपीडाः अहस्यैव विषयग्रहणरूपस्य मनस एव भवन्ति मनोऽभिमाने सत्येव ते स्युरित्यर्थः । ततो देहादन्यः पुरुषः पुरु ब्रह्म सरतीति ब्रह्मज्ञानी कस्मै कुप्येदित्यन्वयः ॥ ५४ ॥

कर्म तावत्सुखदुःखयोर्हेतुरस्तु तथाप्यात्मनो जीवस्याजडत्वे सत्यतोऽनेनानिष्टं स्यात्किमिति शेषस्तर्हि कस्येदमत्राह । तर्हीति । तद्दुःखादिकं जडे जडात्मके मनसि हि यस्मात्ततः किमत्राह । देह इति । देहे वर्तमानोऽयं स्वतन्त्रं परमात्मानं स्वस्य स्वरूपं च वेत्तीति स्ववित् सुपर्णः सुखात्मकः पुरुषः कस्मै कुप्येत कर्मणे कुप्यतीत्यत्राह । नहीति । जडात्मकमनआद्यभिमाननिमित्तदुःखादिकं कर्ममूलं न हि यस्मात्कर्मणेऽपि न कुप्येत यद्वा कर्ममूलमनआदेरभिमाननिमित्तं दुःखादि स्वतस्तस्य नास्तीति ॥ ५५ ॥

यदि दुःखादेर्हेतुः कालोऽस्तीति मतं तर्हि नित्यसुखरूपस्य विवेकिनः आत्मनः किमनिष्टं तत् यदात्मनो दुःखादिलक्षणमनिष्टं प्राप्तमत्राह । तत्रेति । तत्र तथा सत्यसौ दुःखादिस्तदात्मनः कालाधीनदेहस्येति प्राप्तमात्मनो नित्यत्वेन कालानधीनत्वाद्देहस्य तद्दर्शनाच्च तच्च न युक्तं देहस्य जडत्वात् तत्रोदाहरणमाह । नाग्नेरिति । लुप्तोपममेतत् यथाग्नेस्तापनिमित्तं दुःखं यथा च हिमस्य तन्निमित्तं दुःखं न जडत्वादेवं देहस्यापि कालादिसम्बन्धे विद्यमानेऽपि न दुःखं युक्तं ननु तर्हि तदन्तर्वर्तिनो हरेस्तद्दुःखं स्यादत्राह । न परस्येति । परस्य प्रकृतिविलक्षणस्य षोढुः सर्वस्य हरेस्तद्दुःखं न युज्यते तस्माज्जीवस्य मनोऽभिमानमात्रं दुःखकारणमतः कस्मै कुप्येदिति—

सदा कालादिसम्बन्धाद्दुःखं देहस्य युज्यते ।
तथापि नैव दुःखी स जडत्वाद्विषमेन तु ॥
आत्मनः सुखरूपत्वान्न दुःखं युज्यते क्वचित् ।
तस्मान्मनोभ्रमेणैव दुःखी जीवो न चान्यथा ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वेषां मनसो नेता मनोरूपस्त्रिलोचनः ।
तद्वशाः सर्वदेवाश्च तेनैव सुखदुःखिनः ॥
नियन्ता तस्य च प्राणस्ततोऽपि बलवत्तरः ।
तन्नियन्ता हरिः साक्षात्परमानन्दलक्षणः ॥

इति वाक्यमुक्तार्थे प्रमाणम् ॥ ५८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मृषेत्यात्मन्यविद्ययारोपितमेवेत्यर्थः ॥ ५३ ॥ —५५ ॥ यतोऽसौ तदात्मकः कालात्मक एव आत्मनो ब्रह्मांशत्वा त्कालब्रह्मणोश्चैक्यादिति भावः ॥ ५६ ॥ ५७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आत्मा जीवात्मैवेति नहीष्टकालोष्ठादिकं केन चिद्दुःखयितुं शक्यमतो जीवात्मनश्चेतनत्वमेव दुःखानुभवहेतुरिति चेत्तर्हि किमन्यत इति। अन्यः कथं दूषणीय इत्यर्थः । तत्र आत्मनि निजस्वभावश्चेतन्यमेव सुखदुःखहेतुरित्यर्थः । नहि तच्चैतन्यमात्मनः सकाशादन्यत् यदि च ततोऽन्यदेव तदिति मतं तर्हि तन्मतं मृषा मिथ्यैवाज्ञानकल्पितमित्यर्थः । तथा सत्यात्मनो लोष्ठादीनामिव न सुखं नच दुःखं स्यादित्यतः कस्मात्कुतः कुप्यते ॥ ५३ ॥

ग्रहपक्षेऽप्यजस्याजन्मनः आत्मनः किं यतो जन्यत इति जनो देहस्तस्यैव ते जन्मलग्नापेक्षया आद्याष्टमादिराशिस्था तद्दुःखनिमित्तं भवन्ति किञ्चान्तरिक्षस्थितैर्ग्रहैस्तत्रस्थस्य ग्रहस्यैव पादाद्दृष्ट्यादिभेदैः पीड़ां वदन्ति ज्योतिर्विदः नतु ग्रह कोणादिस्थितस्य तद्दृष्टिगोचरस्य पुरुषस्यातो ग्रहगतैव पीडा-तज्जन्मनोत्पन्ने देहे भवतीति पुरुषस्त्वात्मा तु ततो देहादन्यः ॥५४॥

कर्म हेतुश्चेदस्तु इत्यभ्युपगमः कर्मैव न सम्भवेत् कुतस्तद्धेतुत्वमित्याह तत् कर्म हि यस्मादेकस्य जडाजडत्वे सति सम्भवेत् तत्र स्वाभाविकाविरोधापत्तेरजडत्वाद्धितानुसंधानतः प्रवृत्तिसम्भवात् नाचित् जडो देहः पुरुषस्तु सुपर्णः शुद्धचैतन्यरूपः नच शुद्धचैतन्यस्य जडदेहेन शुक्लतेजसस्तमसेव साहित्यं स्यात् अतः कस्मै कुप्येत हि यतः कर्मैव नास्ति यत् सुखदुःखयोर्मूलम् ॥५५॥

कालपक्षेऽप्यात्मनः किं यतोऽसौ जीवात्मा तदात्मकः जीवात्मनो ब्रह्मांशत्वात् कालब्रह्मणोश्चैक्यात् अंशस्यांशिनः सकाशात् पीडा नास्तीत्यत्र दृष्टान्तः अग्नेर्हेतोस्तदंशस्य ज्वालादेस्तापो नास्ति हिमस्यापि तत् शैत्यं हिमकणस्य न स्यात् अतः कस्मै कुप्येत तदेवं परस्य स्वरूपतो मायातीतस्य जीवात्मनः द्वन्द्वं सुखदुःखादिकं नास्तीति षड्भिर्हेतवो निरस्ताः ॥ ५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मा भगवान् यः अंशभूतेन मुमुक्षणाभिन्नेनाप्यभिन्नतया गृहीतः एतदात्म्यमिदं सर्वं सर्वं खल्विदं ब्रह्मेत्यादिश्रुतिभ्यः यदि सुखदुःखहेतुः स्यात्तत्रापि पक्षे निजस्वभाव एव सर्वं कारणकारणत्वात् किमन्यतः न किमपि तदन्यत्स्वरूपत एव नास्तीत्याह । नाह्यात्मनोऽन्यदिति । यदि यच्च वादिभिः प्रधानपरमाण्वादिकं प्रकल्पितं तन्मृषा मिथ्या स्वबुद्धिकल्पितत्वात् तत्रात्मनि न सुखं न दुःखम् प्राकृतसुखदुःखसंबन्धशून्यत्वात् अतः कस्माद्धेतोः कुप्येत ॥ ५३ ॥

ग्रहाः सुखदुःखयोर्निमित्तं चेत्तत्राप्यजस्य जन्मादिदोषशून्यस्वरूपविदः परात्मकाष्ठां प्राप्तस्यात्मनः किं न किमपि यतस्ते ग्रहाः जनस्य जन्यते इति जनो देहस्तदात्माभिमानवतः सुखदुःखयोर्निमित्तं भवति किञ्च ग्रहैरन्तरिक्षस्थैरन्तरिक्षस्थग्रहस्यैव पीड़ां दैवज्ञाः वदन्ति ततो जनाद्देहात्मवादिनः सकाशात्पुरुषो ज्ञाततत्त्वोऽन्यः कस्मै कुप्येत ॥ ५४ ॥

सुखदुःखयोर्हेतुः कर्म वै निश्चितमिति चेत्तदपि जडाजडत्वे देहात्मत्वे तद्विषयेऽस्तु तद्देहात्मत्वं कर्ममूलं तत्रैव कर्मणः सुखदुःखहेतुत्वं घटते आत्मनः आत्मज्ञस्य किं न किमपि हि यस्मात् देहस्तु अचित् नायं पुरुषः अचित् किन्तु सुपर्णः सुष्ठुः पर्णं पतनं पूर्वदेहान्निर्गमनमुत्तरदेहप्रवेशश्च यस्य सः चेतन इत्यर्थः । अतः कस्मै कुप्येत ॥ ५५ ॥

सुखदुःखयोर्हेतुः कालश्चेत्तत्रापि आत्मनः परमार्थं स्यादतः किम् यतोऽसौ कालस्तदात्मकः परात्मकः परमात्मध्यानेन प्राप्तस्य परांशभूतकृत्यशो न भवतीति दृष्टान्तद्वयेन स्पष्टयति यदग्नेरंशभूतं विस्फुलिङ्गं तत्तस्मादग्नेस्तापो नास्ति यद्धिमस्य शैत्यं तद्धिमस्य शैत्यदं न स्यात् तद्वत् परस्य श्रीकृष्णस्यांशत्वात्स्वनातिरिक्त एवाहमिति भाववतः न द्वन्द्वं सुखदुःखादिकमस्ति अतः स कस्मै कुप्येत ॥ ५६ ॥

---

भाषा टीका।

अपना आत्मा यदि सुखदुःख का हेतु होवे तौ दूसरे से क्या प्रयोजन है वह तो अपना स्वभावही है यदि दूसरे के निमित्त से है तौ तो वह झूठ होगा इससे न सुख है न दुख है फिर किसके ऊपर कोप करेगा ॥ ५३ ॥

नवग्रह सूर्यादिक जो सुखदुःख के हेतु होवें तो उससे आत्मा को क्या है वह तो देहका है एक ग्रह से दूसरे ग्रहकी पीडा ज्योतिषी लोग कहते हैं आत्मा तो उससे अलग है फिर किसपर कोप करेगा ॥ ५४ ॥

कर्म यदि सुख दुःख का हेतु होवै तो आत्मा को क्या है क्योंकि जड अजड दोनों के योग से सुख दुःख होते हैं तिसमें देह तो जड है तो उसके कर्म नहीं है आत्मा तो शुद्ध है तो उसके भि कर्म नहीं होना चाहिये फिर कर्म का कोई कारण नहीं है तो किसको क्रोध करेगा ॥५५॥

काल यदि सुख दुःख का हेतु होवै तो आत्मा को उससे क्या है क्योंकि काल तो परमात्मा का अंश ही है जैसे कि अग्नि को ताप नहीं होता है शीतल को शीत नहीं होता है आत्मा तो भिन्न है तो उसको तो सुखदुःखादि द्वन्द्व नहीं होना है ॥ ५६ ॥

न केनचित्क्वापि कथञ्चनास्य द्वन्द्वोपरागः परतः परस्य ।
[1]यथाऽहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥
एतां स[2]आस्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः ।
अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ ५८ ॥
श्रीभगवानुवाच ॥
निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् ।
निराकृतोऽसद्भिरपि स्वधर्मादकम्पितोऽमूं[3]मुनिराह गाथाम् ॥ ५९ ॥
सुखदुःखप्रदो नान्यः पुरुषस्याऽऽत्मविभ्रमः ।
मित्रोदासीनरिपवः संसारस्तमसः कृतः ॥ ६० ॥
तस्मात्सर्वात्मना तात ! निगृहाण मनो धिया ।
मय्यावेशितया युक्त एतावान् योगसंग्रहः ॥ ६१ ॥
य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः ।
धारयन् श्रावयन् शृण्वन् द्वन्द्वैर्नैवाभिभूयते ॥ ६२ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम् ।
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
त्रयोविंशोध्यायः ॥ २३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं षडेते हेतवः प्रसिद्धा निरस्ताः यदि कश्चिदन्यस्तमुद्भावयेत्तदपि वस्तुमहिमापेक्षायां न सम्भवतीत्याह । न केनचिदिति । नन्वपरोऽस्तु कथमपह्नूयते तत्राऽऽह । यथेति । संसृतिमविद्यमानामेव रूपयति प्रकाशयतीति तथा तस्य अहमोऽहङ्कारस्य यथा स्वाप्न तथा परतः प्रकृतेः परस्याऽऽत्मनो द्वन्द्वसम्बन्धः अहङ्कारनिमित्तोऽसौ न वास्तव इत्यर्थः । एवं प्रबुद्धो यः स भूतैः कृत्वा न बिभेति ॥ ५७ ॥

अतोऽहमपि तथैव परमात्मनिष्ठतया तरिष्यामीत्याह । एतामिति । सोऽहमित्यन्वयः नन्वियं निष्ठैव कथं भवेत्तत्राह । मुकुन्देति ॥ ५८ ॥

प्रस्तावेन सह गाथार्थं संक्षेपतो दर्शयति द्वाभ्याम् । इत्थं नष्टद्रविणो निर्विद्य गतक्लमः प्रव्रज्य गां पर्यटन्नसद्भिर्निराकृतोऽपि स्वधर्मादकम्पितः सन्मुनिरमूं गाथामगायदित्यन्वयः ॥ ५९ ॥

मित्रोदासीनरिपवः सर्वोऽपि संसारस्तमसोऽज्ञानस्य आत्मनो मनसो विभ्रममात्रः कृतो न तात्त्विक इत्यर्थः ॥ ६० ॥

उक्तं द्वन्द्वसहनोपायमुपसंहरति । तस्मादिति ॥ ६१ ॥

मनोनिग्रहाशक्तोऽप्येतच्छ्रवणादिनिष्ठस्तत्फलं प्राप्नोतीत्याह । य इति । द्वन्द्वैः सुखदुःखादिभिः ॥ ६२ ॥

भिक्षुगीतिं मिषं कृत्वा सर्वाविद्यागतं हरिः ।
मोहं निघ्नन्निहाभाति परमानन्दरूपतः ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तदपि हेत्वन्तरोद्भावनमपि । अपरोक्षः सर्वप्रत्यक्षः द्वन्द्वोपरागः ॥ ५७ ॥

अतः प्रबुद्धस्य भयाऽभावात् । सोऽहमित्यन्वयाऽभिधानात् स आस्थायेत्येव स्वामिसम्मतः पाठो ननु समास्थायेति । अन्यावेशपरित्यागाय तस्या निष्ठाया आस्थामात्रं तमस्तरणान्तु मुकुन्दाङ्घ्रिनिषेवयैव तां विना तस्याः सोपद्रवत्वादित्युपसंहारे भक्तिरेव पर्यवसायिता ॥ ५८ ॥

द्वाभ्यां गाथार्थस्य संक्षिप्तत्वादष्टादशश्लोकीमित्युक्तम् । अकम्पितोऽचलितः सन् ॥ ५९ ॥

---

१ यथाऽऽत्मनः २ समास्थाय ३ असौ इति वि० पाठः

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

भ्रमादन्यः सुखादिदो न किन्तु विभ्रम एवेत्यन्वयः पुनरन्यात्माविभ्रमपरस्य भोजनादिमयं इत्युक्तम् ॥ ६० ॥

उपायं मनोनिग्रहलक्षणम् । तस्मात् संसारस्य मनोविभ्रममात्रकृतत्वात् सर्वात्मना सर्वथा एतावान्मनोनिग्रहमात्र एव ॥ ६१ ॥

एतच्छ्रवणादीति भिक्षुगीताश्रवणादिपरः तत्फलं योगफलम् ॥ ६२ ॥

उपसंहारे मङ्गलमाचरति । भिक्षुगीतामिति—
टीका प्रशंसिता येन जगति स्वमुनिर्मिता ।
तं चैतन्यं प्रपद्येहं भक्तिव्याख्या नयाहकम् ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

छेदनदहनादेर्देहगतत्वेऽपि तत्कार्यं सुखदुःखानुभवस्तु आत्मन एव भवतीति शङ्कायां सुखदुःखानुभव औपाधिकः स च संसारावस्थायामेव नतु मुक्तावस्थायामित्याह । न केनचिदिति । परतः परस्य सूक्ष्मदेहादपि परस्य ब्रह्मः जीवस्य संसृतिरूपिणः संसृतिदशायां यथा ग्रन्थोपरागः स्यात् न तथा स्थूलसूक्ष्मप्रकृतिप्रहाणलक्षणायां मुक्तिदशायामित्यर्थः । अत आगमापायित्वात्सर्वं सोढव्यमित्यभिप्रायः ॥ ५७—५९ ॥

सुखदुःखेति । सुखदुःखप्रदोऽन्यो हेतुर्न किंतु आत्मविभ्रमः देहात्माभिमान एव हेतुः मित्रोदासीनरिपवश्च स एव देहात्मभ्रमकार्यत्वात् । तस्मादहंकारममकारकारणं मन एव संसारकारणमित्यर्थः ॥ ६०—६२ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यसमाहितस्य मनसः कार्यात्मप्रपञ्चेऽप्यात्मनः स्वस्वभावापगमस्तद्विपरीतभावागमश्च कथमित्याशङ्क्य न स्वभावापगमः किन्तु स्तम्भनादिभिर्जलाग्न्योरिव तदागमापायावौपाधिकौ नतु स्वाभाविकावित्यभिप्रेत्यैवं विद्वान् बिभेतीत्याह । न केनचिदिति । यदा परस्य देहविलक्षणस्यात्मनः परतः अनादिस्वस्वपरात्स्पर्शोऽप्यन्यतमाद्वा न ग्रन्थोपरागः न सुखदुःखान्वयः तत्संसृतिं रूपयति निरूपयति आपादयतीति यावत् तत्संसृतिरूपं मनस्तदस्यास्तीति तथा तस्यात्मनः अहम इत्यहमभिमानादनात्मन्यात्माभिमानादुपाधेः स्याद्ग्रन्थोपरागः स्यादित्यर्थः सङ्कल्पविकल्पात्मकमनसोऽसमाहितादहंममाद्यभिमानस्ततो द्वेषादिस्ततः कर्माणि ततो जन्मानि ततश्च सुखदुःखे इत्यर्थः इत्थं विद्वान् भूतैरुपद्रुतोऽपीति शेषः न बिभेति ॥ ५७ ॥

इत्थं वर्णनमुखेनोपदेष्टव्यमर्थं निष्कर्षोपदिदिक्षुस्तस्य निर्वेदात्प्रभृतिवृत्तं संगृह्णाति । एतामिति द्वाभ्याम् । तावन्नष्टद्रविणः अत एव निर्विद्य प्रव्रज्य गां पृथ्वीं पर्यटमानः विगतक्लमः पूर्वतमैर्महर्षिभिरध्यासितां परिगृहीतामेतां सुखदुःखनिदानपरिष्कारयुक्तां परस्य परमात्मनो निष्ठामास्थायासद्भिर्निराकृतोऽपि स्वधर्मादविकम्पितः मुकुन्दाङ्घ्रिनिषेवयैव उपायभूतयाऽपारमपि तमः तमःकार्यं संसारं तरिष्यामीत्यध्यवस्य स मुनिर्विप्रः इमां गाथामाहेति सम्बन्धक्रमः ॥ ५८—५९ ॥

उपदेष्टव्यमर्थमुपदिशति । सुखेति । सुखदुःखप्रदः तयोर्हेतुः आत्मविभ्रम एव नत्वन्यः आत्मना मनसा यो विभ्रमः देहात्माभिमानस्वतन्त्रात्माभिमानात्मकः न केवलमयं तयोरेव हेतुः किन्तु मित्रादिविषयभावः संसारश्च तन्निबन्धनः आत्मविभ्रमनिबन्धनः ॥ ॥ ६० ॥

ततः किमत आह । तस्मादिति । तात हे उद्धव ! तस्मादात्मविभ्रमस्य सुखदुःखादिहेतुत्वात् मय्यावेशितया धिया युक्तस्त्वं सर्वात्मना मनो निगृहाण विषयान्तरेभ्यो निगृह्य मयि समाहितं कुरु एतावानेव योगसंग्रहः शास्त्रेषु प्राधान्यतः प्रतिपाद्ययोगसङ्ग्रह एतावानेव मय्यावेशितधिया मनोनिग्रह इति इत्यनवयार्थः ॥ ६१ ॥

प्रकृतभिक्षुगीताधारणश्रवणादिफलमाह । य इति । धारयन् श्रद्धया शृण्वन् वा समाहितो भवति ततश्च ब्रह्मनिष्ठो ततो द्वन्द्वैः सुखदुःखादिभिरभिभूतो न भवति मुक्तो भवतीति भावः ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न परस्येत्येतद्विवृणोति । न केनचिदिति । यथा संसृतिरूपिणः संसारकारणस्वभाववतः आत्मनो मनसो यथा द्वन्द्वोपरागः द्वन्द्वाख्यराहुग्रहणं तथास्य परतः परस्य ईश्वरस्य द्वन्द्वोपरागो न स्यात् इदमेव श्रेयमिति भावेनाह । एवमिति । एवं प्रबुद्धः एवं विधज्ञानी एवंविधैरज्ञानिभूतैः खलैः कृतादुपद्रवान्न बिभेति ॥ ५७ ॥

एवं विरक्तिर्भगवदङ्घ्रिभक्तिद्वारा संसारनिर्मोकहेतुरित्याह । एतामिति । मुकुन्दाङ्घ्रिनिषेवयैव एतां परमात्मनिष्ठां मनः संयमलक्षणव्यवस्थां समास्थाय स्थिरीकृत्य परमात्मज्ञानलक्षणां वा प्राप्य अत्र प्रमाणमाह । अध्यासितामिति । सम्यगनुष्ठितां तमः अज्ञाननिमित्तं संसारम् ॥ ५८ ॥

अतोऽयं गाथेति भावेनाह । निर्विद्येति ॥ ५९ ॥

गाथावाक्यतात्पर्यार्थमाह । सुखेति । आत्मनि मनसि रूढो द्विविधभ्रम एव सुखदुःखप्रदः अन्यो नैव ततो मित्रोदासीनरिपुलक्षणश्च संसारः स्वमनः स्वमनोहेतुकः ॥ ६० ॥

मनोनिग्रहयोगमाह । तस्मादिति । एतावान् मनःसंयमनलक्षणः ॥ ६१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

फलमाह। य इति। ब्रह्मनिष्ठां ब्रह्मोत्कर्षज्ञानपूर्वकमनोनिग्रहलक्षणाम् ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

परस्य स्वरूपतो मायातीतस्य ॥ ५७ ॥

तदेषा च मनःपरमात्मनिष्ठा श्रीमन्मुकुन्दाङ्घ्रिनिषेवां विना सोपद्रवैव जाता यदीदृशो नानाविचारोऽपि तन्निष्ठायामुपद्रव एवेत्यन्ते तन्निषेवामवश्यमेव विविनक्ति। एतामिति। तस्माद्भवता साऽवेवोक्तम् ऋते त्वद्धर्मनिरतानिति श्रीभगवतो भावः ॥ ५८ ॥ ५९ ॥

मित्रोदासीनरिपुरूपः सुखदुःखप्रदः पुरुषस्य सर्वोऽपि संसारो नान्योऽस्ति किन्तु तमसस्तमसा स्वाज्ञानेन कृतो य आत्मनो मनसो विभ्रमस्तद्रूप एवेत्यर्थः ॥ ६० ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यदि कश्चिद्धेत्वन्तरमुद्भावयेत्तदपि वस्तुमहिम्ना न सम्भवतीत्याह। नेति। परतः अन्यस्मात्त्वहमो यतः परस्य मायातीतस्य ननु तर्हि परोक्षस्य दुःखानुभवस्य को हेतुस्तत्र पूर्वोक्तमनोऽध्यास एवेत्याह। यथाहमहतीमनःप्रधाने लिङ्गदेहेऽयोऽहङ्कारस्तस्मादेव नान्यस्मात् यथाशब्द एवार्थे संसृतिं संसारबन्धं निरूपयितुं शीलं यस्य तस्मात् एव प्रबुद्धो यः स भूतैः कृत्वा न बिभेति जीवात्मा हि स्वरूपतः शुद्ध एव न तस्य कालकर्मादयो दुःखहेतवः किं त्वविद्यया देहेऽहङ्कारादहस्य अध्यास एव स च देहो मनःप्रधानत्वान्मन एवेति तदेव दुःखहेतुरिति प्रकरणार्थः देहाध्यासे सति तु जीवात्मनः शुद्धत्वेऽपगते अध्यासानुगाः षडपि हेतवो यथा योगमुद्भवन्तीति निर्गलितार्थः ॥ ५७ ॥

ततश्च तस्य विरक्तस्यागिता प्राग्भवीया शुद्धा भक्तिर्मनसि प्रादुर्भूता प्रादुर्भूतायां च तस्यां स्वस्य संन्यासं द्वन्द्वसहनोपायमुक्तलक्षणमेतावन्तं विचारं चावधारयन्नमन्दयानिर्वचया मृतसिन्धुनिमग्न उच्चैर्नृत्यन् सहर्षाटोपमाह। एतामिति। सोऽहमित्यन्वयः परमात्मनिष्ठां देहदैहिकाभिमानरहितः परः शुद्धो य आत्मा जीवस्तस्य निष्ठां विचारितलक्षणां स्वरूपं केवलमास्थायेति परमात्मनिष्ठायामेतस्यां मम मा हूयत् स्थितिमात्रमेव तमः संसारं तु सेवयैव तरिष्यामि मत्पदसेवयेत्यर्थः एवकाराज्ज्ञायते ननु तर्हि परात्मनिष्ठायां स्थितिमात्रमपि किं करोषि तत्राह। पूर्वतमैः प्राचीनैरध्यासितामिति ॥ ५८ ॥

कदर्योपाख्याने तस्याख्यानोत्थापनप्रयोजनं चाह श्लोकद्वयेन निर्विद्येति ॥ ५९ ॥

आत्मविभ्रम इति पञ्चम्यर्थे प्रथमा आत्मविभ्रमादन्यो नेत्यर्थः। तत एव तमसो अज्ञातस्वरूपात् मित्रादिरूपः संसारः ॥ ६० ॥

उक्तं द्वन्द्वसहनोपायमुपसंहरति। तस्मादिति। एतावान् मनोनिग्रहपर्यन्त एवेत्यर्थः ॥ ६१ ॥

मनोनिग्रहयाशक्तोऽप्येतच्छ्रवणादिना तत्फलं प्राप्नोतीत्याह। य इति ॥ ६२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
एकादशे त्रयोविंशः सङ्गतः सङ्गतः सताम् ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

फलितार्थमाह। नेति। यथाहम्मः देहादावात्मभावं प्राप्तस्य संसृतिरूपिणः कर्मभिरुत्तरोत्तरतः संसृतिं रूपयतीति संसृतिरूपं मनस्तद्रूपास्तीति तस्य द्वन्द्वानि तथास्य परतः प्रकृतेरपि परस्य देहाद्यात्मभ्रान्तिं त्यक्त्वा अब्रह्मात्मकलक्षणां भ्रान्तिं च त्यक्त्वा परानन्यतया स्थितस्य द्वन्द्वानां तु का कथा तदुपरागोऽपि न स्यात् देहादावात्मभ्रान्तिं स्वातन्त्र्यभ्रान्तिं च त्यक्त्वा परमेश्वरांशत्वेन न भिन्नोऽप्यहं तन्निरपेक्षस्थितिप्रवृत्त्याद्यभावात्तदभिन्न एवास्मीत्येवं प्रबुद्धस्तत्त्वमस्यादिवाक्यार्थज्ञानात् ज्ञाततत्त्वो भूतैर्नैव बिभेति ॥ ५७ ॥

स्वकर्तव्यतामाह। एतामिति। परे श्रीवासुदेवे आत्मनिष्ठा तदंशत्वात्तदनतिरिक्तोऽस्मीत्येवं भूतां "ममैवांशो जीवलोके जीवभूतः सनातनः। क्षेत्रज्ञं चापि मां विद्धी"ति श्रीमन्मुखप्रोक्तां पूर्वतमैः श्रीकुमारादिभिरध्यासितां सम्यगास्थाय मुकुन्दाङ्घ्रिसेवयैव नतु ज्ञानमात्रेण दुरन्तपारन्तमः दुस्तरं संसारं तरिष्यामि ॥ ५८ ॥

अध्यायार्थं संक्षेपतो दर्शयति। निर्विद्येत्यादिना। नष्टद्रविणः प्रक्षीणधनः निर्विद्य निर्वेदं प्राप्य प्रव्रज्य गृहाश्रमं त्यक्त्वा गतक्लमः नष्टक्लेशः गां भूमिं पर्यटमानः असद्भिर्निराकृतोऽपि स्वधर्मान्मुकुन्दाङ्घ्रिसेवातोऽकम्पितः सन् मुनिरमूं गाथामगायतेत्यन्वयः ॥ ५९ ॥

सुखदुःखप्रदः अन्यः जनदेवतादिरूपः न कस्तर्हि आत्मविभ्रमः आत्मनो मनसः यो देहादावहमिति गेहादौ ममेति स्वरूपे अब्रह्मात्मकस्वरूपश्च एवं विविधो भ्रमः सुखदुःखप्रद इत्यन्वयः किञ्च मित्रोदासीनरिपवः सर्वोऽपि संसारश्च पुरुषस्य तमसस्त्वाज्ञानात्मविग्रहतो निमित्तादेव परमेश्वरेण पुरुषकर्मफलदात्रा कृतः ॥ ६० ॥

पूर्वोक्तं द्वन्द्वसहनोपायमुपसंहरति। तस्मादिति। मयि आवेशितया धिया मनो निगृह्णीयाः एतावान् योगस्योपायज्ञातस्य संग्रहः सूत्रम् ॥ ६१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनोनिग्रहासमर्थोऽप्येतच्छ्रवणादिभिस्तत्फलं प्राप्नोतीत्याह । य इति । द्वन्द्वैः सुखदुःखादियुगलैः ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोविंशाध्यायार्थप्रकाशः ॥ २३ ॥

भाषा टीका ।

सब से पर अलग रहने वाले इस आत्मा को किसी ठिकाने किसी हेतु से किसी प्रकार से सुख दुःख द्वन्द्व नहीं होता है जैसा वह होता है वह अहङ्कार के आवेश से संसार होता है ऐसा जो ठीक जान लेता है वह इन देही प्राणियों से नहीं डरता है ॥ ५७ ॥

इस प्रकार से पूर्व काल के महर्षियों ने धारण करी हुई निष्ठा को धारण कर के उस सन्यासी ब्राह्मण ने निश्चय कर लिया कि मैं मुकुन्द भगवान् की चरण सेवा से ही इस कठिन अपार अन्धकार संसार को तर जाऊंगा ॥ ५८ ॥

श्रीभगवानुवाच ।

जिसके कि धन नष्ट होगया था फिर वैराग्य से दुखी होकर सन्यासी होकर इस पृथिवी में घूमता रहा फिर जब असत्पुरुषों ने तिरस्कार किया तब अपने धर्म में से चलायमान न होकर उस भिक्षु मुनि ने इस गाथा का गान किया है ॥ ५९ ॥

सुख दुःख देने वाला दूसरा कोइ नहीं है यह केवल पुरुष को अपना भ्रम मात्र है जो कि किसी को मित्र किसी को शत्रु किसी को उदासीन मान लेता है इसी तमोगुण अज्ञान से उसको संसार होता रहता है ॥ ६० ॥

तिस से हे तात ! उद्धव ! सब प्रकार से मन को बुद्धि से रोक रक्खो मेरे में उस बुद्धि को ठीक लगावो इतना ही सब योग का सार है ॥ ६१ ॥

जो पुरुष भिक्षु की गाई हुई इस ब्रह्म निष्ठा वाली गाथा को सावधान होकर धारण करेगा वा सुनेगा वा सुनावेगा वह पुरुष सुख दुःख द्वन्द्वों से छूट जावेगा ॥ ६२ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध
तेवीस में अध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे त्रयोविंशोऽध्यायः २३ ॥

# अथ चतुर्विंशोऽध्यायः ।

——:*:——

श्रीभगवानुवाच ॥

अथ ते सम्प्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् ।
यद्विज्ञाय पुमान् सद्यो जह्याद्वैकल्पिकं भ्रमम् ॥ १ ॥
आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥ २ ॥
तन्मायाफलरूपेण केवलं निर्विकल्पितम् ।
वाङ्मनोऽगोचरं सत्यं द्विधा समभवद्बृहत् ॥ ३ ॥
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते ।
आत्मनः सर्वभावानामागमापायचिन्तया ॥
स्वपदं स्वभक्तानामनुगृह्याथ संयमम् ।
चित्तस्योक्त्वा पुनः कृष्णः सांख्यमत्राऽऽह तत्कृते ॥

अद्वितीयात्परमात्मनो मायया प्रकृतिपुरुषद्वारा सर्वं द्वैतमुदेति पुनस्तत्रैव लीयत इत्यनुसन्दधानस्य द्वन्द्वभ्रमो निवर्तत इति वक्तुं सांख्यं प्रस्तौति । अथेति । पूर्वैः कपिलादिभिर्विनिश्चितम् वैकल्पिकं भेदनिमित्तम् भ्रमं सुखदुःखादिरूपम् ॥ १ ॥

अथोशब्दः कार्त्स्न्ये ज्ञानं द्रष्टा तेन दृश्यः कृत्स्नोऽप्यर्थश्चाविकल्पितं विकल्पशून्यमेकमेव ब्रह्मण्येव लीनमासीदित्यर्थः । कदेत्यपेक्षायामाह । अयुगे युगेऽपि पूर्वम् प्रलय इत्यर्थः । तथा आदौ कृतयुगं तस्मिंश्चान्यदापि यदा विवेकनिपुणा जना भवन्ति तदाऽपि तेषां भेदास्फूर्तेः ॥ २ ॥

तद्बृहद्ब्रह्म वाङ्मनोऽगोचरं यथा भवति तथा माया दृश्यं फलं तत्प्रकाशस्तद्रूपेण मायाविलासरूपेण वा द्विधाऽभूत् ॥ ३ ॥

तयोर्द्विधाभूतयोरंशयोर्मध्ये उभयात्मिका कार्यकारणरूपिणी ॥ ४ ॥

——

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

आत्मनो अविवेक मनोमोहो भगवता सांख्येनात्माऽनात्म-विवेकेन निवार्यते । सर्वभावानां प्रकृत्यादिभूपर्यन्ततत्त्वानां तत्कृते चित्तसंयमनार्थम् अत्रास्मिश्चतुर्विंशत्यध्याये मायाया निमित्तशक्त्या प्रकृतिर्गुणत्रयसाम्यमुपादानशक्तिः । तत्रैव परमात्मन्येव अथेति सांख्याऽधिकारे ॥ १ ॥

द्रष्टा जीवः अर्थश्च प्रपञ्चः । ब्रह्मण्येव । भगवत्येव अथ बृहति बृंहयन्तीति श्रुत्या बृहत्त्वाद्बृंहणत्वाच्च यद्ब्रह्म परमं विदुरिति स्मृत्या च तच्छब्दस्य तत्रैव मुख्यवृत्तेः । उपसंहारे परावरदृशा मयत्येनेन तद्रूपेणैवावस्थितेः स्पष्टीभविष्यमाणत्वाच्च अत एव लीनमिति व्याख्यानम् । तेषां विवेकनिपुणानाम् ॥ २ ॥

तेन ब्रह्मणा यद्दृश्यं वस्तु तन्माया तस्य ब्रह्मणो यः प्रकाशविशेषः स फलमित्यर्थः । द्वितीयपक्षे मायास्वरूपशक्तेराभासरूपा बहिरङ्गा निमित्तशक्तिः तस्या विलासः प्रकृतिः पुरुषाविर्भावक्रीडनविशेषस्तेन रूपेणेत्यर्थः ॥ ३ ॥

अंशयोरिति प्रकृतेस्तद्बहिरङ्गशक्तित्वादंशत्वं पुरुषस्य तत्तटस्थशक्तित्वादंशत्वमिति ज्ञेयम् । कार्यमाकाशादि कारणं महदादि तद्रूपिणी अत्र पुरुषशब्देन जीव एव विवक्षितष्टीकाकृद्भिः । विष्णोः स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्रेति विष्णुपुराणवाक्ये । तथैव टीका च । परतो निरुपाधेर्विष्णोः स्वरूपात् ते प्रागुक्ते प्रधानं पुरुषश्चेति द्वे रूपे अन्ये मायाकृते इति ॥ ४ ॥

——

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैकल्पिकं भ्रमम् अज्ञानम् ॥ १ ॥

ज्ञानं परमात्मस्वरूपम् एकं समाभ्यधिकरहितं अविकल्पितं

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

महदादिकार्यविशेषरहितं यदासीत् तदा हरिमिति शेषः कृतयुगेऽपि निपुणाः परं ब्रह्मैवोपास्यम् ॥ २ ॥

केवलं गुणवैषम्यरहितं जात्यादिविकल्परहितं च तत् ब्रह्म मायया प्रमित्या प्रमाणेन फलरूपेण परमप्राप्यतया भातीत्यर्थः। सन्निर्विकारं द्विधा समभवत् द्विप्रकारमभवत् ॥ ३ ॥

तयोः प्रकारयोः उभयात्मिका कार्यकारणरूपा ज्ञानं जीवस्वरूपं "विज्ञानं यज्ञं तनुते" इति प्रयोगादभावः पदार्थः ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवमध्यायद्वयेन तत्त्वानां न्यूनाधिकसंख्यावादोपपत्तिनिरूपणानुप्रसक्तमुपपादितम् अथ सांख्येन सर्वभावानां प्रतिलोमानुलोमतः भवाप्ययावित्युक्तं मनःप्रसादहेतुविज्ञानविषयभवाप्ययौ निरूपयितुं प्रतिजानीते। अथेत्यादिना। यद्वा आत्मविभ्रम एव सुखदुःखहेतुरिति समनन्तरमेवोक्तं कस्तर्हि तद्धान्युपाय इत्यतस्तं वक्तुं प्रतिजानीते। अथेति। अथवा एतावान्योगसंग्रह इत्युक्तं तर्हि कियान्सांख्यसंग्रह इत्यतस्तं वक्तुं प्रतिजानीते। अथेति सांख्यं प्रकृतिपुरुषेश्वराणां यथावस्थिताकारभिधानं पूर्वैर्मुनिभिर्विनिश्चितं ते तुभ्यं सम्यग्वक्ष्यामि किन्तत्कथनेनेत्यत आह। यदिति। यत्सांख्यं विज्ञाय वैकल्पिकं भ्रमं जह्यात्त्यजेत् एषोऽहमन्योऽयमिति भेदबुद्धिकल्पकं देहात्मभ्रमं स्वतन्त्रात्मभ्रमं च जह्यादित्यर्थः ॥ १ ॥

तत्र सृष्टिलयक्रमकथनेन सांख्यं निरूपयितुकामः सृष्टेः प्रलयपूर्वकत्वात्तावत्प्रलयावस्थां संग्रहेणाह। आसीदिति। ज्ञानं परमात्मस्वरूपमथो कार्त्स्न्येनाविकल्पितं नामरूपविभागरहितं सदेकमेवासीत् विकल्पपरिहारेण निरतिशयएकत्वव्यपदेश्यं ज्ञानमर्थो ज्ञानरूपोऽर्थ आसीदिति सम्बन्धः सदेव सोम्येदमग्र आसीदेकमेवेत्यस्यार्थोऽत्रोपचित्तः यद्वा ज्ञानं जीवस्वरूपमर्थः प्रकृतिश्चेत्युभयमविकल्पितं नामरूपविभागरहितं सदेकमेवासीदिति विकल्पपरिहारेण निरतिशयसूक्ष्मावस्थापत्त्या तमः परे देव एकी भवतीत्युक्तरीत्या परमात्मैकतापन्नमभूदित्यर्थः। ज्ञानं विशिनष्टि। यदेति। यदा आदौ जगदादावयुगेऽद्वितीयेऽनुपमे इति यावत् कृतयुगे तदा यदा च विवेकनिपुणा यत्कारणं ब्रह्मोपासत इति शेषः यद्वा विवेकनिपुणाः चिदचिदीश्वरतत्त्वत्रयविवागनिपुणाः ॥ २ ॥

यत्केवलं गुणवैषम्यरहितं जात्यादिविकल्परहितं वाङ्मनसागोचरमपरिच्छेद्यस्वरूपस्वभावं नित्यं कालाद्यपरिच्छेद्यसत्ताकमिति पाठ निर्विकारं बृहत् ब्रह्माचक्षते तन्मायाफलरूपेण द्विधा समभवदिति सम्बन्धः। द्विधा द्विप्रकारकं मायाफलरूपवस्तुद्वयविशेषणकमेव प्रलयदशायामप्यभूदित्यर्थः ॥ ३ ॥

कासौ माया किं च तत्फलमित्यत आह। तयोरिति। तयोर्मायाफलयोरेकतरः मायाशब्दविवक्षितोऽर्थः प्रकृतिः सा चोभयात्मिका कार्यकारणात्मिका समष्टिव्यष्ट्यात्मिका वा जीवपरयोर्भोग्यस्वरूपा वा अन्यतमः फलशब्दाभिवक्षितो मायो ऽर्थः ज्ञानं जीवस्वरूपं "विज्ञानं यज्ञं तनुते" इति प्रयोगात् स च पुरुषः चकाराज्जीवः प्रत्यगिति चाभिधीयते इत्यर्थः। विचित्रकार्यकरत्वयोगात्प्रकृतिर्मायाशब्देनोच्यते जीवस्त्वनुकूलज्ञानात्मकानन्दस्वरूपत्वादानन्दस्यैव पुरुषार्थत्वात् फलशब्देनोक्त इत्यवगन्तव्यम् ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सृष्ट्यादियाथार्थ्यज्ञानं मिथ्याज्ञाननिवर्तकमिति कथयत्यस्मिन्नध्याये तत्र व्यर्थोऽपि नैवोपरमेतेत्युक्तविकल्पनिवर्तकोपायः क इत्युद्धवस्य हार्दशङ्कां परिहर्तुकाम आह। अथेति। सांख्यं यथार्थज्ञानं [1] पूर्वैः पुरातनैः विकल्पनिवर्तकत्वेन निश्चितम् ॥ १ ॥

ननु विकल्पे सति तद्धानाय सांख्यवचनप्रतिज्ञानं सङ्गच्छते स एव न सम्भवति तथा हि किमुत्प [2] त्तिप्रभृतिसांख्यं त्रिकल्पितमुतान्तराले नाद्यः स्वभावस्य निवृत्त्यनुपपत्तेरिति। तत्राह। आसीदिति। अथो आरम्भे सृष्टिसमये ज्ञानमर्थश्चैकमेव यथैकार्थो विषयः तथैव ज्ञानं विषयमनतिक्रम्य वर्तमानमासीत् किमनेनोक्तं भवतीत्यत्राह। अकल्पितमिति संशयविपर्ययाविषयत्वमुक्तं भवति। कस्मिन् काले इदमुत्पन्नमत्राह। कृतयुग इति। तत्रापि कदेत्यत उक्तमादाविति। संशयाद्यन्यथाभावः कस्मान्नाभूदिति। तत्राह। यदेति। कृतयुगमारभ्य त्रेतायुगजना विवेकनिपुणा इति तदा यस्मात्तस्मादिति शेषः पुरुषबुद्धिदौर्बल्यनिमित्तं ज्ञानस्यान्यथात्वं सात्त्विकत्वेन तदानीन्तनानां तदभावादेकप्रकारमेव ज्ञानमिति भावः "अथाथोनन्तराद्यर्थे विकल्पारम्भमङ्गल" इति यादवः—

> यथैवार्थस्तथा ज्ञानं ज्ञानार्थैक्यमुदाहृतम्।
> तथा कृतयुगे प्रायस्तदन्येषु तु कुत्रचित् ॥

इति वाक्येन विज्ञानवादिमतमत्रोच्यत इत्येतन्निरस्तम् ॥ २ ॥

द्वितीये किं कारणमत्राह। तन्मयेति। तत्तस्य ज्ञानार्थैक्येन मिथो विरोधराहित्येनावाधितं ज्ञानं पश्चात् त्रेतायां द्विधा इदं वादो वेति संशयमापन्नं समभवत्सञ्जातं तत् द्वापरादौ इदमेव नान्यदिति विपरीतप्रत्ययेन समभिमन्नमभवदित्यन्वयः समभेदे समीचीने सुष्ठु पूजासुखेष्विति काव्यस्वभावयोः सदातनत्वेन सदाविकल्पसम्भवात् चेतनस्यापि देवदत्ताद्यन्यतमस्याल्पबुद्धित्वेनानन्तवेदादिशब्दराश्यर्थस्वरूपस्यावगाढुमशक्यत्वेन कारणत्वानुपपत्तेस्तस्योभयफलदानसमर्थेन वैषम्यादिदोषविधुरेण सर्वज्ञेन कारणेन भाव्यमिति भावेनाह ॥ अथेति। फलं रूपयति हितं कारयतीति फलरूपः तेन तामसादिजीवानां स्वस्वयोग्यतमःआदिफलदाः अस्त्यर्थः। क्रियाफलेन यथा तथास्थितेति विकल्पितं नामसादि जीवबुद्धिमनुसृत्य नानाकल्पितम् अनन्तशब्दराशिगोचरस्य बृहत्तरस्य दुर्ज्ञेयत्वम् अवक्तव्यत्वं नेति भावेनोक्तं वागिति शब्दो वागोचरोऽर्थो मनो

1 ज्ञायतेऽनेनेति ज्ञानं साधनशास्त्रं प्रसिद्धं ज्ञानमत्राद्यम् एवमुत्तरत्रापि एवमतिवाङ्मनोगोचरत्वं सम्भवति।

2 उत्पत्तिप्रभृतिविकल्पितस्य सांख्यं निवर्तकमुतेति किमित्याह

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोचरत्ताऽभ्यामुपायमानत्वेन च कल्पितमिति शेषः यद्वा तच्छब्दार्थात्मकमुभयं बृहत्तरमिति यस्मात्तस्माद्वाङ्मनसयोरगोचरत्वाच्च द्विधाभूदिति ॥ ३ ॥

सम्यग्विषयाविषयिकरणागन्तरेण ज्ञानार्थैक्यमत्र नोच्यत इति भावेन ज्ञानार्थाभिमानिदेवतास्वरूपं तावदाह । तयोरिति तयोर्ज्ञानार्थयोरेकतरो योऽर्थो विषयलक्षणः स प्रकृतिर्गायत्रीनाम्न्या प्रकृत्याभिमन्यमान इत्यर्थः । सापि न स्वतन्त्रेत्याह । सेति । सा प्रकृतिरुभयोर्लक्ष्मीविष्णुसंज्ञयोरावयोरात्मा देहः प्रयत्नश्च यस्याः सा तथा मया श्रिया च सृष्टानुग्राह्या चेत्यर्थः अन्यतमो भागो ज्ञानं य स्योऽपि पुरुषः पुरुषनामा ब्रह्मणाभिमन्यमानमित्यर्थः । सोऽप्युभयात्मक इत्यनुसन्धेयं मया श्रिया सं सृष्टः अनुग्राह्यश्चेत्यभिधीयते—

ज्ञानाभिमानी पुरुषः स ब्रह्मा समुदाहृतः ।
अर्थाभिमानी प्रकृतिर्गायत्री सा प्रकीर्तिता ॥
तयोर्नियामको विष्णुः श्रीश्चानुग्राहिका स्मृता ।
वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत ॥
त्रिगुणात्मा समुद्दिष्टः प्रायः सत्वात्मकस्तथा ।
गायत्री चैव सावित्री तथैव च सरस्वती ॥
एवंत्रिरूपा प्रकृतिरेका सत्वादिभेदतः ।
तासु वीर्यं समुत्सृष्टं ब्रह्मणैकत्वमानतम् ॥
स सूत्रात्मा समुद्दिष्टो वायुर्लोकप्रणायकः ।
तस्यापि सूत्रं भगवान् धारणाद्विष्णुरव्ययः ॥
सूत्रपुत्रस्त्वहङ्कारः स रुद्रः समुदाहृतः ।
सूत्रात्मना महांश्चैव सह जातश्चतुर्मुखः ॥
तामसोऽनन्तजश्चैव स एको गुणभेदतः ।

इति स्मृतिसूचकेन हिशब्देन किमत्र प्रमाणमिति शङ्कां परिहरति ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथेति तैः तत्र प्रधानपर्यायः प्रकृतिशब्दः ॥ १ ॥

आसीदिति तैः तृतीयस्कन्धे भगवानेक आसेदमग्र आत्मात्मनां विभुरित्यादौ यद्भगवत्त्वेन शब्द्यते तदेवात्र ब्रह्मत्वेन शब्द्यते इतिवदन्तीत्यादिवदुभयत्रैकमेव वस्तुप्रतिपाद्यमन्येतु एव साङ्ख्यविधिः प्रोक्त इत्यादौ परावरदृशा मयेत्यनेन भगवद्रूपेणाव्यवस्थितिः स्पष्टैव । कदेत्यपेक्षायामाह । यदा आदौ कृतयुगे विवेकनिपुणा जना भवन्ति तस्मिन् अयुगे तत्पूर्वस्मिन् प्रलयकाल इत्यर्थः यद्वा ज्ञानमत्र जीवतत्त्वम् ॥ २ ॥

तदिति तैः तत्र मायाद्वयमिति फलं तत्प्रकाश इति ज्ञेयः तेन ब्रह्मणा यद्दृश्यं वस्तु तन्माया तस्य ब्रह्मणो यः प्रकाशविशेषः स फलमित्यर्थः यद्वा प्रकृतिर्यास्वेत्यादौ ब्रह्मतच्छ्रियं त्वहमिति वक्ष्यमाणात् तद्वृद्धव मलक्षणं ब्रह्मरूपेण स्थितवैव मायाया निजशक्तिविशेषस्य यत्फलं स्वरूपं वस्तु तद्रूपेण ॥ ३ ॥

तयोरिति तैः । प्रकृतिः प्रधानं पुरुषो जीवः एवं श्रीविष्णुपुराणे विष्णोः स्वरूपात्परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्रेत्यत्र तेषामेव टीका च परतो निरुपाधिर्विष्णोः स्वरूपात् ते प्रागुक्ते प्रधानं पुरुषश्चेति द्वे रूपे अन्ये मायाकृते इति ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चतुर्विंशे तु सूत्राद्या इतवोऽस्य यतोऽभवन् ।
पुनस्तदेव विविधैरेतत् साङ्ख्यं निरूपितम् ।

मनःप्रधानलिङ्गदेहेऽहं बुद्धिरेवात्मनो दुःखकारणमिति भिक्षुगीतादवगतं सा चानात्मन्यात्मबुद्धिरात्मानात्मविवेक एव निवर्तते स चात्मानात्मविवेकः साङ्ख्यज्ञानमूल इत्यतस्तं साङ्ख्यमुपदिशन्नाह । अथेति । विकल्पो देहस्तदुद्भवमध्यासरूपं भ्रमं त्यजेत् ॥ १ ॥

ज्ञानं ब्रह्म परमात्मभगवच्छब्दवाच्यं वस्तित्यर्थः । वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयं ब्रह्मेति परमात्मेति भगवानिति शब्द्यत" इतिसूतोक्तेः अर्थोऽशब्दः कार्त्स्न्येन अविकल्पितं विकल्पशून्यमेकमेव ज्ञानं ब्रह्मैवार्थो वस्त्वासीत् कदेत्यपेक्षायामाह । अयुगे युगेभ्यः पूर्वं प्रलय इत्यर्थः तथा आदौ यत् कृतयुगं तस्मिंश्च अन्यदापि यदा विवेकनिपुणा ज्ञानिनो भवन्ति तदापि तेषां भेदास्फूर्तेः ॥ २ ॥

तदेव केवलमेकमपि वृहद्ब्रह्म माया बहिरङ्गाख्यस्वशक्तिः फलं फलभोक्तृ स्वीयचित्कणरूपतटस्थशक्तिश्च तद्रूपेण द्विविधं संसारमभवत् द्विविधमपि तद्विशिनष्टि । निर्विकल्पितं ब्रह्मतो निर्भेदं तयोस्तच्छक्तित्वात् वाङ्मनसयोरगोचरं माया या अव्यक्तस्वरूपत्वात् जीवस्यातिसौक्ष्म्यात् सत्यं द्वयोरेव नित्यत्वात् ॥ ३ ॥

तयोर्द्विधाभूतयोरंशयोर्मध्ये एकतरो मायाख्यो ह्यर्थः प्रकृतिः सा चोभयात्मिका कार्यकारणरूपिणी अन्यतमोऽर्थः ज्ञानं ज्ञानस्वरूपः स च पुरुषो जीवः ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वानर्थहेतुरात्मविभ्रमश्चेत्तर्हि कस्तन्निवृत्त्युपाय इत्याकाङ्क्षायां परमेश्वरतच्छक्तिभूतप्रकृतिपुरुषविवेकयोगिनितपरमेश्वरभजनजन्यतत्कृपाकटाक्षेण तन्निवृत्तिरित्याह । अथ ते इति । विकल्पः देहगेहादौ यो भ्रमः पूर्वाध्यायान्ते दर्शितोऽहमिति ममेति स्वाधीनोऽस्मीत्येवं भूतस्तम् ॥ १ ॥

अयुगे युगेभ्यः प्राक् प्रलये ज्ञानं जीवः अर्थोऽर्थः प्रकृतिश्च अविकल्पितमविभक्तमेकं कारणं ब्रह्मैवासीत् यत आयन्ता द्विवेकनिपुणाः आदौ कृतयुगे ध्यायन्तीति शेषः । प्रकृतिपुरुषविशिष्टमेकं ब्रह्मासीदित्यर्थः ॥ २ ॥

तद् ब्रह्म मायाफलरूपेण प्रकृतिपुरुषरूपेण द्विधा समभवत् ॥ ३ ॥

एतयोः मायाफलयोरेकतरः अर्थः प्रकृतिः या उभयात्मिका कार्यकारणरूपिणी सा अन्यतमो भावः ज्ञानं जीवः पुरुषः अभिधीयते सः ॥ ४ ॥

भाषा टीका ।

श्रीभगवान् उवाच इसके अनन्तर पूर्वाचार्यों के निश्चय किये हुये सांख्य शास्त्रको मैं कहूंगा जिसके जानने से

तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च[1] ॥ ५ ॥
तेभ्यः समभवत्सूत्रं[2] महान्सूत्रेण संयुतः ।
ततो विकुर्वतो जातो योऽहङ्कारो[3] विमोहनः ॥ ६ ॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ।
तन्मात्रेन्द्रियमनसां कारणं चिदाचिन्मयः ॥ ७ ॥
[4] अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च ।
तैजसाद्देवता आसन्नेकादश च वैकृतात् ॥ ८ ॥

भाषा टीका ।

पुरुष की नाना प्रकार की भेद भ्रम की बुद्धि दूर होती है ॥ १ ॥

पूर्व काल में युगों के होने के पहिले ही तथा सत्य युग में जिस वख़त की ज्ञान में प्रवीण मनुष्य थे तब एक अर्थ तथा एक भेद रहित ब्रह्म रूप ज्ञान ये दो पदार्थ थे ॥ २ ॥

यह जो भेद रहित केवल वाणी मनके अगोचर सत्य वस्तु पदार्थ है वही तथा फल रूप से दो प्रकार का होगया ॥ ३ ॥

उन दोनों में एक पदार्थ तो दो प्रकार की प्रकृति है दूसरा पदार्थ ज्ञान है जोकि पुरुष कहा जाता है ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणा अभिव्यक्ता बभूवुः मया परमेश्वरेण पुरुषानुमतेन तत्र पुरुषस्य कः सम्बन्धः जीवादृष्टप्रयुक्तत्वात्सृष्टेः पुरुषानुमतत्वम् यद्वा ममैव प्रकृतीक्षणरूपा या पुरुषावस्था तदनुमतेन तद्द्वारेणेत्यर्थः ॥ ५ ॥

सूत्रं क्रियाशक्तिमान् प्रथमो विकारः ततो महान् ज्ञानशक्तिः तत्त्वतो महानेव प्रथमो विकारः प्रसिद्धस्तत्राऽऽह स च ज्ञानक्रियागर्भत्वात्सूत्रेण संयुतो न पृथक् एकमेव तत्त्वं क्रियाज्ञानशक्तिभ्यां द्विधोच्यत इत्यर्थः । विमोहनो जीवस्य भ्रमहेतुः स जातः ॥ ६ ॥

एतच्च तन्मात्रादीनां कारणम् मनःशब्देन देवानामप्युपलक्षणम् चिदचिन्मयः । चिदाभासव्याप्तत्वादुभयग्रन्थिरूप इति जीवोपाधित्वं दर्शितम् यद्यपि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्यादिश्रुतेरन्नमयं हि सौम्य मन" इत्यादिश्रुतेश्च प्रथमं भूतानि जायन्ते तेभ्यश्चापञ्चीकृतेभ्यः प्राणादिक्रमेण समष्ट्यात्मकं लिङ्गशरीरं पञ्चीकृतेभ्यश्च ब्रह्माण्डं तस्मिन् वैराजस्तदन्तर्यामी लीलाविग्रहः क्षीराब्धिशायी श्रीनारायणस्तन्नाभिपद्मे च वैराजस्य भोगविग्रहश्चतुराननस्ततो यथाऽवसरमन्येषां जीवानामाविर्भाव इति प्रक्रिया तथाऽपि चिदभिव्यक्तिपूर्वकोऽहङ्कारस्ततो भूतेन्द्रियादिव्यवहार इत्येतावता महदादिक्रमेण सृष्टिरुच्यते तथा चोक्तम् —

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ।
उपायः सोऽवताराय नास्ति भेदः कथञ्चनेति ॥ ७ ॥

तस्मात्त्रिविधात्त्रिविधप्रपञ्चोत्पत्तिं दर्शयति । अर्थ इति । तन्मात्रिकाच्छब्दादितन्मात्रकारणात्तामसात्तद्द्वारा अर्थो महाभूतरूपो जज्ञे बभूव भूतानामावरणस्वभावत्वात् इन्द्रियाणि दश तैजसाद्राजसात् तेषां प्रवृत्तिस्वभावत्वात् वैकृतात्सात्त्विकाद्देवताः दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः । चन्द्रश्चैकादश चशब्दान्मनश्च तेषां प्रकाशस्वभावत्वात् ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

मया महत्स्रष्टृमहापुरुषरूपेण । पूर्वार्थे मयेत्यस्मच्छब्दस्य स्वांशे पुरुषावतारे लक्षणा अनुमतशब्दस्यादृष्टे सत्यपरितोषाद्यद्वेति "अभवन्" व्यक्ता बभूवुः चेति समुच्चयार्थः ॥ ५ ॥

संयुतं सह ततः सूत्रात् । भ्रमहेतुर्देहाध्यासहेतुः ॥ ६ ॥

त्रिवृत्त्वे हेतुः यत इति तन्मात्रहेतुत्वात्तामसः इन्द्रियहेतुत्वात्तैजसः । मनोदेवताहेतुत्वाद्वैकारिकः विगतः कारो विक्षेपो यस्मात् स विकारः सत्त्वं तत्प्रधानत्वात् सात्त्विक इत्यर्थः । जीवोपाधित्वं जीवस्य सुखदुःखादिहेतुत्वम् । वेदान्तसांख्ययोः सृष्टिप्रक्रियायां विरोधमाशङ्क्य समाधत्ते । यद्यपीति । अत्र भवं पृथिवी कार्यम् अपञ्चीकृतेभ्यः पञ्चीकरणावस्थासम्पन्नेभ्यः पञ्चीकरणञ्च वृद्धैरुक्तम् । द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः । स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते इति । लिङ्गशरीरं सप्तदशतत्त्वात्मकम् । तदुक्तं शङ्कराचार्यैः । पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति । तस्मिन् ब्रह्माण्डे । क्षीराब्धिशायीत्यत्र गर्भोदशायीति वाच्यं प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितमित्यत्र तथोपगमात् । वैराजस्य स्थूलब्रह्मणः । भोगार्थं विग्रहः सूक्ष्मो हिरण्यगर्भः । ततो ब्रह्मणः । चिदभिव्यक्तिः महत्तत्त्वापरपर्यायचित्तस्य ज्ञानरूपपरिणामः । एतावता व्यवहारमात्रप्रदर्शनेन । तथा चोक्तं वार्त्तिककृद्भिः । मृल्लोहेति । मृदादिभिर्दृष्टान्तरूपैर्या वेदान्ते सृष्टिरुक्ताऽन्यथा वा सांख्यसृष्टिरुक्ता सा त्वात्मावताराय भवतु कथञ्चन नास्ति यथैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं यथैकेन

१ चेति । २ महत्सूत्रेण च संयुतम् । ३ विमोहकः । ४ अर्थस्तन्मात्रको जज्ञे इति वि० पाठः ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

लोहमणिना विज्ञातेन सर्वं लोहमयं विज्ञातं यथाग्नेः क्षुद्राः विस्फुलिङ्गा व्युच्चरन्तीत्यादिश्रुतेरित्यर्थः ॥ ७ ॥

तद्द्वारा तन्मात्रद्वारा । तामसाहङ्कारकार्यत्वे हेतुः भूतानामिति । तेषामिन्द्रियाणाम् । तेषां देवतामनसाम् ॥ ८ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गुणाः अभवन् विषयाः अभवन् पुरुषानुमतेनेति । अनुशब्दः सन्निधिमात्रपरः ॥ ५ ॥

तेभ्यः गुणेभ्यः तद्युक्तात्प्रधानादित्यर्थः सूत्रकार्यजातव्यधारकतया सूत्रेण संयुतः सूत्रस्वभावकत्वेनयुक्तः ॥ ६ ॥

चिदचिन्मय इति अचित्तत्त्वानां तिलतैलन्यायेन चिद्गर्भत्वप्रदर्शनार्थमेव त्रिवृतः चिदचिन्मयत्वमुक्तम् ॥ ७ ॥

तामसादहंकारात्तन्मात्रिकोऽर्थः तन्मात्राणि पञ्चभूतानि च जातानीत्यर्थः ॥ ८—९ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उभयात्मिकेत्युक्तामुभयात्मकतामुपपादयति । तमो रजः सत्त्वमित्यादिना । प्रकृतेर्ये गुणास्तमआदयः साम्यापन्नास्ते मयाकालरूपिणा संक्षोभ्यमाणायाः प्रकृतेरभवन्नभिव्यक्ता बभूवुरित्यर्थः । विषमा बभूवुरिति विवक्षितोऽर्थः । सङ्क्षोभयितृत्वहेतुतयात्मानं विशिनष्टि । पुरुषानुमतेनेति । "मतिबुद्धिपूजार्थेभ्यश्च" इति कर्तरि वर्त्तमाने क्तः पुरुषान् जीवाननुमतेनानुजिघृक्षतेत्यर्थः । मदाराधनोपयुक्तकरणकलेवरादिप्रदानेनानुग्रहीतुमिति भावः ॥ ५ ॥

अथ तेभ्यो गुणेभ्यः सूत्रं समभवत् किं तत्सूत्रमित्यत आह । महानिति । तस्मिन्सूत्रशब्दप्रवृत्तौ निमित्तमाह । सूत्रेण बहुमणीनां सूत्रमिव बहुकार्याणां धारकत्वेन संयतः युक्तः ततो महत्तत्त्वाद्विकुर्वतो विक्रियमाणात् योऽहङ्कार इति प्रसिद्धः सोऽभूत् तं विशिनष्टि । विमोहनः देहात्मभ्रमादिहेतुः ॥ ६ ॥

स चाहङ्कारो वैकारिकादिरूपेण त्रिवृत्त्रिधा वर्तत इति तथा तन्मात्राणां शब्दादीनां सात्त्विकानामिन्द्रियाणां मनसश्च कारणभूतः चिदचिन्मयः अचित्तत्त्वानां तिलतैलन्यायेन चिद्गर्भत्वप्रदर्शनार्थमहङ्कारस्य चिदचिन्मयत्वमुक्तम् ॥ ७ ॥

तन्मात्रिकात्तद्वाचतन्मात्रकारणात्तामसाहङ्कारादर्थः आकाशादिमहाभूतपञ्चकरूपोऽर्थो जज्ञे इन्द्रियाणि चेति चरत्वर्थः । देवताः देवतानामधिष्ठेयत्वाद्देवताशब्दवाच्यानीन्द्रियाण्येकादश तैजसाद्राजसाहङ्कारसहकृतात् वैकृतात्सात्त्विकाहङ्कारादासन् जज्ञिरे ॥ ८ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रतिज्ञातसांख्यप्रवचनं विना ज्ञानार्थैक्याविकथनं किं केन सृष्टमित्यतस्तत्स्वरूपं वक्ति । तमोरज इत्यादिरेभ्य एव सांख्य इत्यनेन—

वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत ॥
त्रिगुणात्मा समुद्दिष्टः प्रायः सत्त्वात्मकस्तथा ।

इत्यादिव्याख्यातमपि मन्दमत्युपकाराय किञ्चिद्व्याक्रियते तथाहि सृष्ट्यादौ मत्तो गुणत्रयाभिमानिन्या लक्ष्म्या पुरुषप्रकृती ब्रह्मगायत्र्याख्ये जाते वाशब्दश्चार्थे तदनु मया लक्ष्म्या च पुरुषानुमतेन पुरुषनाम्नो ब्रह्मणः स्वभर्तुः प्रेरणया च क्षोभ्यमाणायाश्चतस्याः प्रकृतेः तमो रजः सत्त्वमिति गुणाभिमानानि त्रीणि रूपाणि गायत्रीसावित्रीसरस्वतीसंज्ञान्यभवन् ॥ ५ ॥

ततः किमभूदत्राह । तेभ्यः समभवत्सूत्रमिति अत्र भावः तेषु रूपेषु पुरुषनाम्ना ब्रह्मणा गर्भाधाने कृते सति तेभ्यः पृथक् पृथक् जातं पश्चादैक्यमापन्नं सूत्रमभवत् कीदृशं मत्सूत्रेण च संयुतं मम सर्वाधारेण रूपेण संयुतं सर्वजगदाधारवायुतत्त्वमुत्पन्नमित्यर्थः । वायुना वै गौतम सूत्रेणेत्यादिना वायोः सर्वाधारत्वं प्रसिद्धम् अत्र सूत्रशब्देन महत्तत्त्वाभिमानिनो ब्रह्मणो द्वितीयं चतुर्मुखाख्यं रूपं वायुना सहोत्पन्नमिति ज्ञातव्यं सूत्रात्मना महांश्चापि इति प्रमाणानुगुण्यात् ततो विकुर्वत इत्यस्यायमर्थः तस्माद्विकुर्वतः सृष्टिकामात्सूत्रनाम्नो ब्रह्मणः स जज्ञे यो विमोहकोऽहङ्कारोऽनन्तः अयमेव सूत्रनाम्नो वायोरपि जज्ञे विकुर्वतः सूत्रनाम्नो ब्रह्मणो यो विमोहको वैकारिको रुद्रः सोऽपि जज्ञे पुनश्च विकुर्वतः सूत्रनाम्नो वायोर्विमोहकस्तैजसः रुद्रः स जज्ञे यो ब्रह्मजोऽनन्तः तस्मादपि विकुर्वतः यो विमोहकोऽहङ्कारस्तामसः स जज्ञे इति वैकारिको ब्रह्मजस्तैजसो वायुजस्तामसोऽनन्तज इति रुद्रस्त्रिधा जातः ॥ ६ ॥

इदमेव स्पष्टयति । वैकारिक इति । वैविध्यस्य प्रयोजकमाह । तन्मात्रेति । तन्मात्रशब्देन पञ्चभूतानि वाचितानि श्रोत्रादीन्द्रियाणि मनःशब्देन इन्द्रियाभिमानिनो देवाश्चैषां कारणं तामसाद्यहंकारत्रयं त्रिविधो रुद्रः कीदृशः चिदचिन्मयः वशीकृतचेतनाचेतनप्रपञ्चः "चिदचिद्वशे सर्वं स रुद्रश्चिदचिन्मयः" इति मानम् ॥ ७ ॥

उक्तमेव विवृणोति अर्थ इति । तामसादहङ्कारात्तन्मात्रकोऽर्थः पञ्चभूतलक्षणः तैजसाहङ्कारादिन्द्रियाणि वैकृताद्वैकारिकान्मनसा सह तदभिमानिन्य एकादशदेवता आसन् ॥ ८ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मया कालाख्यचेष्टात्मकेन महास्रष्टृसहायपुरुषरूपेण लीलासाधकभक्तजीववृन्दार्थकृतयेक्षया प्रक्षोभ्यमाणायास्तेन उद्बुद्धेन पुरुषेषु सर्वेषु जीवेष्वनुगतेन मतेन ज्ञानेन वासनारूपेण पूर्वोक्तस्वभावाख्येन विशेषेण प्रक्षोभ्यमाणायाः प्रकृतेः सकाशात्तमआदयो गुणा अभवन् व्यक्तीभूता इत्यर्थः । चेति पाठेऽपि समुच्चयार्थः ॥ ५ ॥

ततस्तेभ्यः सूत्रेण संयुतः स महान् समभवत् जातः इत्यनयोर्भेद एव दर्शितः तदेवमीश्वरजीवप्रकृतिस्वभावसूत्रमहदाख्यानि षडेव तत्त्वानि महापुरुषस्य मायायाश्च बृहदाख्यसर्वैश्वर्यगुणाश्रयस्य प्रकृतावन्तर्भावात् देवतानां तत्त्वान्तर्भावाद् अहङ्कारादयो द्वाविंशतिरित्यष्टाविंशतिः ॥ ६ ॥

मया सङ्क्षोभिता भावाः सर्वे संहत्य कारिणः ।
अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ॥ ९ ॥
तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ ।
मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चाऽऽत्मभूः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वैकारिक इति तैः तत्र यद्यपीत्यादौ पुराणैकानिश्चितश्रुत्यर्थानां त्विदं मतम् अहङ्कारोपाधेरेवात्मन आकाशः सम्भूतः मनसोऽङ्गमयत्वं चाभिव्यक्तिविशेषापेक्षयेत्यादिज्ञेयमिति इमात्तोऽश्रेवमेवार्थं मन्यन्ते युक्तं च तत् यथाक्रम—

वेदार्थादधिकं मन्ये पुराणार्थं वरानने ॥
वेदाः प्रतिष्ठिता देवि ! पुराणे नात्र संशयः ॥
पुराणमन्यथा कृत्वा तिर्यग्योनिमवाप्नुयात् ।
सुदान्तोऽपि सुशान्तोऽपि न गतिं प्राप्नुयात्क्वचित् ॥
यो वेद चतुरो वेदान् साङ्गोपनिषदो द्विजाः ! ।
पुराणं नैव जानाति नच स स्याद्विचक्षणः ॥

इत्यादि

भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः ॥

इत्यादि च क्षीराब्धिशायीत्यत्र गर्भोदशायीति वाच्यं चित्तं महत्तत्त्वमिति ॥ ७—८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मया महत्स्रष्टृमहापुरुषस्वरूपेण पुरुषस्य जीवस्यानुमतेन प्रसमीक्षितस्य जीवस्य प्राक्तनकर्मज्ञानभक्तिसाधनानि सम्पाद्यन्तामित्यात्मकेन सृष्टेर्जीवादृष्टप्रयुक्तत्वात् ॥ ५ ॥

सूत्रं क्रियाशक्तिमान् प्रथमो विकारः ननु प्रथमो विकारो ज्ञानशक्तिर्महानिति प्रसिद्धस्तत्राह । महान् यः प्रसिद्धः स हि सूत्रेण संयुक्तः तत्र तत्र सूत्रसहित एव स ज्ञेय इत्यर्थः विमोहनः जीवस्य भ्रमहेतुः ॥ ६ ॥

अहमहङ्कारः त्रिवृत् वृत्तित्रयवान् तन्मात्रेन्द्रियमनसामिति क्रमेण यथासंख्यं चिदचिन्मय इति स्वयमचिन्मयोऽपि जीवोपाधित्वेन तदैक्याच्चिज्जडग्रन्थिरूपत्वाच्चिदचिन्मयः ॥ ७ ॥

तन्मात्रिकात् तन्मात्रकारणात्तामसादर्थं आकाशादिभूतपञ्चकं जज्ञे तस्यावरणस्वाभावत्वात्तामसत्वं कारणस्य कार्यनिवासरूपत्वात् तस्य निवास इत्यर्थे बुभुक्षणकठजिलेत्यादिना कुसुवादित्वात् ठचा तन्मात्रिक इति सिद्धम् इन्द्रियाणि दश तैजसात् तेषां प्रवृत्तिस्वभावत्वात्तैजसत्वं वैकृतात् सात्त्विकात् देवता दिग्वाताद्याः चकारात्मनश्च तेषां प्रकाशस्वभावात् सात्त्विकत्वम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु यदेकं पुनर्यद्द्वयं प्रकृतिपुरुषरूपेण द्विधा स्यात्ततः सम्भवत्तत्त्वं किमिति शङ्कां निराकर्तुमाह । मया प्रक्षोभ्यमाणायाः इति प्रकृतेस्तमआदयो गुणाः अभवन् अभिव्यक्ता बभूवुः पुरुषानुमतेन जीवानुग्रहकर्त्रा ॥ ५ ॥

तेभ्यो गुणेभ्यः सूत्रं महत एव पूर्वं रूपं समभवत् ततः सूत्रेण संयुतो महान् समभवत् ततो महतः विमोहनः देहात्ममोहादिहेतुः ॥ ६ ॥

चिदचिन्मयः जीवसमूहगर्भः ॥ ७ ॥

तन्मात्रिकात् तन्मात्रकारणात् तामसात् अर्थः महाभूतपञ्चकरूपः जज्ञेऽभूत् तामसाहङ्कारात् शब्दतन्मात्रं तत आकाशस्ततः स्पर्शतन्मात्रं ततो वायुस्ततो रूपतन्मात्रं ततस्तेजस्ततो रसतन्मात्रं ततो जलं ततो गन्धतन्मात्रं ततो भूमिः तैजसात् दशेन्द्रियाणि वैकृतात्सात्त्विकात् दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः चन्द्रश्चेत्येकादश देवता चकारान्मनः ॥ ८ ॥

---

भाषा टीका ।

जीव की कर्म की अनुमति को देखकर मैंने प्रकृतिको क्षोभित किया तब तमः रजः सत्त्व ये तीन प्रकृति के गुण होते भये ॥ ५ ॥

तिन गुणों से क्रियाशक्तिवाला सूत्र भया उस से ज्ञान शक्ति वाला महत्तत्त्व भया फिर महत्तत्त्व के विकार होने से जीवको मोहित करने वाला अहङ्कार पैदा भया ॥ ६ ॥

यह अहङ्कार सात्विक राजस तामस रूप से तीन प्रकार से है वही क्रम से पञ्चभूतों की तनमात्रा तथा ज्ञानेंद्रिय कर्मेंद्रिय और मन इनका कारण है ॥ ७ ॥

तिसमें तामस अहङ्कार से शब्दादि से तन्मात्राओं से आकाशादिक पञ्च भूत पैदा भये और दश इन्द्रिय राजस से भये सात्विक से इंद्रियों के देवता भये ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मम वैराजान्तर्यामिणः ॥ ९ ॥

सलिले संस्थितिर्यस्य तस्मिन्सलिलसंस्थिते तस्मिन्सलिलसंस्थितावण्डे श्रीनारायणरूपो लीलाविग्रहेण समभवं स्थित इत्यर्थः विश्वाख्यं लोककारणभूतम् तत्र चाऽऽत्मभूश्चतुराननरूपभोगविग्रहेण पुनर्वैराज एव तस्मिन्नाविर्भूत इत्यर्थः ॥ १० ॥

सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् ।
लोकान् सपालान्विश्वात्मा भूर्भुवः स्वरिति त्रिधा ॥ ११ ॥
देवानामोक आसीत्स्वर्भूतानां च भुवः पदम् ।
मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात् परम् ॥ १२ ॥
अधोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः ।
त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ॥ १३ ॥
योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ।
महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ १४ ॥
मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ।
गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १५ ॥
अणुर्बृहत्कृशः स्थूलो यो यो भावः प्रसिध्यति ।
[1] सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रजसा युक्तो मदनुग्रहात्तपसाऽसृजत् भूरतलादिसहिता भुवः अन्तरिक्षलोकः स्वः स्वर्लोकः महर्लोकादेरप्युपलक्षणम् ११

लोकसृष्टिप्रयोजनमाह । देवानामिति सार्धेन ओको निवासः पदं स्थानम् त्रितयात्परं महर्लोकादि ॥ १२ ॥

भूमेरधः अतलादि एवं व्यवस्थायां कारणमाह सार्धेन । त्रिलोक्यां पातालादिसहितायाम् ॥ १३ ॥

योगादितारतम्येन यथोत्तरं महर्लोकादयः मद्गतिर्वैकुण्ठलोकः ॥ १४ ॥

तत्र तु मद्गतिव्यतिरेकेणेतरा गतयश्चाध्रुवा इत्याह । वैराग्यार्थम् मया कालशक्तिना धात्रा परमेश्वरेण कर्मफलप्रदेन हेतुभूतेन गुणप्रवाहे संसारे उन्मज्जत्सत्यलोकमुत्तमगतीः प्राप्नोति पुनर्निमज्जत्स्थावरं नीचा गतीः प्राप्नोति ॥ १५ ॥

सृष्टिनिरूपणस्याद्वितीयात्मप्रतिपत्त्यर्थत्वात्तत्प्रतिपादनाय कारणेन कार्यस्य व्याप्तिमाह । अणुरिति । उभयेन संयुक्तो व्याप्तः तदेवाऽऽह । प्रकृत्येति ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

स्वयं भगवतस्तद्वासनाऽभावाद्वैराजान्तर्यामिणेति व्याख्यातम् ॥ ९ ॥

तत्र च पद्ये ॥ १० ॥

लोकान् भुवनानि अग्रे त्रितयात् परमित्युक्तेरुपलक्षणमित्युक्तम् ॥ ११ ॥

प्रयोजनं देवादीनामवस्थितिलक्षणं योगादिभिः सिद्धानाम् ॥ १२ ॥

अथ श्लोकत्रयं । एवं व्यवस्थायां देवादीनां तत्तत्स्थाननियमलक्षणायाम् । त्रिलोक्यामिति सार्धकम् । कर्मणां गार्हस्थ्यधर्माणां गतयः फलात्मकानि स्थानानि योगादितारतम्येनेति तत्र योगोऽष्टाङ्गस्तस्य तारतम्येन महर्लोकादि सर्वम् ॥ १३ ॥

तपो वानप्रस्थत्वं ब्रह्मचर्यं च तत्रोपकुर्वाणब्रह्मचर्येण सह नैष्ठिकेन तेन जनः । वानप्रस्थस्वतपसा तपोलोकः । न्यासेन सत्यलोको गतिरिति व्याख्येयम् । तत्र व्रजन्तीति वाक्यात् तत्संकुलं हरिपदानतिमात्रहृष्टैरित्यत्र तावन्मात्रेण हृष्टैर्भक्तानां विमानैर्नतु कर्मादि प्राप्यैरिति स्वस्यैव व्याख्यानाल्लोकप्रकरणाच्च मद्गतिर्वैकुण्ठलोक इति व्याख्यातम् ॥ १४ ॥

तत्र तासु गतिषु मध्ये कर्मयुक्तं कर्मफलेन योजितमित्यर्थः । "फलमत उपपत्तेः" इति न्यायात् ॥ १५ ॥

अद्वितीयेति । अभिन्नात्मज्ञानप्रयोजनकत्वात् तत्प्रतिपादनाय अद्वितीयात्मप्रतिपादनाय ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ॥

सम्भवं चतुर्मुखरूपयो सम्भवं तत्प्रकारं विवृणोति । ममनाड्यामिति । विश्वसृयं जगदाख्यम् ॥ १० ॥

भुवः अन्तरिक्षम् ॥ ११—१३ ॥

योगस्य प्राणायामाभ्यासादिरूपस्य न्यासस्य संन्यासाश्रमस्य ब्राह्मसंन्यासिनां स्मृतमिति वचनात् मद्गतिः परमपदप्राप्तिः ॥ १४ ॥

धात्रा आराधनभूतकर्मयुक्तमिदं जगत् इति चिदंशो विवक्षितः ॥ १५ । १६ ॥

१ सर्वं ह्युभयसंयुक्तं इति वि० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मयेति । सर्वे भावाः महदादयः मया सञ्चोदिताः अन्तरात्मतया प्रविश्य मया प्रेरिताः संहत्य मिलित्वा कारिणः कार्योत्पादनक्षमाः अनेनात्ममप्रेरणात् प्रागसंहत्याऽकारित्वं सूचितं तथा चोक्तं "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विनेति,," । अण्डं विशिनष्टि । ममोत्तममायतनं स्थानम् ॥ ९ ॥

सलिलमध्यस्थे तस्मिन्नण्डेऽहमभवं चतुर्मुखरूपेण समभवं तत्प्रकारं विवृणोति । ममेति । विश्वाख्यं जगदाख्यं पद्ममभूत्तत्र पद्मे आत्मभूश्चतुर्मुखः समभूत् ॥ १० ॥

सः आत्मभूः रजसा युक्तस्तपसा चातो मदनुग्रहात्तपोबलात् लोकानसृजत् लोकानेवाह । भूर्भुवः स्वरिति त्रिधा । भूर्भुवः स्वरिति पदत्रयमव्ययम् ॥ ११ ॥

तत्र स्वः स्वर्लोकः देवानामोकः स्थानमभूत् भुवोऽन्तरिक्षं भूतानां एवं स्थानमासीन्मर्त्यादीनां भूर्लोकः पदमासीत् सिद्धानां भृग्वादीनां ब्रह्मर्षीणां त्रितयाल्लोकत्रयात्परं महर्जनादिकं पदमासीत् १२

असुराणां नागानां लोकः स्थानं भूमेरधस्तादतलादिकमसृजत् असुरादीनां भूविवररूपत्वेन भूम्यामेवान्तर्भावात् महरादीनां सुखप्रधानत्वेन स्वःशब्देनैव संग्रहात्त्रिलोकत्वव्यवहारः अवान्तरलोकविवक्षया तु लोकानां चतुर्दशत्वव्यवहारः एवं च सर्वेऽपि लोकाः कर्मणा प्राप्याख्रिलोकयन्तर्गता एवेत्याह त्रिलोक्यामिति । त्रिगुणात्मनां त्रयो गुणाः सत्त्वादयो येषां तेषामात्मनां क्षेत्रज्ञानां कर्मणां सात्त्विकराजसतामसकर्मणां गतयः फलभूतलोकप्राप्तयः त्रिलोक्यामेव ब्रह्माण्डान्तर एवेत्यर्थः ॥१३॥

तदुपपादयति । योगस्येति । योगस्य प्राणायामादिरूपस्य सन्यासाश्रमस्य च गतयः अमलाः निर्मलाः सात्त्विक्यः ता एवाह महर्जनस्तपः सत्यमिति । यदि कर्मणामेता गतयस्तर्हि त्वद्भक्तेः का गतिरित्यत आह । भक्तियोगस्य सद्गतिरिति । मद्गतिः प्रकृतेः पूर्वोत्तराभ्याम् सम्बध्यते मद्भक्तियोगस्य मद्गतिः परमपदप्राप्तिः फलमित्यर्थः ॥ १४ ॥

इत्थं महदादिसमष्टिव्यष्टिरूपेणोभयात्मना प्रकृतिरुपपादिता विधा समभवद् वृत्तादिति प्रकृतिपुरुषशरीरकस्य ब्रह्मणः कारणत्वमुक्तं ननु प्रकृतेरेव कृत्स्नसमष्टिव्यष्टितत्त्वात्मना परिणामे सति कथं विशिष्टस्योपादानत्वसिद्धिः न युज्यते च विशिष्टोपादानत्वम् अन्यथा विशेष्यांशेऽपि विकाराश्रयत्वापत्तेरित्याशङ्कायां विशिष्टोपादानत्वं साधयितुं तावद्विशेष्यांशस्योपादानत्वं नाम सद्वारकावस्थाश्रयत्वं प्रसक्तत्वं प्रकृतिपुरुषनियमनभेदरूपमेवेत्यभिप्रेत्याह । मयेति । मया धात्रा अन्तः प्रविश्य प्रशासनेन भर्त्रा कालात्मना कालशरीरकेण बहिः कालरूपेण चरता च गुणपरिणामात्मके प्रकृतिमण्डले उन्मज्जति उत्पद्यते निमज्जति विनश्यति धात्रेत्यनेनात्मनो धारकतावस्थानिर्वाहकत्वप्रतीतेर्नियमनभेदप्रतीतेश्च सद्वारकाऽद्वारकोभयाविधावस्थाश्रयत्वसिद्धिः नियन्तृत्वप्रतीतेश्च निमित्तकारणत्वसिद्धिः तत्र सद्वारकावस्थाश्रयत्वेन स्वरूपतः स्वभावतश्च न विकारः सर्वावस्थचेतनाचेतननियमनभेदस्य सद्वारकत्वेऽपि न तस्य स्वरूपस्वभावविकारात्मकत्वं यद्यपि तन्नियमनं तद्गतावस्थानुकूलसंकल्परूपज्ञानावस्थारूपमेवेति स्वभावतो विकारस्वरूपत्वमेव तथापि सङ्कोचविकासात्मकजीवधर्मभूतज्ञानविकारवत् हेयविकारात्मकं किं तु निरतिशयोत्कर्षावहकल्याणगुणात्मकत्वमेवेति तात्पर्यं कर्मयुक्तमित्यनेन नियमनस्य कर्मानुरूपत्वप्रतीतेरात्मनो वैषम्यनैर्घृण्याद्यभावः फलितः ॥ १५ ॥

इदं जगदित्यनेन किमचेतनं विवक्षितं किं च चेतनमित्यत्रोभयमपीत्यभिप्रेत्य तत्र हेतुत्वेन चेतनाचेतनयोर्मिथोऽनपायित्वमाह । अणुरिति । यो यो भावोऽर्थः प्रसिद्ध्यति प्रमितो भवति स सर्वोऽपि भावः प्रकृत्या पुरुषेण चेत्युभयेन संयुक्तः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं सृष्टैश्चतुर्विंशतिसंख्यैर्महदादितत्त्वैः किं कृत्यमत्राह । मयेति ॥ ९ ॥

आयतनत्वं दर्शयति । तस्मिन्निति—

चिदानन्दशरीरस्तु प्रविष्टोऽण्डे हरिः स्वयम् तन्नाभेर्भूतदेहोऽभूत्पद्मादपि चतुर्मुखः । चतुर्मुखस्तु सर्वाण्डे व्याप्तदेहो महातपाः । हरिस्तु सर्वव्याप्तोऽपि भूतदेहो न तु क्वचित् । नैवास्य प्राकृतो देहः प्रादुर्भावेष्वपि क्वचित् । इत्यनेन हरेर्भूतदेहो नास्तीति ज्ञायते समभवं समीचीनतया व्याप्तोऽभवं न तूत्पन्नो भवानीत्यर्थः ॥ १० ॥

तपसा ज्ञानेन ॥ ११ ॥

ओको निवासस्थानं त्रितयात्परं महरादिकम् ॥ १२ ॥

कर्मभेदेन त्रिलोक्याः स्थानभेदमाह । त्रिलोक्यामिति ॥१३॥

महर्लोकादिप्राप्तौ किं साधनमत्राह । योगस्येति । मद्गतिर्मत्प्राप्तिः—

> नैव विष्णावभक्तस्य महर्लोकादिका गतिः ।
> भक्त्युद्रेकात्क्रमादूर्ध्वं यावद्विष्णोः प्रवेशनम् ॥
> एवं ज्ञानं विना सापि महर्लोकादिका गतिः ।
> ज्ञानोद्रेकात्क्रमादूर्ध्वं यावद्विष्णोः प्रवेशनम् ॥
> नित्य[1]शो भगवद्रूपस्यापरोक्षेण दर्शनम् ।
> मुहूर्तमात्रं ज्ञानं स्यान्महाज्ञानं ततोऽधिकम् ॥
> ज्ञानेन ब्रह्मलोकः स्यान्महाज्ञानाद्धरेर्गतिः ।
> सदैवाखण्डितं ध्यानं तप इत्युच्यते बुधैः ॥
> अपरोक्षदृशा युक्तं नित्यं परामात्रकालया ।
> अपरोक्षदृशा नित्यमेकमात्रायुजायुतम् ॥
> तच्चतुर्भागया नित्यमपरोक्षदृशा युतम् ।
> पादयोगं समुद्दिष्टं ध्यानं नित्यमखण्डितम् ॥
> पादयोगान्महर्लोको जनलोकस्तु योगतः ।
> तपसस्तु तपोलोकः प्राप्यते नान्यतः क्वचित् ।

इति स्मार्तवाक्येन महर्लोकादिप्राप्तावपि साधनविशेषा अवगन्तव्याः ॥ १४ ॥

---

1 योगस्तपोज्ञानमिति त्रीणि साधनान्युक्तानि महरादिवैकुण्ठान्तानि पञ्चफलान्युक्तानि अतः कथमिति चेत् सत्यं योगपदेन पादयोगः योगश्चेतिद्वयं तपइत्येकं ज्ञानं महाज्ञानं चेतिद्वयं क्रमेण महरादिलोकसाधनानीत्याशयेन तत्साधनपञ्चकमाह नित्यश इत्यादिना ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तियोगरहितस्य का स्थितिरित्याह । मयेति । कालात्मना ज्ञानाद्यात्मना धाम्ना कारकेण मया प्रेरितकर्मयुक्तमिदं जगदेतस्मिन् गुणप्रवाहे उन्मज्जति सृष्टं भवति निमज्जति संहृतं भवति ॥ १५ ॥

तमेव प्रेरणप्रकारं विवृणोति।अणुरिति।अतीतानागतवर्तमानत्वेन यो यो भावः पदार्थः प्रसिध्यति उत्पन्नो वर्तते तत्सर्वमुभयसंयुक्तं मया चित्प्रकृत्या च सरस्वत्या पुरुषेण हिरण्यगर्भेण संयुक्तमस्माभिः प्रविश्य प्रेरितं च यस्मात्तस्मादद्यापि सर्वं इन्द्वीभूय स्थितं दृश्यते ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आयतनमुपाधिः तत्रोत्तमत्वं व्यष्ट्यपेक्षया ॥ ९ ॥

द्वितीयपुरुषरूपेणाहं समभवं सलिलस्य गर्भोदकरूपस्य स्थितियोनिमिति च तन्त्रेणोक्तम् ॥ १०—११ ॥

सिद्धानां योगादिभिः ॥ १२ ॥

त्रिलोक्यामिति सार्द्धकम् पातालादिकभूर्भुवः स्वश्चेति कर्मणां गार्हस्थ्यं धर्माणां तपो वानप्रस्थत्वे ब्रह्मचर्य्यं च तत्र ब्रह्मचर्य्योपकुर्वाणत्वनैष्ठिकत्वभेदेन क्रमान्महर्जनश्च वनस्थत्वेन तपः न्यासेन सत्यं योगतारतम्येन तु सर्वमिति ज्ञेयं मद्गतिरिति तैः भक्तियोगप्राप्यत्वेन वक्ष्यमाणं यत्रव्रजन्तीत्यादिवाक्यसाहाय्यात् लोकप्रकरणाच्च उक्तं च तृतीये देवान् प्रति ब्रह्मणैव तत्संकुलं हरिपदानतिमात्रदृष्टैरित्यादि टीका च तावन्मात्रेण दृष्टैः कर्तॄणां विमानैस्तु कर्मादिप्राप्यैरित्येषा एवमेव श्रुतिश्च "परीक्ष्य लोकान् कर्मजितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेने"ति अत्राप्यकृत इत्यस्य विशेष्यं लोक इत्येव तत्प्रसक्ते:— ईश्वरः सर्वभूतानामित्यादौ

तमेव शरणं गच्छ सर्वभावेन भारत ! ।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ।

इति श्रीभगवदुपनिषत्सु ॥ १३ ॥ १४ ॥

मया कर्त्रा इदं जगत् कर्मयुक्तं कर्मफलेन योजितमित्यर्थः "फलमत उपपत्तेः" इति न्यायात् ॥ १५ ॥ १७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भावाः सूक्ष्मादयः ॥ ९ ॥

सलिलस्य गर्भोदरूपस्य स्थितियस्त्र तस्मिन्नण्डे अहं गर्भोदशायिरूपः द्वितीयः पुरुषः समभवं स्थित इत्यर्थः । विश्वाख्यं लोककारणभूतं तत्रात्मभूर्ब्रह्मा वैराज एव भोगविग्रहः पुनश्चतुराननोऽभूदित्यर्थः ॥ १०—१२ ॥

कर्मणां तद्वतां योगस्याष्टाङ्गस्य न्यासस्य ज्ञानस्येति एतत्त्रितयवतां महरादयश्चत्वारो लोकाः गतयः प्राप्या मद्गतिर्वैकुण्ठलोकः भक्तियोगस्य निर्गुणस्य तद्वतां निर्गुणानां प्राप्योऽपि वैकुण्ठलोको निर्गुण एवेति भावः ॥ १३ ॥ १४ ॥

गुणमया गतयस्तु चला एवत्याह । मया कालशक्तिना धाम्ना परमेश्वरेण कर्मफलप्रदेन इदं जगत्सृष्टमिति शेषः गुणप्रवाहे संसारे उन्मज्जति आसत्यलोकमुत्तमा गतीः प्राप्नोति पुनर्निमज्जति आस्थावरं नीचा गतीः प्राप्नोति ॥ १५ ॥

कारणात् कार्यस्य व्याप्तिमाह । अणुरिति । भावः कार्यभूतः पदार्थः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सलिले स्थितिर्यस्य तस्मिन् सलिलस्थितावण्डे अहं सर्वकारणरूपेण समभवं मम नाभ्यां पद्ममभूत् तत्रात्मभूर्ब्रह्माऽभूत् ॥ १० ॥

स आत्मभूः रजसा युक्तः मदनुग्रहात्तपसा भूर्भुवः स्वरिति त्रिधा लोकानसृजत अवशिष्टलोकसृष्टेरप्यन्तर्भावोऽत्र सम्भवति भूर्लोके तलादीनामन्तर्भावः स्वर्गादिसत्यान्तपरः ॥ ११ ॥

लोकसृष्टिप्रयोजनं दर्शयन् चतुर्दशलोकपदं सूचयति । देवानामिति सार्धेन त्रितयात्परं महर्लोकादि ॥ १२ ॥

अधोऽतलादि केवलाश्रमधर्मनिष्ठानां भक्तिनिष्ठानां च लोकविभागं दर्शयन् सप्तलोकपक्षं सूचयति । त्रिलोक्यामिति सार्द्धेन त्रिलोक्यां सर्वाः ब्रह्मचर्याद्याश्रमत्रयव्यतिरिक्तविषयाः गृहाश्रमविषयाः ॥ १३ ॥

योगस्य ब्रह्मचारिधर्मस्य तपसो वानप्रस्थधर्मस्य न्यासस्य संन्यासिधर्मस्य भक्तियोगस्य तु मद्गतिः मद्भावापत्तिः ज्ञानस्य भक्तावन्तर्भावः ॥ १४ ॥

तत्र मद्गतिव्यतिरिक्ताः सर्वाः गतयः आगमापायिन्योऽनित्यभूतजगदन्तर्गतत्वादित्याशयेनाह । मयेति । कालात्मना कालशक्तिना धाम्ना परमेश्वरेण मया हेतुभूतेन गुणप्रवाहे इदं जगदुन्मज्जति विनश्यति ॥ १५ ॥

स्वीयशक्त्यात्मकत्वं जगत आह । अणिवति । अणु सूक्ष्मं बृहन्महान् तदन्तराले यो यो भावश्च कृशस्थूलादिः सर्वोऽपि प्रकृत्या भोग्यरूपया पुरुषेण भोक्त्रा च प्रसिद्ध्यति अत उभयसंयुक्तः अयमर्थः सर्वत्र स्वकर्मफलभोगार्थं जीवो निर्विकारेण रूपेणावास्ते प्रकृतिर्भोग्यरूपा महदादिपरमाणुपर्यन्ताभिरवस्थाभिः संस्थितेति ॥ १६ ॥

---

भाषा टीका ।

मेरी प्रेरणा करने से सब महत्तादिक पदार्थ एकके समर्थ न होने से मिल करके ब्रह्मांड को उत्पन्न करते भये जोकि मेरा उत्तम निवास स्थान है ॥ ९ ॥

जल पर रहने वाले उस ब्रह्मांड मे ब्रह्मा रूप से मैं उत्पन्न भया तिस मे मेरी नाभी से कमल भया तिस से ब्रह्मा भये जो कमल चौदा भुवन रूप भया है ॥ १० ॥

उस ब्रह्मा ने तपस्या से युक्त होकर तथा रजो गुण से मेरे अनुग्रह होने से दिक्पालोंके सहित लोकों को तथा भू भुवः स्वः ऐसे तीन लोकों को पैदा किया ॥११॥

स्वर्ग तो देवों का स्थान भया और भूत मुनि आदिकों का भुवर्लोक स्थान भया सिद्धों का स्थान तो तीनों लोकों से ऊपर भया ॥ १२ ॥

यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन् ।
विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७ ॥
यदुपादाय पूर्वस्तु भावो विकुरुते परम् ।
आदिरन्तो यदा यस्य तत्सत्यमभिधीयते ॥ १८ ॥
प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ।
सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥ १९ ॥
सर्गः प्रवर्त्तते तावत्पौर्वापर्येण नित्यशः ।
महान् गुणविसर्गार्थः स्थित्यन्तो यावदीक्षणम् ॥२०॥

भाषा टीका ।

पाताल लोक मे असुरों का नाग लोगों का स्थान तथा यह स्थान भूमिके नीचे परमेश्वर ने बनाया है तीनों लोकों में जो सब गति हैं वे त्रिगुण वाले कर्मों से निर्मित हैं ॥ १३ ॥

योगकी तपस्या की संन्यास की क्रम से गृहस्थादि-आश्रमियों की निर्मल गति हैं सो कौन हैं कि मह-र्लोक जन लोक तप लोक सत्य लोक ये हैं और भक्तियोगवाले को मेरा वैकुण्ठ धामही गति है ॥ १४ ॥

काल शक्ति वाले विधाता रूप होकर मैंने इस जगत को युक्त करदिया गुणों के प्रवाह रूप इस जगत् में सब जीव ऊपर और नीचेते जाते रहते हैं ॥ १५ ॥

छोटा या बडा जो जो पदार्थ लोक मे प्रसिद्ध है वह सब प्रकृति तथा पुरुष इन दोनो से संयुक्त ही है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इदानीं कार्यस्य कारणात्मतां दर्शयति । यस्य कार्यस्य आदिः कारणमन्तोऽवस्थानं च तस्य मध्यं मध्यावस्थाऽपि स एव वै प्रसिद्धं मृत्सुवर्णादिषु अत एवाव्यभिचारित्वात्स एव सत्तरः अलं तर्हि मिथ्याभूतकार्यसृष्ट्या तत्राऽऽह । विकार इति । तैजसाः कटककुण्डलादयः पार्थिवा घटशरावा-दयश्च यथेति ॥ १७ ॥

नन्वेवं तर्हि महदादीनामव्याद्यन्तरूपत्वात्सत्यत्वं स्यात्त-त्राऽऽह । यदिति । यद्रूपमुपादायोपादानकारणतया स्वीकृत्य पूर्वः कारणरूपो महदादिर्भावः अपरमहङ्कारादिकं भावं विकुरुते सृजति यथा पिण्डो मृदमुपादाय स्वयं निमित्तभूतो घटं सृजति तद्वत् स एव सत्यमिति पूर्वस्यानुषङ्गः कथं तर्हि मृत्तिकेत्येव सत्यमित्यादिश्रुतिस्तत्राऽऽह । आदिरिति । यद्वा यस्याऽदिरन्तश्च विवक्ष्यते तदा तत्सत्यमित्यभिधीयते श्रुत्या परमकारणात्मनः सत्यत्वविवक्षयेत्यर्थः ॥ १८ ॥

ननु तथाऽऽपि प्रकृतिपुरुषकालानामकार्यभूतानां भिन्नत्वा-त्कथमद्वितीयता तत्राऽऽह । प्रकृतिरिति । अस्य सतः कार्यस्यो-पादानं या प्रकृतिः प्रसिद्धा यश्च तस्या आधारोऽधिष्ठाता परः पुरुषो यश्च गुणक्षोभेणाभिव्यञ्जकः कालस्तत्त्रितयं ब्रह्मरूपोऽहमेव न तु पृथक् प्रकृतेः शक्तित्वात्पुरुषकालयोरव-स्थारूपत्वात् ॥ १९ ॥

एवं तावत्कालत्रयेऽप्यव्यभिचारित्वाद्ब्रह्मैव सत्यमिति उक्तं तस्य सृष्टिकारणत्वेनादौ सत्त्वमुक्त्वा मध्येऽपि तस्यैव सत्त्वमुपपादयन्नन्तेऽप्यवधित्वेन सत्त्वं दर्शयिष्यन्संसार-प्रवाहरूपायाः स्थितेरवधिमाह । सर्ग इति । महा-न्बहुलः पौर्वापर्येण पितृपुत्रादिरूपेण नित्यशः अविच्छेदेन किमर्थं प्रवर्तते तदाह । गुणेषु देहेषु विविधतया सृज्यत इति गुणविसर्गो जीवस्तदर्थस्तद्भोगप्रयोजनः किंपर्यन्तं प्रवर्तते यावत् स्थितेरन्तः सोऽपि किमवधिस्तत्राऽऽह । यावदीक्षणं परमेश्व-रस्य तावत् ॥ २० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी

तस्य कार्यस्य अत एव आद्यन्तमध्ये स्थिरत्वात् अव्यभि-चारित्वं सर्वानुगतत्वेनानश्वरत्वं तस्मात् ॥ १७ ॥

अनाद्यन्तरूपस्य सत्यत्वं तर्हि स्वकार्यमहङ्कारादिकं प्रति स एव सर्वोपादानरूपः । परमात्मैव सन् सत्यः । घटादिकं नामधेयमात्रं श्रुतदनृतं मृत्तिकेत्येव सत्यं वाचामात्रं विकारो-न कारणात् पृथगस्तीत्येवकारार्थ इति श्रुतिपदार्थः पर-मकारणस्य सत्यत्वविवक्षा चेत्थं यदा पृथिव्या आद्यन्तत्वं विवक्ष्यते तदा तत् कारणं जलमेव सत्यं यदा तस्य सा विवक्षा तदा तेज एव सत्यम् एवं तस्यापि स्यात् तदा वायुरेव सत्यः तस्यापि सा चेत् तर्हि महापुरुष एव तस्यापि सा चेत्तर्हि अहङ्कार एव तस्यापि सा चेत्तर्हि महानेव तस्यापि सा चेत्तर्हि प्रधानमेव तस्यापि सा चेत्तर्हि काल एव तस्यापि सा चेत्तर्हि महापुरुष एव तस्यापि सा चेत्तर्हि श्रीकृष्ण एवेति श्रीकृष्णस्य परमकारणत्वं श्रुत्यभिप्रेतं तथाग्रे स्वयमेव व्याख्यास्यति ॥ १८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

प्रकृतेरकार्यत्वं मूलप्रकृतिरविकृतिरित्युक्तेः पुरुषस्य तत् न विकृति र्न प्रकृतिः पुरुष इत्युक्तेः कालस्य तत् अनादिनिधनः काल इत्युक्तेरेव । पुरुषकालयोरिति तत्र प्रकृतीक्षणावस्थारूपत्वं पुरुषस्य । चेष्टात्मकावस्थारूपत्वं तु कालस्येति ज्ञेयम् ॥ १६ ॥

विविधतया देवनरादिरूपतया सृज्यतेऽभिनिवेश्यते यावत्पर्यन्तं स्थितेर्जगन्मर्यादाया अन्तो विनाशः तावत्पर्यन्तं सर्गः प्रवर्त्तत इत्यन्वयः सोऽपि अन्तोऽपि ॥ २० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अवस्थानामागमापायित्वेऽपि उपादानस्य द्रव्यस्य स्थायित्वमाह । यस्त्विति । यस्य घटादेः यन्मृदादिः आदिः आदिकाले अन्तकाले चास्ति मध्येऽपि स मृदादिरस्ति विकारो व्यवहारार्थः । अवस्थाप्राप्तिस्तु उदकाहरणादि व्यवहारफलार्थम् घटपटकटकमुकुटादिकं निदर्शयति । यथेति ॥ १७ ॥

यदुपादाय यदुपादानं कृत्वा भावः कार्यपदार्थः यदा विकुरुते तस्य तदा स आदिः यस्मिन्नन्तः प्रलयः तद्द्रव्यं सत्यं नत्ववस्थावदागमापायि ॥ १८ ॥

परः प्रकृतेः परः पुरुषो जीवः स च प्रकृतेराधारः सतः कालस्याभिव्यञ्जकः अभिव्यक्तिनिमित्तभूतः ब्रह्मतत्त्रितयं त्वहं प्रकृतिपुरुषकालशरीरकं जगत्कारणं परं ब्रह्माहमित्यर्थः ॥ १९ ॥

कार्यस्य जगतः प्रवाहनित्यत्वमाह । सर्ग इति । गुणविसर्गार्थः स्थित्यन्तः गुणत्रयाधीनो विसर्गः सृष्टिः स एवार्थः स्थितिरन्तरश्च यस्य सः महानिति उपलक्षणं गुणाधीनोत्पत्त्यादिप्रपञ्चो नित्यशः प्रवर्त्तते यावदीक्षणं मत्सङ्कल्पो यावत्तावत्प्रवर्त्तते इत्यर्थः ॥ २० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इदं जगदुन्मज्जति निमज्जतीत्यनेन प्रकृतिपुरुषयोः साक्षादुन्मज्जनाद्यवस्थाश्रयत्वमुक्तं तयोरपि वा कथं नित्ययोस्तत्त्वं स्थायित्वविरोधादित्याशङ्क्यावस्थानामागमापायित्वेनास्थायित्वेऽप्यवस्थावतः स्थायित्वमाह । यस्त्विति । यस्य कार्यस्य य आदिरन्तश्च य आद्यावन्ते चास्तीत्यर्थः । स तस्य तन्मध्यम् मध्येऽपि सोऽस्त्येवेत्यर्थः । यद्वा यस्यावस्थापरपर्यायकार्यरूपस्य वस्तुनो य आदिस्तदवस्थाभजनाद्धेतवः पूर्वमनुपस्थितः स एव तस्यान्तस्तदवस्थाविनिर्मुक्तोऽवशिष्यते मध्ये च तत्तदवस्थासु तत्तदवस्थाभाक्त्वेनावतिष्ठते तत्र दृष्टान्तः यथा तैजसपार्थिवाः तैजसाः कटकमुकुटादयः पार्थिवा घटशरावादयः कटकाद्यवस्थापूर्वोत्तरमध्यकालेष्वनुवृत्तं सुवर्णमृदादिद्रव्यं यथा स्थायि तद्वदित्यर्थः । द्रव्यस्थायित्वकथनेन कार्यकारणयोरभेदः फलितः सत्कार्यवादश्च तर्हि घटादिविकारः किमर्थ इत्यत आह । विकारो व्यवहारार्थ इति । विकार इति नामधेयस्याप्युपलक्षणं विकारोऽवस्थानामधेयप्राप्तिस्तु घटेन जलमाहरेति व्यवहारार्थः जलाहरणादिप्रयोजनार्थश्चेत्यर्थः । अत्र वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुत्यर्थोऽनुसंहितः ॥ १७ ॥

उपपादितं स्थायित्वमेव भङ्ग्यन्तरेणोपपादयति । यदुपादायेति । भावः स्वावस्थावस्थितः पदार्थः यदुपादाय यदुपादानं कृत्वा विकुरुते स्वावस्थां भजते स पूर्वः तुशब्दोऽवधारणार्थकः स्वावस्थायाः पूर्वमुपादानतयावस्थितस्तदात्मक एवेत्यर्थः । परः स्वावस्थायाः परस्तादपि तदात्मक एवासौ यस्मिन् द्रव्ये यस्य विकारस्यादिरन्तश्च दृश्यते तद्द्रव्यं सत् स्थायित्वेनाभिधीयते न त्ववस्थावदागमापायीति भावः ॥ १८ ॥

इत्थमचिद्द्रव्यस्य स्वरूपतः स्थायित्वमवस्थानां तद्विपरीतत्वं चोक्तमथ प्रकृतिविलक्षणस्वरूपस्य पुरुषस्य सद्वारकाऽद्वारकोभयावस्थाश्रयत्वं स्थायित्वं च वदन् ब्रह्मणोऽपि सद्वारकावस्थाश्रयत्वस्थिरीकरणाय चिदचिच्छरीरकत्वनिबन्धनेन तत्सामानाधिकरण्येन निर्दिशति । प्रकृतिरिति । असद्देवमनुष्यादिविविधदेहजातस्य प्रकृतिरुपादानं परः प्रकृतेः परः पुरुषो जीव आधारः पुरुष इत्येकवचनं जात्यभिप्रायकं यद्वा एकस्मिन् जीवे कथिते तुल्यन्यायाज्जीवान्तरेऽप्यूहितुं भवतीत्येकवचनम् एवमन्यत्रापि अत्राधारो देवादिशरीरान्तः प्रवेशेन धारकः अनेन सद्वारकावस्थाश्रयत्वमुक्तं प्रकृतिगतावस्थानां तद्द्वारा तद्धारकपर्यन्तत्वादेवं च न जीवस्वभावयोः स्थायित्वविरोधः सत एव स्वरूपतः स्वभावतश्च नित्यस्यात्मनः अभिव्यञ्जकः कालः धर्मभूतज्ञानाभिव्यक्तिनिमित्तभूतः कालः सुषुप्त्यादौ हि ज्ञानविकाशो जीवानाम् अनेन सङ्कोचविकासरूपविकारस्य धर्मभूतज्ञानमिति फलितं तत एवाद्वारकावस्थाश्रयत्वं च तत्त्रितयं ब्रह्म प्रकृतिपुरुषकालरूपपदार्थत्रयं ब्रह्म शरीरात्मभावनिबन्धनमिदं सामानाधिकरण्यं यद्वा ते प्रकृतिपुरुषकालास्त्रयोऽवयवा यस्य तत्त्रितयम् "संख्याया अवयवे तयप्" तस्य "द्वित्रिभ्यां तयस्यायज्वा" इत्ययजादेशः अनेन ब्रह्मणः स्वावयवभूतचिदचिद्द्वारा तद्गतावस्थाश्रयत्वं फलितं ब्रह्मशब्दस्य देवतान्तरपरत्वव्युदासायाह "। ब्रह्मत्वहमिति । इत्थं चिदचितोः स्वरूपतः स्थायित्वमुक्तम् ॥ १९ ॥

अथ कार्यस्य जगतोऽपि प्रवाहनित्यत्वमाह । सर्ग इति । यावदीक्षणं मत्सङ्कल्पो यावत्तावत्पर्यन्तं महानित्युपलक्षणं महदादिः सर्गः प्रपञ्चः गुणविसर्गार्थः स्थित्यन्तः गुणैः सत्त्वादिभिर्विसर्गः सृष्टिर्यस्य सः अयश्चिदचिद्रूपः तस्य स्थितिरन्तः संहारश्च यस्य तथाभूतः नित्यशः प्रवर्त्तते ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु कार्याणां निमित्तकारणेन भेदः कुलाले दृष्ट इति न तत्र शङ्का किन्तूपादानकारणेन कथमिति तत्राह । यस्त्विति । तुः स्यादेवेऽवधारणे इति वचनात् तुशब्दो विशेषं वक्ति यस्य महदादिकार्यस्य यः सत्त्वादिकारणविशेषः आदिरुपादानकारणं

विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः।
पञ्चत्वाय विशेषाय कल्पते भुवनैः सह ॥ २१ ॥
अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते।
धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

इतावत् प्रवर्तते यावत् स्थित्यन्तः स्थितेः पालनस्य अन्तः समाप्तिः स चान्त एव किमवधिकस्तत्राह। यावदीक्षणं पालने च्छानुकूलमित्यर्थः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तत्रावस्थानामनित्यत्वेऽपि अवस्थावतः पदार्थस्य सतुपादानकत्वात्सत्यत्वमाह। यस्त्विति। यस्योपादेयस्य यावस्था सा भवतु अनित्या यस्तु यस्य कार्यस्य आदिः उपादानभूतः पदार्थः अन्तः कार्यावस्थापगमेऽवशिष्यमाणः पदार्थः स एव कार्यावस्थापन्नं मध्यं विवृणोति। व्यवहारार्थः विकार इति वै अवधारणे स एव तस्य कार्यस्य सन्मूलम् कार्यं कारणात्मकमित्यर्थः। यथा तैजसाः कुण्डलादयः पार्थिवाः घटशरावादयः कारणात्मकाः न हि विकारं त्यजन्ति कनकस्य तदात्मता इति कथमन्यथा भवन्ति भुजिरक्तपदानि नृणामिति चोक्तत्वात् "सन्मूलाः सौम्येमाः प्रजा इत्यादिश्रुतेः ॥ १७ ॥

ननु पूर्वपूर्वपदार्थस्योत्तरोत्तरपदार्थकारणत्वे प्रतिपादिते भगवतः स्वस्य ब्रह्मणः तत्तत्कारणत्वं तर्हि न स्यादत आह। यदिति। तुशब्दोऽवधारणे यस्य ब्रह्मणः उपक्रमे एकमेवासीदित्युक्तस्यैव पूर्वो भावः पदार्थः प्रकृत्यादिः यस्यैवापरं महदादिकं यदा विशेषतः करोति तदा यद्ब्रह्मोपादायैव न तु स्वातन्त्र्येणेत्यर्थः किं च यदेव आदिः पूर्वपदार्थः यदेवान्तोऽपरपदार्थः तत्सत्यं ब्रह्माभिधीयते सर्वकारणतया प्रतिपाद्यते ॥ १८ ॥

ननु तर्हि प्रकृत्यादीनां वैयर्थ्यं स्यादित्यत आह। अस्य महदाद्यणुपर्यन्तस्य प्रकृतिरुपादानं परः प्रकृतिविलक्षणः पुरुषो जीवः आधारः धारकः सर्वं प्राकृतं वस्तु जीवः धारयतीत्यर्थः। कालोऽभिव्यञ्जकः ननु तर्हि ब्रह्मणो भवतो निमित्तकारणत्वमागतमित्यत आह। तत्त्रितयं तत्त्रिकमपि ब्रह्माहम् प्रकृत्यादीनां स्वरूपतो भिन्नत्वेऽपि शक्तीनां शक्तिमतः पृथगवस्थानाभावादभेदः अतश्चिदचिच्छक्तिमद्ब्रह्म जगदभिन्ननिमित्तोपादानकारणं तत्र परिणामित्वादयः प्रकृत्यवस्थाविशेषधर्माः बन्धमोक्षादिमत्त्वादयोऽणुभूतबद्धजीवधर्माः सर्वज्ञत्वसर्वशक्तित्वसर्वकारणत्वपरमानन्दत्वादयः परब्रह्मणः इति गुणसाङ्कर्यशङ्कानिरासः ॥ १९ ॥

एवंविधभ्रमनिवृत्तये सृष्टिनिरूपणद्वारा आत्मानात्मपरमात्मविवेकः प्रदर्शितः अधुनेन विवेकेन विविधभ्रममूलजन्ममरणप्रवाहनिवृत्तिः कदेत्यपेक्षायामाह। सर्ग इति। गुणेषु मायागुणेषु विसर्गो विन्यासो यस्य स गुणविसर्गो जीवस्तदर्थकृतत्कर्मफलभोगार्थः नित्यशोऽविच्छिन्नः महान् अनादिः सर्गः स्थित्यन्तोऽन्त निधनश्च जन्ममरणप्रवाह इत्यर्थः। यावदीक्षणं ममावलोकनं तावत् प्रलयपर्यन्तं भूतभाविरूपेण प्रवर्तते मम कृपावलोकनानन्तरे निवर्तते इत्यर्थः ॥ २० ॥

---

### भाषा टीका।

जो जिसका आदि अन्त होता है वही उसका मध्य में सत्य होकर रहता है मध्य मे जितने विकार हैं वे व्यवहार के लिये हैं जैसे कि सुवर्ण के कुण्डलादिक और मृत्तिका के घटशरावादिक होते हैं ॥ १७ ॥

पहिला भाव जिस पदार्थ को लेकर दूसरे भाव को बनाता है सोइ जब जिसका आदि मे रहता है वही सत्य कहाता है जैसे कि मृत्पिण्ड मृत्तिका को ग्रहण करके घटकार्य को बनाता है तो आदि अन्त मे रहने से मृत्तिका पदार्थ सत्य मानाजाता है ॥ १८ ॥

इस जगत का उपादान कारण प्रकृति है परम पुरुष इसका आधार है इसी सत्पदार्थ का प्रकट करने वाला काल है यह तीनो मेरे विशेषण होने से मैं ही हूं ॥ १९ ॥

ऐसा यह सर्ग सृष्टि प्रवृत्ति होता है बडा भारी है पूर्व पर कार्य कारण रूप से नित्यही होता है जीव के भोगने के लिये प्रलय पर्यंत होता है वह अन्त होना भी भगवत् सङ्कल्प पर्यन्त ही है ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

प्रलयं निरूपयति। विराट् ब्रह्माण्डं मया कालात्मना आसाद्यमानो व्याप्यमानो लोकानामहरहः कल्पाः सृष्टिप्रलया विविधाः कल्प्यन्ते यस्मिन्स्तान्वा यस्मिन्विकल्पयतीति स तथाभूतोऽपि पञ्चत्वरूपाय विशेषाय विभागाय कल्पते योग्यो भवति पञ्चानां भूतानामैक्यरूपस्तेषां पृथग्भावापत्त्या नश्यतीत्यर्थः ॥ २१ ॥

तत्र "तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात्पुरुष इति श्रुत्युक्तसृष्टिक्रमप्रातिलोम्येन लयमाह। अन्न इति। मर्त्यं शरीरं येनोपचितं तस्मिन्नन्ने वर्षणाभावेनावृष्टौ क्षीणे सति तत्रैव लीयत इत्यर्थः। अन्नं धानासु बीजमात्रावशेषं भवतीत्यर्थः। धाना भूमौ उप्ता न प्ररोहन्तीत्यर्थः भूमिर्गन्धे संवर्तकादित्यशोषिता संकर्षणमुखाग्निना दग्धा च सती भूतसूक्ष्मरूपगन्धमात्रावशेषा भवति ॥ २२ ॥

योनिर्वैकारिके सौम्य ! लीयते मनसीश्वरे ।
शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अधुना क्रमप्राप्तं लयं निरूपयति । विराडिति । विराडण्डकोशः भुवनैः सह पञ्चत्वाय कल्पते पञ्चत्वानन्तरमपि प्रागवशेषाय सत्त्वादिगुणानुद्रेकाय नाशायेत्यर्थः । "विशेषगुणोद्रेकाद्विशेषं पृथिवी स्मृतेति" वचनात् अण्डकोशनाशानन्तरं पृथिवीलयोऽपि सूच्यतेऽनेनेति लोकानां चतुर्दशसङ्ख्यापेतानां कल्पः विकल्पना विकल्पोऽवान्तरकल्पो विविधकल्पना च यस्मिन्स तथा स मया साध्यमानः विनाशाय प्रथमाया ॥ २१ ॥

अविशेषायेति प्रस्तुतं पृथिव्यादिलयं विनिरवाह । अन्न इति । अन्नाभिमानिनामभिमन्यमानानां च एकीकृत्य निरूप्यमाणो लयोऽभिमानिनोऽभिमन्यमानस्य स्वकारणेऽभिमन्यमाने विवक्षित इति दृश्याभौषध्यभिमानिन्यां लीयतेऽन्नाभिमानिनीत्युक्तेः अन्नमन्नाभिमानिनी धानास्वौषधीषु औषध्यभिमानिन्यां दृश्यां गन्धे स्वसूक्ष्मरूपे ॥ २२ ॥ २३ ॥

इन्द्रियाणि स्वयोनिषु तैजसाहङ्कारे इन्द्रियाभिमानिनश्च स्वयोनौ वैकारिकाहङ्कारे ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्ने तदुत्पादकपृथिव्यंशो तदन्नं धानासु तस्यापि कारणांशरूपासु सूक्ष्मावस्थासु ताश्च धाना भूमौ स्वाभवरूपायां पृथिव्यां प्रलीयन्ते यथा पृथुना दोहने पुनरुद्भवाय कल्पन्ते स्म तथा न कल्पन्ते इत्यर्थः ॥ २२ ॥ २३ ॥

स्वयोनिषु राजसाहङ्कारवृत्तिषु ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदनन्तरं किं भविष्यतीति चेत् प्रलय एवेति तं निरूपयति । विराट् ब्रह्माण्डं मया कालात्मना व्याप्यमानः लोकानां भूरादीनां मनुष्यतिर्यगादीनां कल्पः सामान्यतः कल्पना विकल्पो विशेषतश्च कल्पना यत्र सः पञ्चत्वाय विशेषाय पञ्चत्वरूपो यो विशेषो विभागस्तस्मै तं प्राप्तुं कल्पते योग्यो भवति पञ्चत्वं मृत्युः ॥ २१ ॥

तत्र "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात्पुरुषः" इति श्रुत्युक्तसृष्टिक्रमप्रातिलोम्येन प्रलयमाह । मर्त्ये शरीरे येनोपचितं तस्मिन्नन्ने शतवर्षव्यापिन्यनावृष्ट्यां सत्यां नश्यत्येव प्रथमं शरीरस्य तदनन्तरमेवान्नस्य कारणत्वेन नाशात् तदन्नाम धानासु स्वस्वबीजेषु धाना भूमौ भूमिर्गन्धे इति सर्वत्र कार्यस्य कारणे लयः सङ्कोचेन सूक्ष्मावस्थया च स्थितिः स्वगुणगन्धमात्रावशेषा भवतीत्यर्थः ॥ २२ २३ ॥

इन्द्रियाणि स्वयोनिषु स्वयोनौ तैजसाहङ्कारे ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ संहारप्रकारं संक्षेपतो दर्शयति । विराडित्यादिना । लोकानां चतुर्दशभुवनानां कल्पं कल्पनां विकल्पयति पृथक् पृथक् स्वावयवैः द्योतयतीति स तथा विराट् चतुर्दशभुवनाकारो मदीयो देहः मयासाद्यमानः पञ्चत्वाय नीयमानः भुवनैश्चतुर्दशलोकैः सह पञ्चत्वाय कल्पते योग्यो भवति पञ्चत्वायेति पदं विवृणोति । विशेषाय ऐक्यं त्यक्त्वा सत्तद्भूतभावाय ॥ २१ ॥

मर्त्यं शरीरमन्ने प्रलीयते शतवर्षायामनावृष्टौ अन्नाभावे शरीरं म्रियते इत्यर्थः । अन्नं धानासु लीयते धाना भूमौ न प्ररोहन्तीति भावः । गन्धे गन्धतन्मात्रे ॥ २२ ॥

गन्धो गन्धतन्मात्रम् एवमग्रेऽपि बोध्यम् ॥ २३ ॥

अम्बरं शब्दतन्मात्रे इन्द्रियाणि स्वयोनिषु राजसाहङ्कारेषु राजसाहङ्कारस्यैकत्वेऽपि नानावयवत्वाद्बहुवचनम् ॥ २४ ॥

---

भाषा टीका ।

अब प्रलय की इच्छा होती है तब हम इस विराट जगत मे व्याप्त हुये रहते हैं सब लोकों की कल्पनों का भेद करने वाला यह जगत् विशेष रूप नाश के लिये भुवनों के सहित प्राप्त होजाता है ॥ २१ ॥

पहिले मनुष्यादिकों के शरीर अन्न मे लीन होजाते हैं फिर अन्न अपने बीजों मे लीन होते हैं फिर बीज भूमी में लीन होते हैं फिर भूमी गन्ध मे लीन होती है ॥ २२ ॥

गन्ध जल मे लीन होता है जलका अपने गुण रस मे लय होता है रसका अग्निमे लय होता है अग्नि का रूप मे लय होता है ॥ २३ ॥

रूपका वायु मे लय होता है वायुका स्पर्श मे लय होता है स्पर्श का आकाश मे लय होता है आकाश का शब्द तन्मात्रा मे लय होता है और सब इन्द्रियों का अपने देवतों मे लय होता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

योनिरित्युद्दिश्यमानत्वाद्वैकारिकत्वमविवक्षितम् योनयो देवतास्तु मनसि कुतः ईश्वरे नियन्तरि मनोवशोऽन्ये ह्यभवन् स्म देवा इत्युक्तत्वात् इन्द्रियलयोक्त एवाभ्यामभिप्रायः मनश्च देवताभिः सह वैकारिकेऽहङ्कारे इत्यर्थः । तामसाहङ्कारकार्यमिवोपितस्य शब्दस्य लयमाह । शब्दो भूतादिं तामसाहङ्कारमप्येति तस्मिन् लीयत इत्यर्थः । भूतादिरित्युपलक्षणम् त्रिविधोऽहङ्कारो महति [illegible] विहाय ज्ञानक्रियाशक्तिमात्ररूपो भवति कथम्भूतः प्रभुः समर्थः सर्वजगन्मोहकरत्वात् ॥ २५ ॥

स लीयते महान् स्वेषु गुणेषु गुणवत्तमः ।
तेऽव्यक्ते संप्रलीयन्ते तत्काले लीयतेऽव्यये ॥ २६ ॥
कालो मायामये जीवे जीव आत्मनि मय्यजे ।
आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥ २७ ॥
एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ।
मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥ २८ ॥
एष सांख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः[१] ।
प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम् ।
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
चतुर्विंशोऽध्यायः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स एव महान् स्वकारणेषु गुणेषु ज्ञानक्रियाशक्तिमत्त्वाद्गुणवत्तमस्तादृग्भावं विहाय गुणमात्ररूपो भवति तेऽव्यक्ते प्रकृतौ साम्यावस्थां गच्छन्तीत्यर्थः । तदव्यक्तं काले कालाधीनत्वात्तेनैकीभूयावतिष्ठते अव्यये उपरतवृत्तौ ॥ २६ ॥

मायामये मायाप्रवर्तके ज्ञानमये वा अत एव जीवयतीति जीवस्तस्मिन्महापुरुषे अयं भावः विश्वस्रष्टुर्महापुरुषस्योपकरणरूपः कालो वृत्त्यंशेन सृज्यश्चातस्तदात्मनावतिष्ठत इति तदुक्तं सप्तमे 'कालं चरन्तं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृदि'ति तृतीये च 'योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम् । निमेषादिर्वत्सरान्तो महीयांस्तत्त्वेशानं क्षेमधाम प्रपद्ये' इति जीव आत्मनि प्रकृतेर्लीनत्वेन अतियोग्यमायापरिपूर्णत्वेन सद्रूपेणावतिष्ठते आत्मा चाऽऽत्मस्थ एव नान्यत्र लीयते यतः केवलो निरुपाधिः तत्र हेतुः विकल्पापायाभ्यां विश्वोत्पत्तिप्रलयाभ्यां लक्ष्यते ऽधिष्ठानत्वेनावधित्वेनेति तथा सः ॥ २७ ॥

अस्य कथनस्य प्रस्तुतोपयोगमाह । एवमिति । मनसः कथं भेदनिमित्तो भ्रमः स्यात् जातो वा कथं हृदि तिष्ठेत ॥ २८ ॥

उपसंहरति । एष इति ॥ २९ ॥

प्रत्यक्षमिव येनेदं दर्शितं तत्त्वमात्मनः ।
सांख्यप्रधानतत्त्वमै हरये गुरवे नमः ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

उद्देश्यगतत्वादनुवादस्य प्राग्वत्वात् स्वयोनिषु इति यत् पूर्वमुक्तं तस्यैव योनिरित्यनुवादः तथाच बहुवचनस्य योनिशब्दस्य बहुवचनतयैवानुवदितुमौचित्यात् एकत्वमविवक्षितं ग्रहं संमार्ष्टीतिवत् । अत्रापि मनसि देवतागणेऽपि अभिप्राय इति वृत्तानां मनोऽधीनत्वान्मनसि लय इति वाचोयुक्तिः वस्तुतस्तु स्वकारणे सात्त्विकाऽहङ्कार एव लयोऽभिप्रेत इत्यर्थः रिक्तम् अर्थात् पूरयति मनश्चेति वैकारिकान्मनो जज्ञे देवा वैकारिका दशेत्युक्तेस्तत्कार्याणां तेषां तत्र लयस्याभिप्रेतत्वात् ॥२५॥

तादृग्भावं गुणवत्तमत्वं जडांशमित्यर्थः । गुणमात्ररूपः अहंकारवज्ज्ञानक्रियाशक्तिमात्ररूपः । कालाधीनत्वात् साम्यावस्थायाः कालकृतत्वात् । तेन कालेन सहाभिन्नीभूय । उपरतवृत्तौ निमेषाद्यवस्थाहीने ॥ २६ ॥

अतएव कालः क्रियायां क्रमानुसन्धानात्मकः । महापुरुषे कारणार्णवशायिनि पुरुषावतारे । ननु कालस्य नित्यत्वे श्रूयते कथं लय इत्यपेक्षायामाहायं भाव इति । उपकरणरूपश्चेष्टात्मकः वृत्त्यंशेन क्रियायां क्रमानुसन्धानात्मकत्वेन । तत्र चेष्टारूपत्वं सृज्यत्वं च तत्र सृज्यत्वं सप्तमे चेष्टारूपत्वं च तृतीये इति योजनीयम् । प्रतियोग्यभावात् । प्रकृतौ लयावस्थाया एव महापुरुषत्वात् अस्या ईक्षणं क्रियते तस्या ईक्षणकर्मत्वेन प्रतियोगिभ्याः सम्बन्धिन्याः प्रकृतेरभावादित्यर्थः । परिपूर्णपुरुषस्याभेदी सवित्युपलक्षणं सदानन्दरूपोऽहं तेन रूपेणेत्यर्थः । तथैव व्याख्यातं स्वामिभिरेव प्रथमभागे तत्र अंशेन पुरुषरूपेण मायाया भागो भजनमीक्षणं यस्येति । अत्र निरुपाधित्वे ॥ २७ ॥

(१) हैतिकं इति विजय पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अस्य सांख्यकथनस्य । प्रस्तुते ग्रन्थग्रहणे उपयोगम् उपकारताम् ॥ २८ ॥

परावरदृशा मयेति सर्वादित्वं सर्वशेषत्वञ्च स्वयं भगवद्रूपस्य स्वस्यैव स्थापितम् । आत्मनः स्वस्य तत्त्वं सर्वावताराऽवतारि मूलरूपत्वम् ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणी
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ननु महत्तत्त्वं द्रव्यं गुणेषु कथं तस्य लय इत्युच्यते गुणेषु उपरतेषु महान् लीयते गुणाश्चोपरतवैषम्या अव्यक्ते वर्तन्त इत्यर्थः । तदव्यक्तं काले लीयते कालेन सह संसृष्टं भवतीत्यर्थः ॥ २६ ॥

कालस्याव्यक्तप्रकृतित्वाभावात् मायामये प्रकृतिसंसृष्टे जीवे कालो लीयते कालो जीवेन सहसंसृष्टो भवतीत्यर्थः आत्मनि अन्तरात्मनि आत्मा अहं केवलः महदादिकार्यसमष्टिरहित इत्यर्थः । विकल्पापायलक्षणः देवादिव्यष्टिरहितः आत्मस्थः आधारान्तरनिरपेक्षः ॥ २७ ॥

एवमिति । प्रकृतिपुरुषकालेश्वरविवेकमीक्षमाणस्येत्यर्थः वैकल्पिकः स्थूलोऽहमित्यादिविकल्पविषयः ॥ २८ ॥

प्रतिलोमानुलोमाभ्यां सर्गसंहारक्रमाभ्याम् ॥ २९ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मनसि स्वकारणे लीयमाने सति तेन सह सर्वेन्द्रियारम्भकांश्च वैकारिके सात्त्विकाहङ्कारे लीयन्ते इति ईश्वरशब्दः कारणमात्रपरः वैकारिकशरीरके ईश्वरे लीयन्त इति वा एवं शब्दोऽपि तत्तन्मात्रमपि भूतादिं स्वकारणं तामसाहङ्कारमप्येति तं प्रति लयमेतीत्यर्थः । भूतादिर्महतीत्यत्र भूतादिशब्दस्तैजसवैकारिकयोरप्युपलक्षणार्थः त्रिविधोऽप्यहङ्कारो महत्तत्त्वे प्रलीयत इत्यर्थः । तं विशिनष्टि । प्रभुः देहात्माभिमानादिरूपमोहजनकत्वात् ॥ २५ ॥

स लीयत इति । महान् स्वेषु स्वकारणभूतेषु गुणेषु सत्त्वादिषु त्रिषु तं विशिनष्टि । गुणवत्तम इति । अध्यवसायहेतुत्वान्महान्बुद्धिलक्षण इत्युक्तः ननु महत्तत्त्वं द्रव्यं गुणेषु कथं तस्य लयः उच्यते गुणेषु उपरतेषु महान् लीयते इति ते गुणाश्चोपरतवैषम्याः प्राप्तसाम्या अव्यक्ते वर्तन्त इत्यर्थः । तदव्यक्तं काले लीयते कालेन सह संसृष्टं भवतीत्यर्थः । लीयत इत्यनेन सर्वांविशेषमात्रमेवोच्यते न तु वस्तुतः कालस्याव्यक्तप्रकृतित्वाभावात् अव्यय इत्यनेन स्वरूपतः कालस्य नित्यत्वमुच्यते ॥ ॥ २६ ॥

मायामये प्रकृतिप्रचुरे तत्संसृष्ट इत्यर्थः । तस्मिन् जीवे कालो लीयते जीवेन सह संसृष्टो भवतीत्यर्थः । जीवः आत्मन्यन्तरात्मन्यजे कर्मायत्तोत्पत्तिरहिते मयि लीयते इत्यर्थः । अज इत्यनेनात्मन उत्पत्तिप्रतिसम्बन्धिलयोऽपि नास्तीति सूच्यते तदुपपादयति । आत्मेति । सर्वान्तरात्मभूतोऽहमात्मन्येव तिष्ठतीति तथा न कस्मिंश्चिद्व्येमीति भावः अतोऽविकल्पापायलक्षणः विकल्पो देवादिशरीरभेदः अपायस्तदपगमस्ताभ्यां न लक्ष्यत इति तथाऽस्पृष्टोत्पत्तिविनाशावस्थ इत्यर्थः केवलः महदादिकार्यसमष्टिरहितः ॥२७॥

इत्थं साङ्ख्यं निरूप्य तस्य जगद्वैकल्पिकं भ्रममित्युक्तं वैकल्पिकभ्रमहानिकरत्वं सदृष्टान्तमाह । एवमिति । प्रकृतिपुरुषकालेश्वरविवेकमित्थमन्वीक्षमाणस्य पुंसः वैकल्पिकः स्थूलोऽहमित्यादिविकल्पविषयो भ्रमः स च मानसः मनःकारणकः हृदि कथं तिष्ठेत न तिष्ठेतैवेत्यर्थः । अर्कोदये सति तम इव ॥ २८ ॥

एतेन साङ्ख्यवर्णनेन सर्वभावानां प्रतिलोमानुलोमतो भवाप्ययौ विजानीयादित्युत्थापिता जिज्ञासापि शान्ता भवत्येत्युपसंहरति । एष इति । सांख्यस्य प्रकृतिपुरुषकालेश्वरविभागस्य विधिर्ज्ञापनप्रकारज्ञापको हि विधिस्तस्तेन तद्विचारितं संशयः देहात्मजीवेश्वरभेदाभेदसंशयः स एव ग्रन्थिः तच्छेदकमोचकत्वाच्छिनत्तीति तथाभूत एष सांख्यविधिः परावरदृशा समष्टिव्यष्टितत्त्वयाथात्म्यद्रष्ट्रा मया प्रतिलोमानुलोमाभ्यां सर्गसंहारक्रमाभ्यां प्रोक्तः कृत इत्यर्थः ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

योनिर्वैकारिकस्तैजसश्चाहङ्कारः विकारजत्वाद्वैकारिके महति चतुर्मुखे लीयते ईश्वरे ईशनशक्तिमति—

विकारजत्वात्तु महान्वैकारिक उदाहृतः ।
ईशनाच्चेश्वरश्चैव ब्रह्मा बृंहणतः स्मृतः ॥

इति स्मृतेः भूतादिं तामसाहङ्कारं स भूतादिरनन्तक्षोरेयु महति महत्तत्त्वाभिमानिनि ॥ २५ ॥

स महान् एषु गुणेषु स्वकारणेषु गुणाभिमानिनीषु गायत्रीसावित्रीसरस्वतीषु ते गुणास्ताः सत्त्वादिगुणवाच्यादिलक्षः अव्यक्ते प्रकृत्याख्यलक्ष्मीरूपे तदव्यक्तमव्यक्ताभिमानिनी गायत्री पुरुषाभिधे विरिञ्चे पत्यौ लीयते स पुरुषः कालनाम्नि श्रीरमन् ॥ २६ ॥

कालाख्यो विरिञ्चः मायामये जीवे मूलप्रकृत्यभिमानिन्यां महालक्ष्म्यां जीवनाम्नी श्रीरजे आत्मनि मयि विशेषतो लयमाप्नोति आत्मस्वरूपं वक्ति । आत्मेति । आत्मा पूर्णगुणः केवलः प्रकृतिसम्बन्धविधुरो ऽसमाधिकश्च आत्मस्थ

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनन्याधारः अत एव यथाविहीनः विकल्पापायलक्षणः सम्यक् ज्ञानस्वरूपः मिथ्याज्ञानापगमो लक्ष्यो यस्य स तथेति वा ॥ २७ ॥

कथितसृष्ट्यादिस्मरणफलमाह । एवमिति । वैकल्पिको भ्रमः विरुद्धकल्पनालक्षणमन्यथा ज्ञानं मनसं उत्पन्नं हृदि कुतो ॥ २८ ॥

उक्तार्थमुपसंहरति । एष इति । प्रतिलोमेन विपरीतक्रमेण संहारकथनम् अनुलोमेन यथाक्रमेण सृष्टिकथनं संशयग्रन्थिछेदिकः संसारबन्धबन्धनदहने अग्निर्वाचायमानः परावरदृशा सर्वज्ञेन—

> गायत्री चैव सावित्री तथैव तु सरस्वती ।
> एवं त्रिरूपा प्रकृतिर्ब्रह्मपत्नी प्रकीर्तिता ॥
> महत्तत्त्वात्मको ब्रह्मा तत्तत्त्वात्तत्र लीयते ।
> गुणाधिकः पतिरपि तस्याः सत्त्वादिभेदतः ॥
> त्रिविधा मूलरूपायां प्रकृत्यां सा प्रलीयते ।
> प्रकृतिर्मूलरूपा सा ब्रह्मपत्नी जगन्मयी ॥
> पुरुषाभिधे विरिञ्चे तु स स्वभिमन् कालसंज्ञके ।
> कालाभिधो विरिञ्चस्तु महालक्ष्म्यां विलीयते ॥
> जीवसायंति यामाहुः सा च सत्त्वादिभेदतः ।
> त्रिविधैकत्वमापन्ना विष्णावेव विलीयते ॥
> हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः ।
> पुरुषेणातिसामीप्यं प्रकृतेर्लय उच्यते ॥
> ब्रह्मा च प्रकृतिश्चैव मुक्तिगौ विलयं यतः ।
> अतस्तौ भिन्नदेहौ तु ज्ञानमात्रौ समीपगौ ॥

इत्यादिप्रमाणसिद्धत्वात् सर्वज्ञेन परमाप्तेन मया प्रोक्तत्वादिदं मुमुक्षुभिरवश्यं ग्राह्यमिति भावः ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

योनिः सर्वेन्द्रियप्रवृत्तिहेतुर्मनः वैकारिके सात्त्विकाहंकारे तस्मिन् कथम्भूते मनसीश्वरे व्यभिचकस्यालपतयो मनसः सप्तमी च "स्वामीश्वराधिपती" त्यादिना मनः कारणत्वान्ममोऽधिष्ठातरीश्वरे इत्यर्थः । उपलक्षणं चैतद्देवतावर्गस्य महति सूत्रसंयुत इति ज्ञेयं महांश्च सूत्रसंयुत इति ज्ञापितत्वात् ॥ २५ ॥

काले तच्छक्त्यात्मके ईश्वरे अत एवाव्यये ॥ २६ ॥

यस्तु क्रियायां क्रमानुसंधानात्मकस्तत्कार्यरूपो लौकिकः कालः स तु मायामये तदनुसंधातरि जीवे लीयते माया-शब्देन तेनैव व्याख्यातं माया वयुनं ज्ञानमिति निघण्टोः स जीवः आत्मनि परमात्मरूपे मयि तस्य तु लयाभावमाह । अज इति । किन्तु सन् परमात्मा परमपुरुषः केवले शुद्ध आत्मनि भगवद्रूपे स्वस्वरूपे स्थितो भवति कीदृशः सन् विकल्पानां सृष्टिस्थितिप्रलयानामपायोऽनङ्गीकारो यत्र तादृशस्वरूपः सन्निति ॥ २७ ॥ २८ ॥

परावरदृशा सर्वेति सर्वादित्वं सर्वज्ञेयत्वं च स्वयं सर्वद्रूपस्य स्वस्यैव स्थापितम् ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

योनिस्तैजसाहङ्कारो वैकारिकाहङ्कारकार्यं गनसि कुतः ईश्वरे तैजसाहङ्कारस्य ज्ञानकर्ममयत्वात् ज्ञानकर्मणोश्च ज्ञानेन्द्रिय-कर्मेन्द्रियरूपत्वात् ज्ञानेन्द्रियकर्मेन्द्रियाणां च मनस एव ईशितव्यत्वात् मन एव तेषामीश्वर इति युक्तेः अम्बरे शब्दतन्मात्र इत्युक्ते तस्य शब्दतन्मात्रस्य लयमाह । शब्दो भूतादिं तामसाहंकारम् अप्येति तस्मिन् लीयत इत्यर्थः । भूतादिस्तामसाहंकारो वैकारिकोऽहंकारश्च महति ॥ २५ ॥

स च सूत्रसंयुतो महान् गुणेषु ते च गुणा अव्यक्ते प्रकृतौ गुणानां वैषम्यत्याग एव लयो विवक्षितः प्रकृतेर्गुणसाम्यरूपत्वात् तत् अव्यक्तं काले लीयत इति प्रकृतेर्लयो व्याख्यातुमशक्यः न तस्य कालावयवैः परिणामादयो गुणाः । अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययमिति द्वादशोक्तौ प्रकृतेर्नित्यत्वश्रवणात् जायन्तेऽयोपाख्यानेऽप्यन्तरिक्षेण प्रलयवर्णने प्रकृतेर्लयो नोक्तः अत एवोक्तं—

> लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ।
> शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥

इति तस्मादेवं व्याख्येयं तत्काले तस्मिन् काले ते गुणा अव्यक्ते सम्प्रलीयन्ते ततश्च कालो लौकिकः सूज्यः ॥ २६ ॥

मायामये मायोपाधौ जीवे लीयते इति पूर्वेणान्वयः न व्यतीरय-व्यवहतिमित्याति जीवस्यापि तटस्थशक्तित्वाविशिष्टत्वेन तस्यान्तरायामिव स्वरूपलयानौचित्यात् स च जीवः आत्मनि परमात्मनि मयि लीयते अव्ययत्वादप्रच्युतस्वरूप एव संश्लिष्टस्थितस्तीत्यर्थः । आत्मनात्मस्थ एव विराजते केवलो निरुपाधिः यतो विकल्पापायाभ्यां विश्वोत्पत्तिलयाभ्यां लक्ष्यते ॥ २७ ॥

अन्वीक्षमाणस्य विचारयतः वैकल्पिकः देहोऽहमिति मनसो भ्रमः हृदि कथं तिष्ठेतेति उक्तलक्षणेन सांख्येनात्मानात्मविवेके सति देहस्यानात्मत्वनिर्धारणादिति भावः ॥ २८ ॥ २९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे चतुर्विंशः सङ्गतः सङ्गतः सताम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

योनिरिन्द्रिययोनिः राजसाहंकारो महति लीयते प्रभुर्देवतागणः वैकारिके लीयते ईश्वरे सर्वेन्द्रियस्वामिनि मनसि

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वैकारिके प्रविष्टे सति वैकारिके महति शब्दः शब्दतन्मात्रं भूतादिमप्येति भूतादिश्च महत्यप्येति पाठक्रमाद्र्थक्रमो बलवान् ॥ २५ ॥

महान् गुणेषु सूत्रात्मना स्थितेषु महान् सूत्रे स्वावस्थाविशेषे इति सृष्ट्यनुरोधाद्बोध्यम् ते सूत्ररूपेणास्थिताः अव्यक्ते प्रकृतौ तदव्यक्तं काले प्रकृतिसृष्टिसंहारयोः कालनिमित्तत्वात् पुनः सृष्टिकालं प्रतीक्षमाणा प्रकृतिरवतिष्ठते इत्यर्थः । अव्यये इत्यनेन कालस्य नित्यता सूच्यते ॥ २६ ॥

मायामये प्रकृत्यावृते एतेन जीवस्य मायया बद्धत्वमुक्तम् जीवः आत्मनि अंशिनि अजे मयि लीयते अत्र कालस्य वृत्तिरूपेण सृज्यत्वं निवृत्तिरूपेण संहार्यत्वं जीवस्य च देहेन्द्रियादिसंयोगाद्वियोगाच्च सृज्यत्वं संहार्यत्वं चोपपद्यते इति बोध्यम् एवं सर्वकारणत्वं भगवतो बोध्यं स्वस्य सर्वकारणत्वात्मनिरपेक्षस्थितिप्रवृत्त्याद्याश्रयत्वमाहाऽऽत्मेति । केवलः निःसमानातिशयः विकल्पापायौ विश्वसृष्टिसंहारौ कालद्वारा लक्ष्यते यस्मात् अनाद्यनन्तस्वरूपगुणशक्त्याद्याश्रय इत्यर्थः ॥ २७ ॥

एवमात्मानात्मपरमात्मस्वरूपादियाथात्म्यमन्वीक्षमाणस्य वैकल्पिकः देहादावहमादिरूपः ॥ २८ ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुर्विंशाध्यायार्थप्रकाशः ॥ २४ ॥

---

भाषा टीका ।

देवता सब मन में लीन होते हैं हे सौम्य । उद्धव जो कि मन से सब इन्द्रियों का स्वामी है शब्द का तामस अहंकार में लय होता है वह बड़ा समर्थ महत्तत्त्व में लीन होता है ॥ २५ ॥

वह महत्तत्त्व अपने कारण गुणों में लीन होता है जो कि गुण वालों में बड़ा है वे गुण प्रकृति में लीन होते हैं वह प्रकृति नाश रहित काल में लीन होती है ॥ २६ ॥

काल ज्ञान स्वरूप वाले जीव में लीन होता है जीव तो आत्मा मेरे में लीन होता है मैं तो अज हूं तो केवल आत्मा धार हूं विकल्प तथा नाश इन से रहित हूं तब मेरा लय होना नहीं है ॥ २७ ॥

इस प्रकार से इन सब बातों के विचार करने वाले पुरुष को पदार्थों के भेदों का भ्रम कैसे हृदय में स्थित रहैगा जैसे कि आकाश में सूर्य के उदय होने से अंधकार नहीं रहता है तैसे ॥ २८ ॥

कार्य कारण सूक्ष्म स्थूल सब के जानने वाले मैंने यह सांख्य का विधि उत्पत्ति प्रलय रूप से कहा है जोकि हृदय के संशय ग्रन्थि का नाश करने वाला है ॥ २९ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध चौबीस में अध्याय की पं० लक्ष्मणाचार्यकृत भाषा टीका समाप्त ॥ २४ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

## अथ पञ्चविंशोऽध्यायः ।

——:*:——

श्रीभगवानुवाच ॥

गुणानामसम्मिश्राणां पुमान् येन यथा भवेत् ।
तन्मे पुरुषवर्येदमुपधारय शंसतः ॥ १ ॥
शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ।
तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः ॥ २ ॥
काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखम् ।
मदोत्साहो यशःप्रीतिर्हास्यं वीर्यं बलोद्यमः ॥ ३ ॥
क्रोधो लोभोऽनृतं हिंसा याञ्चा दम्भः क्लमः कलिः ।
शोकमोहौ विषादार्ती निद्राशा भीरनुद्यमः ॥ ४ ॥
सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः ।
वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ॥ ५ ॥
सन्निपातस्त्वहमिति ममेत्युद्धव ! या मतिः ।
व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः ॥ ६ ॥
धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः ।
गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः ॥ ७ ॥
प्रवृत्तिलक्षणे निष्ठा पुमान् यर्हि गृहाश्रमे ।
स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चविंशे तु नैर्गुण्यसम्प्रतिपत्तये निरूप्यते ।
चित्तप्रभवसत्त्वादिगुणवृत्तिरनेकधा ॥

प्रकृतिपुरुषविवेकज्ञानवतोऽपि यावत्प्रयत्नविशेषेण गुणप्रवृत्तिजयो न स्यात् तावद्बन्धोपरमोऽतस्तज्जयोपायगुणवृत्तिनिरूपणार्थमाह । गुणानामिति । सह मिश्रीभूय वर्तमानाः सम्मिश्राः न सम्मिश्रा असम्मिश्रास्तेषां विभक्तानां गुणानां मध्ये येन गुणेन यथा यादृशो भवेत्तदिदं कथयतो मत्तो निबोधेत्यर्थः ॥ १ ॥

तत्र सत्त्ववृत्तीराह । शम इति । शमो मनोनिग्रहः दमो बाह्येन्द्रियनिग्रहः तितिक्षा सहिष्णुत्वम् ईक्षा विवेकः तपः स्वधर्मवर्तित्वम् स्मृतिः पूर्वापरानुसंधानम् तुष्टिर्यथालाभसंतोषः त्यागो व्ययशीलता अस्पृहा विषयेषु वैराग्यम् श्रद्धा आस्तिक्यं गुर्वादिषु ह्रीरनुचिते कर्मणि लज्जा तेषामनवलोकनम् दया दानम् दयदानगतिरक्षणेष्विति स्मरणात् आदिशब्देनार्जवविनयादिस्व निर्वृतिरात्मरतिः ॥ २ ॥

रजसो वृत्तीराह । कामोऽभिलाषः ईहा व्यापारः मदो दर्पः तृष्णा लाभे सत्यप्यसंतोषः स्तम्भो गर्वः आशीर्धनाद्यभिलाषेण देवतादिप्रार्थनम् भिदा अहमन्य इति भेदबुद्धिः सुखं विषयभोगः मदोत्साहो मदेन युद्धाद्यभिनिवेशः यशःप्रीतिः स्तुतिप्रियता हास्यमुपहासः वीर्यं प्रभावाविष्कारः बलेनोद्यमो [illegible]नोद्यमः सात्त्विक एव ॥ ३ ॥

तमोवृत्तीराह । क्रोध इति । क्रोधोऽसहिष्णुता लोभो व्ययपराङ्मुखता अनृतमशास्त्रीयं प्रमाणमिति भाषणम् हिंसा द्रोहः याञ्चा प्रार्थना दम्भो धर्मध्वजित्वम् क्लमः श्रमः कलिः कलहः शोकमोहौ अनुशोचनं भ्रमश्च विषादार्ती दुःखं दैन्यं

### श्रीधरस्वामिकृतभावार्थदीपिका ।

च निद्रा तन्द्रा आशा मे इदं भविष्यतीत्यन्वीक्षा भीर्भयम् अनुद्यमो जाड्यम् ॥ ४ ॥

अनुपूर्वशः क्रमेणैताः श्लोकत्रयोक्ता वर्णितप्रायाः अन्या अप्यूह्या इति भावः ॥ ५ ॥

विभक्तानां गुणानां वृत्तयो वर्णिता मिश्राणामाह । सन्नि-पात इति त्रिभिः । अहं ममेति ममतानुषक्तसर्ववृत्तिसामाना-धिकरण्यदर्शनात्सन्निपातजत्वम् अहं शान्तः कामी क्रोधी-त्यादि तथा मम शान्तिरस्ति कामः क्रोध इत्यादि द्रष्टव्यम् तत्पूर्वकः सर्वो व्यवहारश्च सन्निपातकार्यमित्याह । व्यवहार इति । अत्र हेतुः मनश्च मात्राणि चेन्द्रियाणि चासवश्च तैः मनआदीनां सात्त्विकतामसराजसत्वात्तैर्व्यवहारः सन्निपातज इति भावः ॥ ६ ॥

असौ पुरुषो यदा धर्मादिषु परिनिष्ठितो भवति तदाऽयं त्रिषु निष्ठारूपः संनिकर्षः सन्निपातकार्यम् धर्मादीनां सत्त्व-तमोरजःकार्यत्वात्त्रिषयतः सन्निपातजत्वमुक्तम् फलतश्च तथात्वमाह । श्रद्धारातिधनानि सत्त्वरजस्तमोमयान्यावहन्तीति तथा ॥ ७ ॥

धर्मनिष्ठायामेव सन्निपातं दर्शयति । प्रवृत्तिलक्षणे काम्य-धर्मे यदा पुंसो निष्ठा भवति तथा पुमान् यदा गृहाश्रम एवा-सक्तस्तिष्ठेत् अनु पश्चात्स्वधर्मे च नित्यनैमित्तिके तिष्ठेत्साऽपि स्मितिः सन्निपातः हि यस्मात्काम्यधर्मगृहासक्तिस्वधर्मा रजस्तमः सत्त्वमया इत्यर्थः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

स्वनैर्गुण्यप्रतिपत्त्यै स्वीयज्ञानादेर्निर्गुणत्वप्रतिपादनाय । प्रयत्नविशेषेण भक्तियोगरूपेण । अतो गुणवृत्तिजयस्य द्वन्द्व-निवर्त्तकत्वात् । गुणवृत्तिरूपात्मकमर्थम् । तदिदं तत्तद्गुण-विशेषेण तथा तथा भवनम् ॥ १ ॥

तत्र तासु वृत्तिषु मध्ये ॥ २ ॥

दर्पश्चित्तोन्नतिः । गर्वोऽन्यहेलनम् । अतो न पौनरुक्त्यम् । बलेनेत्यस्य व्याख्यर्थमाह । न्यायेनेति ॥ ३—४ ॥

प्रायः शब्दस्याभिप्रायमाहान्या अपीति ॥ ५ ॥

सर्ववृत्तीनां शमादीनाम् अहं ममेति वृत्तौ सामानाधिक-रण्यम् एकाधिकरणवृत्तित्वं तस्य दर्शनाद्यत्राहंममकारौ स्त-स्तत्रैव शान्तिकामक्रोधादीनामुदयो ननु ब्रह्मविदि निरहङ्कार इत्यर्थः । तत्पूर्वकोऽहङ्कारममकारपूर्वकः । अत्र सन्नि-पातकार्यत्वे । सन्निपातजो मिश्रगुणवृत्तिकार्यम् ॥ ६ ॥

निष्ठाया विषयो धर्मादिस्तस्य सत्त्वादिकार्यत्वात्तन्निष्ठाया अपि सन्निपातजत्वमुक्तमित्यर्थः । फलतस्तथात्वमिति तत्र धर्म-निष्ठायाः सात्त्विक्याः फलं श्रद्धापि सात्त्विक्येव सात्त्विक्या-स्याः भक्तौ श्रद्धेत्युक्तेः तथा कामनिष्ठाया राजस्याः फलम् विषयरतिः सा राजस्येव एवमर्थनिष्ठायास्तामस्याः फलम् व्ययाभावविशिष्टं धनं तामसमेवेति फलतोऽपि सन्निपात-जत्वमित्यर्थः ॥ ७ ॥

काम्ये धर्मे स्वर्गार्थकयागादौ । हि यस्मादित्यस्य बलात् काम्यधर्मत्वाद्यध्याहारादित्यर्थं इत्युक्तम् ॥ ८ ॥ ६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शमादयः सात्त्विकाः ॥ १ ॥ २ ॥

कामादयो राजसाः ॥ ३ ॥

क्रोधादयस्तामसाः ॥ ४ ॥

मनोमात्रेति मात्रशब्दः शब्दादिगुणपरः मनआदिभिर्व्य-वहारश्च गुणसन्निपातकृतमूल इत्यर्थः ॥ ६—१० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ॥

त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनां भक्तियोगस्य मद्गतिरिति सत्त्वादिगुणकर्मयुक्तो गतिभेद इत्युक्तं तत्र येन गुणेन यदभिनिवेशः स्यादिति जिज्ञासामालक्ष्याह । गुणानामिति गुणानां सत्त्वादीनां प्रत्येकं मिथो मिश्राणां च मध्ये येन येन गुणेन पुमान् यथा यादृशो भवेत् यदभिनिवेशो भवेदित्यर्थः । तदेतद्धे पुरुषवर्य ! शंसतः कथयतो मे मत्तः उपधारय शृणिवत्यर्थः ॥ १ ॥

इत्थं श्रोतु प्रचोद्य जिज्ञासितमुपपादयितुं तावत्प्रत्येकमसा-धारणकार्याण्याह । शमइत्यादिना । शमादयः सत्त्वस्य वृत्तयः कार्यभूताः कामादयो रजसः क्रोधादयस्तमसः तत्र शमोऽन्तःकर-णावधानं दमो बाह्येन्द्रियावधानं तितिक्षा द्वन्द्वसहिष्णुता ईक्षा तत्त्वविमर्शः स्मृतिरनुभूतार्थस्मरणम् तपः हेति छेदः वैराग्यं श्रद्धा आस्तिक्यं ह्रीरनुचिते कर्मणि लज्जा दया दानं दमशब्द-नगतिरत्नयोष्वित्यनुशासनादन्यथा पौनरुक्त्यात् आदिशब्देनार्ज-वविनयादिः स्वानिर्वृत्तिरात्मानुभवजं सुखम् ॥ २ ॥

कामो विषयानभुक्त्वा स्थातुमशक्तिः ईहा चेष्टा मदो दर्पः तृष्णाऽसन्तोषस्तम्भो गर्वः आशीर्धनादिलिप्सा भिदा सुखं विषयभोगः मदोत्साहः साहसकर्माभिनिवेशः यशसि प्रीतिः ॥३॥

दम्भो वञ्चनं क्लमः श्रमः कलिः कलहः शोकमोहावनु-शोचनं भ्रमश्च विषादार्तीः दुःखं दैन्यं च आशाऽपेक्षा भीर्भयम् अनुद्यमो जाड्यम् ॥ ४ ॥

पुंसः सत्त्वादिगुणत्रयाभिवृद्ध्या कर्माणि भवन्ति एभि-श्चायं सात्त्विको राजसस्तामसश्चेत्यनुमीयते एता अनुपूर्वशः क्रमेण श्लोकत्रयोक्ताः वर्णितप्रायाः अन्या अप्यूह्या इति भावः अथ मिश्राणां गुणानां वृत्तीर्विवक्षुः अवधानाय प्रचोदयति । सन्निपातमथो शृणु विति सन्निपातप्रयुक्तं गुणानां मिथः सम्मे-लनप्रयुक्तकार्यमित्यर्थः ॥ ५ ॥

हे उद्धव ! अहं ममेति या मतिः स संनिपातः अहङ्कारमम-कारौ मिश्रितगुणकार्यभूतावित्यर्थः । अहम्ममेतिमूलकः सर्वोऽपि-मनोमात्रेन्द्रियासुकारणको व्यवहारश्च गुणसंनिपातप्रभवः मनो-मात्रेतिमात्रशब्देन शब्दादितन्मात्रकार्याकाशादिभूतकार्यं देहो विवक्षितः ॥ ६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च अर्थादित्रिष्वसौ पुमान् यदा परिनिष्ठितः तदायं त्रैवर्गिकार्जनानुकूलव्यापारः गुणानां सन्निकर्षः सन्निपातप्रयुक्तः स च श्रद्धारतिधनावहः श्रद्धा चिकीर्षितविषया त्वरा रतिः प्रीतिर्धनं च तान्यावहतीति तथा तत्र धर्मपरिनिष्ठात्मको व्यापारोऽर्थकामयोः श्रद्धारत्यावहः पुनर्द्धर्मपरिनिष्ठाद्वारा धनावहश्च यद्वा पुमान् सन्निकर्षः समित्येकीकारे निकर्षो निपातो वास्मिंस्तथाभूतोऽयं परिनिष्ठितः पुमान् श्रद्धाद्यावहशील इत्यर्थः धर्मादिनिष्ठाश्रद्धाद्यावहत्वस्वभावाभ्यां गुणसंनिपातप्रचुरत्वमुक्तमिति भावः ॥ ७ ॥

किञ्च यर्हि यदा यस्य पुंसः प्रवृत्तिलक्षणे त्रैवर्गिकार्जनानुकूलव्यापारे निष्ठा स्यात्तदायं पुमान् गृहाश्रमधर्मे स्ववर्णधर्मे चानुतिष्ठेत् परिनिष्ठितो भवेत् सा प्रवृत्तिलक्षणा निष्ठा गुणानां समितिः संनिपातस्तर्हि प्रवृत्तिधर्मनिष्ठा समितिप्रयुक्ता भवत्तया गुणसमितिमानित्युक्तेय इति भावः । गृहाश्रमस्ववर्णधर्मनिष्ठारूपकार्येत्युक्तं पुनरुपादानमित्यवगन्तव्यम् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तज्ञानाधिकारी सात्त्विक एवेत्यभिप्रेत्य सत्त्वादिगुणानां वृत्तीर्वक्तुमस्मिन्नध्याये तत्र प्रथममभिश्रा वृत्तीराह । गुणानामिति सत्त्वादिगुणानाममिश्रायां च मध्ये येन गुणेन पुमान् यथा भवेत्तथा तच्छंसतो मे सकाशादिदमुपधारय ॥ १ ॥

इतराभ्याममिश्रा गुणवृत्तीराह । शम इति । ईक्षा ज्ञानं स्मृति रखण्डशास्त्रार्थस्मरणं त्यागो निषिद्धस्य अस्पृहा निषिद्धेष्वराहित्यं निस्तुतिरात्मप्रशंसावर्जनं धृतिर्विपद्यपि चित्तस्यानुद्वेगः एते गुणा यस्य सन्ति स सात्त्विकः सांख्यज्ञानाधिकारीत्युक्तमनेन ॥ २ ॥

रजोगुणवृत्तीराह । काम इति । कामो विषयरागः ईहा निषिद्धचेष्टा तृष्णानलस्फूर्तिः स्तम्भ उक्तानङ्गीकारित्वम् आशीः धनाकाङ्क्षा भिदा भेदकरणम् अन्यथाज्ञानं वा असुखं दुःखं राजसस्य दुःखं तामसस्य दुःखं भवतीति किं वक्तव्यमित्यभिप्रायेणोक्तं तदुक्तं "राजसेऽपि यदा दुःखं तामसे किमुतेति तत् राजसे दुःखवचनं तामसेति निवर्त्तयति" एवंविधगुणो राजस इत्यर्थः ॥ ३ ॥

तमोगुणवृत्तीराह । क्रोध इति । माया कपटम् अविद्यमानमहिमप्रकटनं दम्भः अस्थानेऽपि क्रोधोऽक्षमा कलिः कलहः मोहोऽज्ञानम् आशोत्कण्ठा एवंविधस्तामसाधिकारीति ॥ ४ ॥

उक्तवृत्तीः विविनक्ति । सत्त्वस्येति । सन्निपातं गुणानां मिश्रतां पुरुषनिष्ठतयाह । सन्निपात इति । देहे कलत्रादौ योऽहङ्कारः ममकारश्च सत्त्वादिगुणानां मिश्रताबलेन मात्रा शब्दादयः सन्निपाते सति ॥ ५ ॥ ६ ॥

मनोमात्रेन्द्रियासुभिर्व्यवहारोऽभिज्ञानादिलक्षणो भवतीत्युक्तं विवृणोति । धर्मे चेति यदासौ पुरुषो धर्मादौ परिनिष्ठितो भवति तदा तस्यायं गुणानां सन्निकर्षः श्रद्धादिकरो भवति यदा धर्मे निष्ठा तदा श्रद्धा यदार्थे निष्ठा तदा धनकारी यदा कामनिष्ठा तदा रतिं करोतीत्यर्थः ॥ ७ ॥

यर्हि गृहाश्रमे पुमान् प्रवृत्तिलक्षणां निष्ठां भजमानः स्वधर्मं चानुतिष्ठेत् तत्र सा गुणानां समितिः मिश्रीभाव इति द्रष्टव्यम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

असम्मिश्राणामिति । अमिश्राणां परस्परमिश्राणां चेत्यर्थः ॥ १ ॥

सत्यमितिमम त्वन्य एवैश्वर्यादयः षड्गुणा इति भावः ॥ २-२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पञ्चविंशे निरूप्यन्ते सत्त्वादिगुणवृत्तयः ।
गुणयुक्तानि वस्तूनि गुणातीतान्यपि क्रमात् ॥

अथोक्तेन सांख्येनात्मानात्मविवेकवतोऽपि यावद्गुणत्रयवृत्तिजयो न स्यात्तावद्देहाध्यासो न निवर्त्तत इति गुणत्रयवृत्तीर्निरूपयितुमाह । गुणानामिति । सह मिश्रीभूय वर्त्तमानाः सम्मिश्राः न सम्मिश्राः असम्मिश्राः गुणान्तरामिलितास्तेषां गुणानां मध्ये येन गुणेन यथा यादृशो भवेत्तदिदं मे मत्तः शंसतो वदतस्त्वमुपधारय बुध्यस्व ॥ १ ॥

तत्र सत्त्ववृत्तीराह । शम इति । ईक्षा विवेकः अस्पृहा वैराग्यं पुनरुक्ता दानं दमदानगीतरक्षणेऽविलि स्मरणात् आदिशब्देनार्जवं विनयश्च स्वेनात्मनैव निर्वृत्तिः सुखम् ॥ २ ॥

रजसो वृत्तीराह । काम इति । ईहा व्यापारस्तम्भोऽहङ्कार आशीर्धनाद्यभिलाषेण देवादिप्रार्थनं भिदा सुखं विषयभोगः महोत्साहो मदेन युद्धाद्युत्साहः यशःप्रीतिः स्तुतिप्रियता हास्यमुपहासः वीर्यं प्रभावाविष्कारः बलेनोद्यमः न्यायेनोद्यमस्तु सात्त्विक एव ॥ ३ ॥

तमसो वृत्तीराह । क्रोध इति । दम्भो धर्मध्वजित्वम् आशा इदमयं दास्यतीत्यपेक्षा ॥ ४ ॥

वर्णितप्राया इत्यन्या अपि सन्ति ताश्चेवमूह्या इति भावः । यद्वा वर्णितप्राया इति स्पष्टीकृत्यावर्णिता अपि वर्णिता एवेत्यर्थः ॥ ५ ॥

अहमिति ममेति या मतिः स सन्निपातस्ततश्च मनआदिभिः सर्वोऽपि व्यवहारः सन्निपात इत्यन्वयः यदि कदाचिच्छमादिकामादिक्रोधादीनामत्युद्रेको भवेत्तदायं पुरुषो मूर्त्तः शम इति मूर्त्तः काम इति मूर्त्तः क्रोध इत्युच्यते तेन पुरुषेण व्यावहारिकाणामहङ्कारममकारमूलको लौकिकः कोऽपि व्यवहारो न सिध्यति अतिशान्तस्याहङ्कारममकारयोः स्वत एवाभावात् कामान्धस्य क्रोधान्धस्य च अहममुकस्य प्रतिष्ठितस्य पुत्रो ममेदमनुचितमिदं तूचितमिति विवेकगन्धस्याप्यभावादेव सतोरपि तयोरभावात् व्यवहारासिद्धिस्तु मनआदिभिः सत्त्वादिमिलनरूपेण समुचितेति ॥ ६ ॥

तमेवाह । असौ पुरुषो यदा धर्मादिषु परिनिष्ठितो भवति तदास्य गुणानां सत्त्वतमोरजसां सन्निकर्षः सन्निपातः स्यात् श्रद्धाद्यावहः धर्मनिष्ठातो धर्मविषयकश्रद्धाप्रापकः फलतो धर्मप्रापकः इत्यर्थः । कामनिष्ठातो रतिप्रापकः अर्थनिष्ठातो धनप्रापको भवति ॥ ७ ॥

सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे ।
चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥ १२ ॥
यदेतरौ जयेत्सत्त्वं भास्वरं विशदं शिवम् ।
तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥ १३ ॥
यदा जयेत्तमः सत्त्वं रजः सङ्गं भिदा चलम् ।
तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥ १४ ॥
यदा जयेद्रजः सत्त्वं[1] तमो मूढं लयं जडम् ।
युज्येत शोकमोहाभ्यां निद्रया हिंसयाऽऽशया ॥ १५ ॥
यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः ।
देहेऽभयं मनोऽसङ्गं तत्सत्त्वं विद्धि मत्पदम् ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु तथापि गुणावशेन कर्तृत्वाविशेषात्केन विशेषेण त्वं सेव्यो जीवस्तु सेवक इति नियमो यतो मां भजेतेति वारं वारमुच्यते तत्राऽऽह । सत्त्वमिति । जीवस्यैव न मे कुतः यत श्चित्तजाः जीवोपाधौ चित्तेऽभिव्यज्यन्तेऽतो यैः स एव बध्यते कीदृशः भूतानां देहरूपाणामन्येषां च मध्ये सज्जमानः अहं त्वसज्जमानो गुणनियन्तृत्वेन सृष्ट्यादिकर्ताऽपि नित्यमुक्तोऽतो महान्विशेष इति भावः । यद्वा भूतानामपञ्चीकृतानां यत्कार्यभूतं चित्तम् "अन्नमयं हि सौम्य ! मन" इति श्रुतेः तत्प्रभवाः अतो भूतोपहितस्य जीवस्यैवेति अन्यत्समानम् ॥ १२ ॥

तदेवं मिश्रामिश्रगुणकार्याणि प्रदर्श्यैदानीमेकैकगुणोद्रेककार्याणि दर्शयति । यदेति सप्तदशभिः । यदेतरौ गुणौ जयेदभिभवेत् भास्वरं प्रकाशकम् विशदं स्वच्छं शिवं शान्तं शिवत्वविशदत्वभास्वरत्वानां यथाक्रमं सुखधर्मज्ञानहेतुत्वात्तदा तैर्युज्येत आदिशब्दाच्छमदमादिभिश्च ॥ १३ ॥

तमः सत्त्वं च कर्मभूतं रजः कर्तृ सङ्गं सङ्गहेतुः भिदा भेदहेतुः चलं प्रवृत्तिस्वभावमतः सङ्गहेतुत्वाद्यशसा श्रिया युज्यते तत्कामः पुमान् भवतीत्यर्थः । भिदा हेतुत्वादुःखेन युज्येत "द्वितीयाद्वै भयं भवति" इति श्रुतेः चलत्वात्कर्मणा युज्येत ॥ १४ ॥

यदा रजः सत्त्वं च कर्मभूतं तमः कर्तृ जयेत् मूढं विवेकभ्रंशकं लयमावरणात्मकं जडमनुद्यमात्मकमतो मूढत्वाच्छोकमोहहिंसाभिर्लयत्वान्निद्रया जडत्वादुद्यमाभावेन केवलमाशया युज्येतेति द्रष्टव्यम् । जन इति पाठे लयात्मकमेव निद्राशयोर्हेतुः ॥ १५ ॥

किं च । यदा चित्तं प्रसीदेत स्वच्छं भवेत् निवृत्तिरुपरतिः तत्सत्त्वं मत्पदं मदुपलब्धिस्थानं सत्त्वमुद्रिक्तं विद्धि ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी

अनुमीयादित्यत्रेत्थं प्रयोगः अयं सात्त्विकः शमादिमत्त्वात् । अयं राजसः कामादिमत्त्वात् । अयं तामसः क्रोधादिमत्त्वादिति ॥ ९ ॥

स्वरूपतो भक्तेर्निर्गुणत्वेऽपि सात्त्विकस्वधर्माश्रयत्वात् सत्त्वप्रकृतिमित्युक्तमेवं परत्रापि ज्ञेयम् । आशिषो राज्यादिभोगान् आशास्य सङ्कल्प्य अन्येषां शब्दादिविषयरूपेण परिणतानां मध्ये तेष्वित्यर्थः । मध्य इत्यध्याहृतं ननु निर्धारसूचकं चेतनाचेतनयोः साजात्यायोगात् ॥ १० ॥ ११ ॥

गुणनियन्तृत्वेनेति । चिच्छक्त्या मायाव्युदासादित्यर्थः । तदुक्तं श्रीमदर्जुनेन । मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि इति । अतश्चिच्छक्तिवैशिष्ट्यात् जीवादीश्वरस्य महान् भेद इत्यर्थः । पूर्वार्थे सज्जमान इत्यनेनैव चरितार्थत्वे भूतानामित्यधिकत्वादपुष्टार्थमतो । यद्वेति । अन्नमयं पृथिवीप्रधानम् । तत्प्रभवाः भूतकार्यचित्तप्रजाताः अतो भूतकार्यचित्तजत्वात् ॥ १२ ॥

अर्थक्रमेण व्याचष्टे । शिवत्वेति । तैः सुखादिभिः ॥ १३ ॥

अतो विशेषणत्रयविशिष्टत्वात् । तत्तत्कामो यशः श्रीकामः यस्य देहगेहाद्यासक्तिस्तस्यैव यशआदि कामना नान्यस्येत्यर्थः ॥ १४ ॥

अतो मूढत्वादिवैशिष्ट्यात् मूढत्वाद्विवेकभ्रंशकत्वात् शोकोऽनुतापः मोहोऽभिनिवेशः हिंसा तमसा परपीडनं ताभ्यां युज्येत तदादीनां तमः कार्यत्वात् । निद्रया ज्ञानावरणया तमोवृत्त्या तमसा ग्रस्यते पुंसश्चेतना व्यापिनी इत्युक्तेः । आशया इदं मे भविष्यतीति तृष्णया अर्थक्रमेण व्याख्यातत्वाद्द्रष्टव्यमित्युक्तम् । जडमित्यत्र जन इति पाठान्तरम् ॥ १५ ॥

गुणानामन्योऽन्यमिथुनत्वादुद्रिक्तमित्यध्याहृतम् ॥ १६ ॥

---

1 तमो मूढो लयो जनः इति० वि० पाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रजस्तमः सत्त्वगुणौ जयेत् रजःस्वभावमाह । सङ्गेति । विषयसङ्गकारि भेदकारि चपलताकारि च ॥ १४ ॥

तमोगुणो रजः सत्त्वगुणौ जयेत् आशया अतितृष्णया मूढमित्यनेन तमः स्वभावो दर्शितः ॥ १५ ॥

यदा चित्तं प्रसन्नमिन्द्रियाणां निवृत्तिरात्मतादस्य देहे अभयं मनः असङ्गं च भवति तदा तन्मत्पदं मत्स्थानं सत्त्वं विद्धि ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेवममिश्रा मिश्राश्च गुणवृत्तीः प्रदर्श्य इदानीं पुमान् प्राधान्येन व्यपदेशा भवन्तीति न्यायेन स गुणेन यथा भवेदिति यदुक्तं तद्दर्शयति । पुरुषमिति ॥ ९ ॥

पुरुषगुणयोगेन तत्र तत्र भक्तिरपि सगुणा तिष्ठेदित्याह । यदेति द्वाभ्याम् ॥ १० ॥

हिंसा शत्रुमारणादिकम् ॥ ११ ॥

ननु तथापि सृष्ट्यादिकर्तृत्वेन गुणपरत्वाविशेषात् केन विशेषेण त्वं सेव्यो जीवः सेवक इति नियमः अतो मां भजेतेति मुमुक्षवे तत्राह । सत्त्वमिति । गुणा बन्धका जीवस्यैव न तु मे कुतः यतश्चित्तजाः जीवोपाधौ चित्तेऽभिव्यज्यमानत्वात्तत्र जाताः भूतानामिति सप्तम्यर्थे षष्ठी वैगुण्यभूतमौतिकेषु देहदैहिकेषु सज्जमानो जीव एव निबध्यते अहं त्वनासज्जमानगुणनियन्तृत्वेन सृष्ट्यादिकर्तापि नित्यमुक्तः अतो महान् विशेष इति भावः ॥ १२ ॥

किञ्च । त्रिगुणमये जीवे गुणाः परस्परं बाध्यबाधकभावेनैव तिष्ठन्ति तथा सति जीवस्य यादृशी दशा स्यात्तामाह । यदेति त्रिभिः । सत्त्वं कर्तृ यदा इतरौ रजस्तमोगुणौ जयेत् अभिभवेत् भास्वरं प्रकाशकं विशदं स्वच्छं शिवं शान्तं शिवत्वविशदत्वभास्वरत्वानां यथाक्रमं सुखधर्मज्ञानहेतुत्वात्तदा तैः सुखादिभिरेव युज्येत आदिशब्दात् शमदमादिभिश्च ॥ १३ ॥

तमः सत्त्वं कर्मभूतं रजः कर्तृ यदा जयेत् सङ्गः सङ्गहेतुः भिदा भेदहेतुः । चलं प्रवृत्तिस्वभावं तदा भिदाहेतुत्वाद्दुःखेन युज्यते द्वितीयाद्वै भयं भवतीति श्रुतेः । चलत्वात् कर्मणा सङ्गहेतुत्वात् यशसा श्रिया च युज्येत तदा सकामः पुमान् भवतीत्यर्थः ॥ १४ ॥

रजः सत्त्वञ्च कर्मभूतं तमः कर्तृ यदा जयेत् मूढं विवेकभ्रंशकं लयमावरणात्मकं जडमनुद्यमात्मकं तदा मूढत्वाच्छोकमोहहिंसाभिः । लयत्वान्निद्रया जडत्वादुद्यमाभावेन केवलमाशया युज्येत । तत्रोत्तरग्रन्थव्याख्यामनुसृत्य तत्तत्कालेऽपि तत्तद्गुणात्मको भेदः । तथा यदा केवलं भक्त्या गुणत्रिकं जितं स्यात्तदा निर्गुणेन प्रेमानन्देन युज्येतेत्ययमर्थोऽपि व्याख्यानप्रसङ्गे वर्णनीयः ॥ १५ ॥

तदेवं वर्त्तमानो गुणो बाधको भवति यदा तदा जीवो बाध्यो भवतीत्यत इदानीं केन केन लक्षणेन कः को गुणो वर्द्ध-

मानो ज्ञेय इत्याह । यदेति त्रिभिः । प्रसीदेत् स्वच्छं भवेत् निवृत्तिर्वितृष्णत्वं यदाऽभयं मनः सङ्गरहितमनासक्तं स्यात्तदा सत्त्वमुद्रिक्तं विद्धि मत्पदकर्माणि मत्प्राप्तौ पदं व्यवसायो यस्मात् तत् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदुक्तं पुमान् येन यथा भवेदिति तदाह । पुरुषमिति त्रिभिः ॥ ९ ॥ १० ॥

आशिषः फलानि हिंसा प्राणिपीडा ॥ ११ ॥

बद्धबन्धनिवर्तकभूतयोर्भक्तभजनीययोरन्योऽन्यविलक्षणधर्मवत्त्वमाह । सत्त्वमिति । सत्त्वाद्याः गुणाः प्रकृतिगुणाः जीवस्यैव यतो जीवस्यैव व्यामोहकतया चित्ते जायन्ते वैगुण्यभूतानां मनुष्यादीनां मध्ये सज्जमानो जीवो निबध्यते ॥ १२ ॥

एवं विभक्तानामविभक्तानां च गुणानां कार्याणि प्रदर्श्याधुनैकैकगुणोद्रेककार्याण्याह । यदेति त्रिभिः । सत्त्वे प्रयोज्यकर्तृप्रवर्तितमित्यर्थः । एवमग्रेऽप्यूह्यम् । तत्प्रयोजकः पुमान् सुखादिभिर्युज्येतेति उत्तरत्रापि योज्यम् जयेदभिभवेत् भास्वरं यथार्थप्रकाशकम् विशदं निर्मलम् शिवं कल्याणावहम् ॥ १३ ॥

रजः इतरौ जयेत् सङ्गमासक्तिमूलं भिदा शत्रुमित्रादिभेदेन चलमस्थिरम् आसक्तिमूलत्वाद्दुःखेन कर्मणा यशसा श्रिया च ॥ १४ ॥

तमः इतरौ जयेत् मूढमविवेकित्वापादकम् लयमनारम्भत्वापादकम् जडं पारतन्त्र्यापादकम् ॥ १५ ॥

सत्त्वाद्युद्रेकज्ञापकान्याह । यदेति त्रिभिः । यदा चित्तं प्रसीदेत मद्गुणादि चिन्तनादौ निष्ठां लभेत इन्द्रियाणां वागादीनां निवृत्तिः मद्गुणकथनादौ सुखं भवेत् देहेऽभयम् अभयहेतुः धृतोर्ध्वपुण्ड्रः कृतचक्रधारित्यादिश्रुतिप्रोक्तं भक्तिचिह्नं च भवेत् मनोऽसङ्गं सर्वसङ्गत्यागपूर्वकं भक्तिनिष्ठं भवेत् तदा मत्पदम् तदा मत्पदप्रापकसत्त्वमुद्रिक्तं विद्धि जानीहि ॥ १६ ॥

---

भाषाटीका ।

शमादिक गुणों को देखकर सत्त्वगुण वाला पुरुष है ऐसा अनुमान करना चाहिये कामादिकों से रजोगुणी जाने क्रोधादिकों से तमोगुणी जाने ॥ ९ ॥

जब निष्काम होकर भक्ति से मेरे को भजता है जो तिस को सत्त्व गुण वाला जाने वह स्त्री होवे वा पुरुष होवे ॥ १० ॥

जब किसी मनोरथ को करके अपने कर्मों से मेरे को भजे तो उसको राजस जाने किसीकी हिंसा विचार कर मेरा भजन करै तो उसको तामस जानना ॥ ११ ॥

सत्त्व रज तम ए तीनों गुण जीव के हैं मेरे नहीं

विकुर्वन् क्रियया चाधीरनिर्वृतिश्च चेतसाम् ।
गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय ॥ १७ ॥
सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम् ।
मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥ १८ ॥
एधमाने गुणे सत्त्वे देवानां बलमेधते ।
असुराणां च रजसि तमस्युद्धव ! रक्षसाम् ॥ १९ ॥
सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं[1] त्रिषु सन्ततम् ॥ २० ॥
उपर्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः ।
तमसाऽधोऽध आमुख्याद्रजसाऽन्तरचारिणः ॥ २१ ॥
सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।
तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥ २२ ॥
मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् ।
राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम् ॥ २३ ॥
कैवल्यं सात्त्विकं ज्ञानं[2] रजो वैकल्पिकं च यत् ।
प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ २४ ॥

भाषा टीका ।

चित्त से उत्पन्न होते हैं जिनसे आसक्त होने से मनुष्य बंधन को प्राप्त हो जाता है ॥ १२ ॥

जब प्रकाश मान निर्मल मङ्गल रूप सत्त्व गुण दूसरे दोनों गुणों को जीतकर दबा देता है तब पुरुष सुख धर्म ज्ञानादिक गुणों से युक्त होजाता है ॥ १३ ॥

जब रजो गुण जो है सो तमो गुण सत्त्व गुण को जीत लेता है तब सङ्ग आसक्ति भेद बलका हेतु होने से कर्म यश श्री दुःख इन से मनुष्य युक्त होजाता है ॥ १४ ॥

जब तमो गुण होता है मोहका अज्ञान आलस्य का हेतु होने से मनुष्य शोक मोह निद्रा हिंसा आशा इन से युक्त हो जाता है ॥ १५ ॥

जिस वखत चित्त प्रसन्न हो जावै सब इंद्रियभी शांति को प्राप्त होजावै देह में निर्भयता होजावै मन में आसक्ति नर है उसको सत्त्व जानों वह मेरे स्थान की प्राप्ति करने वाला है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदा पुनः क्रियया विकुर्वन् विकारं प्राप्नुवन् आधीर्भवति आसमंताद्विक्षिप्ता धीर्यस्य सः चेतसां बुद्धीन्द्रियाणामनिर्वृति-रनुपरतिः गात्राणि कर्मेन्द्रियाणि तेषामस्वास्थ्यं विकाराधिक्यं मनो भ्रान्तं चञ्चलं तदा रज उत्कटं निशामय जानी-हीति ॥ १७ ॥

यदा सीदत्तिरोभवच्चेतसो ग्रहणे चिदाकारपरिणामेऽक्षमं सच्चित्तं विलीयेत मनोऽपि सङ्कल्पात्मकं नष्टं लीनं तमोऽज्ञानं ग्लानिर्विषादश्च भवति तत्तदा तम उत्कटमुपधारय विद्धि ॥ १८ ॥

किं च । एधमान इति । इन्द्रियाण्येव निवृत्तिप्रवृत्तिमोहस्वभावानि देवासुररक्षांसि । यद्वा । प्रसङ्गाद्राधिदैविकानां गुणानामुत्कर्षकार्याण्युक्तानीति ज्ञेयम् ॥ १९ ॥

गुणोत्कर्षतोऽवस्थाभेदं दर्शयति । सत्त्वादिति । प्रसङ्गान्निर्गुणावस्थामाह । तुरीयं चतुर्थमवस्थान्तरं नाम त्रिषु जागरणादिषु सन्ततमेकरूपमात्मतत्त्वमेवेत्यर्थः ॥ २० ॥

गुणोत्कर्षद्वारेण तत्तत्कर्मफलनिष्ठां दर्शयति । उपर्युपरीति ब्राह्मणा वेदानुष्ठानयुक्ताः मानवा इति पाठे ब्रह्मलोकमभिव्याप्य आमुख्यात्स्थावरानभिव्याप्य अन्तरचारिणो मनुष्या एव भवन्ति ॥ २१ ॥

देहावसानकालीनगुणोत्कर्षफलमाह । सत्त्वे वृद्धे सति

[1] त्रिष्वसङ्गतम् [2] कर्मनिष्ठन्तु राजसम् इति विज० पाठः ।

### श्रीधरस्वामिकृतभावार्थदीपिका।

प्रलीना मृताः रजोलयाः रजसि प्रवृद्धे सति लयो येषां ते एवं तमोलया इत्यपि निर्गुणा इत्यत्र तु लयशब्दानुपादानाज्जीवन्तोऽपि निर्गुणाश्चेन्मामेव यान्तीत्यर्थः ॥ २२ ॥

इदानीं गुणोत्कर्षकृतमेव तत्तत्फलसाधनकर्मत्रैविध्यमाह। मदर्पणं मत्प्रीत्युद्देशेन कृतं निष्फलं केवलं दासभावेनैव कृतं सात्त्विकं कर्म नित्यादि तत्सात्त्विकम् फलं सङ्कल्प्यतेऽस्मिन्निति तत् हिंसाप्रायं हिंसोद्देशेन कृतं हिंसाबहुलं च आदिशब्दाद्दम्भमात्सर्यादिकृतम् ॥ २३ ॥

इदानीं सगुणनिर्गुणभेदेन ज्ञानादीनां चातुर्विध्यमाह। कैवल्यं देहादिव्यतिरिक्तात्मविषयम् वैकल्पिकं देहाद्यव्यतिरिक्तात्मविषयं यत्तद्रजो राजसम् प्राकृतं बालमूकादिज्ञानतुल्यम् मन्निष्ठं परमेश्वरविषयम् ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

बुद्धीन्द्रियाणां ज्ञानेन्द्रियाणाम् ॥ १७ ॥

चेतसो ज्ञानस्य स्वधर्मस्य ग्रहणे परिणामे ॥ १८ ॥

देवानां देवत्वनिवृत्तिस्वभावानामेषामिन्द्रियाणामेव परत्रापि वाचितलक्षणा सति च मुख्यार्थे लक्षणाया अन्याय्यत्वमतो यद्वेति। आधिदैविकानां स्वर्गादिकर्माधिकृत्य क्रियतां देवादीनां च सत्त्वादयो गुणास्तेषां च उत्कर्षे उद्रेकस्तस्य कार्याणि तत्तत्त्वान्युक्तानीत्यर्थः ॥ १९ ॥

तुरीयस्याप्रस्तुतत्वादवस्थाप्रकरणप्रसङ्गान्निर्गुणावस्थामाहेत्यर्थः ॥ २० ॥

तत्तत्कर्मफलनिष्ठां सात्त्विकादिकर्मफलस्य सुखादेः स्थानविशेषं वेदार्थेति वेदार्थो वेदप्रतिपाद्यप्रयोजनवदर्थो यागादिस्तदनुष्ठानेऽभियुक्ता निपुणाः एवं पापिष्ठास्तमसा तामसकर्मणाऽधो गच्छन्ति एवमुभयमिश्रकर्माणो रजसा राजसकर्मणा मनुष्या भवन्तीति टीकानुसारेण मूलं योजनीयम् ॥ २१ ॥

उत्क्रान्तिर्जीवस्य निःसरणं मरणमित्यर्थः। जीवन्तोऽपीति व्याख्यानादित्यर्थं इत्युक्तम् ॥ २२ ॥

दासभावेन दासोऽस्मीत्यभिमानेन। नित्यादीत्यादिना नैमित्तिकपरिग्रहः ॥ २३ ॥

देहादिव्यतिरिक्तो य आत्मा त्वंपदार्थस्तद्विषयं वस्तुतस्तु त्वंपदार्थज्ञानस्य तत्पदार्थज्ञानसापेक्षत्वात् केवलत्वासम्भव इति निर्विशेषज्ञानमेव तच्छब्देन व्याख्येयमिति वैष्णवमतम्। अद्वैतमते तु परमेश्वरविषयज्ञानस्यापि नैर्गुण्यहेतुत्वेन निर्गुणमिति लक्षणामयकष्टकल्पनायामेव प्रत्युत आच्छिलगुणस्याप्येन त्वंपदार्थविषयज्ञानस्यापि नैर्गुण्यहेतुत्वाद्विशेषाभावादुदाहरणभेदवैयर्थ्यमेव स्यादिति चिन्त्यमेव तत्। पुनष्टीकाकृतां तथा व्याख्यानं तु तन्मतानुयायिनां स्वमतज्ञापनायैवेति ज्ञेयम् एवमन्यत्रापि ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

चेतसामिति। चेतःशब्दो निरूपणपरः ॥ १७ ॥

चित्तं चिन्तनम् आच्छित्तं तमःशब्दः सङ्कल्पादिव्यापारपरः ॥ १८ ॥ १९ ॥

तुरीयं प्रलयावस्था मुक्त्यवस्था वा ॥ २० ॥ २१ ॥

सत्त्वे प्रलीनाः सत्त्वे कृष्णे सति लीनाः ॥ २२ ॥

निष्फलं फलरहितं फलसङ्कल्परहितम् फलसङ्कल्पमभ्युदयसंकल्पवत् ॥ २३ ॥

कैवल्यं केवलं आरोपिताकारविधुरं वैकल्पिकम् आरोपिताकारविषयं प्राकृतं यत् किञ्चिदित्यविमर्शकविषयं मन्निष्ठं मुक्तिदशायां मद्गोचरम् ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्स्पष्टमेवाह। विकुर्वन्निति। यदा पुमान् क्रियया विकुर्वन् साध्वसाधु वा यत्किञ्चित्कुर्वन् तत्फलभूतहर्षशोकादिरूपविकारयुक्तो भवति ततश्चाधिश्चित्तविक्षेपः चेतसां ज्ञानेन्द्रियाणामनिर्वृत्तिर्मनोविषयाभिनिवेशरूपज्वरः गात्राणां कर्मेन्द्रियाधिष्ठानानां पाणिपादादीनामस्वास्थ्यं पीडा तथा भ्रान्तं चञ्चलं भवेत्तदा एतैः क्रियाविकाराद्यनिर्वृत्त्यस्वास्थ्यभ्रमैः रजो निश्चयम् उद्रिक्तं जानीहि क्रियादिभी रज उद्रेकमनुमिन्वीति भावः यद्वा चेतसामित्येतन्निरूपकपरं ज्ञानक्रिययोर्निरूपकाणामुभयेन्द्रियाणामित्यर्थः गात्रशब्दोऽङ्गमात्रपरः ॥ १७ ॥

सीदन्निति। यदा सीदत् तिरोभवत् चेतसः ज्ञानेन्द्रियविषयस्य रूपादेः ग्रहणे अक्षमं सत् चित्तं विलीयेत तदा मनोऽपि सङ्कल्पविकल्पात्मकं नष्टं लीनं तमः अज्ञानं ग्लानिः विषादश्च भवति तत् तदा तमः उत्कटमुपधारय ॥ १८ ॥

किञ्च एधमान इति। स्पष्टोऽर्थः ॥ १९ ॥

गुणोत्कर्षतोऽवस्थाभेदं दर्शयति। सत्त्वादिति। सत्त्वादस्य जन्तोर्जननमरणादिस्वभावदेहसंसृष्टस्य जीवस्य सत्त्वादुल्लासिताज्जागरणं जागराद्यवस्थां विद्यात्तथोत्तरत्रापि जागराद्यवस्थात्रयभाक्त्वं जीवस्य गुणपरिणामात्मकदेहसम्बन्धप्रयुक्तं न स्वभावतस्तदस्तीत्याह। तुरीयं त्रिषु सन्ततमिति। यत् त्रिषु जागरादिषु सन्ततं व्याप्तमवस्थात्रयान्वितत्वेन प्रतीयमानमात्मस्वरूपं तत्तुरीयं स्वभावतोऽवस्थात्रयविनिर्मुक्तम् ॥ २० ॥

गुणानामुल्लासतारतम्येन गतिभेदानाह। उपर्युपरीति। उपर्युपरि आब्रह्मणो ब्रह्मलोकमभिव्याप्य सत्त्वेन तरतमोल्लासवता हेतुभूतेन गच्छन्ति सत्त्वस्येषद्वृद्धौ स्वर्लोकं ततोऽधिकवृद्धौ महरादिलोकं ततोऽपि वृद्धौ सत्यलोकमित्येवमुपर्युपरि गच्छन्ति एवं तमसाधोऽधो गच्छन्ति तत्राभिविधिमाह। आमुख्यादिति। आमुख्योऽतिविहीनो लोकः आसमन्तात्कात्स्न्येनाऽमुख्यः तमभिव्याप्य आमुख्यादिति नञाङोः प्रश्लेषात् आमुख्यात्स्थावरानभिव्याप्येति केचिद्व्याचक्षते रजसा तूक्तेनान्तरचारिणो भूर्लोकचारिणः ॥ २१ ॥

तत्तद्गुणोद्रेकदशासु मरणादीनां गतिभेदहेतुतामाह।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्त्व इति । सत्त्वे प्रकृष्टे सति प्रलीनाः स्वः स्वर्गं यान्ति रजोलयाः रजसि प्रवृद्धे सति लयो येषां ते तथा एवं तमोलया इत्यत्राप्ययं: उपर्युपरि गच्छन्तीत्यनेन सत्त्वोल्लासानुसारमूर्ध्वगमनमित्युक्तं निरतिशयोल्लासे तु क यान्तीत्यत्राह । यान्ति मामेव निर्गुणा इति । अस्मिन् प्रकरणे निर्गुणशब्देनातिप्रवृद्धं सत्त्वमुच्यते अतीवोल्लसितं सत्त्वं गुणसम्बन्धविघातकम्—

सत्त्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ।
सत्त्वेनान्यतमौ हन्यात्सत्त्वं सत्त्वेन चैव हि ॥

इत्युक्तत्वात् अतोऽत्र निर्गुणशब्देन नैर्गुण्यावहनिरतिशयसत्त्वोल्लासदशाप्रलीना उच्यन्ते ते मामेव यान्तीत्यर्थः ॥ २२ ॥

एवं सत्त्वादिगुणानुसारिणो गतिभेदा उक्ताः अथ तदनुसारिणः कर्मज्ञानवासकर्तृश्रद्धाहारसुखभेदानाह । मदर्पणमिति । मय्यर्पणं यथा भवाराधनरूपत्वेन कृतमित्यर्थः । निष्फलं फलाभिसन्धिरहितं वा यन्निजकर्म तत्सात्त्विकं यत्फलसङ्कल्पमभ्युदयफलवत्तद्राजसं यद्धिंसाप्रायादि शत्रुहिंसाद्यभिसन्धिप्रचुरमादिशब्देन मात्सर्यादिसङ्ग्रहः तत्तामसम् ॥ २३ ॥

कैवल्यमिति । केवलमेव कैवल्यम् आरोपिताकारविधुरं यथावस्थिताकारगोचरमित्यर्थः । तज्ज्ञानं सात्त्विकं वैकल्पिकमारोपिताकारविषयं यत्तद्रजः तत्प्रयुक्तमित्यर्थः । यत्तु प्राकृतं किञ्चिद्स्यविभक्तविषयं तत्तामसं ज्ञानं मन्निष्ठं मय्येव निष्ठात्मकं मद्गोचरं निर्गुणमत्युद्रिक्तसत्त्वप्रचुरम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रियया विकुर्वन् भवति चेतसो विषयादनिवृत्तिश्च भवति गात्रास्वास्थ्यं शरीरावयवानां विजृम्भणम् एतैर्लिङ्गैरिदं रज इति निशामय पश्य ॥ १७ ॥

तमोगुणवर्तनप्रकारं स्पष्टयति । सीददिति । यदा चित्तं स्मरणाकारणम् अन्तःकरणं सीदत् नश्यत् अथवा विलीयते चेतसो ग्रहणे वस्तुस्मरणाशक्तेश्चेतनाया ग्रहणे अक्षममसमर्थं मनो नष्टं भवति तमः अज्ञानं म्लानिर्म्लानता च भवति तदा तमोगुणवर्तनमुपधारय ॥ १८ ॥

मुमुक्षुणा सत्त्वमेव सेवनीयमिति भावेनाह । एधमान इति ॥ १९ ॥

तुरीयमस्यास्वरूपं त्रिषु गुणेष्वसङ्गत सत्त्वं न भवति ॥ २० ॥

इतोऽपि सत्त्वमेव श्रेयःसाधनमित्याह । उपरीति । आब्रह्मणो ब्रह्मलोकपर्यन्तम् आमुख्यादन्धं तमः पर्यन्तमन्तरचारिणः स्वर्गादौ चरन्ति ॥ २१ ॥

सत्त्वे सत्त्वगुणप्रवृद्धौ प्रलीनाः मृताः स्वर्गं रजसि प्रवृद्धे लयो येषां ते रजोलयाः तमोलयाः इत्येवमनेन व्याख्यातं निर्गुणास्तमआदिगुणानभिभूता आत्यन्तिकभक्तिसाधनाः ॥ २२ ॥

चाशब्दश्चार्थे मदर्पणत्वेन निष्फलत्वेन फलानुसन्धानरहित्येन यत्कर्म तन्निजं कर्म वर्णाश्रमविहितं कर्म सात्त्विकं कर्म ॥ २३ ॥

गुणनिमित्तकर्मभेदं निरूप्य ज्ञानभेदमाह । कैवल्यमिति । कैवल्यं केवलं यथाशास्त्रं प्रतिपादितं तत्त्वं तद्विषयं ज्ञानं केवलं केवलमेव कैवल्यं ज्ञानं सात्त्विकम् अग्निष्टोमादिकर्मनिष्ठं प्राकृतं बहिर्मुखजनप्रियं वैषयिकं निर्गुणं मुक्तिसाधनं तदुक्तं

नैर्गुण्यसाधनं यत्तन्निर्गुणं परिकीर्तितमिति ।
यथा शास्त्रोक्तविज्ञानं केवलं ज्ञानमुच्यते ॥
स्वदृष्टशास्त्रानुकूल्यादृष्टानां तु भक्तितः ।
गुणानां तु हरौ भावविनिश्चित्य तदाश्रयात् ॥
यथा शास्त्रानुसन्धानं ज्ञानं च हरिसंश्रयम् ॥

इति च ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मदर्पणं मयि अर्पणं यस्य तत् उत्तमत्वाय मय्यर्पितमित्यर्थः । निष्फलं सत्त्वशुद्ध्यर्थं निष्कामत्वेनैव कृतमित्यर्थं निजकर्म स्वस्ववर्णाश्रमादिधर्मः ॥ २३ ॥

केवलस्य निर्विशेषस्य ब्रह्मणः शुद्धजीवभेदेन ज्ञानं कैवल्यं त्वम्पदार्थमात्रज्ञानस्य कैवल्यानुपपत्तेः तत्पदार्थज्ञानसापेक्षत्वात् सत्त्वयुक्ते हि चित्ते प्रथमतः शुद्धं सूक्ष्मं जीवचैतन्यं प्रकाशते तताश्रयेकाकारत्वाभेदेन तस्मिन् शुद्धे पूर्णं ब्रह्मचैतन्यमप्यनुभूयते ततः सत्त्वगुणस्यैव तत्र कारणताप्राचुर्यात् सात्त्विकत्वं तथा च श्रीगीतोपनिषदः सत्त्वात्सञ्जायते ज्ञानमिति भगवज्ज्ञानस्य तु देवानां शुद्धसत्त्वानामित्यादि मुक्तानामपि सिद्धानामित्यादयुक्त्या सत्त्वादिसङ्गावेऽप्यभावात् रजस्तमःस्वभावस्येत्याद्युक्त्या च तदभावेऽपि वृत्रासुरस्य सद्भावात् न तत्कारणकत्वं किन्तु तद्युक्तत्वेन तस्य पूर्वजन्मनि श्रीनारदादिसङ्कर्षणान्तया तेषां मतिस्तावदुरुक्रमाङ्घ्रिमित्याद्युक्त्या च भगवत्कृपापरिमलप्राप्तभूतस्य श्रीमतो महतः सङ्ग एव कारणं तत्सङ्गस्य तुलयाम लवेनापीत्याद्युक्त्या निर्गुणावस्थानोऽस्याधिकत्वात्परमनिर्गुणा एव समे च समः प्रियः सुहृद्ब्रह्मन्नित्यादौ सगुणा देवादौ तस्य कृपावाश्यतो न भवति किन्तु श्रीमत्प्रह्लादादिष्वेवेति प्रतिपादनात् महतां निर्गुणत्वाभिव्यक्त्या तत्सङ्गस्यापि निर्गुणत्वं व्यक्तं तथा भक्तेरपि गुणसङ्गनिर्धूननान्तरं चानुवृत्तिः श्रूयते तस्मादिदमिमं शब्दस्यादौ परमेश्वरज्ञानस्य नैर्गुण्यहेतुत्वेन निर्गुणत्वोक्तिरस्तु लक्षणामयकष्टकल्पना तथा कैवल्यज्ञानस्यापि नैर्गुण्यहेतुत्वादुक्तौ शब्दचेनोदाहरणभेदापत्तिश्च स्यात् तस्मात्स्वत एव निर्गुणं भगवज्ज्ञानम् अत्र विशेषो भक्तिसन्दर्भे दृश्यः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदा क्रियया विकुर्वन् विकारं प्राप्नुवन् धीः आत्मस्ताज्ञानापदार्थगतत्वेन विक्षिप्ता धीर्यस्य तथाभूतो भवति ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चेतसां बुद्धीन्द्रियाणाम् । अनिर्वृत्तिः सतृष्णता । एतैर्लक्षणैस्तदा रज उद्रिक्तं जानीहि ॥ १७ ॥

यदा सीदत् व्याकुलीभवत् चित्तं विलीयेत जडीभवति यतश्चेतसश्चेतनाया ग्रहणे अक्षममसमर्थं भवेत् निश्चेतनत्वादप्रबुद्धं भवतीत्यर्थः । मनोऽपि सङ्कल्पात्मकं नष्टं लीनं तमो ऽज्ञानं ग्लानिर्विषादः तस्तदा तम उत्कटं यदा तु केवलया भक्त्या गुणत्रयपराभवस्तदा नैर्गुण्यमवधारयेति शेषः ॥ १८ ॥

सत्त्वादीनां वृद्धिकालेषु यथा देवासुरराक्षसा वर्द्धन्ते तथैव व्यष्टिदेहेष्विन्द्रियाणां निवृत्तप्रवृत्तिमोहस्वभावा एव देवासुरराक्षसा ज्ञेया इत्याह । एधमाने इति । यदा भक्तिहेतुकं नैर्गुण्यं वर्द्धते तदा भक्तानां बलमेधते इति शेषः ॥ १९ ॥

कस्माद्गुणात्का अवस्था इत्यत आह । सत्त्वादिति । तथैव निर्गुणावस्थामाह । तुरीयं चतुर्थमवस्थान्तरं नाम त्रिषु जागरणादिषु सन्ततमन्वितं परमात्मस्वरूपमेवेत्यर्थः ॥ २० ॥

ब्राह्मणा जना इति पाठे ब्रह्मलोकमभिव्याप्येत्यर्थः । आमुख्यात् स्थावरानभिव्याप्येत्यर्थः । अन्तरचारिणो मनुष्या भवन्तीत्यर्थः । नैर्गुण्येन भक्त्या भगवत्पदं यान्तीति शेषः ॥ २१ ॥

देहोत्क्रमकालिकगुणोत्कर्षे फलमाह । सत्त्वे इति । यदा हि यो गुणः प्रवृद्धो भवति तदा स गुणः पृथग्दृष्टो भवतीत्यतः सत्त्वे प्रलीनाः सत्त्वे प्रवृद्धे सति मृताः रजोलयाः रजसि प्रवृद्धे सति लयो येषां ते एवं तमोलयाः निर्गुणा इत्यत्र तु लयशब्दानुपादानात् जीवन्तोऽपि मद्भक्त्या निर्गुणाश्चेन्मामेव यान्तीत्यर्थः ॥ २२ ॥

मयि अर्पणं यस्य तत् मदर्पणमिति कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणमिति नारदोक्तेर्धर्मशास्त्रविहितस्य कर्ममात्रस्यैव भगवदनर्पितत्वे वैयर्थ्यश्रवणात् मदर्पणमित्युत्तरत्रापि योजनीयं ततश्च मदर्पणं नित्यं कर्म तथा निष्फलं फलाभिसन्धिरहितं काम्यं वा कर्म मदर्पितं सात्त्विकं स्यात् फलं सङ्कल्प्यते यस्मिन्कृतत् फलाभिसन्धिमत्त्वहितं काम्यं कर्म मदर्पितं राजसं स्यात् तथा अधर्मशास्त्रोक्तं हिंसाप्रायं हिंसोद्देशेन कृतं कर्म तामसं स्यात् आदिशब्दात् दम्भमात्सर्यादिकृतं च श्रवणकीर्त्तनादि शुद्धभजनं तु निर्गुणमिति शेषः ॥ २३ ॥

अथ कण्ठोक्त्यैव सगुणनिर्गुणभेदेन ज्ञानादीनां चातुर्विध्यमाह । कैवल्यं देहादिव्यतिरिक्तत्वेन केवलजीवात्मविषये यत्तत्सात्त्विकं वैकल्पिकं द्वैतमिदं सत्यमसत्यं वा जीवा नित्या अनित्या वेत्यादिविकल्पमयं ज्ञानं यत्तद्राजसं प्राकृतमाहारविहारादिज्ञानं तामसं मन्निष्ठं मद्विषयकम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यदा जनः क्रियया विकुर्वन् ऐहिकामुष्मिकभोगसाधनेन कर्मणा विकारं प्राप्नुवन् आधीर्भवति सावर्णः विक्षिप्ता धीर्यस्य सतथा चेतसां ज्ञानेन्द्रियाणामनिर्वृतिरस्वास्थ्यं गात्राणां कर्मेन्द्रियाणां चास्वास्थ्यं मनो भ्रान्तं देहाद्यात्मत्वाभिमानयुक्तम् यदा तैर्लक्षणैः रज उद्रिक्तं निश्चयेन जानीहि ॥ १७ ॥

यदा चित्तं सीदत्तिरोभवत् चेतसो ग्रहणेऽनुसन्धानेऽक्षमं सद्विलीयेत मनोऽपि नष्टं मननक्रियाविरहितं तमोऽप्रकाशः ग्लानिरज्ञातिदुर्मनस्त्वसूचको मनोविकारश्च भवति तदा तम उद्रिक्तमुपधारय ॥ ॥ १८ ॥

सत्त्वाद्युद्रेके देवाद्युद्रेकमाह । एधमाने इति ॥ १९ ॥

सत्त्वाद्युद्रेकाज्जागरणाद्यवस्थोद्रेकमाह । सत्त्वादिति । समनस्कैरिन्द्रियैरर्थग्रहणं जागरणम् बाह्येन्द्रियगणे लीने सत्यन्तरिन्द्रियेणार्थग्रहणं स्वप्नः बाह्याभ्यन्तरेन्द्रियलये सति प्रस्वापमाविशेत् जागरणादिषु सन्ततमनुगतम् तत्रावस्थात्रये बाह्याभ्यन्तरेन्द्रियार्थज्ञातृत्वेन प्रस्वापे सुखमहमस्वाप्समिति सुखवेत्तृत्वेन च तुरीयमवस्थात्रयसाक्षिणं ज्ञानस्वरूपं जीवात्मानमादिशेदित्यर्थः ॥ २० ॥

गुणोत्कर्षतारतम्याद्गतिभेदानाह । उपर्युपरीति सत्त्वेन सत्त्वोत्कर्षेण आमुख्यात् स्थावरानभिव्याप्योपर्युपरि गच्छन्ति तमसा अधमा ब्रह्मलोकमभिव्याप्याऽधोऽधो गच्छन्ति रजसाऽन्तरचारिणो भूर्लोकचारिणो भवन्ति ॥ २१ ॥

मरणवेलायामपि गुणाः स्वानुरूपां गतिं ददातीत्याह । सत्त्वे इति । सत्त्वे प्रलीनाः मृताः स्वः स्वर्गं रजोलयाः रजसि लयो मृत्युर्येषां ते नरलोकं तमोलयास्तमसि मृतास्तु निरयं यान्ति निर्गुणाः गुणातीतजयपूर्वकमद्भजननिष्ठाः मामेव यान्ति ॥ २२ ॥

अधुना गुणकृतं कर्म त्रैविध्यं दर्शयति । मदर्पणमिति । मदर्पणं मदाज्ञापालनार्थं कृतं निष्फलं फलाभिसन्धिशून्यं यच्च स्ववर्णाश्रमानुरूपं कर्म तत्सात्त्विकम् फलं सङ्कल्प्यते यस्मिंस्तद्राजसम् हिंसाप्रायं हिंसाबहुलमादिना दम्भादिकृतं तामसम् ॥ २३ ॥

गुणसङ्गसम्पन्ना मद्व्यतिरिक्तफलाः ज्ञानादयोऽर्थाः सगुणाः मत्सम्बन्धिनस्तु प्राकृतगुणकृतदोषवर्जितत्वेन निर्गुणाः मत्प्रापका इत्याह । कैवल्यमिति सार्द्धैर्नवभिः । कैवल्यं मत्सम्बन्धवर्जितकेवलक्षेत्रज्ञविषयम् वैकल्पिकं देहात्माभिमानविषयं स्रक्चन्द्रजः राजसम् प्राकृतं केवलाविज्ञातं मन्निष्ठं सर्वं कृष्णात्मकमित्येवम्भूतम् ॥ २४ ॥

---

भाषा टीका।

जब क्रिया से विकार प्राप्त होवे बुद्धि का विक्षेप होवे चित्त चंचल होवे शरीर स्वस्थ न होवे मन भ्रमित रहै इन बातों से रजो गुण का उदय जानना ॥ १७ ॥

चित्त दुखित होकर जब लीन होजावे सूक्ष्म चित्त के ग्रहण करने में समर्थ न होवे मन नष्ट सा होजावे अज्ञान होजावे ग्लानि आवै तिसको तुम तमोगुण जानो ॥ १८ ॥

सत्त्व गुण के बढते समय देवतों का बल बढता है रज के बढने से असुरों का बल बढता है हे उद्धव! तमोगुण के बढने से राक्षसों का बल बढता है ॥१९॥

सत्त्व गुण से जागरण होता है रजोगुण से स्वप्न होता है सब प्राणि को अत्यन्त गाढ निद्रा तमोगुण से होती है तुरीय अवस्था तीनों में निरन्तर सहित होरही है ॥ २० ॥

वेद धर्म के अनुसार करने वाले मनुष्य सत्त्व गुण से

वनं तु सात्त्विको वासो ग्रामो राजस उच्यते ।
तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ २५ ॥
सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ २६ ॥
सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ।
तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ २७ ॥
पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् ।
राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि ॥ २८ ॥
सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥
द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ।
श्रद्धाऽवस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ॥ ३० ॥
सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः ।
दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ! ॥ ३१ ॥
एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः ।
येनेमे निर्जिताः सौम्य ! गुणा जीवेन चित्तजाः ॥ ३२ ॥

भाषा टीका ।

ऊपर ऊपर के लोकों में जाते हैं तमोगुण से नीचे नीचे स्थावरों तक जाते हैं रजो गुण से मध्य में विचरते हैं ॥२१॥

सत्त्वगुण में मरने से स्वर्ग को जाते हैं रजोगुण में मरने वाले पुरुष मनुष्य लोक में रहते हैं तमोगुण में मरने से नरक में जाते हैं निर्गुण पुरुष तो मेरे को ही प्राप्त होते हैं ॥ २२ ॥

मेरे में अर्पण करके निष्काम जो निजकर्म किया वह सात्त्विक कर्म है फलके सङ्कल्प से जो किया सो राजस है हिंसा मायादि जो कर्म सो तामस है ॥ २३ ॥

केवल आत्म विषयक जो ज्ञान सो सात्त्विक है देहादि भेद से जो ज्ञान सो रजो गुण का है बालकादिसरी का जो ज्ञान सो तामस है मेरी निष्ठा वाला ज्ञान निर्गुण है ॥२४॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वनं विविक्तत्वात्सात्त्विको वासः मन्निकेतनं तु साक्षात्तदाविर्भावान्निर्गुणं स्थानम् ॥ २५ ॥

कारकः कर्ता असङ्गी अनासक्तः रागान्धोऽत्यभिनिवेशवान् स्मृतिविभ्रष्टोऽनुसन्धानशून्यः मदपाश्रयो मदेकशरणः स हि निरहङ्कारत्वान्निर्गुणः ॥ २६ ॥

अधर्मे धर्म इति या श्रद्धा ॥ २७ ॥

पथ्यं हितम् पूतं शुद्धम् अनायस्तमनायासतः प्राप्तम् आहार्यं भक्ष्यभोज्यादि इन्द्रियाणां प्रेष्ठं भोगकाले सुखदं कट्वम्ललवणादि आर्तिदाशुचि दैन्यकरमशुद्धं च चशब्दान्मन्निवेदितं निर्गुणमित्यभिप्रेतम् ॥ २८ ॥

आत्मोत्थं सुखम् मदपाश्रयमित्यपि त्वन्तत्पदार्थविषयत्वेन ज्ञानवदेव द्रष्टव्यम् ॥ २९ ॥

उक्तं संसारहेतुभूतं त्रैगुण्यमुपसंहरति द्वाभ्याम् । द्रव्यं पथ्यपूतादि देशो वनग्रामादिः फलं सात्त्विकं सुखमित्यादि कालो यदा भजेत मां भक्त्या यदेत्यादौ जयेदित्यादिना योऽभ्युक्तः ज्ञानं कैवल्यं सात्त्विकं ज्ञानमित्यादि कर्म मदर्पणमित्यादि कारकः सात्त्विकः कारकोऽसङ्गीत्यादिः श्रद्धा सात्त्विक्याध्यात्मिकीत्यादिः अवस्था सत्त्वाज्जागरणमित्यादिः आकृतिरुपर्युपरि गच्छन्तीत्यादिनोक्ता देवत्वादिरूप निष्ठा सर्वे प्रलीनाः स्वर्गान्तिकादिलोकः स्वर्गादि एवं सर्वोऽप्ययं भावस्त्रैगुण्यस्त्रिगुणात्मकः ॥ ३० ॥

न केवलमेष एव किं तु यावन्तः पुरुषाव्यक्ताधिष्ठिताः ते सर्वे भावा गुणमया एव तत्प्रपञ्चः । दृष्टमिति ॥ ३१ ॥

इदानीमुक्तं त्रैगुण्यस्य संसारहेतुत्वमनुवदंस्तज्जयान्मोक्षमाह । एता इति सार्धेन । येन निर्जिताः स पश्चादविच्छिन्नेन

### श्रीधरस्वामिकृतभावार्थदीपिका।

भक्तियोगेन मन्निष्ठः सन् मद्भावाय मोक्षाय प्रपद्यते योग्यो भवति ॥ ३२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी।

वृक्षषण्डस्वरूपस्य वनस्य रजस्तमःप्रधानत्वाद्विविक्तत्वलक्षणं सात्त्विकं गुणमादाय सात्त्विक इत्युक्तम्। शिलाबुद्धिः कृता किं वा प्रतिमायां हरेर्मयेति तत्र शिलाबुद्धेर्निषिद्धत्वात् साक्षात् तदाविर्भावत्वं तत्स्थानत्वादित्यर्थः ॥ २५ ॥

कारक इत्यत्र तद्विशेषणीभूतक्रियायामेव तात्पर्यं न तदाश्रये द्रव्ये तच्छरीरस्य गुणत्रयपरिणामत्वात् "सविशेषणौ विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाध" इति न्यायात् ॥ २६ ॥

आध्यात्मिकी वेदान्तशास्त्रविषयिणी ॥ २७ ॥

मन्निवेदितं मत्प्रसादीभूतम् ॥ २८ ॥

ज्ञानवदेवेति। यथा त्वंपदार्थविषयं ज्ञानं सात्त्विकं परमेश्वरविषयं तु ज्ञानं निर्गुणं तथा त्वंपदार्थानुभवोत्थं सुखं सात्त्विकं तत्पदार्थानुभवोत्थं सुखं निर्गुणमित्यर्थः ॥ २९ ॥

यद्वा शब्दस्यार्थात् सर्वोऽपीति निर्गुणं मदीयं ज्ञानादिकं विनेति ज्ञेयम् ॥ ३० ॥

एष एव द्रव्याद्येकादशपदार्थ एव। भावाः पदार्थाः वस्तुप्रपञ्चः सर्वशब्दार्थप्रपञ्चः ॥ ३१ ॥

एता इति सार्द्धकम्। एताः शमकामक्रोधादिरूपाः गुणकर्मनिबन्धनाः गुणकर्मकारणकाः सन्तीति शेषः। मोक्षाय सप्रेमपार्षदत्वाय "विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः" इति पाद्मोक्तेः ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

सात्त्विकावासः सत्त्वविवृद्धिहेतुरावासः निर्गुणमगुणं गुणत्रयप्रतिभटं तन्निवृत्तिहेतुरितियावत् ॥ २५ ॥

सात्त्विकः कारकोऽसङ्गीति यज्ञादिषु कर्तृत्वमविषक्तं सात्त्विकः सत्त्वविवृद्धिकर्ता निर्गुणः त्रिगुणनिरासकः मदुपाश्रयः मद्ध्यानादिगोचरः कर्ता ॥ २६ ॥

आध्यात्मिकी अध्यात्मशास्त्रविषया ॥ २७—२८ ॥

आत्मोत्थम् आत्मन्येवोत्थं न बाह्यार्थविषयसन्तोषोत्थमित्यर्थः। मदपाश्रयं मुक्तिदशायां मदनुभवोत्थम् ॥ २९ ॥

त्रैगुण्यः त्रिगुणयुक्तः ॥ ३० ॥

इष्टं श्रुतमिति गुणमयमित्यर्थः ॥ ३१ ॥

येनेम इति सत्त्वादिगुणाः सकार्याः ॥ ३२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

वनन्त्विति। सात्त्विकः सत्त्वोद्रेकजन्मरुचिप्रयुक्तः वास आधारो वनमित्यर्थः। वसन्त्यस्मिन्निति अधिकरणे घञ् यद्वा वनं सात्त्विको वासः सत्त्वोदयहेतुरावासः द्यूतसदनं द्यूतपानादिसदनावासस्तामसः मन्निकेतनं मम निकेतनं यस्मिन्नर्च्चाद्यादिदिव्यस्थानं तु निर्गुणं गुणत्रयविघातकसत्त्ववृद्ध्यतिशयहेतुरित्यर्थः ॥ २५ ॥

सात्त्विक इति। कारकः कर्ता स यद्यसङ्गी न सङ्गोऽर्थकामयोर्यस्य सः तथाभूतः सात्त्विकः रागान्धः अत्यभिनिवेशवांस्तु कारकः राजसः स्मृतिविभ्रष्टः विषयाणामनर्थावहत्वं पश्यन्नपि तत्स्मृतिविभ्रंशयुक्तः कारकस्तामसः मदुपाश्रयः मद्ध्यानादिगोचरः यद्वा अहमुपाश्रयः शरणं यस्य स कारकः निर्गुणः निरतिशयोल्लाससत्त्वगुणयुक्तः॥ २६ ॥

सात्त्विकी इति। आध्यात्मिकी अध्यात्मशास्त्रविषया मत्सेवायां तु निर्गुणा सत्त्वोद्रेकातिशयजन्यश्रद्धेत्यर्थः ॥ २७ ॥

पथ्यमिति। पथ्यं हितं पूतं जात्याश्रयनिमित्तदोषैरस्पृष्टमनायासतः प्राप्तं यदाहार्यमन्नादि तत्सात्त्विकं सत्त्ववृद्धिकरं प्रवृद्धसत्त्वगुणरुचिविषयं वा एवमुत्तरत्रापि इन्द्रियप्रेष्ठम् इन्द्रियसुखावहार्थमायासतः प्राप्तमित्यर्थः तद्राजसम् आर्तिदाशुचि आर्तिदं देहेन्द्रियपीडावहमशुच्यशुद्धं शास्त्रप्रतिषिद्धं च तत्तामसं मन्निवेदितं निर्गुणम् ॥ २८ ॥

सात्त्विकमिति। आत्मोत्थमात्मन्येवोत्थं न बाह्यार्थविषयं किं त्वात्मानुभवजसन्तोषरूपं तत्सात्त्विकं सुखं विषयेभ्यः शब्दादिभ्यः सुखरूपेभ्यः उत्थितं राजसं मोहदैन्याभ्यामुत्थितं तु तामसं तत्र मादकवस्त्वनुभवचित्तपारवश्यं मोहः दैन्योत्थं पुत्रकलत्राद्युपच्छन्दनप्रभवं सुखं तामसं सुखं मदुपाश्रयं मद्ध्यानादिप्रभवं तु निर्गुणं नैर्गुण्यावहसत्त्वोद्रेकातिशयप्रयुक्तं तादृशातिशयवत्पुरुषाभिनिवेशविषयं वा ॥ २९ ॥

इत्थं सत्त्वादिगुणोद्रेकतदतिशयानुगुणानि कर्मप्रभृतीनि सुखान्तानि उपपादितान्यथैषामनुक्तानामन्येषां च केषांचित्त्रिगुणोल्लासतदतिशयानुगुणत्वं प्रकृतिसंसृष्टचेतनगतत्वमुक्तमुल्लासकार्याणामनुपादेयत्वज्ञापनाय संसृतिहेतुत्वं सत्त्वातिशयकार्याणां प्रकृतिसम्बन्धत्यागहेतुत्वं चाह। द्रव्यमित्यादिना यावदध्यायसमाप्ति। तत्र द्रव्यशब्दोऽत्र वस्त्वर्थद्रव्यपरः देशो वनग्रामद्यूतसदनभगवन्निकेतनरूपः फलं सुखं ज्ञानं कैवल्यमित्यादिनोक्तं कर्म मदर्पणमित्यादिनोक्तं श्रद्धा सात्त्विक्यादिनोक्ता निष्ठा लयः सत्त्वे प्रलीना इत्यादिनोक्तः अवस्था सत्त्वाज्जागरणमित्यादिनोक्ता कालकारणकृतयस्त्वनुक्ताः तत्र सात्त्विकः कालः प्रातर्मध्यन्दिनसायन्तनात्मकः तद्व्यतिरिक्तो रात्रौ प्रहरपर्यन्ततो राजसः निशीथादिस्तामसः कारणं समीहितसत्साधनादिज्ञानकारणं तत्रोर्ध्वगमनसाधनावबोधकं शास्त्रं सात्त्विकं दैहिकसुखसाधनावबोधकं राजसम् अभिचाराद्यवबोधकं तु तामसं भगवत्प्राप्तिसाधनावबोधकं तन्निर्गुणम् आकृतिराकारो वेषः स च वैदिकः सात्त्विकः अर्थकामार्जनानुकूलो राजसः पाशुपताद्यागमोक्तस्तामसः भगवच्छास्त्रोक्तो निर्गुणः इत्यूह्यम् एते सर्वे त्रैगुण्याः त्रिगुणकार्यभूताः तद्व्यञ्जका वा ॥ ३० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सर्वे चैते भावाः पदार्था गुणमया गुणेभ्य आगताः "तत आगत" इत्यधिकारे "मयट् च" इति मयट् पुरुषाध्यक्षाधिष्ठिता मिथः संसृष्टप्रकृतिपुरुषोभयगताः अचित्संसृष्टपुरुषविषया इत्यर्थः। द्रव्यादयो गुणमया इत्युक्तं किं बहुनेत्याह। दृष्टमिति। दृष्टमैहिकादिकं श्रुतं पारलौकिकं यच्च बुद्ध्या ध्यातं मनोरथमात्रविषयं सुखमिति विशेष्याध्याहारः तत्सर्वं गुणमयं सर्वस्यापि दर्शनादिविषयस्य सुखस्य गुणमयत्वोक्त्या तदर्थानां देशादीनामपि तन्निष्ठरुचिविषयत्वं ख्यापितम् ॥ ३१ ॥

यतो गुणमयत्वमत एवैते गुणत्रयसम्बन्धरूपसंसृतिबन्धका इत्याह। एता इति। एता द्रव्यादयः स्त्रीलिङ्गनिर्देशो विधेयसंसृतिसापेक्षः सर्वनाम्नां पर्यायेण उद्देश्यविधेयलिङ्गभाक्त्वात्। गुणकर्मनिबन्धना गुणकर्ममूलकाः तत्तद्गुणानुगुणप्राचीनपुण्यपापात्मककर्मप्रयुक्तरुचिविषया इत्यर्थः। संसृतयः तद्धेतवस्तद्बन्धका इति यावत् यद्वा संसृतिर्नामैतद्विचयेभ्यो न काचिदन्यास्तीत्यभिप्रायेण संसृतय इत्युक्तं कस्तर्हि तन्निस्तारपूर्वकतत्प्राप्त्युपाय इत्यत आह। येनेति। जीवेन कर्त्रा येन निरतिशयसत्त्वोल्लासापरपर्यायेण निर्गुणेन साधनेन चित्तजा चित्ते जायन्ते उल्लसन्ति इति तथा गुणाः सत्त्वादयो निर्जिताः स एव जीवः भक्तियोगेन गुणजयः साधनभूतात्युल्लसितसत्त्वसंवर्धिनेन भक्तियोगेन मन्निष्ठः मय्येव निष्ठा भक्तियोगाविच्छेदो यस्य सः मद्भावाय मम भावः प्रकारः साधर्म्यमिति यावत् तस्मै उपपद्यते कल्पते साधनभूतस्य भक्तियोगस्याविच्छेदद्योतनाय मन्निष्ठ इत्युक्तमतो न पौनरुक्त्यम् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदानीं गुणनिमित्तं क्षेत्रभेदमाह। वनमिति। मन्निकेतनं मदाश्रयं देवालयादि ॥ २५ ॥

इदानीं कर्तृभेदमाह। सात्त्विक इति। असङ्गी कारकः कर्ता निष्कामत्वेन कर्मणां कर्तेत्यर्थः। स्मृतिविभ्रष्टः श्रुत्याद्यविहितकारित्वेन सत्कर्मणः स्रस्तः निर्गुणो मोक्षगामी ॥ २६ ॥

श्रद्धाभेदमाह। सात्त्विकीति। आध्यात्मिकी यथाश्रुतशास्त्रविषया —

श्रुतशास्त्रानुसारेण या श्रद्धा परमात्मनि।
सा सात्त्विकी तदन्यस्मादप्यनुसारेण निर्गुणा ॥
अश्रुतस्यापि प्रमाणं यो वासुदेवैकसंश्रयः।
स निर्गुणो भागवतः समुद्दिष्टो मनीषिभिः ॥—

इति स्मृतेः श्रुतशास्त्रार्थश्रद्धावत्त्वनुसारेण अश्रुतशास्त्रार्थेषु तदुक्तप्रकारेण मत्सेवायां मत्सेवार्थं या श्रद्धा सा निर्गुणा तदन्यस्मादप्यनुसारेण निर्गुणेत्युक्तेः ॥ २७ ॥

आहारभेदमाह। पथ्यमिति। अनायस्तम् अक्लिष्टम् इष्टम् इन्द्रियप्रीतिकरम् आर्द्रं स्वादु अशुचि च ॥ २८ ॥

सुखभेदमाह। सात्त्विकमिति। आत्मोत्थं परोक्षज्ञानं शास्त्रश्रवणसंजातं यत्परमात्मनो मदेकज्ञानाद्युत्थं सुखं सात्त्विकं परोक्षज्ञानमात्मोत्थमित्यादेः मदुपाश्रयं मदपरोक्षज्ञानजन्यसुखं निर्गुणम्। अपरोक्षेण दर्शनं विष्णवाश्रयसुखं नित्यं समस्तेत्प्रसादत इति भगवतः स्वरूपसुखमिदं नत्यतो मदुपाश्रयमित्युक्तं "नतु विष्णोः स्वरूपं तु सुखं केनचिदाप्यते। तद्विषयत्वात्तु तत्सुखं चेति भण्यते —

परोक्षज्ञानगो यस्मात्त्रिविधः स्वमतो गतः।
अत आत्मोत्थमित्येवं सुखमाहुर्विपश्चितः ॥

इति च ॥ २९ ॥

किं बहुना सर्वे पदार्थास्त्रिगुणसम्बन्धेन त्रिविधा इत्याह। द्रव्यमिति फलं स्वर्गादि कालः प्रातरादिः अवस्था जाग्रदादिलक्षणा आकृतिः क्रिया निष्ठा व्रतम् ॥ ३० ॥

तदेव विवृणोति। सर्व इति। पुरुषेण विष्णुना अव्यक्तेन भिया स्वयं निष्ठिताः व्यवस्थापिताः सत्त्वादिकृतसंसारजयोपायमाह। दृष्टमिति। वाशब्दश्चार्थे शास्त्रेण श्रुतं बुद्ध्या च शास्त्रार्थरूपेण दृष्टं च परं ब्रह्मानुध्यायेन्निरन्तरं स्मरेत् ॥ ३१ ॥

अनेन ध्यानेन किं फलमत्राह। एता इति। एवमुपासकेन जीवेन चित्तजाताः सत्त्वादिगुणाः निर्जिताः तेन गुणकर्मनिबन्धनाः संसृतयश्च प्रागुक्ताः निर्जिता भवन्तीति शेषः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदेवं ज्ञानरूपाया भक्तेर्निर्गुणत्वमुक्त्वा क्रियारूपाया व्याचष्टे तत्राप्यस्तु तावच्छ्रवणकीर्तनादिरूपायाः भगवत्सम्बन्धेन वासमात्ररूपाया आह। वनमिति। वनं वास इति तत्सम्बन्धिनी वसनक्रियेत्यर्थः। वानप्रस्थानामिति ज्ञेयम्। एवं ग्राम्य इति गृहस्थानां तामसमिति दुराचाराणां द्यूतसदनमित्युपलक्षणं मन्निकेतमिति मत्सेवापराणामिति च वनादीनां हासेन सह आधुर्यमितिवदेकाधिकरणत्वं वनस्य शुद्धसत्त्वस्वरूपत्वं रजस्तमःप्राधान्यात् अत एव विविक्तत्वलक्षणतदीयसात्त्विकगुणस्यापि तद्गुणमिश्रत्वेन गौणत्वं वासक्रियायास्तु सत्त्वोत्पन्नत्वाच्छुद्धत्वाच्च सात्त्विकत्वं मुख्यमिति अत एव ग्राम्य इति तामसं तत एव पठितः एवं द्यूतसदनमित्यत्र च वासक्रियैव विवक्षिता मन्निकेतमित्यत्रापि तु भगवत्सम्बन्धमाहात्म्येन निकेतस्यापि निर्गुणत्वं भवेत् स्पर्शमणिन्यायेन तादृशत्वं तादृशभक्तिचक्षुर्भिरेवोपलब्धव्यं विविष्टा यत्र पश्यन्ति सर्वानेव चतुर्भुजानिति यत् अत एव तैर्व्याख्यातं भगवन्निकेतं निवास इति ॥ २५ ॥

एवं वासमात्रस्य तादृशत्वमुक्त्वा सर्वासामेव तत्क्रियाणामाह। सात्त्विक इति। अत्र च क्रियायामेव तात्पर्यं न तदाश्रये द्रव्ये सात्त्विककारकस्य शरीरादिकं हि गुणत्रयपरिणाममेव ॥ २६ ॥

क्रियाप्रवृत्तिहेतुभूतायाः श्रद्धाया भेदमाह। सात्त्विकीति। अथ मोऽत्र परधर्मः पूर्ववदन्यत् ॥ २७ । २८ ॥

अत एव तत्सुखस्यापि निर्गुणत्वमाह। सात्त्विकमित्यादि। एवं शुश्रूषाः श्रद्धानन्तर्यादुक्त्या महाविदानत्वेन श्रवणादिलक्षणक्रियारूपाया अपि भक्तेर्निर्गुणत्वं ज्ञेयम्। त्रैगुण्यः सर्व एवेति मदीयं विनेति ज्ञेयं तथा व्याख्यातत्वात् ॥ २९—३१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एता इति साङ्केतम् मद्भावाय मत्प्रेप्सो ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

भगवन्निकेतनं साक्षात्सद्भाविर्भावाधिष्ठानमिति स्वामिचरणाः भगवत्सम्बन्धमाहात्म्येन निकेतनस्य नैर्गुण्यं रूपर्थ्यप्राणिन्यायेनेति सन्दर्भः ॥ २५ ॥

कारकः कर्त्ता असङ्गी अनासक्तः रागान्धः विषयाविष्टः स्मृति भ्रष्टः अनुसन्धानशून्यः मदपाश्रयः मदेकशरणो भक्तः ॥२६॥ २७॥

अनायस्तमनायासप्राप्तं चशब्दान्मन्निवेदितं निर्गुणम् ॥२८॥

आत्मोत्थं त्वंपदार्थज्ञानोत्थं मदपाश्रयं मत्कीर्तनाद्युत्थम् ॥ २९ ॥

एवमुपसंहरन्नुक्तेषु त्रिगुणमयेषु गुणातीतेषु च पदार्थेषु मध्ये ये गुणमया भावास्ते जीवस्य संसारहेतव इत्याह। सार्द्धकेन। द्रव्यं पथ्यपूतादि देशो वनग्रामादिः फलं आत्मिकं सुखमित्यादि कालः यत्तदग्रे जयेत् सत्त्वमित्यादिना बोऽर्थो-क्तः ज्ञानं कैवल्यं सात्त्विकं ज्ञानमित्यादि कर्म मदर्पणमि-त्यादि कारकः सात्त्विकः कारकोऽसङ्गीत्यादि श्रद्धा सात्त्वि-क्याध्यात्मिकीत्यादि अवस्था सत्त्वाज्जागरणमित्यादि आकृतिः उपर्युपरि गच्छन्तीत्यादिलोका देवत्वादिरूपा निष्ठा सत्त्वे प्रलीनाः स्वर्यान्तीत्यादिनोक्तः स्वर्गादिः एवं सर्वोऽप्ययं भावस्त्रैगुण्यस्त्रिगु-णात्मकः स्वार्थे ष्यञ् ॥ ३० ॥

न केवलमेष एव किं तु यावन्तः पुरुषाव्यक्ताभ्यामधिष्ठि-तास्ताभ्यामधिष्ठितास्ते सर्वे भावा गुणमया एव तत्प्रपञ्चः दृष्टमिति। बुद्ध्या वा अवधारितं संसृतयः संसारहेतवः अत्र ज्ञानादीनां संसृतिहेतुत्वमुक्तं श्रीस्वामिचरणैरपि संसारहेतुभूतं त्रैगुण्यमुक्तमुपसंहरतीत्यवतारणात् ॥ ३१ ॥

किं तु येन जीवेन कर्त्रा भक्तियोगेन करणेन इमे गुणा-र्निर्जिताः स मन्निष्ठो निर्गुणो मद्भक्तः मद्भावाय मत्सारूप्याय तथा मद्भावाय महात्म्यस्वरूपादिभावार्थं वा प्रपद्यते अत्र वासि-तामेव निर्गुणा इति निर्गुणो मदपाश्रय इति मद्भक्तस्य निर्गु-णत्वं वक्ष्यता भक्तियोगस्य निर्गुणत्वमुदाहृतमिति कपिलदे-वाक्येऽत्रापि भक्तियोगेन गुणा निर्जिता इत्युक्त्वा भक्तियोगस्य च निर्गुणत्वं स च भक्तियोगोऽर्चनादिगन्धपुष्पधूपछत्रचामरा-दिघटित इति तत्तद्द्रव्याणामपि निर्गुणत्वं तदीयश्रद्धादीनां निर्गुणत्वं तूक्तमेवस्यतो भक्त्युपकरणमात्रस्यैव निर्गुणत्वमवग-मितं भगवता ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वनन्त्यकिमन्निति वासः अधिकरणे घञ् मन्निकेतं मदर्थं रचितं मन्मन्दिरम् ॥ २५ ॥

कारकः कर्त्ता मदुपाश्रयः आकुल्यः यथा कारयति तथा करोमीत्येवमदुपाश्रयो नियोजकत्वेन शरणं यस्य सः ॥ २६ ॥

आध्यात्मिकी कैवल्यज्ञानमात्रविषया मत्सेवायां तत्त्वज्ञान-पूर्विकायाम् ॥ २७ ॥

अनायस्तमनायासलब्धम् चकारान्मन्निवेदितं निर्गुणमिति बोध्यम् ॥ २८ ॥

आत्मोत्थं त्वंपदार्थमात्रचिन्तनजम् मदुपाश्रयं तत्पदा-र्थचिन्तनलब्धम् ॥ २९ ॥

उक्तानुक्तः सर्वोऽपि प्राकृतः पदार्थस्त्रैगुण्य एवेत्याह। द्रव्य-मिति द्वाभ्याम् ॥ ३० ॥

पुरुषो बद्धजीवः अव्यक्तं प्रधानं तयोरधिष्ठिताः सर्वे भावा महदादितत्त्वपर्यन्ता गुणमयाः किं बहुना दृष्टं पिपी-लिकादि श्रुतं चतुर्मुखलोकादि बुद्ध्याऽनुध्यातं भूतभविष्यादि तत्सर्वं गुणमयम् ॥ ३१ ॥

गुणकर्मभिः गुणहेतुकर्मभिर्निबध्यन्ते पुंसि संयोज्यन्ते इति गुणकर्मनिबन्धनाः एताः चतुर्मुखलोकादिपिपीलिकापर्यन्ताः पुंसो जीवस्य संसृतयः येन मदनुगृहीतेन चित्तजाः चिरो-द्भूताः निर्जिताः स मन्निष्ठो भक्तियोगेन मद्भावाय मत्साध-र्म्याय प्रपद्यते कल्पते ॥ ३२ ॥

---

भाषा टीका।

वनका वास सात्त्विक है ग्राम का वास राजस है जूआघर का वास तामस है मेरे मंदिर का वास निर्गुण है ॥२५॥

अनासक्त जो कर्त्ता सो सात्त्विक है जो राग में अन्धा है वह राजस है अनुसन्धान से रहित कर्त्ता तामस है मेरे को आश्रय करने वाला कर्त्ता निर्गुण है ॥ २६ ॥

अध्यात्मक ज्ञान की श्रद्धा सात्त्विक है कर्मों में श्रद्धा राजसी है अधर्म में जो धर्म की श्रद्धा सो तामस है मेरी सेवा में जो श्रद्धा सो निर्गुण है ॥ २७ ॥

पथ्य होवे पवित्र होवे अनायाससे प्राप्त होवे ऐसा जो आहार सो सात्त्विक है इंद्रियों का प्रिय आहार राजस है दुःख देने वाला अपवित्र जो आहार सो तामस है ॥२८॥

आत्मा से उत्पन्नभया जो सुख सो सात्विक है विषय से जो सुख सो राजस है मोह तथा दैन्य से जो सुख सो तामस है मेरे आश्रय से जो सुख सो निर्गुण है ॥ २९ ॥

द्रव्य देश फल काल ज्ञान कर्म कर्त्ता श्रद्धा अवस्था आकृति देवादि योनि निष्ठा ए सबही बातें त्रिगुणयुक्त हैं ॥ ३० ॥

प्रकृति पुरुष के संबन्ध से रहने वाले जितने पदार्थ हैं वे सब त्रिगुण मय हैं हे पुरुषर्षभ! जो कुछ देखा सुना मन से चिन्तित है वह सब त्रिगुण मय है ॥ ३१ ॥

पुरुष की इतनी जो संसार की गति हैं वे गुणकर्म के हेतु से हैं हे सौम्य! जिस पुरुष ने चित्त से जायमान इन गुणों को जीतलिया वो मेरे को प्राप्त होता है ॥ ३२ ॥

---

भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ।
तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् ॥ ३३ ॥
गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ।
निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः ॥ ३४ ॥
रजस्तमश्चाभिजयेत्सत्त्वसंसेवया मुनिः ।
सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शान्तधीः ॥ ३५ ॥
सम्पद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम् ।
जीवो जीवविनिर्मुक्तो गुणैश्चाशयसम्भवैः ॥
मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम् ।
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्माद्विवेकिनामिदमेव युक्तमित्याह । तस्मादिति । ज्ञानविज्ञानयोः सम्भवो यस्मिंस्तमिमं नरदेहम् ॥ ३३ ॥

भजनप्रकारमाह । निः सङ्ग इति सार्धेन ॥ ३४ ॥

सत्त्वसंसेवया सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धये इति प्रागुक्तया नैरपेक्ष्येणोपशमात्मकेन सत्त्वेनैव ॥ ३५ ॥

एवं च सति मां प्राप्नोतीत्याह । सम्पद्यत इति । जीवं जीवत्वकारणं लिङ्गशरीरम् मां प्राप्नोत्येव न पुनः संसार इत्याह । जीव इति । न बहिर्विषयभोगेन नान्तरस्तत्स्मरणेन ॥ ३६ ॥

गुणाक्तानामनुसंसरणेऽपथामजितपुण्यकथाकथनादिभिः ।
धुनुत भक्तिरसेन विवेकिनो न हि पुनः सुलभं जनुरीदृशम् ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता—
### दीपिकादीपिनी टिप्पणी ।

तस्माद्गुणसङ्गस्यैव गुणत्रयजत्वात् । इदमेव भजनमेव । भक्त्या गुणसम्बन्धं दूरीकृत्य भजन्तु भक्तिमेव कुर्वन्तु इति भक्तेः साधनत्वं साध्यत्वं च व्यक्तीकृतम् ॥ ३३ ॥ ३४ ॥

निःसङ्ग इत्यर्धकम् । अप्रमत्तः सेवानामापराधाऽनवधानशून्यः यतो जितेन्द्रियः भक्त्यवान्यत्रानासक्तो विद्वान् भक्तिरेव परमपुरुषार्थ इति जानन् सन् मां भजेत श्रवणादिभिरनुशीलयेत् इति तन्नैतिकर्त्तव्यताभिहिता ॥ ३५ ॥

उपशमात्मकेनान्तःकरणनियमनेन । सर्वत्र हेतुः शान्तधीः भगवन्निष्ठबुद्धिः । सम्पद्यत इत्यर्द्धकम् । बहिर्विषयभोगेनेति विषयभोगं न कुर्यादित्यर्थः । तत्स्मरणेनेति विषयस्मरणमपि न कुर्यादित्यर्थः । बहु संसरणेऽपथां बहुजन्ममरणादिभोग्यं दुःखम् । तन्निवृत्ति क्वचित्पाठे देहोपाधिकां जन्मादिसंसारव्यथां हे विवेकिनः! कथाकथनादिभिर्या भक्तिरसः शान्तादिपञ्चविधस्तेनैव धुनुत । ईदृशं भजनोपयोगि जनुर्जन्म ॥ ३६ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणी
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ज्ञानविज्ञानसम्भवं शास्त्रजन्ययोगजन्यज्ञानयोर्हेतुम् ॥ ३३ ॥

नैरपेक्ष्येण गुणान्तर्गतस्य सत्त्वस्याप्यनपेक्षया [illegible]त्यर्थः ॥ ३४ ॥

जीवं शरीरं विहाय मां सम्पद्यत इत्यन्वयः ॥ ३५ ॥

जीवेन शरीरेण विनिर्मुक्तो मया पूर्णः व्याप्तः मदन्तर्यामिकत्वं साक्षात्कुर्वन् मन्नित्यकिङ्करः न बहिर्नान्तरश्चरेत् बहिर्न चरेत् संसारनिमित्तकं कर्म न करोति नान्तरं चरेत् मोक्षसाधनं नाचरेदिति मुक्तिदशायां शास्त्रवश्यो न भवतीत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चविंशोऽध्यायः ॥ २५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यतो निर्गुणमूलकभक्तियोगस्य मद्भावोपपत्तिसाधनत्वमत एव विचक्षणा मां भजन्तीत्याह । तस्मादिति । यस्मादेवं तस्मात् ज्ञानविज्ञानसम्भवं शास्त्रयोगजन्यज्ञानोदयहेतुमिमं मानुष्यं देहं लब्ध्वा गुणसङ्गं शब्दादिविषयासङ्गमपोह्य मां भजन्ति ॥ ३३ ॥

ननु विषयसङ्गपरिहारमात्रेण कथं तन्मूलगुणजयः स्यादित्यत आह । निःसङ्ग इति । जितानि विषयेभ्यः स्ववशीकृतानि इन्द्रियाणि येन सः तथाप्यप्रमत्तः अविश्वस्तेन्द्रियः तत्र हेतुर्विद्वान् वशीकृतानामपि विश्वस्तानामिन्द्रियाणां पुनर्विषयाभिनिवेशजननद्वाराऽनर्थावहत्वं जानन् यो मां भजेत स सत्त्वसंसेवया निरतिशयसत्त्वोल्लासकरद्रव्यादिसंसेवया रजस्तमश्चाभिजयेत् चकारादुद्रिक्तं सत्त्वं विवक्षितम् ॥ ३४ ॥

नन्वेवमप्युल्लसितं सत्त्वमपि प्राकृतमेवातिष्ठत इति कथं प्रकृतिसम्बन्धविनिर्मुक्तिरित्यत आह । सत्त्वं चेति । नैरपेक्ष्येण निर्गता अपेक्षा फलापेक्षा यस्मात्तन्निरपेक्षमनन्यप्रयोजनमत्युल्लसितसत्त्वप्रभवमुपासनात्मकं ज्ञानं तदेव नैरपेक्ष्यं स्वार्थे ष्यञ् तेन सत्त्वं चाभिजयेत् अतिशयितसत्त्वोत्पादितेन ज्ञानेन त्रैगुण्यनिवृत्तौ सत्त्वमपि निवृत्तं भवतीति भावः । शान्तधीरत्युद्रिक्तसत्त्वत्वाद्रागाद्यकलुषितचित्तः इत्थं गुणैर्विनिर्मुक्तो जीवः भजीवं देहं विहाय मां सम्पद्यते प्राप्नोति ॥ ३५ ॥

यश्चेत्थं मां सम्पन्नस्तस्य न कृत्यमस्तीत्याह । जीव इति । आशये मनसि सम्भवन्त्युल्लसन्तीति तथा तैर्गुणैरजीवेन देहेन च विनिर्मुक्तो जीवः मया ब्रह्मणा पूर्णो व्याप्तः मदन्तर्यामिकत्वं साक्षात्कुर्वन् बहिर्न चरेत्संसारनिमित्तं कर्म न करोति नान्तरं चरेन्मोक्षसाधनं ज्ञानयोगमपि नाचरति मुक्तिदशायां शास्त्रवश्यो न भवतीत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु त्वत्प्राप्तिमन्तरेण संसृतिभयेन किं तत्राह । मत्तीति ॥३३॥
मथितार्थमाह । तस्मादिति । ज्ञानविज्ञानयोः सम्भवो यस्मात्स तथा तं व्यवधानेन शास्त्रद्वारा जातं ज्ञानं परोक्षज्ञानम् अपरोक्षेण जातं विज्ञानं निर्गुणमिति सङ्गिरन्ते "सत्त्वाद्गुणाज्ज्ञानमपि व्यवधानं विनैव तु । मुक्तिदं निर्गुणं प्रोक्तं व्यवधानेन सात्त्विक"मित्युक्तेः यतः संसारमोक्षौ १ मद्भावस्तस्मान्मानुषं देहं लब्ध्वा सर्वोत्तमं मां विज्ञाय ब्रह्मणा सर्वगुणपूर्णेन मयैव पूर्णाभिरितार्थो ना पुरुषो बहिर्विषयेषु नाचरेत् आन्तर एव इन्द्रियैः प्रत्यगात्मविषयत्वेनैव चरेदित्यर्थः । संसारव्याप्तत्वादन्तोऽहं तस्मिन्नपि रतो भूत्वेति वा अन्तरच्छिद्रः इन्द्रियव्यापारी न चरेत् स्यादिति वा "अन्तो ह्यवसिते मुख्ये स्वभावे परमात्मनि" इति आन्तरो मां विना न चरेदिति वा ॥ ३४ ॥ १ ॥०॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मात्त्वमुद्धवोत्सृज्येत्यादिभिरुक्तवक्ष्यमाणमपि भजनस्य सर्वोपरितनत्वमभिव्यक्तयति । तस्माद्देहमिति ॥ ३३ ॥
निःसङ्ग इत्यर्द्धकम् ॥ ३४ ॥ ३५ ॥
सम्पद्यते इत्यर्द्धकम् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इमं नरदेहं ज्ञानविज्ञानयोर्भक्त्युत्थयोरपि सम्भवो यत्र तम् ॥ ३३ ॥

शुद्धभजनप्रकारं शिक्षयति । निःसङ्गः अन्यकामनाज्ञानकर्मादिसङ्गरहितः ॥ ३४ ॥

ननु च यस्य त्वत्सेवायां श्रद्धा निर्गुणास्ति अथ च सात्त्विकयाध्यात्मिकी श्रद्धाप्यस्ति राजसी कर्मश्रद्धा तामस्यधर्मश्रद्धाप्यस्ति एवं त्वद्भक्त्युत्थं निर्गुणं सुखमस्ति तथा आत्मोत्थं विषयोत्थं मोहोत्थं च त्रिगुणमयमपि सुखमस्ति एवमेवोक्तलक्षणं सर्वं नैर्गुण्यं त्रैगुण्यं चास्ति तेनारब्धत्वद्भजनेन जनेन किं कर्तव्यमिति चेत् श्रूयतां स यदि केवलभक्तिमान् स्यात्तदा भक्त्यैव त्रैगुण्यं निर्जयेदित्युक्तमेव येनेमे निर्जिताः सौम्य गुणा भक्तियोगेनेत्यनेन पूर्वश्लोकेन यदि च प्रधानीभूतभक्तिमान् स्यात्तदा पुनरुपायान्तरमपि त्रैगुण्यजयेऽस्तीत्याह । रज इति । सत्त्वसंसेवया सात्त्विकान्येव सेवेतेति प्रागुक्तप्रकारया नैरपेक्ष्येण भक्त्युत्थवैतृष्ण्येन ॥ ३५ ॥

ततश्च मां सम्पद्यते सम्प्राप्नोति जीवं लिङ्गशरीरम् एवं च जीवेन लिङ्गदेहेन अन्तःकरणोत्थैर्गुणैः कामादिभिश्च रहितः बहिः प्राकृतशब्दादिविषयान् अन्तरं शोकमोहादिकं च न चरेत् न प्राप्नुयात् ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे पञ्चविंशः सङ्गतः सङ्गतः सताम् ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्माद्गुणजयपूर्वकमद्भजनेन मद्भावाय प्रपद्यते तस्माद्देहमिति ॥

१ चिदानन्दस्वरूपः ।

१ एतन्मते तस्मादिति मद्भावेति चाध्यायमध्ये त्रयः श्लोका न सन्त्येव ।

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ज्ञानविज्ञानयोः सम्भवो यस्मिन् तमिमं देहं लब्ध्वा गुणसङ्गं विनिर्धूय मां भजन्ति सेवन्ते ॥ ३३ ॥

गुणजयपूर्वकं भजनप्रकारमाह । निःसङ्ग इति सार्द्धेन । सात्त्विकान्येव सेवेत पुमान् सत्त्वविशुद्धये इत्युक्त्वा रजस्तमश्च अभितः बाह्याभ्यन्तरतो जयेत् नैरपेक्ष्येण सत्त्वफलभूते देवादिभावे निरपेक्षतया सत्त्वमपि अभिजयेत् एवं निःसङ्गः सर्वतो विरक्तः विद्वान् ज्ञानवान् अत एव युक्तः भजनयोग्यः शान्त उपासीतेति श्रुतेः शान्तधीः मां भजेत् ॥ ३४ ॥ ३५ ॥

एवम्भूतेन भजनेन मां प्राप्नोतीत्याह । सम्पद्यते इति सार्द्धेन । जीवं लिङ्गशरीरं विहाय मां सम्पद्यते ननु मुक्तौ जीवस्तस्माद्भिन्नोऽभिन्नो वाऽवतिष्ठते इत्यत आह । जीव इति । आशयसम्भवैरन्तःकरणोद्भवैः रागद्वेषादिभिः जीवेन लिङ्गशरीरेण च निर्मुक्तः न बहिः न भिन्नः नान्तरः नाभिन्नः मद्भिन्नाभिन्नश्चरेदित्यर्थः । स्वतो भिन्नाभिन्नत्वे हेतुमाह । मय्येव ब्रह्मणा सर्वात्मना पूर्णः सम्पन्नः वृन्तेन पत्रमिव सूर्येण प्रभेव अग्निना विस्फुलिङ्गमिव ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चविंशाध्यायार्थप्रकाशः ॥ २५ ॥

### भाषा टीका ।

जो पुरुष भक्तियोग से मेरे मे निष्ठा करता है वह मेरे को प्राप्त होता है तिससे ज्ञान विज्ञान को पैदाकरने वाले इस देहको प्राप्त होकर मेरे को भजे ॥ ३३ ॥

चतुर पुरुष गुणों की आसक्तिको छोडकर मेरे को भजते हैं इसी से विद्वान् पुरुष निःसङ्ग होकर जितेन्द्रिय होकर मेरे को भजै ॥ ३४ ॥

मुनि पुरुष सत्त्व गुणकी सेवा करने से रजोगुण तमोगुण को जीतलेता है शांत बुद्धि होने से युक्त होने से निरपेक्ष होनेसे सत्त्व को भी जीत लेता है ॥ ३५ ॥

इस प्रकार जीवात्मा गुणों से मुक्त होकर लिंग शरीर को छोडकर मेरे को प्राप्त होता है जब जीव अन्तःकरण मे उत्पन्न होने वाले देहगुणों से छूटजाता है फिर बाहर वा भीतर विषयों को नहीं स्मरण करता है तबतो केवल ब्रह्म मेरे ध्यानहीं मे मग्न हो रहता है ॥ ३६ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध
पच्चीस में अध्याय की पं० लक्ष्मणाचार्यकृत
भाषा टीका समाप्त ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

## अथ षड्विंशोऽध्यायः ।

———:*:———

श्रीभगवानुवाच ॥

मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः ।
आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥ १ ॥
गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ।
गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ॥
वर्तमानोऽपि न पुमान् युज्यतेऽवस्तुभिर्गुणैः ॥ २ ॥
सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ।
तस्यानुगस्तमस्यन्धे पतत्यन्धानुगाऽन्धवत् ॥ ३ ॥
एलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ।
उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ॥ ४ ॥
त्यक्त्वाऽऽत्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः ।
विलपन्नन्वगाज्जाये घोरे ! तिष्ठति विक्लवः ॥ ५ ॥
कामानतृप्तोऽनुजुषन्क्षुल्लकान् वर्षयामिनीः ।
न वेद यान्तीर्नायान्तीरुर्वश्याकृष्टचेतनः ॥ ६ ॥

एल उवाच ॥

अहो मे मोहविस्तारः कामकश्मलचेतसः ।
देव्या गृहीतकण्ठस्य नायुः खण्डा इमे स्मृताः ॥ ७ ॥
नाहं वेदाभिनिर्मुक्तः सूर्यो वाभ्युदितोऽमुया ।
मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षड्विंशे योगनिष्ठाया विघातो दुष्टसङ्गतः ।
साधुसङ्गेन तन्निष्ठा परा काष्ठेति वर्ण्यते ॥
योगिनो योगविभ्रंशः सङ्गतः सम्भवेदिति ॥
सर्वथा तन्निवृत्त्यर्थमैलगीतं वितन्यते ॥

निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रिय इत्युक्तं तत्र विपक्षेऽनर्थं कथयिष्यन् जीवन्मुक्तस्यापि तर्हि सङ्गो दुर्वार इत्यनर्थः स्यादित्याशङ्क्योक्तानुवादपूर्वकं परिहरति सार्धाभ्याम् । मल्लक्षणं मत्स्वरूपं लक्ष्यते येन तमिमं नरदेहं लब्ध्वा मद्धर्मे भक्तिलक्षणे आस्थितः सन्नात्मस्थमात्मन्येव नित्यत्वेन स्थितं परमानन्दरूपमात्मानं मां समुपैति सम्यक्प्राप्नोति ॥ १ ॥ न चैवंभूतस्य विषयसङ्गो नामास्तीत्याह । गुणमय्येति । गुणमयी या जीवयोनिर्जीवोपाधिस्तया विमुक्तो गुणेषु वर्तमानोऽपि तैर्न युज्यते सङ्गं न प्राप्नोति । अत्र हेतुः अवस्तुभिः नन्ववस्तुभिरप्यन्ये युज्यमाना दृश्यन्ते तत्राऽऽह । अवस्तुत्वेन दृश्यमानेषु ॥ २ ॥

तथाऽपि सङ्गं वर्जयेदित्याह । सङ्गमिति । असतां लक्षणमाह । शिश्नोदरे तर्पयन्तीति । शिश्नोदरतृपस्तेषां क्वचित्कदाचिदपि आस्तां तावद्बहूनां सङ्गः किं तु तस्यैकस्याप्यनुगोऽनुवर्ती अन्धमनुगच्छति योऽन्धस्तद्वत् ॥ ३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्रेतिहासमाह । ऐलः पुरूरवाः सम्राट् चक्रवर्ती बृहच्छ्रवः कीर्तिर्यस्य सः उर्वशीविरहात्प्रथमं मुह्यन् पश्चात्कुरुक्षेत्रे तां समागम्य गन्धर्वदत्तेनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य शोकसंयमे शोकापगमे सति ततो निर्विण्णः सन्निमां गाथामगायतेति नवमस्कन्धानुसारेण द्रष्टव्यम् ॥ ४ ॥

प्राक्तनीं मोहावस्थामाह । त्यक्त्वेति । आत्मानं राजानं त्यक्त्वा अथवा शय्यायामात्मानं त्यक्त्वा व्रजन्तीम् घोरे तिष्ठेति "अये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु नौ मन्त्रा अनुदितास एते मयस्करन्परतरे च नाहन्" इत्येवं मन्त्रैर्विलपन् ॥ ५ ॥

वैक्लव्ये कारणमाह । कामानिति । वर्षाणां यामिनी रात्रीः यान्तीरपयान्तीः आयान्तीरागामिनीः उर्वश्या आकृष्टा चेतना यस्य सः ॥ ६ ॥

तस्य गन्धर्वलोके प्राप्तस्य बहुकालमुर्वशीसम्भोगानन्तरं निर्विण्णस्य गाथामाह अष्टादशभिः । तत्राष्टभिरनुतापः प्रपञ्च्यते अहो इति । यतो मया इमे अहोरात्ररूपा आयुःखण्डा न स्मृताः ॥ ७ ॥

तदेवाऽऽह । नाहमिति । अभिनिर्मुक्तः मयि रममाणोऽस्तंगतोऽभ्युदितो वा सूर्य इति अमुया उर्वश्या वाञ्छितः बत खेद इताऽपि वर्षपूगानामपि गतान्यहानि न वेदेति ॥ ८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तन्निष्ठा योगनिष्ठा तस्याः पराकाष्ठा परमोऽवधिः । तन्निवृत्त्यर्थं सङ्गपरिहारार्थं तत्र इत्युक्तौ । विपर्यये सङ्गकरणे । परिहरति । शङ्कामिति शेषः भक्तिलक्षणे श्रवणकीर्तनादौ आत्मन्येव जीवस्वरूप एव ॥ १ ॥

एवंभूतस्य परमानन्दरूपं मां प्राप्तस्य । जीवोपाधिं लिङ्गशरीरम् । गुणेषु गुणकार्येषु देहेन्द्रियादिषु सङ्गं सुखदुःखादिषु सम्बन्धम् । तत्र गुणसङ्गेऽप्राप्तौ अवस्तुभिर्मिथ्याभूतैः अवस्तुत्वेन मिथ्यात्वेन । दृश्यमानेषु भाव्यमानेषु ॥ २ ॥

तथापि विषयसङ्गाऽसम्भवेऽपि । तच्छब्दस्य पूर्वप्रक्रान्तानुवादकत्वात् एकवचनानुपपत्तिमाशङ्क्य व्याचष्टे । असतामिति ॥ ३ ॥

अत्र सङ्गवर्जने । तत उर्वशीलोकात् ॥ ४ ॥

तस्य पुरूरवसः अथ इति कोमलामन्त्रणे । मनसा भावेन घोरे क्रूरचित्ते । आवां मिश्रामिश्रौ भूत्वा वचांसि प्रेमालापान् कृणवावहै करवाव । नु अहो नौ आवयोर्मन्त्रा एते अनुदितासः अनादिना अव्यक्ता न सन्ति इमेऽस्करन् प्रीतिस्मि । परतरे पूर्वक्रमाच्च मन्त्रा नाहन् न नष्टा बभूवुः ॥ ५ ॥

वर्षयामिनीरित्यादि पृथिवीस्थवावस्थापेक्षया ॥ ६ ॥

तत्राष्टादशश्लोकमध्ये ॥ ७ ॥

खेद अस्मरणमेव ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मल्लक्षणं मम दर्शनसाधनभूतमानन्दमानन्दमयम् आत्मस्थं जीवात्मनि स्थितम् ॥ १ ॥

जीवयोन्या देवमनुष्यादियोन्या विमुक्तः तत्राभिमानरहितः गुणेषु शब्दादिषु मायामात्रेषु प्रकृतिकार्येषु अवस्तुभिर्हेयैः ॥ २ ॥

तस्यासज्जनस्य सङ्गस्य वा ॥ ३—४ ॥

व्रजन्तीमुर्वशीं वर्षरात्रीम् ॥ ५—६ ॥

देव्या देवस्त्रिया ॥ ७ ॥

सूर्यो नाभ्युदितः इति काकाक्षिन्यायादन्वयः लुप्तसन्ध्यादयो धर्मा इत्यर्थः ॥ ८—१० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्मादिदमिमं लब्ध्वेत्यादिना तावन्नृदेहस्तत्र शनैर्गुणसङ्गापोहस्ततो भगवद्भक्तिस्ततो भगवत्प्राप्तिरिति प्रणाडी विवक्षिता सा क्वचित्किम्प्रसिद्ध्यत्रोदाहरणमैलवृत्तान्तं प्रस्तोष्यंस्तन्मुखेनोपदेष्टव्यमर्थं निष्कृष्याह । मल्लक्षणमिति सार्धैस्त्रिभिः । मल्लक्षणं मद्दर्शनसाधनभूतम् इमं मानुष्यं कायं लब्ध्वा मद्धर्मे मदाराधनात्मकं निवृत्तिधर्ममास्थितः न तु प्रवृत्तिधर्ममिति भावः आनन्दमानन्दमयम् अनेन निरतिशयपुरुषार्थरूपत्वमावेदितं तच्च प्राप्यत्वोपयोगितयोक्तम् आत्मस्थं जीवात्मनि स्थितं परमात्मानं मां समुपैति उपायनिष्पत्त्यनन्तरं प्राप्नोतीत्यर्थः ॥ १ ॥

एवम्भूतस्य जीवद्दशायां विषयाननुभवतोऽपि न तत्राभिनिवेशोऽस्त्यतो न बद्धो भवतीत्याह । गुणमय्येति । अजीवयोन्येति छेदः अजीवस्य देवमनुष्यादिशरीरस्य योन्या प्रकृतिभूतया गुणमय्या मायया विमुक्तः गुणत्रयात्मकमायाकार्यदेवादिशरीरेष्वहम्ममाभिमानरहित इत्यर्थः । विमोके साधनमाह । ज्ञाननिष्ठयेति । स्वात्मपरमात्मयाथात्म्यानुसन्धानात्मकज्ञानयोगनिष्ठया चित्तचिल्लक्षणधिया हि प्रकृत्यात्मभ्रान्तिनिवृत्तिः मायामात्रेषु प्रकृतिकार्येषु गुणेषु गुणकार्येषु शब्दादिष्वविहिताप्रतिषिद्धनिषिद्धकाम्यविषयव्यतिरिक्तेषु वर्तमानोऽपि तान् अनुभवन्नपीत्यर्थः । दृश्यमानेषु वस्तुषु देहानुबन्धिषु च वर्तमानः तानात्मीयत्वेन मन्यमानोऽपि इति पृथक् सम्बन्धो वा तैर्वस्तुभिर्गुणैश्च न युज्यते तद्वृत्त्या न बध्यत इत्यर्थः ॥ २ ॥

एवम्भूतस्यासङ्गं स्वाध्यायमाह । सङ्गमिति । शिश्नोदरतृषां शिश्नोदरसुखयोस्तृट् तृष्णा येषां तेषां तृपामिति पाठे तर्पयन्तीति तथा तेषामसतां सङ्गं कदाचिदपि न कुर्यात् विपर्ययेऽनर्थमाह । तस्येति । तस्यासतः अनुगः विधेय प्राप्तो बहूनामसतां सङ्गोऽनर्थहेतुरेकस्यापि सङ्गोऽनर्थहेतुरित्यभिप्रायेण तस्येत्येकवचननिर्देशः अन्धे तमसि नरके पतति यथान्धमनुसृत्य गच्छन् स्वयमप्यन्धः पतति तद्वत् अतस्तत्सङ्गं परिहृत्य भगवत्समाश्रितो मुक्तो भवेदित्यर्थः ॥ ३ ॥

निदर्शनतयैलवृत्तान्तं प्रस्तौति । ऐल इति । ऐलः पुरूरवाः सम्राट् सार्वभौमः बृहद्विपुलं श्रवः कीर्तिर्यस्य सः तामुर्वशीविरहादित

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इदं क्रमानुरोधात्प्रतिक्रमेण योज्यम् । तावदुर्वश्या आकृष्टा वशीकृता चेतना चैतन्यं यस्य सः अनेन तस्यात्यन्तमोहप्रीत्याजाड्यातिशयो व्यज्यते अत एव वर्षयामिनी रात्रीः यान्तीर्गच्छन्तीर्भूता इति यावत् आयान्तीरागमिष्यन्तीश्च न वेद किं तु क्षुल्लकान् कामान् विषयानतृप्तो जुषमाणसेति शेषः । एवं स्थितो नृप ऐलः कदाचित्तामात्मानं त्यक्त्वा व्रजन्तीं तामुर्वशीमन्वगादिति सम्बन्धः कथंभूत उन्मत्तवदग्रः अये ! जाये तिष्ठ तिष्ठेति विलपन्निति विह्वलः तद्विरहामसहः उर्वशीविरहान्मुह्यन् अत्र पश्चात्कुरुक्षेत्रे तां समागम्य गन्धर्वदत्तेनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य बहुकालमुर्वशीभोगानन्तरमिति नवमस्कन्धोक्तकथानुगुण्यायायं वैतो द्रष्टव्यम । ततः शोकसंयमे शोकापगमे सति निर्विण्णः विषयाणामनर्थहेतुत्वालोचनेन जातवैराग्यः । इमां वक्ष्यमाणां गाथामगायतेति सम्बन्धः । जाये घोरे तिष्ठेति पाठान्तरं तदा घोरे इत्यस्य मनसीति शेषः । अये जाये ! मनसा तिष्ठ घोरे इति श्रुत्यनुरोधात् हे मनसा घोरे कठिनचित्ते इत्यर्थः ॥४—६॥

गाथामेवाष्टादशश्लोकीरूपामाह । अहो इत्यादिना । मे मम कथम्भूतस्य कामेन कश्मलं क्षुभितं चेतो यस्मात् एवं देव्या देवस्त्रियोर्वश्या गृहीतः कण्ठो यस्य नित्यं तदालिङ्गितदेहस्येत्यर्थः । आयुषः खण्डा इमेऽहोरात्ररूपा न स्मृताः न ज्ञाताः ॥७॥

विस्मृतिमेव प्रपञ्चयति । नाहमिति । अमुया उर्वश्या मुषितः अपहृतविवेकः सन्नहमभ्युनाभिनिर्मुक्तः मयि रममाणो अस्तङ्गतो वाऽभ्युदितो न वेद न ज्ञातवानस्मि उतापि च वर्षपूगानामहान्यपि गतानि न वेद चतेति खेदे ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनन्तराध्याये सर्वतः सङ्गमुत्सृज्य मन्निष्ठैव कार्येत्युक्तम् । तमेवार्थमितिहासपूर्वकं प्रपञ्चयत्यस्मिन्नध्याये तत्रादावुक्तमपि ब्रह्मध्यानफलं विश्वासजननाय पुनराह । मल्लक्षणमिति । मां लक्षयतीति मल्लक्षणा बुद्धिः यस्य स तथा तं मद्धर्मं भागवतसंज्ञम् आत्मस्थं समुपैति दृष्टेनेति शेषः पश्यतीत्यर्थः ॥ १ ॥

उक्तज्ञानस्य तस्य बाधकदृष्टान्तं कथितप्रकारमाह । गुणमयीति । पुमान् च ज्ञानी अवस्तुभिरमङ्गलैः गुणैः शब्दादिभिर्न युज्यते न सम्बध्यते योग्यतातिरेकेणासेवनात् तत्र कारणमाह । ज्ञानेति । परतरस्याश्रयस्य परोक्षज्ञाननिष्ठया गुणमय्या सत्त्वादिगुणरूपया जीवयोन्या लिङ्गशरीराख्यमायया विमुक्तस्तदभिमानरहित इत्यर्थः । मायामात्रेषु प्रकृतिनिमित्तेष्ववस्तुतोऽस्वातन्त्र्येण दृश्यमानेषु गुणेषु शरीरेषु वर्तमानोऽपि वस्तुस्वतन्त्रमुद्दिष्टमस्वतन्त्रमवस्तु चेति वचनादवस्तुत इत्यनेन न मिथ्यात्वमुच्यते तन्निवृत्त्यर्थं साधनसामग्रीविधानवैयर्थ्यापत्तेः ॥ २ ॥

ज्ञानिना योग्यतातिरेकेण विषयनिषेवा न कार्येत्युक्तं किमुत ज्ञानार्थिनेत्यत्र कैमुत्यमाह । सङ्गमिति । शिश्नोदरे एव तर्पयन्तीति शिश्नोदरतृपः तेषामसतां सङ्गं क्वचिदपि न कुर्यात् ॥ ३ ॥



करणे बाधकमाह । तस्येति । तस्यासत इति जातावेकवचनम् । अनेन विषयसङ्गो न कर्तव्य इति किं वक्तव्यमित्युक्तं भवति ॥ ४ ॥

सङ्गात्कस्यानर्थः कस्य च सुखकरो निर्वेदश्चाभूदिति उद्धवस्य मानसीं शङ्कां परिहर्तुमैलोपाख्यानमाह । ऐल इति गाथां शिक्षाकरं वचनम् ॥ ५ ॥

जाये घोरे तिष्ठत्यनेन "अये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु" तीदं सूचयति ॥ ६ ॥

वर्षयामिनाः वर्षरात्रीः उद्दिश्य यान्तीः गतानां न वेद अज्ञाने हेतुमाह । उर्वशीति ॥ ७ ॥

मोहविस्तारः अज्ञानविस्तारः आयुःखण्डाः अहोरात्रविभागाः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्यस्तु तथा तत्सङ्गं न कुर्यादित्याह । सङ्गेनेति ॥ १—५ ॥
वर्षयामिनीरित्यादिकं पृथक्स्थत्वात्तथापेक्षया ॥ ६—२३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्त्रीसङ्गो मोहयेल्लोकं साधुसङ्गः प्रबोधयेत् ।
इत्याहैलकथाचित्रे षड्विंशे हरिरुद्धवम् ॥

निःसङ्गो मां भजेद्विद्वानित्युक्तं तत्र च "उपायं चिन्तयन् प्राज्ञो ह्यपायमपि चिन्तये"दितिन्यायेन स्त्रीसङ्गः खलु तत्र महानन्तरायस्तस्माच्च जीवन्मुक्तेनापि भेतव्यमिति वक्तुं पूर्वप्रक्रान्तं जीवन्मुक्तत्वमाह सार्द्धाभ्याम् । मल्लक्षणं मत्स्वरूपं लक्ष्यते येन तादृशं नरदेहं लब्ध्वा मद्धर्मे भक्तिलक्षणे आस्थितः सन् आत्मन्येव नियन्तृत्वेन स्थितं परमानन्दरूपमात्मानं मां समुपैति सम्यक् प्राप्नोति ॥ १

स च गुणमयी या जीवयोनिर्जीवोपाधिस्तया विमुक्तः अत एव गुणेषु विषयेषु मायामात्रेषु प्राकृतेषु भगवत्सम्बन्धगन्धेनापि रहितेषु इत्यर्थः वर्तमानोऽपि तैर्गुणैरवस्तुभिरवस्तुतुल्यैर्वस्तुभिरपि वा न युज्यते बद्धजीव इव नासक्तो भवति कुतः अवस्तुतः न वस्तुतो दृश्यमानेषु वस्तुतो हृष्टस्तेष्वपि मयि परमात्मन्येवेति भावः ॥ २ ॥

एवंभूतोऽप्यसत्सङ्गं न कुर्यात् किं पुनरनेवम्भूत इत्याह । सङ्गमिति । असतां लक्षणमाह । शिश्नोदरे तर्पयन्तीति तथा तेषां किं च तेषां बहूनां सङ्ग आस्तामेकस्यापि तस्यानुगः अनुवर्ती पतति ॥ ३ ॥

अत्रेतिहासमाह । ऐलः पुरूरवाः प्रथमं मुह्यन्नन्तः कुरुक्षेत्रे तां समागम्य गन्धर्वदत्तेनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य शोकसंयमे भोगाच्छोकापगमे सति विलक्षणगीतमकस्मादेवोत्थितं भक्तिज्ञानवैराग्यं प्राप्य गाथामगायतेति नवमस्कन्धकथानुसारेण द्रष्टव्यम ॥ ४ ॥

तस्य प्राक्तनीं मोहावस्थामाह । त्यक्तेति । हे जाये मत्प्राणहरणात् हे घोरे तिष्ठेति विलपन् अन्वगात् ॥ ५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वैक्लव्यं कार्य्यमाह । कामानिति ॥ ६ ॥

कामग्रस्तचेतसो मम इमे आयुःखण्डा इमान्यायुःखण्डानि ॥ ७ ॥

अस्मरणमेवाह । नाहमिति । अभिनिमुक्तः सूर्येऽस्ते सति स्वपन् अभ्युदितः सूर्ये उदिते सत्यपि स्वपन्नहं सूर्यः सूर्यं न वेद नाज्ञासिषं सूर्य इति द्वितीयार्थे प्रथमा वेदेति भूतेऽपि लट् प्रथमपुरुषश्चार्षः—

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।

अंशुमानभिनिर्मुक्ताभ्युदितौ तौ यथा क्रममित्यमरः ॥

कुतो नाज्ञासीरत आह । अमुया उर्वश्या मुषितश्चोरितविवेकसर्वस्व इत्यर्थः । वतेति खेदे वर्षपूगानां वर्षसमूहानाम् अहान्यपि न वेद ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः ॥

इत्युक्तं तदेव प्रपञ्चयति षड्विंशे । मल्लक्षणामिति । मदीयं रूपादिकं लक्ष्यते येन तामिमं कायं लब्ध्वा मद्विषयके ज्ञानवैराग्यसहिते भक्तियोगे आस्थितः आत्मानं चेत्रज्ञं परमात्मविग्रहमानन्दं मां च समुपैति सम्यग् प्राप्नोति जानातीत्यर्थः । यद्वा । "यद्विज्ञानेन सर्वं विज्ञातं भवति" इति श्रुतेः परमात्मानं मामित्यन्वयः ॥ १ ॥

एवं मुक्तात्मस्वरूपस्य विषयाभिनिवेशो न भवतीत्याह । गुणमय्येति । सार्द्धेन ज्ञाननिष्ठया साधनभूतया विद्यया जीवयोन्या जीवस्य देहद्वारा जन्ममरणप्रवाहहेतुभूतया गुणमय्या तमोगुणकार्यभूतया विद्यया प्रमादमोहौ तमसो भवतोऽज्ञानमेव चेति वचनादज्ञानेनेत्यर्थः । विमुक्तः अत एवावस्तुतः वस्तुशब्दः तत्तत्स्वरूपवाचकस्तद्भिन्नत्वेन अहं ममाभिमानविषयत्वेनेत्यर्थः । दृश्यमानेषु गुणेषु मायामात्रेषु प्रकृतिकार्येषु देहे आहारादिषु वर्तमानोऽपि वस्तुभिः सदुपादानकत्वात्सद्रूपैर्गुणैर्न युज्यते अहन्तां ममतां च न प्राप्नोति ॥ २ ॥

तत्सङ्गं वर्जयेदित्याह । सङ्गमिति । शिश्नोदरे तर्पयन्तीति शिश्नोदरतृपस्तेषां कञ्चिदपि सङ्गं न कुर्यात् विपक्षे दोषमाह । तस्य सङ्गकर्तुः अनुगोऽपि तमस्यन्धे नरके अज्ञानबहुले तिर्यगादियोनौ वा पतति किं पुनः स पततीति वक्तव्यम् । तत्र दृष्टान्तमाह । अन्धानुगश्च सोऽन्धश्च अन्धानुगान्धस्तद्वत् ॥ ३ ॥

अत्रेतिहासमाह । ऐल इति । नवमस्कन्धोक्तप्रकारेण प्राप्ताया उर्वश्याः विरहात् वियोगात् प्रथमं मुह्यन् पुनः कुरुक्षेत्रे प्राप्तायाः प्रोक्तेनोपायेन तल्लोकं प्राप्य शोकस्य संयमे अपगमे सति निर्विण्णः सन्निमां गाथामगायतेति योजना ॥ ४ ॥

तन्मोहं दर्शयति । त्यक्त्वेति । आत्मानं नृपम् विक्लवः सन् नृपः हे घोरे ! तिष्ठ मास्मि विलपन्नन्वगात् ॥ ५ ॥

वैक्लव्यं मूलमाह । कामानिति । वर्षाणां यामिनीः रात्रीः आकृष्टा चेतना यस्य सः ॥ ६ ॥

गाथामगायदित्युक्तस्तां गाथामाह । अहो इत्यादिभिः इमे अहोरात्ररूपाः आयुःखण्डाः न स्मृताः ॥ ७ ॥

तदेवाह । नाहमिति । अमुया मुषितो वञ्चितोऽहं सूर्योऽभिनिर्मुक्तोऽस्तङ्गतोऽभ्युदितो वा इति वर्षपूगानां गतान्यहानि च अपि न वेद न ज्ञातवानस्मि ॥ ८ ॥ ९ ॥

---

भाषा टीका ।

श्री भगवान् उवाच मेरेको प्राप्त करने वाले इस मनुष्य शरीर को प्राप्त होकर प्राणी मेरे धर्म में स्थिर रहै तब अपने हृदयमें स्थित परमानन्द स्वरूप परमात्मा मेरे को प्राप्त होजाता है ॥ १ ॥

ज्ञानमें निष्ठा के होने से त्रिगुण मय इस देवादि जीव योनि से छूट जाता है फिर दृश्यमान मायिक शब्दादि गुणों में वर्त्तमान रहै तोभी अनित्य होने से उन शब्दादिक गुणों से बंधता नहीं है ॥ २ ॥

लिङ्ग तथा जीभ इंद्रिय के तृप्त करने वाले असत् पुरुषों का कभी संग न करै जो पुरुष उस दुष्टका संग करता है वह तो जैसे अन्धे के पीछे चलने वाला अन्धा कभी गढ़े में गिरजाता है तैसे वहभी नरक में गिर पड़ता है ॥ ३ ॥

उर्वशी के विरह से मोहित होकर शोकके शांति होने पर वैराग्य के होने से बड़ी कीर्त्ति वाले चक्रवर्ती पुरूरवा महाराजने इस गाथा का गान किया है ॥ ४ ॥

पुरूरवा राजाको जब उर्वशी छोड़कर चली तब राजा पागल सरीका नंगा होकर उसके पीछे दौड़ा और बड़ा अधीरज होकर विलापकर बोला हे क्रूर मेरी स्त्री ! खड़ी रह ॥ ५ ॥

फिर जब ज्ञान भया तब बोले कि मैं क्षुद्र कामों सेभी तृप्त न होकर सेवन करता रहगया मैंने उर्वशी के मारे चित्तके खिच जाने से कईवर्षो की जाती आती हुई रातोंको नहीं जाना ॥ ६ ॥

ऐल उवाच अहो काम मे मेरा चित्त मोहित होगया है मेरे मोहके विस्तार को देखो इस उर्वशी देवीके कण्ठको ग्रहण कर के रहने से मैंने ए अपने अवस्था के खण्ड रातदिना के बीतते नहीं स्मरण किये ॥ ७ ॥

इस उर्वशीने मेरे मनको चुरा लिया तब मेरेको सूर्यका उदय तथा अस्त होना नहीं मालूम पड़ा अनेक वर्षों के अनेकदिन चले गये सो बड़े खेदकी बात होगई है ॥ ८ ॥

अहो मे आत्मसम्मोहो येनाऽऽत्मा योषितां कृतः ।
क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥
सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ।
यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् ॥ १० ॥
कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा ।
योऽन्वगच्छं स्त्रियं यान्तीं खरवत्पादताडितः ॥ ११ ॥
किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥
स्वार्थस्याकोविदं धिङ्मां मूर्खं पण्डितमानिनम् ।
योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥ १३ ॥
सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ।
न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥ १४ ॥
पुंश्चल्यापहृतं चित्तं कोऽन्वन्यो मोचितुं प्रभुः ।
आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥ १५ ॥
बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ।
मनोगतो महामोहो नापयात्यजितात्मनः ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

येन सम्मोहेन आत्मा देहः क्रीडामृगवदधीनः ॥ ९ ॥

ननु प्रणयकुपितायाः अनुनयार्थमधीनता युक्तैव सत्यम् नत्वत्र तदस्तीत्याह । सपरिच्छदं राज्यादिसहितमीश्वरं चक्रवर्तिनं तृणमिव त्यक्त्वा यान्तीमप्यन्वगमम् अनुगतोऽस्मि ॥ १० ॥

किञ्च मम प्रभावाद्यभिमानो वृथैवेत्याह । कुतस्तस्य मे तेजोबलम् खरो यथा पादताडितोऽपि खरीमनुगच्छति । तद्वत् ॥ ११ ॥

एवम्भूतस्य सर्वं साधनं व्यर्थमित्याह । किमिति । त्यागेन सन्न्यासेन विविक्तेन एकान्तसेवया मौनेन वाङ्नियमेन ॥ १२ ॥

अनुतपन् स्वात्मानं निन्दति द्वाभ्याम् । स्वार्थस्येति । अकोविदमज्ञातारं गोखरवत् गौरिव खर इवेति ॥ १३ ॥

अधरासवं सेवमानस्याऽऽत्मभूर्मनसिजः पुनःपुनरुद्भवन् ॥ १४ ॥

एवमष्टभिर्निर्वेदो निरूपितः इदानीं तस्य विवेकमाह द्वाभ्याम् । पुंश्चल्येति । अयं भावः कर्मभिर्देवानिष्ठा दुःखमेव प्राप्तोऽस्म्यतः परमेश्वरमेव भजेयमिति ॥ १५ ॥

परमेश्वरप्रसादं विना देवैरुपदिष्टादपि वेदवाक्यान्मोहो न निवर्तत इत्याह । बोधितस्यापीति । देव्या उर्वश्या सूक्तवाक्येन यथार्थवचनेन । पुरूरवो मा मृथा मा प्रपप्तो मा त्वा वृकासो अशिवास उक्षन् । न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता" इत्यनेन ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

आत्मसंमोहो मनोमोहः । योषितां क्रीडामृगः कृत इत्यन्वयः ॥ ९ ॥

अत्र उर्वश्यां सत्यां प्रणयकुपितत्वम् ॥ १० ॥

ईशित्वं नियन्तृत्वम् ॥ ११ ॥

एवंभूतस्य स्त्रैणस्य । विद्यया शास्त्रार्थज्ञानेन तपसा स्वधर्मेण । श्रुतेन शास्त्रश्रवणेन ॥ १२ ॥

स्वार्थस्य मुक्तिलक्षणस्य ईश्वरतां राजराजताम् ॥ १३ ॥ १४ ॥

भगवन्तमृते इति भगवानेव भक्तस्य चित्तं मोचितुम् प्रभुर्नान्ये देवा इत्यर्थः । अत एव परमेश्वरमेव भजेयमिति भावार्थोल्लेखः ॥ १५ ॥

हे पुरूरवस्त्वं ! मा मृथा मा म्रियस्व मा प्रपप्तः मद्विरहेण मा पतितो भव अशिवासः अशिवा अमङ्गला वृकास इन्द्रियरूपा वृकाः त्वा त्वां मा उक्षन् मा भक्षयन्तु इन्द्रियवशो मा भवेत्यर्थः । स्त्रैणानि स्त्रीसम्बन्धीनि सख्यानि विश्वासा न

किमेतया नोपकृतं रज्ज्वा वा सर्पचेतसः।
रज्जुस्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥ १७ ॥
क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः।
क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १८ ॥
पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः।
किमात्मनः किं सुहृदामिति यो नावसीयते ॥ १९ ॥
तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते।
अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥ २० ॥
त्वङ्मांसरुधिरस्नायुमेदोमज्जाऽस्थिसंहतौ।
विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ २१ ॥
अथाऽपि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित्।
विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सपरिच्छदं राज्यादिसहितम् ईश्वरं भर्तारम् अन्वगममनुगतोऽस्मि ॥ १० ॥

अनुभावः प्रभावः तेजो बलम् ईशित्वं नियन्तृत्वम् ॥ ११ ॥

विविक्तेन एकान्तवासेन ॥ १२ ॥

ईश्वरतां चक्रवर्त्तित्वम् ॥ १३ ॥

आत्मभूः मनोभवः ॥ १४—१५ ॥

देव्याः उर्वश्याः सूक्तवाक्येन सून्रतेन वाक्येन "पुरूरवो मा मृथा माप्रपतो मा त्वा वृकासो अशिवास उक्षन् नवै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता" इत्यनेन प्रतिबोधितस्यापि मनोगतो महामोहः विषयासक्तिहेतुः मनसि स्थितः अनात्मन्यात्मभ्रमः नोपयाति ॥ १६ ॥

———

भाषा टीका।

अहो मेरा बडा आत्मा का मोह है कि जिससे मैंने अपने आत्मा को नर देवों का शिरोमणि तथा चक्रवर्ती होने पर भी स्त्रियों का खेल का मृग बना दिया ॥ ९ ॥

मेरे परिवारों के सहित ईश्वर मेरे को भी तृण के तुल्य त्याग करके जाती हुई स्त्री के पीछे मैं नंगा होकर पागल सरीका पीछे से रोता हुआ चला गया ॥ १० ॥

जो मैं गदहा सरीका पादों से ताडित होने परभी चली जाती हुई स्त्री के पीछे चला गया तिस मेरे को प्रभाव क्या होगा तेज क्या होगा ईश्वरपना क्या होगा ॥ ११ ॥

जिस के मन को स्त्रियों ने हरण कर लिया है तिसको विद्या से क्या होगा तपस्या से क्या होगा त्याग से क्या होगा शास्त्र श्रवण से क्या होगा एकांत से क्या होगा मौन से क्या होगा ॥ १२ ॥

स्वार्थ के नहीं जानने वाले मूर्ख पंडित मानी मेरेको धिक्कार है जो कि मैं महाराजपने को प्राप्त होकर स्त्रियों से बैल गधा सरी का जीता गया ॥ १३ ॥

उर्वशी के अधरामृत के सेवन करने मे मेरे बहुत वर्ष बीत गये तो भी मेरा कामदेव तृप्त नहीं भया है जैसे कि घृतादि से अग्नि नहीं तृप्त होता है ॥ १४ ॥

व्यभिचारिणी स्त्री से हरण किये चित्त को समाधान करके छुटाने को आत्मेश्वर अधोक्षज भगवान् के विना और कौन समर्थ है ॥ १५ ॥

मैं बडा दुर्मती हूं अजितात्मा हूं उस देवी उर्वशी ने मेरे को श्रुति पठित सुंदर वचन से समुझाया तो भी मेरे मन मे भया जो बडा मोह सो नहीं हटा है ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

पूर्वं पुंश्चल्यापहृतं चित्तमित्यादिना तस्या अपकारोऽनुस्मृत इदानीं ममैवायमपराध इत्याह। किमेतयेति। नोऽस्माकं कामिनामेतया किमपकृतं न किञ्चिदपि यथा रज्जुस्वरूपाविदुषो रज्जुद्रष्टुः पुंसस्तस्यां सर्पकल्पनया खिद्यतोऽपि रज्ज्वा किमपि नापकृतं तद्वत् यद्यस्माद्योऽहमेवंभूतः स एवाजितेन्द्रियत्वादपराधीत्यर्थः ॥ १७ ॥

ननु तथाऽपि सैव सौगन्ध्यप्रेमादिगुणैः सम्मोहमूलमित्याशङ्क्य तेऽपि समारोपरिकल्पिता एवेत्याह चतुर्भिः। काय-

अदृष्टादश्रुताद्भावान्न भाव उपजायते ।
असम्प्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः ॥ २३ ॥
तस्मात्सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ।
विदुषां चाप्यविश्रब्धः षड्वर्गः किमु मादृशाम् ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मिति मलीमसोऽतिमलिनः सुमनसां कुसुमानामिव गन्धसौकुमार्यादिसौमनस्यं शोभनमनोभावो वा ॥ १८ ॥

ममत्वमपि तस्मिन्परिकल्पितमेवेत्याह । पित्रोः किं स्वं कायः जनकत्वात् नु वितर्के भार्याया वा भोगप्रदत्वात् अत्रानुपयुक्तमप्येतन्न्यायतुल्यत्वादुक्तम् स्वामिनो वाधीनत्वात् अग्नेर्वा अन्त्येष्ट्यान्तदाहुतित्वात् श्वगृध्रयोर्वा भक्ष्यत्वात् किंवाऽऽत्मनः तत्कृतशुभाशुभभागित्वात् सुहृदां वा उपकारित्वात् एवं यो न निश्चीयते ॥ १९ ॥

तुच्छाकृमिविड्भस्मलक्षणा निष्ठा अन्तो यस्य तस्मिन् काये कलेवरे प्रियत्वेन गृहीते विषज्जमेवाऽऽह । अहो इति । सुनसं शोभननासिकम् ॥ २० ॥

अतो गुणारोपेण रममाणा मादृशाः कृमितुल्या इत्याह । त्वगादिसंहतौ तत्सङ्घाते देहे विण्मूत्रादिसंहतौ रमतां कृमीणां वा ॥ २१ ॥

यद्यप्येवं बीभत्सिता एव स्त्रियोऽथाऽपि नोपसज्जेतावलोकनादिनाऽपि सङ्गं न कुर्यात् अर्थविद्विवेकी अत्र हेतुः विषयेति ॥ २२ ॥

ननु क्वचिन्निमीलितनयनादेरपि मनःक्षोभो दृश्यते सत्यम् सोऽपि पूर्वदर्शनादिकं विना न भवतीत्याह । अदृष्टादिति भावात्पदार्थात् भावो मनःक्षोभः अतः प्राणानिन्द्रियाण्यसम्प्रयुञ्जतो नियच्छतः स्तिमितं निश्चलं स्यात् ॥ २३ ॥

इन्द्रियैः कृत्वा अविश्रब्धोऽविश्वसनीयः मादृशामविवेकिनाम् ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

एवम्भूतः । गुणारोपेण रममाणोऽहमेवापराधी स्वस्यामम त्वादित्यर्थं इत्युक्तम् ॥ १७ ॥

तथापि अपराधित्वेऽपि । तेऽपि सौगन्ध्यादिगुणा अपि गन्धसौकुमार्यादीत्यादिना सौन्दर्यस्यावयवपरिग्रहः मूर्खत्वादिना सौरस्य- सौख्यादिपरिग्रहः । पूर्वार्थे सुमनसामिव परिणामविरसत्वमपि प्रवक्ष्यतो वेति शोभनमनोभावो हि भावहावहेलाद्यात्मकः ॥ १८ ॥

तस्मिन् स्त्रीदेहे । अत्र स्त्रीदेहप्रकरणे । एतस् भार्याया इति एवं स्त्रीदेहस्य भार्यादेहत्वासम्भवात् अनुपयुक्तमसम्बद्धमपि न्यायतुल्यत्वात् भार्याया यथा भोगप्रदत्वं तथा पत्युरपीति दृष्टान्ततुल्यत्वादुक्तमित्यर्थः । तदाहुतित्वादग्नावाहुतित्वात् तत्कृतेति देहकृतपुण्यपापभागित्वात् ॥ १९ ॥

विषज्जमेवासक्तिप्रकारमेवेत्यर्थः ॥ २० ॥

अतस्तुच्छनिष्ठत्वात् गुणारोपेण श्रेष्ठत्वाध्यासेन ॥ २१ ॥

बीभत्सिताः ग्लान्यास्पदाः । अत्र सङ्गाऽकरणे ॥ २२ ॥

सोऽपि निमीलितनयनस्य मनःक्षोभोऽपि अतः दृष्टश्रुतभावानां मनःक्षोभकरत्वात् ॥ २३ ॥

यतः सङ्गस्यानर्थहेतुत्वं तस्मात् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सर्पचेतसः सर्पभ्रान्तिमतः रज्वा किमपकृतं स्वरूपमविदुषः स्वदोष एवापकारीत्यर्थः । अजितेन्द्रियोऽहमिति यत्तस्मात् किमेतयापकृतमित्यन्वयः ॥ १७—१९ ॥

तुच्छत्वं भावो निष्ठा यस्य तत् तुच्छनिष्ठम् ॥ २०—२२ ॥

प्राणान् इन्द्रियाणि असंप्रयुञ्जतः विषयेष्वयोजयतः ॥ २३ ॥

अविश्रब्धः अविश्रम्भणीयः ॥ २४—२५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यतः सा प्रतिबोधितवती तथाप्यहमनपगतमोहस्ततः सा नापकारिणी प्रत्युत प्रतिबोधनेनोपकर्त्री किं तु मयैव मह्यमपराद्धमित्याह । किं तयेति । मे मह्यमनयोर्वश्या किमपकृतमपि तु किमपि नापकृतं वाशब्दोऽत्रैवशब्दार्थकः यथा सर्पचेतसो रज्ज्वा नापकृतं तद्वदित्यर्थः । सर्पभ्रान्तिमनसो रज्जुस्वरूपाविदुष इव स्वदोष एवापकारीति भावः । तदाह स्वरूपं दृष्टान्ते रज्जुस्वरूपं दार्ष्टान्तिके तु देहात्मनोर्याथात्म्यमविदुषः अजानतः द्रष्टुः दृष्टान्ते रज्जुं सर्पत्वेन पश्यतः दार्ष्टान्तिके देहमात्मत्वेन पश्यतः स्वरूपाज्ञाने हेतुमाह । यद्यस्माद्हमजितेन्द्रियः इन्द्रियपरवशः ॥ १७ ॥

अन्यथैवं मोहो न स्यादित्यसम्भावनयोपपादयति । क्वेति । अयं कायः कान्तादेहः मलीमसोऽतिमलिनः । यद्वात्र कायशब्देन स्वदेहोऽपि तन्त्रेण विवक्षितः । दौर्गन्ध्याश्रयः अशुचिश्चैवंविधस्य देहस्य क्व सौमनस्याद्या गुणा अन्ये च हृदयङ्गमा गुणाः क्व सौमनस्यं सौगन्ध्यमतिहेये काये भोग्यताबुद्धिरत्यन्तासम्भाविनीति भावः । अतोऽस्मिन्नेते सौमनस्याद्या आविद्यया स्वरूपावेदनात्मिकया कृताः ॥ १८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वरूपवित्तु देहयाथात्म्यमवलोकयन्न मुह्यतीत्याह । पित्रोरिति । काय इत्यनुषज्यते पित्रोरित्यादिषु स्वस्वामिभावसम्बन्धलक्षणा षष्ठी अयं कायः पित्रोः स्वं किं नु तयोः स्वं नु भवतीत्यर्थः । एवमग्रेऽपि नुशब्दो वितर्के ताभ्यां जातत्वादिति भावः । भार्यायास्तस्या भोग्यत्वात् स्वामिनस्तदधीनत्वात् अग्नेर्वा अन्तेष्ट्यां तदाहुतित्वात् श्वगृध्रयोर्वा तयोर्भक्ष्यत्वात् किं वात्मनस्तस्य सुखदुःखभोगायतनत्वात् तन्मूलपुण्यापुण्यकर्मसाधनत्वाच्च सुहृदां तदुपकार्यत्वादिति इत्यन्तरमालोचयतीतिशेषः । स नावसीदति तन्मोहेन न क्लिश्यत इत्यर्थः । इत्थमिदं शरीरं पारक्यमित्यालोचयन्न तस्मिन्सज्जते नावसीदतीति विवक्षितोऽर्थः ॥ १९ ॥

अस्वरूपवित्तु देहमात्मतयाभिमन्यमानः कान्ताशरीरे भोग्यताबुद्ध्या विषज्जमानोऽवसीदतीत्याह । तस्मिन्निति । तस्मिन्मलीमसे दौर्गन्ध्याद्यात्मकेऽशुचौ तुच्छे अभावे निष्ठा चरमावस्था यस्य तस्मिन्कलेवरे विशेषतः सक्तो भवति सङ्गमेवाभिनयेन दर्शयति । अहो इति । अहो ऽस्याः स्त्रियः मुखं सुभद्रं सुखावहं सुनसं शोभननासिकमिति विषज्जत इति सम्बन्धः ततोऽवसीदतीति भावः ॥ २० ॥

इत्थं विषज्जमानं निन्दति । त्वङ्मांसेतित्वगादिसप्तधातुसङ्घातात्मके शरीरे विण्मूत्राभ्यां पूर्णे दुर्गन्धे कलेवरे रमतां कृमीणां च मिथः कियदन्तरं न किञ्चिदपीति भावः । यद्वा । रमतामित्येतत्संताविषयनन्तरमपि योज्यं त्वगादि सङ्घातात्मके शरीरे रमतां विण्मूत्रपूरिताभ्यां दुर्गन्धे श्वभ्रे रमतां कृमीणां च मिथः कियदन्तरमित्यर्थः ॥ २१ ॥

एवं निर्विद्य कृत्यं निश्चिनोति । अथापीत्यस्य इतोऽपीत्यर्थः अर्थविदात्महितविस्त्रीषुस्त्रैणेषु स्त्रीवश्येषु चनोपसज्जेत अथापीत्यनेन विवक्षितं हेतुं विवृण्वन् तस्यान्वयव्यतिरेकाभ्यां मनःक्षोभहेतुतामप्याह । विषयेन्द्रियेति । विषयेन्द्रिययोः संयोगात्सम्बन्धादन्यथा तदभावे न क्षुभ्यतीत्यर्थः । विषयेन्द्रियसम्बन्धस्य मनःक्षोभहेतुत्वाच्च स्त्रीषु तद्वश्येषु च नोपसज्जेतेत्यर्थः ॥ २२ ॥

नान्वयव्यतिरेकमेव प्रपञ्चयति । अदृष्टादिति । भावाद्विषयाद्भावो मनः क्षोभः नोपजायते एवं दृष्टान्ताभिप्रायकं यथा ताभ्यां भावो नोपजायते तथा प्राणानिन्द्रियाण्यसंप्रयुञ्जतः पुंसः मनः स्तिमितं निश्चलं सत्शाम्यति रागाद्यकलुषितं भवतीत्यर्थः ॥ २३ ॥

इत्थं निर्विद्य विचार्य च निश्चितं कृत्यमर्थमुपसंहरति । तस्मादिति । इन्द्रियैः सङ्गो न कर्त्तव्यः तत्र हेतुत्वेन सङ्गस्यानर्थहेतुतां कैमुत्यन्यायेनाह । विदुषामपीति । षड्वर्गः षडिन्द्रियवर्गः विदुषामप्यविश्रम्भः अविश्रम्भणीयः मद्वशोऽयं षड्वर्गो मह्यं किमपराध्यतीति विश्वासेन विषयैर्न योजनीय इत्यर्थः न कुर्यात्कर्हिचित्सङ्गं मनसि ह्यनवस्थिते यन्निश्रम्भाच्चिराच्चीर्णं चस्कन्द तप ऐश्वरम् इत्युक्तरीत्या विश्वस्तस्यानर्थावहत्वादिति भावः । विदुषामप्येवं किं पुनर्मोदृशामविदुषामिति ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बोधकाभावादेवमभूदिति नेत्याह । बोधितस्येति । किमेतया वाचेत्यादि सूक्तवाक्येन ॥ १७ ॥

एतयोर्वेश्या रहसि तया किं नु सुखं न किमपि प्रत्युत दुःखमेव तत्र दृष्टान्तः । रज्ज्वां वा सर्पचेत स इति । यथा रज्ज्वां सर्पबुद्धेर्भयलक्षणं दुःखं तथा अन्यथा बुद्धेः किं कारणमत्राह । द्रष्टुरिति । द्रष्टुरीश्वरस्य स्वरूपाविदुषः किं च योऽहं यादृश ईश्वराधीनसत्ताकोऽहं तस्य मम ईश्वरस्वरूपाज्ञानं मत्स्वरूपाज्ञाने कारणमित्यर्थः । रथाङ्गपाणेः स्वरूपाज्ञाने स्वस्वरूपाज्ञाने वाजितेन्द्रियत्वमेव कारणमित्याह । यदिति ॥ १८ ॥

इतोऽपि सर्वस्याप्यज्ञानमेव कारणमित्याह । कार्यमिति । सौमनस्यं सौन्दर्यं दौर्गन्ध्यादिदुर्गुणाधिकरणस्य देहस्य सौमनस्यादि गुणसमवायो न घटत इति यस्मात्तस्मादनाद्यविद्यया भगवत्स्वरूपाज्ञानेनाध्यासः अस्मिन् तद्बुद्धिरभूदित्यर्थः ॥ १९ ॥

अध्यासं प्रपञ्चयति । पित्रोरिति । भार्याया अपि भोगार्हत्वाच्छ्वकाटवन्तभावः । यो देहः पित्रादीनामस्येति नावसीयते न निश्चीयते ॥ २० ॥

तस्मिन् तुच्छानां पञ्चानां भूतानां निष्ठोत्कर्षौ यस्मिन् तुच्छा निष्ठा व्यवस्था च यस्य स तथेति वा तस्मिन्नमध्यकलेवरे सुभद्रमिति विषज्जते पुरुषः अहो भ्रान्तिरिति ॥ २१ ॥

इतोऽपि स्त्र्यर्थबुद्धिं कुर्वन् भ्रान्त इत्याह । त्वगिति । संहता त्वगादिसन्निविडे देहे रमतां रममाणानां कृमीणां कीटकानां चान्तरं व्यवच्छेदनं कियत् ॥ २२ ॥

स्त्र्यभिरमणमपि गर्हितं यस्मात् अथ तस्मात् अर्थवित् स्वप्रयोजनवित् स्त्रीलोकेषु च नो विषज्जते यद्यपि विशेषो नास्ति तथापीदं न कर्तव्यमित्यतो वाह । अथापीति स्त्रीसङ्गादिवर्जनेमनोवशीकरणमेव प्रथमसाधनमन्यथा सर्वं कुञ्जरस्नानवन्निष्फलं स्यादिति भावेनाह । विषयेति अन्यथा विषयेन्द्रियसंयोगाभावे मनःक्षोभो नास्ति ॥ २३ ॥

तदुपपादयति । अदृष्टादिति । भावो मनः अदृष्टादश्रुताद्भावात्तनो नोपजायते विकारविशिष्टं न भवति संयोगलक्षणसम्बन्धाभावात् अतो दृष्टश्रुतवस्तुन्येव सम्बन्धसमर्थं मनस्ततश्च प्रकृते किमनेनेति तत्राह । असंप्रयुञ्जत इति । यतो विषयेन्द्रियसंयोगात्तु क्षुब्धं भवत्यतः प्राणानिन्द्रियाणि विषयेषु असंप्रयुञ्जतः विषयेभ्य आकृष्य स्ववशे कुर्वतः पुंसः आकर्षणपाशाभावात् स्तिमितं निश्चलं मनः शाम्यति भगवदेकनिष्ठं भवतीत्यर्थः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सदेवं ज्ञानेऽपि इन्द्रियैः श्रोत्रनेत्रादिष्वेकेनापि सङ्गो न कर्त्तव्य इत्यर्थः ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुंश्चल्यापहृतामिति । पूर्वमुक्तमिदानीं तु ममैवायं दोषो न

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तस्या इत्याह। किमेतयेति। एतया उर्वश्या नोऽस्माकं किमपकृतं न किञ्चिदपि सर्पचेतसो जनस्य रज्ज्वा वा किमपकृतं न किमपि यतो रज्जुस्वरूपमविदुषस्तस्यैव दोषः स हि स्वाज्ञानादेव बिभेति यत् यस्मादहमपि तथैवाजितेन्द्रियो मोहमेताद्दशम-भजम् ॥ १७ ॥

ननु तदपि सैव सौरूप्यसौरभ्यमाधुर्यादिसुगुणैस्त्वदीयसम्मोहमूलामिति चेत् मैवं तेऽपि गुणा अविवेकपरिकल्पिता एवेत्याह। कायमिति। वस्तुविचारतो मलीमसोऽतिमलिन एव कायः क सुमनसां पुष्पाणामिव सौरभ्यसौकुमार्य्यादिकं सौमनस्यं तदाद्या गुणा वा क कि त्वयमध्यासस्तस्यामारोपो मया स्वमोहेनैव कृतः ॥ १८ ॥

सामान्यतो देहमात्रेऽपि ममत्वमविवेककल्पितमेवेत्याह पित्रोः किं स्वमयं कायः जनकत्वात् नु विसर्के भार्याया वा भोगप्रदत्वात् स्वामिनः परयुर्वा भोक्तृत्वात् अग्नेर्वा अन्त्येष्ट्यां तदाहुतिरूपत्वात् श्वगृध्रयोर्वा किमात्मनस्तत्कृत-शुभाशुभभागित्वात् सुहृदां वा तदुपकारकत्वात् एवं यो न हि निश्चीयते ॥ १९ ॥

तुच्छलोकनिष्ठे निन्द्याफले वा विषज्जते विषज्जनप्रकारमाह। अहो इति ॥ २० ॥

विषमूत्रपूये तन्मये देहे रममाणानां माद्दशानां कृमीणां कियदन्तरं न कियदपि ॥ २१ ॥

यद्यप्येवं बीभत्सिता एव स्त्रियस्तथापि तासु जना उपसज्जन्त्येवेत्यतो निषेधति। अथापीति। अर्थवित् विवेकी तु तथापि न तासु विषज्जेत् तद्दर्शनादपि दूरे तिष्ठेत् यतो विषयेत्यादि ॥ २२ ॥

ननु निर्जने स्थितस्यापि मुनेर्मनःक्षोभः क्वचिद्दृश्यते सत्यं स खलु प्राचीनस्त्रीदर्शनसंस्कारोत्थ एवेति सोपपत्ति-कमाह। अदृष्टादिति। तस्मात्प्राणान् इन्द्रियाणि स्त्रीविषये न सम्प्रयुञ्जतो जनस्य मनस्तिमितं निश्चलं सत् शाम्यति ॥ २३॥

अविश्रब्धः अविश्वसनीय इत्यर्थः। षड्वर्गः षडिन्द्रियवर्गः ॥२४॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पूर्वत्र पुंश्चल्यापहृतं चित्तमित्यादिना तदपराधोऽनुस्मृतो-ऽधुना न तदपराधः किन्तु ममैवापराध इत्याह। किमिति। नोऽस्माकमेतया उर्वश्या किमपकृतं न किञ्चिदपि यथा रज्जु-स्वरूपाऽविदुषस्तद्द्रष्टुः पुंसः सर्पचेतसः सर्पोऽयमिति खिद्यतः रज्ज्वा किञ्चिदपकृतं न किञ्चिदपीत्यर्थः। यद्यस्मादहमेवाजिते-न्द्रियः ॥ १७ ॥

विषयासक्तिहेतौ ममोगते महामोहे कारणमाह। काय-मिति। अध्यासः अनात्मनि आत्मभ्रमः अविद्यया आत्मानात्मा-ज्ञानेन कृतः आत्मानात्मविवेकमाह। क्वायं मलीमस इति। मली-मसः अतिमलिनः शोभनस्य आत्मविषयकस्य मनसो भावः। सौमनस्यं तदाद्याः नित्यत्वनिर्विकारत्वादयः ॥ १८ ॥

आत्मानात्मविवेकदार्ढ्यायानात्मगुणानाह। पित्रोरिति त्रिभिः। नावसीयते न निश्चीयते ॥ १९ ॥

तुच्छाः हेयाः आदौ शुक्रादिरूपाः मध्ये मूत्रपुरीषाद्याधार-रूपाः अन्ते कृमिविड्भस्मरूपाः निष्ठाः अवस्थाः यस्य तस्मिन् अहो सुभद्रमिति विषज्जते ॥ २० ॥

त्वगादिसंहतौ कलेवरे रमतामस्मदादीनां विषमूत्रादिसं-हतौ रमतां कृमीणां कियदन्तरं न कियदपीत्यर्थः ॥ २१ ॥

अथापि त्वगादिसङ्घातत्वेन स्त्रीदेहस्य बीभत्सितत्वेऽपि न सज्जेत सङ्गं न कुर्यात् यतो मनोविषयेन्द्रियसंयोगात् क्षुभ्यति अन्यथा विषयेन्द्रियसंयोगाभावे तु न क्षुभ्यति ॥ २२ ॥

एतदेवाह। अदृष्टादिति। भावात् विषयात् भावो मनसः क्षोभः असम्प्रयुञ्जतः विषयेषु प्राणान् इन्द्रियाण्यविसृजतः स्तिमितं निश्चलं सत् शाम्यति ॥ २३ ॥

यस्मात् प्राणान् असंप्रयुञ्जतो मनः शाम्यति तस्मात्स्त्रीषु स्त्रैणेषु च सङ्गो न कार्यः इन्द्रियैरिखनेन चक्षुरादिभिरपि तत्सङ्गो न कार्य इत्यर्थः। तत्सङ्गेन निर्जितानामपीन्द्रियाणां पुनर्विषयप्रावण्यं सम्भवतीति द्योतयितुमाह। षड्वर्गः समनस्क-ज्ञानेन्द्रियवर्गो विदुषामप्यविश्रब्धोऽविश्वसनीयः माद्दशां कामि-नामविश्वसनीय इति किमु वक्तव्यम् ॥ २४ ॥

---

### भाषा टीका।

इस उर्वशीने मेरा कितना नहीं उपकार किया है जैसे कि मार्ग में पड़ी हुई रस्सी को नहीं जानने वाले पुरुष को सर्प जानने वाले को रस्सी दुःख देतीहै तैसेही अजितेंद्रिय होनेसे इसने मेरेको किया है ॥ १७ ॥

दुर्गंधी वाला अशुद्ध यह मलिन शरीर कहां सुन्दर बुद्धि आदिक गुण कहां बड़ाही अन्तर है तथापि अहङ्कार से ऐसा देहादिकों में भ्रम होरहा है ॥ १८ ॥

जिस शरीर का यह निश्चय नहीं है कि यह माता पिता का है या अन्नादि देने वाले मालिक का है या अग्नि काहै या कुत्ता का है या गीधका है या अपनाहै या मित्रोंका है ऐसा ठीक मालूम नहीं पड़ता है ॥ १९ ॥

उस अपवित्र तुच्छ शरीर मे अहो बड़ा सुन्दर सुंदर नासिका वाला मंदहास वाला स्त्रीका शरीर है करके उस मे आसक्त होजाता है ॥ २० ॥

त्वचा मांस नाड़ी मेद मज्जा हड्डियों का समुदाय विष्ठा मूत्र पीवसे भरा हुआ है तब ऐसे शरीर मे रमण करने वालों को कीड़ों से क्या फरक है ॥ २१ ॥

तौभी यथार्थ जानने वाला पुरुष स्त्री या स्त्री के सङ्गी पुरुषों मे आसक्ति न करै क्योंकि विषय तथा इंद्रियों के संयोग से मनका क्षोभ होता है एकेले में नहीं होताहै॥२२॥

विना देखे सुने पदार्थ मे मन नहीं चलता है इंद्रियों को विषयों मे से रोक रखने से मन निश्चल होकर शांत हो जाता है ॥ २३ ॥

श्रीभगवानुवाच ॥

एवं प्रगायन् नृप ! देवदेवः स उर्वशीलोकमथो विहाय ।
आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञानविधूतमोहः ॥ २५ ॥
ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ।
सन्त एतस्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ २६ ॥
सन्तोऽनपेक्षा मच्चित्ताः प्रशान्ताः समदर्शिनः ।
निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः ॥ २७ ॥
तेषु नित्यं महाभाग ! महाभागेषु मत्कथाः ।
सम्भवन्ति हिता नृणां जुषतां प्रपुनन्त्यघम् ॥ २८ ॥
ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चाऽऽदृताः ।
मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥ २९ ॥
भक्तिं लब्धवतः साधो ! किमन्यदवशिष्यते ।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ३० ॥
यथोपश्रयमाणस्य भगवन्तं विभावसुम् ।
शीतं भयं तमोऽप्येति साधून् संसेवतस्तथा ॥ ३१ ॥
निमज्ज्योन्मज्जतां घोरे भवाब्धौ[1] परमायनम् ।
सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ३२ ॥

---

भाषा टीका ।

तिस से स्त्री या स्त्री सङ्गी पुरुषों का संग नहीं करना चाहिये क्योंकि इंद्रियो से सम्बन्ध होनेसे विद्वान् कोभी विश्वास नहीं रहता है ऐसा है तो फिर हम सरीके तो पुरुषों की कथा वाती है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

फलितमाह द्वाभ्याम् । एवमिति । नृपेषु देवेषु च दीव्य-तीति तथा ॥ २५ ॥

उक्तिभिर्हितोपदेशैरिति तीर्थदेवादिसङ्गादपि सत्सङ्गः श्रेयानिति दर्शयति ॥ २६ ॥

सतां लक्षणमाह । सन्त इति । विशेषणाष्टकस्य यथेष्टं हेतुहेतुमद्भावः ॥ २७ ॥

न च तेषूपदेशापेक्षाऽपि तु केवलं तत्सन्निधिरेव तारय-तीत्याह । तेष्विति चतुर्भिः ॥ २८ ॥

श्रवणादिभिरेव मत्पराः श्रद्धधानाश्च सन्तो भक्तिं विन्दन्ति ॥ २९—३० ॥

विभावसुमग्निं सेवमानस्य अप्येति नश्यति तथा कर्म-जाड्यमागामि संसारभयं तन्मूलमज्ञानं च नश्यतीत्यर्थः ॥ ३१ ॥

निमज्ज्योन्मज्जतामुच्चावचयोनीर्गच्छतां परमायनं परमा-श्रयः ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अथो साकल्येन सव्यसनमित्यर्थः । आत्मनि जीवात्मनि आत्मानं नियन्तृत्वेन स्थितं परमात्मानं मां सर्वज्ञमवगम्य ज्ञात्वा उपारमद्भक्त्येष्टदेवस्य मम शरणपरायणो बभूवेत्यर्थः । ननु मोहलक्षणप्रतिबन्धकसद्भावे उपरामः कथं सङ्गच्छेत तत्राह । ज्ञानेति । ज्ञानमत्र भगवज्ज्ञानमेव ग्राह्यं नतु निर्विशेषब्रह्मानुसन्धानम् । "आत्मारामेश्वरमृते भगवन्तमधोक्षजम्" इति तद्वाक्यात् । ततो दुःसङ्गमुत्सृज्येत्युत्तरश्लोकस्थाच्च ॥२५॥

यतः सङ्गत्यागेन पुरूरवाः कृतार्थो बभूव ततो हेतोः ॥२६॥

मच्चित्ता इति विशेष्यम् अनपेक्षत्वादिकन्तु स्वरूपगुणानु-वादमात्रम् ॥ २७ ॥

---

१ ते परायणम् इति विज० ।

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

अयन्त्वेन तेषां सङ्गमस्यैव पावनत्वं तदुक्तकथायास्तु किमुतेति व्यञ्जितम् ॥ २८ ॥

कथाविषयकमादरणमादृतिः सा विद्यते येषां ते आदृताः। अर्शआदिभ्यो मत्वर्थीयोऽच् । भक्तिं प्रेमलक्षणाम् ॥ २९ ॥

भक्तेस्तु भक्तिरेव फलमित्याह । भक्तिमिति । ब्रह्मणि स्वरूपगुणाभ्यां बृहत्तमे तदेवाह । आनन्देति । "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिश्रुतेः तस्यैव बृहत्तमत्वम् । एवं स्वरूपेण बृहत्तमत्वमुक्त्वा गुणेनाप्याह । अनन्तगुणे इति । मधुराऽनन्तगुणवैचित्रीमति स्वयं भगवत्त्वेन सर्वांशपूर्णत्वात् । एवंभूतमद्विषयकभक्तेः पञ्चमपुमर्थत्वेन परमफलत्वमेवोपयुज्यत इति भावः ॥ ३० ॥

तस्याश्च सत्सङ्गैकजीवातुत्वात् पूर्वोद्दिष्टानां सतां स्वरूपगुणमप्याह । यथेति चतुर्भिः । उपश्रयमाणस्य फलविशेषकामनया यज्ञार्थं सेवमानस्य अत एव भगवन्तमित्युक्तम् । तन्मूलं भयकारणम् ॥ ३१ ॥

शान्ता मन्निष्ठबुद्धयः । अत एव मदनुग्रहात् ब्रह्मविदः मद्विभूतिरूपासङ्ख्यगाविभावं ब्रह्मापि जानन्तः । तदुक्तं सत्यव्रतं प्रति श्रीमत्स्यदेवेन । मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदीति ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एतस्य पुरूरवसः उक्तिभिः ॥ २६—३० ॥

भयम् अन्धकारजनितभयं तमो विभागः किमप्येतीत्यर्थः देहात्मनामैकत्वानिर्विशेषत्वज्ञाने तदेव तमः किमप्यनिर्वाच्यं ज्ञानावरकमप्येत्यपगच्छतीत्यर्थः ॥ ३१ ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलमेवमैलो निश्चिचायैवापि तु निश्चितमर्थमन्वतिष्ठदपीत्याह । एवमिति । नरदेवानां देवः नृपदेवदेव इति पाठेऽप्ययमेवार्थः दीव्यतीति देव इति व्युत्पत्त्या राजपर्यायोऽत्र देवशब्दः स ऐलः आत्मनि प्रत्यगात्मनि आत्मानं मामन्तः प्रविश्य प्रत्यासन्नेन धारकं मामुपागम्य प्राप्य उपासनेन साक्षात्कृत्येत्यर्थः । ततो ज्ञानेनोपासनात्मकेन विधूतः निरवशेषं निरस्तो मोहो देहात्माभिमानादिरूपो येन तथाभूतो बभूव मुक्तोऽभूदित्यर्थः ॥ २५ ॥

इतिहासमुखेनोपदिष्टमर्थमुपसंहरति । तत इति । बुद्धिमांश्चेत्सत्सु सज्जेत किमतस्तत आह । सन्त इति । एतस्य श्रेयस्कामस्य पुंसः मनोव्यासङ्गं मनसो विषयेषु सङ्गमुक्तिमनर्थहेतुत्वोपपादकैर्वचोभिश्छिन्दन्ति ॥ २६ ॥

कीदृशास्ते सन्त इत्यतस्तान्विशिनष्टि । सन्तोऽनपेक्षा इति । अत्यैव निरतिशयपुरुषार्थरूपे चित्तं येषां तेऽत एवानपेक्षाः मद्व्यतिरिक्तविषयाभिलाषरहिताः अत एव प्रशान्ताः रागाद्यकलुषितचित्ताः समदर्शिनः सर्वं चिदचिदात्मकं जगद्ब्रह्मात्मकत्वेन समं पश्यन्तीति तथा देहतदनुबन्धिष्वहम्ममाभिमानरहिताः निर्द्वन्द्वाः द्वन्द्वेभ्यो निर्गताः शीतोष्णादिद्वन्द्वप्रभवविकाररहिताः परिगृह्यन्त इति परिग्रहा अनुकूला विषयास्तेभ्यो निर्गतास्तद्रहिता इत्यर्थः ॥ २७ ॥

ननु मनोव्यासङ्गहेतावघे सति केवलमुक्तिभिश्छिन्नोऽपि पुनः प्ररोहेदित्यत आह । तेष्विति । हे महाभाग ! सम्भवन्ति प्रवर्त्तन्ते ततः किमत आह । मदिति । ताःमम कथा जुषतां शृण्वतां नृणामघं प्रपुनन्ति शोधयन्ति क्षपयन्तीति यावत् ॥ २८ ॥

ततः किमत आह । ता इति आदृता इति । कर्त्तरिक्तः आदृतवन्तश्च भवन्ति यद्वा यैरादृता भवन्ति ते श्रद्दधाना मत्परा मदाराधनपराश्च सन्तो मयि भक्तिं विन्दन्ति लभन्ते व्यासङ्गनिमित्तदुरितक्षपणद्वारा मयि भक्तियोगं निष्पादयन्तीत्यर्थः ॥ २९ ॥

ततोऽपि किमत आह । भक्तिमिति । मयि भक्तिमिति सम्बन्धः किमन्यदवशिष्यते न दुर्लभं किञ्चिदस्तीत्यर्थः । भक्तेः सर्वसाधनहेतुतया तद्विषयभूतमात्मानं विशिनष्टि । अनन्तगुण इति अनन्ता असंख्येया गुणा आश्रितकार्यापादका यस्मिन् ब्रह्मणि स्वरूपतो निरतिशयबृहत्त्वशालिनि निरतिशयानन्दज्ञानस्वरूपे ॥ ३० ॥

एवं सत्सङ्गस्य प्रणाड्याखिलश्रेयः साधनत्वमुक्तमथ तस्मिन् रुचिं जनयितुं प्रस्तौति । यथेति । भगवन्तमाहवनीयादिरूपेण पूज्यं विभावसुमग्निम् उपश्रयमाणस्य पुंसः शीतं तमोऽन्धकारश्च तज्जन्यं भयं चाप्येति तथा साधून् संसेवतः पुरुषस्यापि तमो ज्ञानं तत्प्रयुक्तं संसृतिभयं चापगच्छतीत्यर्थः ॥ ३१ ॥

निमज्ज्येति उपवन्तम् उन्मज्जतां पुंसां परमायनं परमं शरणं सन्त एव साधव एवोत्तारका इत्यर्थः । कथम्भूताः ब्रह्मविदः शान्ता रागादिभिरकलुषितचित्ताश्च यथाप्सु मज्जतां दृढा नौः शरणं तद्वदित्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तं निगमयति । तस्मादिति । कुत इति तत्राह । विदुषामिति ॥ २५ ॥

जन्मप्रभृत्यभ्यस्तस्य दुःसङ्गस्य त्यागो दुःशक इति न मन्तव्यः सत्सङ्गेन स्वयमेव शिथिलीभूतस्य सुलभ इति भावेनाह । तत इति । तृणगूढावलम्बरहितकूपपतनवत् दुःसङ्गोऽनर्थकारणमिति यस्ततः किमस्य कुर्वन्तीति तत्राह । सन्त इति । सन्त एतस्य मनोवाक्कायकर्मभिः सम्यक् शरणम् गतस्य पुंसो मनोव्यासङ्गं मनसो दुष्टेषु सङ्गमुक्तिभिः छिन्दन्ति ॥ २६ ॥

एवंविधमाहात्म्याश्चैते कथं ज्ञातव्या इति तल्लक्षणमाह । सन्त इति ॥ २७ ॥

अनपेक्षतादिगुणानामन्यत्रापि दर्शनात्तेषामपि दुःसङ्गनिवर्तकत्वं स्यादित्याशङ्क्य तच्छक्त्युद्बोधकगुणसद्भावादन्यत्र तदभावादिति भावेनाह । तेष्विति । ततः किमत आह । ता इति । ताः कथाख्या उक्तयो मनोव्यासङ्गं छिन्दन्तीत्यर्थः ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वर्भ्रष्टिर्हि समस्तव्यसनच्छेत्री तदनुदये ताभिः किमत्राह । ता ये शृण्वन्तीति ॥ २९ ॥

भक्तेः साधनोत्तमत्वमाह । भक्तिमिति ॥ ३० ॥

एतमर्थं सोदाहरणं समर्थयते । यथेति । विभावसुमग्निं निषेवमाणस्य शीतादिकं यथा नश्यति तथा साधुं सत्पुरुषं सेवमानस्य मनोव्यासङ्गविनाशो भवतीत्यर्थः ॥ ३१ ॥

इतोऽपि सन्तः सेव्या इत्याह । निमज्ज्येति । तथा ते सन्तः पुंसां परायणमप्सु मज्जतां दृढा नौरिव ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ज्ञानात् पूर्वमेव कुतोऽपि लब्धात् विधूतो मोहो यस्य सः पुंश्चल्यापहृतं चित्तमित्यादिप्राचीनतद्वाक्यादेव भगवज्ज्ञानसद्भावोपलब्धेः ततो दुःसङ्गमुत्सृज्येत्युत्तरवाक्यस्वारस्याच्च ॥ २५ ॥

असत्सङ्गत्यागेऽपि न किञ्चित्स्यात् किन्तु सत्सङ्गेनैवेत्याह । तत इति ॥ २६ ॥

मय्यर्पिता इति विशेष्यम् तस्य चानपेक्षत्वादिकं स्वरूपगुणानुवादमात्रं विषयान् ध्यायतश्चित्तमित्यादेः ॥ २७ ॥

प्रपुनन्तीति प्रशब्दः अत एव तेषां पुनानत्वात् ॥ २८ ॥

मत्कथानां च न केवलं पावनतामात्रं किंत्वभ्यासेन भक्तिप्रदायितापीत्याह । ता इति ॥ २९ ॥

भक्तेस्तु भक्तिरेव फलमित्याह । भक्तिमिति । तत्र हेतुः मयीति ब्रह्मणि सर्वतो बृहत्तमे तदेवाह । आनन्देति । आनन्दाद्ध्येवमानि भूतानि जायन्त इत्यादेः को ह्येवान्यात् कः प्राण्यादित्यादेश्च श्रुतेः आनन्दस्यैव परमबृहत्तमत्वमिति तत्रापि अनन्तगुणो मधुरानन्तगुणवैचित्रीमिति ततश्च परमातिपरमबृहत्तमत्वमित्यर्थः । सर्वांशेन पूर्णत्वात् एवंभूते च या भक्तिः सैव परमपुरुषार्थतयोपयुज्येतैतादृशानन्दात्मकत्वादिति भावः ॥ ३० ॥

एवमस्यापि प्रकरणस्य पूर्वपूर्ववदेव निष्ठां दर्शयित्वा पूर्वोद्दिष्टानां सतां स्वरूपगुणमप्याह । यथेति चतुर्भिः । उपश्रमाणस्य फलविशेषकामनया यज्ञार्थं सेवमानस्य अत एव भगवन्तमित्युक्तम् ॥ ३१—३३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नृपेषु देवेषु च दीव्यतीति तथा आत्मनि मनसि आत्मानं प्रेमास्पदं मामवगम्य भक्त्या अनुभूय उपारमत् शरीरं तत्याज ॥ २५ ॥

व्यासङ्गं विरक्ताभासक्तिं सन्त एवैवंप्रकारेण सुकृततीर्थदेवप्रणामजलादीनां न तादृशं सामर्थ्यमिति ज्ञापितम् ॥ २६ ॥

सन्त एव के ते ये स्वसाङ्गिगुणप्रदास्तेषामुत्कर्षश्च का इत्यपेक्षायामाह । सन्त इति द्वाभ्याम् । अनपेक्षाः कर्मज्ञानादीन् स्वार्थं देवमनुष्यादींश्च नापेक्षन्ते इति ते तथा तर्हि किं त्वामपि नापेक्षन्ते तत्राह । मय्यर्पिता इति । त्वय्यर्पिताः कंसादयोऽप्यभूवंस्तत्राह । प्रशान्ताः अक्रोधनाः यदि तान् केचिद्द्विषन्ति तर्हि तेषु कथमक्रोधनास्तत्राह । समदर्शिनः । सबन्धुशत्रुतटस्थादिषु तुल्यदृष्टयः तत्र हेतुरहङ्कारज एवेत्याह । निर्ममा निरहङ्कारा इति । अत एव मानापमानादयोस्तुल्यत्वाद्द्विर्द्वन्द्वाः ननु पुत्रकलत्रादिमत्त्वे नैतादृशत्वं सम्भवेत्तत्राह । निष्परिग्रहाः अकृतपरिग्रहास्त्यक्ततदासक्तयो वा ये मद्भक्तास्ते सन्तः ॥ २७ ॥

तेषामुत्कर्षो हि मत्कथा एवेत्याह । तेष्विति ॥ २८—२९ ॥

किमन्यत् फलमवशिष्यते न किमपि भक्तेरेव सर्वफलरूपत्वादिति भावः । तत्रानन्तगुणे अनन्तसच्चिदानन्दात्मकाहङ्कारममकारादिगुणे इति प्रेमा ब्रह्मणीति मुक्तिः आनन्दानुभवेतिब्रह्मसुखानुभवोऽपि तदमानुषाङ्गिकः स्यादेवेति भावः ॥ ३० ॥

विभावसुमग्निं शीतोदनसिद्ध्यर्थमुपश्रयमाणस्य अप्येति नश्यति तथैव भजनसिद्ध्यर्थं साधून् संसेवमानस्य कर्मादिजाड्यं संसारभयं भजनविघ्नश्च ॥ ३१ ॥

निमज्ज्योन्मज्जतांनौर्योग्ययोनीर्गच्छतां परमायनंपरमाश्रयः ॥३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नृपदेवोऽहं देवो यस्य स तथा अत एव आत्मनि मामात्मानमवगम्य ॥ २५—२६ ॥

अनन्ताः नित्याः अपरिमिताः गुणा यस्मिन् ब्रह्मणि बृहत्स्वरूपादिके वेदान्तैकवेद्ये ॥ ३० ॥

विभावसुमग्निमुपश्रयमाणस्य प्रसिद्धं शीतादिकमप्येति नश्यति तथा भगवद्भक्तमुख्यजाड्यं संसारस्वाजभयमज्ञानं चाप्येति ॥ ३१ ॥

निमज्ज्योन्मज्जतां मृत्युजन्मप्रवाहपतितानाम् परायणं परमोद्धारकारणम् ॥ ३२ ॥

---

भाषा टीका ।

श्री भगवान् बोले राजाओं का राजा वह पुरूरवा इस प्रकार से गान करके उस उर्वशी के लोक को छोड़कर अपने हृदय मे स्थित आत्मा मेरेको जानकर ज्ञान से सब मोहको छोड़कर संसार से निवृत्त होगया ॥ २५ ॥

तिस से उचित है कि खोटे संग को छोड़कर बुद्धिमान् पुरुष सत्पुरुषों का संग करे तब सत्पुरुष इसके विषय व्यासंगो को ज्ञानोपदेश से छेदन करदेते हैं ॥ २६ ॥

सन्त कौन हैं कि संसार से निरपेक्ष होकर मेरे में चित्तके लगाने वाले शांत रूप समदर्शी अहङ्कारममकार रहित और शीतोष्णादि द्वन्द्व से रहित हैं सब सामग्री स्त्रीपुत्रादि से रहित रहते हैं ॥ २७ ॥

हे महाभाग ! उन महापुरुषों से नित्य प्रति मेरी कथा होती रहती हैं जोकि मनुष्यों की हितकारक हैं सेवन करने वालों के पापों को नाश करती हैं ॥ २८ ॥

जो लोग मेरेमे श्रद्धा करके मेरे मे तत्पर होकर आदर पूर्वक उन कथाओं को सुनते हैं तथा गाते हैं तथा अनुमोदन करत हैं वे पुरुष मेरे विषे भक्ति को प्राप्त होते हैं ॥ २९ ॥

हे साधो ! अनन्त गुण वाले आनन्दात्मक आत्मा ब्रह्म

अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम् ।
धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग्बिभ्यतोऽरणम्[१] ॥ ३३ ॥
सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ।
देवता बान्धवाः सन्तः सन्त आत्माऽहमेव च ॥ ३४ ॥
वैतसेनस्ततोऽप्येवमुर्वश्या लोकनिस्पृहः ।
मुक्तसङ्गो महीमेतामात्मारामश्चचार ह ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
षड्विंशोऽध्यायः ॥ २६ ॥

### भाषा टीका

मेरे विषै जिसको भक्तिका लाभ होगया है उस के लिये और कौनसा मनोरथ बांकी है ॥ ३० ॥

जैसे कि भगवान् अग्निदेवके सेवन करने वाले पुरुष का शीत अंधकार भय चला जाता है तैसेही साधुओं के संग करने वाले पुरुष के सबदुःख चले जाते हैं ॥ ३१ ॥

घोर संसार सागर मे डूबते उछलते हुये पुरुषोंके वास्ते ब्रह्मवेत्ता संतही परम आश्रय हैं जैसे कि जलमे डूबने वाले को नौका पार करदेती है ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किं च । यथान्नमेव प्राणो जीवनम् अहमेव यथा शरणं धर्म एव यथा प्रेत्य परलोके वित्तं तथा सन्त एवार्वाक् संसारपाताद्बिभ्यतः पुंसः अरणं शरणम् ॥ ३३ ॥

किं च । सन्तश्चक्षूंषि सगुणनिर्गुणज्ञानानि अर्कः पुनः सम्यगुत्थितोऽपि बहिस्तदप्येकमेव चक्षुरित्यर्थः ॥ ३४ ॥

अध्यायार्थमुपसंहरति । वैतसेन इति । सुद्युम्नभावेनोमावनं प्रविष्टस्य धीता सैना स्त्रीभावम्प्राप्ता यस्य तस्य स्त्रीभावं प्राप्तस्य पुत्रो वैतसेनः पुरूरवाः एवमुक्तप्रकारेणोर्वश्या लोकाख्यानादपि लोकनाम्ना निस्पृहस्ततोऽपि सत्सङ्गादपि हेतोर्मुक्तसङ्गः सन्नात्मारामो भूत्वा यथेष्टं चचारेति ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षड्विंशोऽध्यायः ॥ २६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता
### दीपिकादीपिनी टिप्पणी ।

प्राणिनां बहुत्वात् प्राणा इति बहुवचनम् । अन्नमित्येकत्व सामान्याभिप्रायेण जीवनमिति व्याख्यापि तथैव प्राणा इत्येकवचनान्तोऽपि क्वचित् पाठः । यथा तथा शब्दौ गम्यौ ॥ ३३ ॥

देवतास्तद्वत् पूज्याः । बान्धवा हितकारिणः "एक एव परो बन्धुर्विषमे समुपस्थिते । गुरुः सकलधर्मात्मा यत्राकिञ्चनगो हरि"रित्युक्तेः । आत्मा तद्वन्निरुपाधिप्रियः । एवं व्यस्ततया तत्तद्गुणवत्तामुक्त्वा सामस्त्येन सर्वगुणवत्तामाह अहमेव चेति ॥ ३४ ॥

न केवलं प्राचीनसंस्कार एव विरागे हेतुः किन्त्वर्वाचीनात् सत्सङ्गादपीति अपेरर्थः । एवमस्मिन्नपि प्रकरणे सत्सङ्गलक्षणा भक्तिरेवाभिधेयेति ज्ञेयम् ॥ ३५ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
षड्विंशोऽध्यायः ॥ २६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अस्मात् संसारात् अरणं गतिः ॥ ३३ ॥

सन्त आत्माहमेवच सन्तः सर्वे हितैषित्वया मया च तुल्या इत्यर्थः ॥ ३४ ॥

आत्मारामः अध्यात्मनिष्ठायुक्तः ॥ ३५ ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षड्विंशोऽध्यायः ॥ २६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च अन्नमिति प्राणिनां जिजीविषूणामन्नं प्राणाः जीवयितृ आर्तानां तापत्रयपीडितानामहमीश्वरः शरणं रक्षिता प्रेत्य परलोके धर्मः शरणं रक्षिता नृणामिहलौकिकानां वित्तं धनं शरणं तथाऽस्मात्संसाराद्बिभ्यतः पुरुषस्य सन्तः साधवः अरणं शरणं रक्षणमिति यावत् ॥ ३३ ॥

---

१ सन्तोऽरन इति विज० सन्तोऽस्मात् इतिशुकपक्षीयवीरराघ० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ते च न साक्षाद्दरणं किं तु ज्ञानोपदेशद्वारेत्यभिप्रेत्याह । सन्त इति । चक्षूंषि चिदचिदीश्वरयाथात्म्यज्ञानात्मकानि दिशन्ति प्रयच्छन्ति अर्कस्तु समुत्थितः अभ्युदित एव सन् बहिरेव चक्षुर्दिशति तद्दर्शनसाधनं करोतीत्यर्थः । अतः सन्तो देवता बान्धवाश्च तद्वत्पूज्या उपकार्याश्चेत्यर्थः । किं बहुना सन्त आत्मा ममात्मभूता इत्यर्थः । ज्ञानी त्वात्मैव मे मतामिति मदभिप्रायादिति भावः । अतोऽहमेव सन्तः मद्बुद्ध्या सेवनीया इत्यर्थः ॥३४॥

इतिहासमुपसंहरति । वैतसेन इति । सुद्युम्नभावेनेलावनं प्रविश्य स्त्रीभावं प्राप्तस्य वीतसेनस्य पुत्रो वैतसेनः पुरूरवाः सङ्गात्स्त्रीणां स्त्रैणानां सङ्गान्मुक्तः आत्मारामो महीमेतां चचार इत्याश्चर्यं एवमतिसक्तस्यापि एतस्या सङ्गस्ततो मुक्तिश्चाभूदिति विस्मीयते इति ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्स्वपि प्रधानः सन्नहमेवेति सोदाहरणमाह । अन्नमिति । तुल्योपमेयं क्षुधितानामन्नं प्राणो यथा प्रकृष्टचेष्टाप्रदं यथा प्रेत्य मरणानंतरं धर्मो वित्तं नृणां सुखाय स्याद्यथा घातानां शरणं रक्षिताहमेव बद्धतः संसाराद्बिभ्यतो जनस्यारणं शरणं सन्त इति ॥ ३३ ॥

तदुपपादयति । सन्त इति । यथा समुत्थित उदितार्को बहिश्चक्षुर्दिशति तथा सन्तः आन्तरं चक्षुर्दिशन्ति बहुवचनाददित्यादधिकप्रयोजकत्वं सूचयति सत्प्रधानो हरिरित्यस्यावगतिः कथमभूदित्यत्राह । देवता इति । देवतादयो ऽहमेवेत्यनेन सत्प्रधानत्वमवगतं हरेरिति

विष्णोश्च सत्प्रधानत्वान्न सतां विद्यते परम् ।
इत्याहुर्वेदविदुषः स हि सर्वेश्वरेश्वरः ॥

इतिवाक्यं चशब्देन सूचयति ॥ ३४ ॥

स्वोक्तमर्थमितिहासेन संगमयति । वैतसेति । वैतसेवं निरूप्येति शेषः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु भवानेवास्तां शरणं चेत् किं सद्भिरित्याशङ्क्याह । सन्त इति ॥ ३४ ॥

एवमभीष्टं वर्णयित्वा प्रसङ्गमुपसंहरति । वैतसेन इति ॥३५॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

षड्विंशोऽध्यायः ॥ २६ ॥



श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यथा प्राणिनामन्नार्थिनामन्नमेव प्राणा अन्नं विना प्राणा न सिध्यन्ति तथैव भक्तीच्छूनां सन्त एव भक्तिः तान् विना भक्तिर्न सिद्ध्यति यथैवार्तानामनाथानामहमेव शरणं रक्षकस्तथैव भक्तीच्छूनां सन्त एव रक्षकाः यथैव नृणां प्रेत्य मृत्वा कालपाशाद्बिभ्यतां धर्म एव वित्तं शरणं तथैव नरस्य भजनमार्गं प्राप्य वर्तमानस्य अर्वाक् इतस्ततः कामक्रोधादिस्वकर्मपातिपाशाद्बिभ्यतः सन्तः एव भक्तिमार्गरक्षकाः ॥ ३३ ॥

किं बहुना सतां मार्गे प्रतिष्ठासूनां नृणां सन्त एव सर्वनिर्वाहका इत्याह । सन्त एव मां साक्षात् दर्शयितुं चक्षूंषि नवविधभजनानि दिशन्ति ददति किञ्च सूर्यं विना चक्षुर्भिरपि न कार्यसिद्धिरिति चेत् सन्त एव बहिः स्थितः सम्यगुत्थितोऽर्कः भजनचक्षुःप्रकाशका इति भावः । तस्माद्भक्तिवर्त्मचारिणां सन्त एव देवता न त्विन्द्राद्याः सन्त एव बान्धवा न तु पितृपितृव्यमातुलादयः सन्त एव आत्मा प्रेमास्पदं नतु देहो जीवात्मा वा एवं सन्त एवाहमिष्टदेवः न तु तांस्त्यक्त्वा प्रतिमारूपोऽहमपीति भावः ॥ ३४ ॥

अध्यायार्थमुपसंहरति । वैतसेन इति । वीता स्त्रीत्वप्राप्त्या वैरूप्यं प्राप्ता सेना यस्य स वीतसेनः सुद्युम्नो नवस्कन्धे ख्यातस्तस्य पुत्रो वैतसेनः पुरूरवाः एवमुक्तप्रकारेण ततोऽपि उर्वशीलोकादपि एतां महीं चचार यत उर्वश्या लोकात् स्थानादवलोकनाद्वा निस्पृहः ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे तु षड्विंशः सङ्गतः सङ्गतः सताम् ॥ २६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा प्राणिनां मनुष्यादीनामन्नं तत्सदृशं द्रव्यं प्राणो जीवनं यथाऽऽर्तानां ब्रह्मरुद्रादीनां मधुकैटभवकासुरादिभ्यः संक्लिष्टानामहं शरणम् रक्षिता यथा च प्रेत्य परलोके धर्म एव वित्तं सुखसाधनं तथाऽर्वाक् संसारपाताद्बिभ्यतः पुंसः सन्तोऽरणं शरणम् ॥ ३३ ॥

चक्षूंषि आत्मानात्मपरमात्मज्ञानानि सन्तो दिशन्ति अर्कः पुनः समुत्थितोऽपि बहिस्तत्राप्येकमेव चक्षुर्दिशति अतो देवतादिवत्सन्तः पूज्या इत्याह । देवा इत्यादि ॥ ३४ ॥

अध्यायार्थमुपसंहरति । वैतसेन इति । नवमस्कंधोक्तप्रकारेणोमावनप्रवेशाद्वीता पुरुषभावाद्विगता सेना यस्य स वीतसेनः सुद्युम्नस्तस्यापत्यं वैतसेनः पुरूरवाः उर्वश्याः लोकात् निर्विण्णः मुक्तिसाधनसंपत्तये महीं चचार ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

षड्विंशाध्यायार्थप्रकाशः ॥ २६ ॥

---

भाषा टीका।

प्राणियों का प्राण जैसे अन्न है जैसे आर्तों का रक्षक मैं हूं धर्म जैसा मनुष्यों का परलोक में धन है तैसेही संसार से डरने वालोंके वास्ते संतही रक्षक हैं ॥ ३३ ॥

जैसे बाहिर उदय हुआ सूर्य है तैसे संत भीतर के नेत्र देने वाले हैं संतही देवता हैं बांधव हैं आत्मा हैं मेराहूप भी संतही हैं ॥ ३४ ॥

तदनन्तर इस प्रकार से पुरूरवा राजा उर्वशी के लोक से निरपेक्ष होकर संसार से सङ्ग छोडकर आत्मा राम होकर इस पृथिवीमे विचरता भया ॥ ३५ ॥

इति श्रीमद्भागवत महापुराण एकादशस्कन्ध
छब्बीस में अध्याय की
भाषा टीका समाप्त ॥ २६ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥

## अथ सप्तविंशोऽध्यायः।

———:*:———

उद्धव उवाच॥

क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो!।
यस्मात्त्वां ये यथाऽर्चन्ति सात्वताः सात्वतर्षभ!॥ १॥
एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम्।
नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः॥ २॥
निःसृतं ते मुखाम्भोजाद्यदाह भगवानजः।
पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः॥ ३॥
एतद्वै सर्ववर्णानामाश्रमाणां च संमतम्।
श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद!॥ ४॥
एतत्कमलपत्राक्ष! कर्मबन्धविमोचनम्।
भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर!॥ ५॥

श्रीभगवानुवाच॥

नह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव!।
संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः॥ ६॥
वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत्॥ ७॥
यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः।
यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे॥ ८॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सप्तविंशे क्रियायोगः सद्यश्चित्तप्रसादकः।
सर्वकामाप्तिहेतुश्च साङ्गः प्रोक्तः समासतः॥
रागाद्याकुलचित्तानां कुतोऽसङ्गादिसम्भवः।
इति कृष्णार्चनं भद्रमनुस्मृत्यानुपृच्छति॥

क्रियायोगमिति भगवदाराधनरूपम्। यस्मादिति कारणाधिष्ठानादिप्रश्नः सर्वकारकाणां निमित्तत्वरूपाविशिष्टत्वात् यथेति कस्मिन्नधिष्ठानादौ केन प्रकारेणेति प्रश्नः ये अधिकारिणः सात्वता भक्ताः॥ १॥

अस्य पुनर्विशेषतः प्रश्ने कारणमाह चतुर्भिः निःश्रेयसकरं वदन्ति आङ्गिरसः सुतो बृहस्पतिः॥ २॥

निःसृतं त्वयोपदिष्टमित्यर्थः। देव्यै पार्वत्यै॥ ३॥

सर्ववर्णानां त्रैवर्णिकानाम्॥ ४॥

विश्वेश्वरा ये तेषामीश्वर!॥ ५॥

नास्त्यन्तो ग्रन्थतः पारं चानुष्ठानतो यस्य तस्य॥ ६॥

वैदिक एव मन्त्रो वैदिकान्येवाङ्गानि च यस्मिन् पुरुषसूक्तादौ स वैदिकः एवं तान्त्रिकोऽपि मिश्रोऽष्टाक्षरादिः मखः पूजा॥ ७॥

यदा त्रैवर्णिको यजेत तदा गर्भाष्टमैकादशद्वादशाब्दादिकालेषु स्वनिगमेन स्वाधिकारप्रवृत्तेन वेदेनोक्तं द्विजत्वमुपनयनम्॥ ८॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनीटिप्पणी ।

क्रियायोगः अर्चनलक्षणो मोक्षोपायः साङ्गः परोद्देशप्रवृत्तकातिसाध्यं पारायांपरपर्यायमङ्गं तत्सहितः समास्तः संक्षेपतः । पूर्वाध्यायेन सङ्गतिमाह । रागेणेति । क्रियानिमित्तत्वलक्षणस्य धर्मस्य सर्वकारकाणां सम्बन्धेऽविशिष्टत्वात् तुल्यत्वाद्यस्मादिति पञ्चम्यन्तेन यच्छब्देन करणाधिष्ठानादिग्रहः आदिना सम्प्रदानादिग्रहः ॥ १ ॥

तस्य क्रियायोगस्य । अङ्गिरसः सुत इति तस्य भगवद्धर्मोपदेशो स्वगुरुत्वं व्यञ्जयति श्रीभागवते तस्य श्रीसङ्कर्षणसंप्रदायित्वात् ॥ २ ॥

मुखस्याम्भोजरूपकेणार्चनस्य मधुरत्वमारोप्यते तेन मादकत्वात् स्वयमेव रागादिविस्मरणमिति भावः अर्चनम् ॥ ३ ॥

तत्र सर्वाधिकारमाह । एतदिति । तथाच स्मरणादिपराणामप्यत्राधिकार इति द्योतितम् ॥ ४ ॥

विश्वेश्वरा ये महापुरुषादयस्तेषामपीश्वरः स्वयं भगवत्त्वात् ॥ ५ ॥

अन्तोऽवधिः संक्षिप्तं यथा स्यात्तथा ॥ ६ ॥

इच्छितेनेति स्त्रीशूद्राणामन्यत्रानाधिकारात् केवलस्तान्त्रिक एव अन्यस्तु इच्छितेनेत्यर्थः ॥ ७ ॥

भक्त्यादरेण श्रद्धया विश्वासेन ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१—६

वैदिक इति यद्यपि पाञ्चरात्रिको धर्मः एकायनशाखामूलस्तथा परमवैदिकस्तथापि वैदिकशब्दो गोबलीवर्दन्यायात् त्रयीधर्मेषु वर्तते ॥ ७—१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचान्द्रचन्द्रिका ।

यत्पराः श्रद्धानाश्च भक्तिं विन्दन्तीति स्वाराधनात्मकक्रियायोगस्य भक्तियोगानुग्राहकत्वमुक्तं तत्प्रकारबुभुत्सया पृच्छति क्रियायोगमिति । समाचक्ष्वेति सम्बन्धः यस्मादिति करणाधिष्ठानादिग्रहः यैः कर्तृभिः येष्वधिकरणेषु त्वां यथा सात्वता अर्चन्ति तथाचक्ष्वेति सम्बन्धः ॥ १ ॥

किं तत्प्रश्नश्रवणाऽवामित्यत आह । एतदिति । एतद्भगवदाराधनं मुहुर्मुहुरनुष्ठितं नृणां निःश्रेयसकरं मुक्तिसाधनं वदन्ति के पुनस्ते मुनयः इत्यत आह । नारद इति । आचार्यो बृहस्पतिः तस्य विशेषणमाङ्गिरसः सुत इति ॥ २ ॥

न केवलं मुनय एव वदन्त्यपि तु भगवानजो भगवदाराधनं निःश्रेयससाधनमाह । केभ्य आहेत्यत्राह । पुत्रेभ्यो भृगुमुख्येभ्य इति तथा भगवान् भवो देव्याह कस्यै देव्यै भावस्ते तात्पर्यं वा उपदेशो त्वमेव मम्प्रियाराधनं विशिनष्टि । निःसृतमिति । तदुपदेशस्य त्वन्मुखान्निः सृतत्वात्तदुपदेशपक्षानकथाप्रहेणाप्ययवस्थादास्यमुखान् सृतत्वापेक्षा ॥ ३ ॥

यत एवमतस्त्वदाराधनमेव निरतिशयश्रेयः साधनमित्यध्यवस्यामीत्याह । एतद्वा इति । हे मानद ! एतत्सम्प्रदायोपदेशानुष्ठानपरंपराप्राप्तं त्वदाराधनं सर्वेषां वर्णिनामाश्रमिणां च किं बहुना स्त्रीणां शूद्राणां च श्रेयसामुत्तमं श्रेयः तत्साधनं मन्ये ॥ ४ ॥

अतस्तदुपदिशेत्याह । एतदिति । हे कमलपत्राक्ष ! कर्मबन्धं विशेषेण मोचयतीति तथा तदेतत्त्वदाराधनं ब्रूहि ननु ब्रह्माद्युपदेशपरम्परयैव प्राप्तं तत्किमिति मां पृच्छसीत्यतः सम्बोधयति । विश्वेश्वरा ब्रह्मादयः तेषामीश्वर त्वमेव सर्वज्ञ इति त्वमेव ब्रूहीति भावः ॥ ५ ॥

कर्मकाण्डस्य मदाराधनात्मककर्मावबोधात्मकशास्त्रभागस्यानन्तपारस्य प्रयत्नेऽनुष्ठानतश्च पाररहितस्य इदं हेतुगर्भमन्तोन ह्यस्यतत्संक्षिप्य यथावदनुपूर्वशः क्रमेण वर्णयिष्यामि ॥ ६ ॥

तत्र मदाराधनात्मकयोगस्य त्रैविध्यमाह । वैदिक इति । मिश्रः वैदिकः तान्त्रिक इति त्रिविधो मखो यागः तत्र तान्त्रिकः पञ्चरात्रतन्त्रोक्तः यद्यपि पाञ्चरात्रिको धर्मः एकायनशाखामूलः परमवैदिकस्तथापि वैदिकशब्दो गोबलीवर्दन्यायात्त्रयीसिद्धधर्मेषु वर्तते तत्र त्रयाणां मध्येऽन्यतमेनैव विधिना मां सम्यगर्चयेत् ॥ ७ ॥

यदा गर्भाष्टमैकादशद्वादशाब्दिकाले स्वनिगमेन स्वाधिकारप्रवृत्तेन वेदेनोक्तं द्विजत्वमुपनयनं प्राप्य पुरुषः त्रैवर्णिकः श्रद्धया मां यथा भजेतादावेवस्तथा निबोध तत्प्रकारं शृणु इत्यर्थः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कर्मयोगानुष्ठानप्रकारं प्रपञ्चयत्यस्मिन्नध्याये तत्रोद्धवोऽधिगमे त्रियाविना साङ्ख्योक्तं क्रियायोगं विस्तरतो विविदिषुः पृच्छति । क्रियायोगमित्यादिना ।

> क्रिया तु निष्कृतौ शिल्पाचिकित्सोपायकर्मसु ।
> कारणारम्भपूजासु सम्प्रधारणचेष्टयोः ॥ इत्यतो

विवक्षितमाह । मदाराधनमिति ये सात्वताः त्वामर्चन्ति ॥ १ ॥

इदमेव वक्तव्यमिति किं किमन्यत्र स्यादिति तत्राह । एतदिति । मुनयः एतद्भगवदाराधनं नृणां निःश्रेयसं पुरुषार्थसाधनं मुहुर्मुहुरनुष्ठितं वदन्ति प्राधान्ये नान्निर्दिशति । नारद इत्यादिना अङ्गिरसः सुतः आचार्यो बृहस्पतिः ॥ २ ॥

इतोऽपि इदमेव श्रोतव्यं नान्यदित्याह । निःसृतमिति । ऋषिवचनानां विकल्पसंभवात्कथं निर्णय इत्यतो वाह । निःसृतामपि भवदाज्ञया असुरजनमोहनायान्यथा वदद्भिर्वोऽपि इदं प्राधान्येनाह । देव्या इति । देव्या इत्यनेनाप्तमुखत्वं सूचयति ॥ ३ ॥

उत्तमश्रोतॄणामप्यधिकमहतु तापरेषामधिकार इति ताश्रवेयमिति भावेनाह । एतद्वै सर्वेति । सम्मतं समानम् ॥ ४ ॥

अनेन कर्मबन्धाविध्वंसाभावाज्ञानुष्ठानार्हमिति नेत्याह । कर्मेति ॥ ५ ॥

कर्मकाण्डस्यापरिमितत्वेन तज्ज्ञानस्य च दुःसाधनत्वेन

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मन्दमतीनां तदुक्तानुष्ठानं दूरोत्सारितमित्यतो नादरणीयमिति न मतिं कुरु किं तु यत्संक्षिप्योक्तं तत्त्वत्प्रश्नपरिहारत्वेन वक्ष्यामीत्याह । नहीति । कर्मकाण्डस्य पञ्चरात्रागमस्य चशब्दो न समुच्चये किं तु केषांचिदेवानन्तपारत्वं न सर्वेषामस्मदादिबुद्धेर्विषयत्वादित्यस्मिन्नर्थे ॥ ६ ॥

वैदिको वेदाधिकारिविषयोऽग्निष्टोमादिस्तान्त्रिकः तन्त्राधिकारिविषयः पुष्पाञ्जल्यादिमिश्रः स्त्रीशूद्रादिविषयो नामसंकीर्तनादिः मखो यागः पूजालक्षणः तत्तदधिकारिणामाह । त्रयाणामिति । ईप्सितेन योग्येन ॥ ७ ॥

स्वनिगमेन स्वशाखया विहितं यथा तथा द्विजत्वमुपनयनं प्राप्य ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं तावत् सङ्गान्मोक्तुमिच्छतां रीतिं श्रुत्वानिच्छूनामपि तस्य परमार्थपर्यवसानं यथा स्यात्तथा पृच्छति । क्रियायोगमिति ॥ १ ॥

प्रमाणयति । एतदिति द्वाभ्याम् । अङ्गिरसः सुत इति । तस्य भगवद्धर्मोपदेशे स्वगुरुत्वं व्यञ्जयति युक्तञ्च तत् । श्रीभागवते तस्य श्रीसङ्कर्षणसंप्रदायित्वात् ॥ २ ॥

न च वीतसङ्गानां स्मरणादिकं नरमात्राणामेव स्यात्र पुनरेतदिति वाच्यं यत एतदिति तेषामेव संमतत्वादिति भावः ॥ ३—४ ॥

विश्वेश्वराणां महापुरुषादीनामपीश्वरः स्वयं भगवत्त्वात् ॥५॥

यद्यपि तदीदृशमेव तथापि विस्तरत्वादेव मया स्वयं नोक्तं सम्प्रतितु भवदिच्छां ज्ञात्वा संक्षिप्यैव वर्णयिष्यामीत्याह । नह्यन्त इति ॥ ६ ॥

ईप्सितेनैवेति । स्वस्वाधिकारप्राप्ततया तत्रापि स्वस्वश्रद्धानुसारेणेत्यर्थः । ततः स्त्रीशूद्राणां केवलस्तान्त्रिकः अन्येषां त्वन्यतरो मिश्रो वेति विवेकः ॥ ७ ॥

तत्र तदिच्छानुसारेण स्वधर्मनिष्ठानेवाधिकृत्य तत्र च मुख्यतया द्विजमेवाधिकृत्योपदिशन्नन्यानपि यथास्वमुपदिशति यदेति ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

क्रियायोगाभिधा भक्तिः सप्तविंशेऽर्चनात्मिका ।
नानोपचारैरर्चायां स्वधर्मसहितोच्यते ॥

उक्तलक्षणसत्सङ्गसाहिता भक्तिः पुत्रकलत्राद्यासक्तानपि सर्वेषामेव तत्तेषामपि निस्तारिकामागमोक्तार्चनभक्तिमनुसृत्य पृच्छति । क्रियायोगमिति । यस्मात् यं क्रियायोगमाश्रित्य ॥१॥

एतत् त्वदर्चनम् ॥ २—४ ॥

ननु त्वं मद्भक्तः परमानुरागी भवसि तवानेन किं तत्राह । भक्तायापि अनुरक्तायापि ब्रूहि ॥ ५ ॥

मदर्चनलक्षणस्य कर्मकाण्डविशेषस्य नास्त्यन्तः यतोऽनन्तपारस्य नास्त्यन्तः शास्त्रतः पारं चानुष्ठानतोऽपि यस्य ॥ ६ ॥

वैदिक एव मन्त्रो वैदिकान्येवाङ्गानि च यस्मिन् पुरुषसूक्तादौ स वैदिकः एवं तान्त्रिकः गौतमीयतन्त्राद्युक्तः मिश्रोऽष्टाक्षरादिरुभयोक्तः मखः पूजा त्रयाणां मध्ये यदीप्सितं तेनैव ॥ ७ ॥

स्वनिगमेन स्वाधिकारप्रवृत्तेन वेदेनोक्तम् द्विजत्वं प्राप्य पुरुषः यदा यथा यजेत तन्निबोधेत्यन्वयः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अध्याये सप्तविंशे तु पुरुषार्थप्रसिद्धये ।
स्वयमाह दयासिन्धू रम्यं स्वचरणार्चनम् ॥

सन्तोऽर्वाग्विश्वतोऽरणमित्यनेन सन्तो भवत्पादपद्मार्चनोपदेशतः संसारव्यालगृहीतं जनं मोचयन्तीति सूच्यते तद्भवदीयार्चनप्रकारं स्वमुखेनैव समाचक्ष्वेति पृच्छति । क्रियायोगमिति । येऽधिकारिणः सात्वताः भागवताः यस्माद्राधनकरणाधिष्ठानादितः यथा त्वामर्चन्ति तथाभूतं भवदाराधनरूपं क्रियायोगं समाचक्षत्यृषयः सात्वता अपि भवदुपदिष्टेनैव क्रियायोगेन भवन्तं यजन्तीति सात्वतर्षभेति शब्दोक्ताभिप्रायः ॥ १ ॥

एतद्भवदाराधनं निःश्रेयसकरं वदन्ति अङ्गिरसः सुतः बृहस्पतिः ॥ २ ॥

ते मुखाम्भोजान्निःसृतं श्रुत्वेति शेषः देव्यै उमायै ॥ ३ ॥

स्त्रीशूद्राणां चेति पृथगुक्तिर्दीनेषु भगवतः कृपाधिक्यं द्योतयति विश्वेश्वराणां ब्रह्मरुद्रादीनामपीश्वर ! ॥ ४ ॥ ५ ॥

अनन्तपारस्य नास्त्यन्तः पारं ग्रन्थतोऽनुष्ठानतश्च कर्मकाण्डस्य मत्पूजाविधानस्य ॥ ६—७ ॥

स्वनिगमेन स्वाचारप्रकृतेन अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिवेदेनोक्तं द्विजत्वमुपनयनम् ॥ ८ ॥

---

भाषा टीका ।

उद्धवजी बोले हे यादव भक्तों के श्रेष्ठ ! हे प्रभो जो पंच रात्र वाले सात्वत भक्त आप का जैसे अर्चन करते हैं वह आप का आराधन रूप जो क्रियायोग है तिसको आप मेरे से कहिये ॥ १ ॥

यह आप का पूजन सब मनुष्यों का वारम्वार मोक्षादि देने वाला है करके नारद व्यास भगवान् तथा अंगिरा के पुत्र बृहस्पति आचार्य आदिक सब मुनि कहते हैं ॥ २ ॥

आप के मुख कमल से निकले हुये तिस पूजनको भृगु आदि पुत्रों के आगे भगवान् ब्रह्मा ने कहा है तथा महादेव जी ने अपनी प्रिया पार्वती जी से कहा है ॥ ३ ॥

हे मानद ! यह आपका पूजन सब वर्ण आश्रम वालों को संमत कल्याण दायकों मे श्रेष्ठ है ऐसा मेरे को विश्वास है और स्त्री शूद्रों को भी उनके धर्म के अनुसार पूजन करना कल्याण कारी है ॥ ४ ॥

हे कमलपत्राक्ष ! हे योगेश्वरों के ईश्वर मैं आपका

अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाऽप्सु हृदि द्विजे ।
द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ॥ ९ ॥
पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये ।
उभयैरपि च स्नानं मन्त्रैर्मृद्[1]ग्रहणादिना ॥ १० ॥
सन्ध्योपास्त्यादिकर्माणि [2]वेदेनाऽऽचोदितानि मे ।
पूजान्तैः कल्पयेत् सम्यक् सङ्कल्पः कर्म [3]पावनीम् ॥ ११ ॥
शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥ १२ ॥
चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।
उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥
अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद्द्वयम् ।
स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥ १४ ॥
द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादि[4]ष्वमायिनः ।
[5]भक्तस्य च यथा लब्धैर्हृदि भावेन चैव हि ॥ १५ ॥
स्नानालङ्करणं प्रेष्ठमर्चायामेव तूद्धव ! ।
स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः ॥ १६ ॥

भाषा टीका ।

अनुरक्त भक्त हूं सो मेरे अर्थ कर्म बन्धों के छुटाने वाले आप के पूजन को कहिये ॥ ५ ॥

श्रीभगवान् बोले शब्द से तथा अर्थ से अनंत पारवाले इस पूजनादि कर्म कांडका अन्त नहीं है तो भी हे उद्धव ! क्रम पूर्वक संक्षेप से मैं इसको वर्णन करूंगा ॥ ६ ॥

वैदिक तांत्रिक मिश्र ऐसे तीन प्रकार से मेरा पूजन रूप यज्ञ है तीनों मे जिस से इच्छा होवे तिसी विधि से मेरा पूजन करै ॥ ७ ॥

अब पुरुष त्रैवर्णिक अपने वेद शाखा के अनुसार यज्ञोपवीत संस्कार को प्राप्त होकर फिर श्रद्धा पूर्वक मेरा जैसे पूजन करै तिस बात को तुम श्रवण करो ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अर्चायां प्रतिमादौ ॥ ९ ॥

स्नाने विशेषमाह । उभयैर्वैदिकैस्तान्त्रिकैश्च मन्त्रैः ॥ १० ॥

किं च सन्ध्योपासनादीनि कर्माणि मयाचोदितानि साकल्येन विहितानि यस्य सन्ति तैः सह मे पूजां कुर्वीत न तु तानि परित्यजेदित्यर्थः । सम्यक् परमेश्वरविषय एव सङ्कल्पो यस्य तथाभूतः सन् कर्मपावनीं कर्मनिर्हारिणीम् ॥ ११ ॥

अर्चाभेदानाह सार्धेन । शैली शिलामयी लौही सुवर्णादिमयी लेप्या मृच्चन्दनादिमयी हृदि पूजायां मनोमयी ॥ १२ ॥

प्रकर्षेण तिष्ठत्यस्यामिति प्रतिष्ठा प्रतिमैव जीवस्य भगवतो मन्दिरम् यद्वा प्रतिष्ठया कलान्यासेन भगवन्मन्दिरम्भवतीति प्रतिमाभेदेन विशेषमाह सार्धेन उद्वासो विसर्जनम् ॥ १३ ॥

अस्थिरायामर्चने विकल्पः शालग्रामे न कुर्यात्सैकत्यां कुर्यादन्यत्र कुर्याद्वा न वेति अविलेप्यायां मृन्मयलेख्यव्यतिरिक्तायाम् अन्यत्र विलेप्यायां लेख्यायां च परिमार्जनमेव ॥ १४ ॥

इदानीं सकामनिष्कामभेदेन विशेषमाह । द्रव्यैरिति । प्रकर्षेण सिद्धैः सुशोभनैः अमायिनो निष्कामस्य भक्तस्य तु यथा लब्धैः यत्र चन्दनादि सर्वथा न लभ्यते तत्र हृदि भावेन भावनया यद्वा हृदि चेन्मद्यागस्तदा भावेन मनोमयैर्द्रव्यैरित्यर्थः ॥ १५ ॥

अधिष्ठानभेदेन प्रधानोपचारमाह सार्धेन । स्नानेति । तत्त्वविन्यासो यथा स्थानमङ्गप्रधानदेवतानां तत्तन्मन्त्रैः स्थापनम् ॥ १६ ॥

---

१ मृद्ग्रहणादिभिः २ वेदनाचोदितानि मे ३ पावनः ४ अमायया ५ भक्त्या चैव इति त्रिज० पाठः ।

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

शक्तस्य तु प्रतिमादावेव विधिः आदिना शालिग्रामपरिग्रहः अशक्तस्यैवोत्तरोत्तरत्रेति भावः ॥ ९ ॥

मृद्ग्रहणादिनेति । तत्रायं मन्त्रः । अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतमित्यादिः आदिना गङ्गादिस्मरणतीर्थाऽर्घसमर्पणानुज्ञापनादिपरिग्रहः ॥ १० ॥

तैः सहेति तेषां विद्यमानत्वमात्रं विवक्षितं नत्वर्चनाङ्गत्वम् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभीतिवत् ॥ ११ ॥

लेख्या चित्रपटमयी । सैकता सैकतीत्यर्थः । एषा तु सकामानामेव तद्भक्षणारक्षणयोः प्रीतिविरोधात् ॥ १२ ॥

चलाचलेत्यर्द्धकम् । पूर्वार्थे प्राणप्रतिष्ठा संस्कारहीनानामर्चनामर्चनं प्रसक्तमित्यरुचौ यद्वेति । कलान्यासेन तत्तन्मन्त्रैस्तत्तत्तत्त्वन्यासेन । स्थिरायामचलायां प्रतिमायाम् ॥ १३ ॥

विकल्पः अधिष्ठाननिमित्ततया स्वरूपेण च व्याचष्टे । शालग्राम इति । शालग्रामे नैव कुर्यात् तथा माहात्म्यात् सैकत्यां कुर्यादेव चिरं तद्रक्षणासम्भवात् । स्नपनमित्यर्द्धकम् । अविलेप्यायामित्युपलक्षणमतएव मृन्मयलेख्यव्यतिरिक्तायामिति व्याख्यातम् । मृन्मयी मृच्चन्दनादिमयी लेख्या च चित्रपटलिखिता तद्व्यतिरिक्तायामित्यर्थः ॥ १४ ॥

मूले आदिना स्थण्डिलादिग्रहः । पूर्वार्थे यत्र चन्द्रमाद्रीत्यादि प्रतिपत्तिगौरवम् अतो यद्वेति ॥ १५ ॥

अङ्गं मुख्यादि तदधिष्ठातृदेवानां शब्दतत्त्वादीनां तत्तदङ्गेषु पराय शब्दतत्त्वात्मने नमः इत्यादि मन्त्रैः स्थापनं प्रधानदेवतानां जीवतत्त्वादीनां सर्वशरीरादौ पराय जीवतत्त्वात्मने नम इत्यादिमन्त्रैः स्थापनमित्यर्थः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अर्चायामिति । अर्चायां प्रतिमायां स्थण्डिले चक्राब्जमण्डलादौ द्रव्येण पूजासाधनेन गन्धकुसुमादिना स्वगुरुं मामिति गुरुदेवतयोरैक्यभावना विधीयते अमायया निष्कपटभावेनाफलाभिसन्धिना ॥ ९ ॥

आराधनात्प्राक्कृत्यमाह पूर्वमिति । तावच्छौताः चोदिता दन्ता येन सः अङ्गशुद्धये देहशुद्धये स्नानं प्रकुर्वीत ततो मृद्ग्रहणादिना मृदामर्दालेपेन उभयैः वैदिकैस्तान्त्रिकैश्च मन्त्रैरभिषिक्तैः स्नानं प्रकुर्वीत ॥ १० ॥

ततः सन्ध्योपास्तिः सन्ध्योपासनमादिर्येषां तानि कर्माणि मे मया वेदमुखेन चोदितानि कुर्वीतेत्यनुषज्यते पूजामिति सम्यक् कल्पः सङ्कल्पः फलानभिसन्धिरूपो यस्य सः कर्मपावनीं कर्मशोधिनीं प्राप्यप्रापकविरोधिप्राचीनकर्मक्षपणकरीं पूजां तैः सन्ध्योपासनादिभिः सहित एव कल्पयेन्न तानि त्यजेदित्यर्थः ॥ ११ ॥

अर्चायां स्थण्डिलेऽग्नौ वेत्युक्तं तत्रार्चाभेदांस्तेषु कथंभूतानि चाह । शैलीत्यादिना । शैली शिलामयी लौही कांस्यरजततान्नाद्यन्यतममयी लेप्या मृच्चन्दनादिमयी हृदि पूजायां मनोमयीत्यष्टधा प्रतिमा ॥ १२ ॥

तत्र मनोमयीव्यतिरिक्ता सप्तविधा प्रतिमा चलाचलेति द्विविधा प्रतिष्ठाजीवमन्दिरमित्यस्य मनोमयी अचलाचेत्यनेन सम्बन्धः प्रकर्षेण तिष्ठतीति प्रतिष्ठा जीवमन्दिरमिति समाहारद्वन्द्वः तत्र मनोमयी जीवं प्रतिष्ठिता अचला तु मन्दिरमित्यर्थः यद्वा प्रतितिष्ठत्यस्यां भगवानिति प्रतिष्ठा भगवत्प्रतिमा मनो जीवस्य मन्दिरं स्थानं हृदयं हृदि ह्ययमात्मा प्रतिष्ठित इति श्रुतेः तत्प्रतिष्ठितेति शेषः यद्वा जीवो मन्दिरं च प्रतिष्ठास्थानमित्यर्थः । यद्वाऽचलाया लक्षणमाह प्रतिष्ठेति । जीवं जीवस्थानं मनो मन्दिरं च प्रतिष्ठिता तत्र स्थामित्यर्थः हे उद्धव ! स्थिरायामचलायामर्चने पूजायाम् उद्वासावाहने न स्तः न कार्ये इत्यर्थः उद्वासो विसर्जनम् ॥ १३ ॥

अस्थिरायां तु विकल्पः स्यात् उद्वासावाहनयोरिति विभक्तिविपरिणामेनानुषज्यते तयोर्विकल्प इत्यर्थः । स्थण्डिले चेति चस्त्वर्थः स्थण्डिले तु द्वयमुद्वास आवाहनं चेत्युभयं भवेदेवेत्यर्थः स्नपनमिति । अविलेप्यायां विलेप्यातिरिक्तायां स्नपनं कर्त्तव्यं विलेप्याग्रहणं लेख्यासैकत्योरप्युपलक्षणम् अन्यत्र लेप्यालेख्यासैकतीषु तु परिमार्जनमात्रम् ॥ १४ ॥

इदानीं फलाभिसन्धानाभिसन्धिभेदेन पूजोपकरणेषु विशेषमाह । द्रव्यैरिति । अमायिन इत्यग्रे दर्शनात् द्रव्यैरित्यस्याभिसंहितफलस्येत्यादिः प्रसिद्धैर्विधायकशास्त्रप्रसिद्धैः सर्वैरेव द्रव्यैर्मद्यागो मदाराधनं कार्यम् अमायिनोऽनभिसंहितफलस्य भक्तस्य तु यथालब्धैः सम्भावितैर्द्रव्यैः हृदि भावेन लब्धद्रव्याणां मनसा समर्पणेनेत्यर्थः । यद्वा हृदि भावेन चैव हीत्यादिना व्युत्क्रमेण हृदाद्यर्चायां कर्त्तव्यविशेषणमाह । हृदि पूजायां तु भावेन मानसोपचारेण मद्यागः कार्य इत्यर्थः ॥ १५ ॥

अर्चायां तु स्नानमलङ्करणं च मम प्रेष्ठं प्रियतममतस्तदुभयमवश्यं कार्यमित्यभिप्रायः तत्र स्नानं यथानुगुणं स्नपनमार्जनान्यतराद्यविवक्षितं स्थण्डिले तु तत्त्वानां यथास्थानमङ्गप्रधानदेवतानां विन्यासः तत्तन्मन्त्रैः स्थापनं यद्वा तत्त्वानां कादिमावसानवर्णवाच्यानां पञ्चविंशतितत्त्वानां तत्तद्वर्णोच्चारणेन विन्यासः मम प्रेष्ठतम इत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अर्चादीन्यधिष्ठानानि उत्तरोत्तरं शस्तानि यथायोग्यम् ॥ ९ ॥

उभयैर्वैदिकैस्तान्त्रिकैरपि मन्त्रैः ॥ १० ॥

सन्ध्योपास्त्यादिकर्माणि यानि तैः मम पूजां प्रकल्पयेत् किमर्थमेवं सङ्कल्पः इति तत्राह । सम्यगिति । सम्यक् मत्पूजात्वेन सङ्कल्पः कर्मशुद्धिकर इत्यर्थः ॥ ११ ॥

अर्चायामित्युक्तप्रतिमाभेदमाह । शैलीति । शैली शिलामयी लोहेन कांस्यताम्रादिना निर्मिता लौही लेप्या औषधरससंश्लिष्टलिखिता लेख्या पटादिलिखितचित्रलक्षणा सैकती तत्त्वस्फाटिकादिसिकतया कृता मनोमयी ध्यानकालोचितप्रतिबिम्बिताकृतिः मणिमया सुवर्णकान्तादिरचिता ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जीवमन्दिरं देहः इदमपि चलान्तर्भूतास्थिरायां प्रतिमायामर्चने उद्वासावाहने न स्तः ॥ १३ ॥

अन्यत्र शिलादिष्वेव स्नपनं विलेप्यायां तुशब्दात्स्थण्डिलादावपि परिमार्जनं स्नपनमित्युच्यते ॥ १४ ॥

प्रसिद्धैस्तन्त्रेषु प्रशस्तत्वेन निरूपितैः सामग्र्यभावे यथा लब्धैः हृदि भक्त्या भावेन ध्यानेन द्रव्यध्यानसमुच्चये च शब्दः एवशब्दो भक्तेः सार्वत्रिकत्वे हिशब्दो ज्ञानाद्याधिक्ये ॥ १५ ॥

तत्त्वस्य हरेः सच्चिदानन्दरूपस्य विन्यासः सन्निधानं तत्त्वानां प्राणाश्रद्धादीनां विन्यासो वा ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रापि शक्त्यनुसारेण पूजाधिष्ठानं विकल्पयति । अर्चायामिति । प्रथमं त्वर्चायामेव विधिः अशक्त्यैव तूत्तरोत्तरत्रेति भावः ॥ ९—११ ॥

प्राधान्यादर्चाया एव भेदानाह । शैलीति । सैकता सैकतीत्यर्थः । एषा तु सकामानामेव नतु प्रीतीच्छूनां तद्रक्षणारक्षणयोः प्रीतिविरोधात् ॥ १२ ॥

चलाचलेत्यर्द्धकं द्विविधा प्रतिष्ठा प्रतिमाजीवमन्दिरं यः सर्वेषां जीवानामाश्रयोऽहं तद्रूपमेव भावयेदित्यर्थः । वक्ष्यते च स्वस्तनाङ्क मां प्रपूजयेदिति अलङ्कुर्वीत सप्रेम मद्भक्तो मां यथोचितमिति शिरोमत्पादयोः कृत्वेति च ॥ १३ ॥

स्थिरा कालान्तरस्थायी शैलीप्रभृतिः तस्यां न स्त इति प्रतिष्ठासमये नित्यस्थायित्वेनावाहनात् अस्थिरा सैकती कापि लेप्या च तत्र विकल्प इति सा यदि कथं चित्कतिचिद्दिनानि स्थिरा स्यात्तदा तस्यामपि न ते स्तः किमुत स्थिरायामित्यर्थः ॥ १४ ॥

अविलेप्यायामिति लेप्याया दारुमय्याश्चोपलक्षणम् उपलक्षणत्वाच्च सर्वा दारुमयी गृह्यते तिन्दुकसारादिमय्याः स्नपनसम्भवात् प्रधानदेवतानां तत्तन्मन्त्रैः स्नपनम् उपस्थानाद्यां विना पूजनं सर्वत्र गृह्यते ॥ १५ ॥

कामिनामावश्यकता कार्पण्यसम्भवात् भक्तस्य तु न सा विधीयते तदसम्भवादित्याह । अमायिन इति । अत्र अर्चायामेव सेवकस्य मम च प्रेष्ठमतिशयेन प्रियम् ॥ १९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अर्चायां प्रतिमायाम् ॥ ९ ॥

उभयैर्वैदिकैस्तान्त्रिकैश्च मन्त्रैः वेदेनाचोदितानि शास्त्रविहितानि यानि तैः सह पूजां कल्पयेत् कुर्यात् स एव सम्यक् सङ्कल्पः पूर्णमनोरथः कर्मपावनीं कर्मनिर्हारिणीम् ॥ १० ॥ ११ ॥

प्रतिमाभेदानाह । शैली शिलामयी लौही स्वर्णादिमयी ॥ १२ ॥

प्रकर्षेण स्थीयतेऽस्यामिति प्रतिष्ठा प्रतिमा जीवमन्दिरं सर्वजीवानामाश्रयः साक्षादहमेवेत्यर्थः । स चाचला श्रीजगन्नाथादिः चला श्रीमुकुन्दादिः उद्वासो विसर्जनं च आवाहनं च ते स्थिरायामचलायां च, न स्त इति प्रतिष्ठासमये एव नित्यस्थायित्वेनावाहनात् ॥ १३ ॥

अस्थिरायामस्थैर्यस्वभावायां सैकत्यां लेप्यायां च विकल्पः सा यदि कतिचिद्दिनानि स्थिरीकृता स्यात्तदा भक्तिविश्वासभेदवशात् कश्चिन्न कुरुते अन्यथा तु कुरुते च शालग्रामे तु नैव कुर्यात् स्थण्डिल उपलिप्तस्थले इत्युपलक्षणं सैकतामपि कुर्यादेवेत्यर्थः । अविलेप्यायां लेप्यलेख्यमूर्तिव्यतिरिक्तायां स्नपनमन्यत्र लेप्यलेख्ययोस्तथा दारुमय्यां च परिमार्जनमेव ॥ १४ ॥

प्रसिद्धैः प्रकर्षेण धनादिसिद्धैः खण्डघृतचन्दनकुङ्कुमादिभिः अमायिनो निस्पृहस्य भक्तस्य तु यथालब्धैर्यदृच्छया प्राप्तैर्द्रव्यैर्हृदि भावेन भावनया च मनसैवोपस्थापितैर्दुर्लभैरपि सुरभिपयःपरमान्नादिभिरपीत्यर्थः ॥ १५ ॥

तत्त्वानामङ्गप्रधानदेवतानां विशेषतो यथास्थानन्न्यासस्तत्तन्मन्त्रैः स्थापनमात्रं तत्त्वलङ्करणादिकमाज्येन प्लुतं सिक्तं हविः तिलादिकं यावकं वस्तु ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अर्चायां प्रतिमादौ ॥ ९ ॥

उभयैर्वैदिकैस्तान्त्रिकैश्च ॥ १० ॥

सन्ध्योपास्त्यादिकर्माणि वेदेन आचोदितानि साफल्येन विहितानि यस्य यानि तैः सह कर्मपावनीं कर्मनिर्हरणीं मे पूजां कल्पयेत् कुर्यात् सम्यक् फलाभिसन्धिरहितः सङ्कल्पो यस्य स तथाभूतः सन् ॥ ११ ॥

अर्चामनेकधा दर्शयति । शैलीतिसार्द्धेन । शैली पारियात्रादिशिलामयी तदुक्तं पारियात्रं प्रति श्रीकृष्णेन—

> त्वत्त्वोऽश्मभिश्च प्रतिमां कारयित्वेह भक्तितः ।
> शुश्रूषन्ति तु ये नित्यं मम यास्यन्ति ते गतिम् ॥

इति लौही सुवर्णादिमयी लेप्या मृच्चन्दनादिमयी अजीवस्योपासकाविलक्षणस्योपास्यस्य भगवतः प्रतिष्ठया मन्दिरं सा प्रतिमेत्यर्थः ॥ १२ ॥ १३ ॥

अस्थिरायां विकल्पः कुर्यान्न वेत्यर्थः । शालग्रामशिलार्चने तु प्रतिष्ठा आवाहनं विसर्जनं च नास्ति पुराणान्तरे—

> शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते । इति
> शालिग्रामार्चने नैव ह्यावाहनविसर्जने ॥
> शालिग्रामे तु भगवानाविर्भूतो यथा हरिः ।
> न तथान्यत्र सूर्यादौ वैकुण्ठे चैव सर्वगः ॥

इति च अविलेप्यायां लेप्यलेख्यसैकतव्यतिरिक्तायाम् ॥ १४ ॥

यदा प्रतिमादिषु यथागतस्तदा प्रसिद्धैर्द्रव्यैः तत्रापि अमायिनः मायिकफलवासनाशून्यस्य भक्तस्य च यथालब्धैः यदा तु हृदि यथागतस्तदा तु भावेन मनोमयेन द्रव्येणैवेत्यर्थः ॥ १५ ॥

अधिष्ठानभेदेन प्रधानोपचारं दर्शयति । स्नानेति सार्द्धेन तत्त्वस्य मन्त्रमूर्तेः स्थापनं तच्च श्रीमद्गोपालतापिन्यादिव्याख्यानेषु पूर्वैः प्रपञ्चितम् ॥ १६ ॥

---

सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः।
श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि ॥ १७ ॥
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते।
गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥ १८ ॥
शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः।
आसीनः प्रागुदग्वाऽर्चेदर्चायामथ संमुखः ॥ १९ ॥
[1]कृतन्यासः कृतन्यासां मदर्चां पाणिना मृजेत्।
कलशं प्रोक्षणीयं च यथावदुपसाधयेत् ॥ २० ॥
तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च।
प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ॥ २१ ॥
पाद्यार्घाचमनीयार्थं त्रीणि पात्राणि दैशिकः।
हृदा शीर्ष्णाऽथ शिखया गायत्र्या चाभिमन्त्रयेत् ॥ २२ ॥
पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम।
अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥ २३ ॥
तयाऽऽत्मभूतया पिण्डे व्याप्ते संपूज्य तन्मयः।
आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥ २४ ॥

भाषा टीका।

राम कृष्णादि मूर्ति मे या वेदी मे वा अग्नि मे वा सूर्य मे वा जल में वा हृदय में वा ब्राह्मण मे उपयोगी द्रव्य द्वारा भक्तियुक्त होकर मेरा तथा अपने गुरू का निष्कपट होकर पूजन करै ॥ ९ ॥

पहिले अंग की शुद्धि के लिये दन्तधावन करके स्नान कर तिसमे मृत्तिकादिक लगाके वैदिक तथा तांत्रिक मंत्रों से स्नानादिक क्रिया करै ॥ १० ॥

जैसे मेरे आज्ञा रूप वेदों ने कहा है तैसे सन्ध्योपासनादि कर्मों को सङ्कल्प पूर्वक करै उन पदार्थों से कर्मों को पवित्र करने वाली पूजा को करै ॥ ११ ॥

शिला की काष्ठ की सुवर्णादिक की लेपन की चित्र की वालू की पाषाण की हृदय में मनोमयी ऐसी आठ प्रकार की मूर्ति की पूजा होता है ॥ १२ ॥

चल तथा अचल दो प्रकार की मूर्त्ती होती हैं सब जीवों का प्रतिष्ठा रूप परमात्मा का मंदिर है हे उद्धव ! स्थिर मूर्ति मे आवाहन तथा विसर्जन दोनो नहीं होते हैं ॥ १३ ॥

चल मूर्ति मे आवाहन विसर्जन कहीं होता है कहीं नहीं होता है वेदी मे दोनों होते हैं बिना लिपी मे स्नान होता है और लिपी मे मार्जन होता है ॥ १४ ॥

निष्कापटी होकर प्रसिद्ध द्रव्यों से प्रतिमादिको में मेरा यजन करै भक्त होवे तो यथालाभ पदार्थों से पूजन करै इच्छा मे तो भावही से करै ॥ १५ ॥

हे उद्धव ! स्नान सुन्दर प्रिय अलंकारादिक तो मूर्ति में ही होते हैं वेदिमे तो तत्वों का न्यास होताहै अग्निमे तो घृत मिश्रित हविसे पूजन होता है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अर्कऽर्चणमुपस्थानाद्यादि सलिलादिभिस्तर्पणादिना यजनम् सर्वसाधारणमाह। श्रद्धयेति ॥ १७—१८ ॥

एवमधिकारादिव्यवस्थामुक्त्वा इदानीं पूजाप्रकारमाह। शुचिरिति। सम्भृताः सम्भाराः पूजासाधनानि येन सः प्राग्दर्भैः यद्वा प्रागेव सम्भृतसम्भारः सन्नासीनः नत्वासीनः सन् पश्चात्तत्सम्भारार्थं वारंवारमुत्तिष्ठेदित्यर्थः। प्राङ्मुख उदङ्मुखो वा आसीनः अर्चायां तु स्थिरायां सम्मुखोऽर्चाभिमुख उपविष्टः सन् ॥ १९ ॥

अनन्तरं गुर्वादिनमस्कारपूर्वकं यथोपदेशं स्वस्मिन्कृतन्यासः कृतो मूलमन्त्रन्यासो यस्यां तां ममार्चामामृजेन्निर्माल्यापकर्षणादिना शोधयेत् कलशं पूर्णकुम्भम् प्रोक्षणीं च प्रोक्षणार्थोदकपात्रमुपसाधयेच्चन्दनपुष्पादिभिः संस्कुर्यात् ॥२०॥

[1] कृतन्यासो मदर्चां च पाणिनाभि मृजेद्बुधः इति विज० पाठः।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदद्भिः प्रोक्षणीयाद्भिर्देवयजनं देवपूजास्थानम् पाद्याद्यर्थं त्रीणि पात्राणि कलशोदकैः पूरितानि तैस्तैर्द्रव्यैः साधयेत् तत्र पाद्यादिद्रव्याणि—

पाद्ये श्यामाकदूर्वाब्जविष्णुक्रान्तादिरिष्यते ।
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ॥
दूर्वा चेति क्रमादर्घद्रव्याष्टकमुदीरितम् ।
जातीलवङ्गकङ्कोलैर्मतमाचमनीयकम् ॥
इति ॥ २१ ॥

तानि च त्रीणि यथाक्रमं हृदयादिमन्त्रैर्गायत्र्या च सर्वाण्यभिमन्त्रयेत् ॥ २२ ॥

तदनन्तरं पिण्डे देहे वाय्वग्निसंशुद्ध इति । कोष्ठगतेन वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृतप्लावनेनामृतमये जाते तस्मिन् हृत्पद्मस्थां परां श्रेष्ठां जीवकलां श्रीनारायणमूर्तिं ध्यायेत् कथम्भूताम् नादान्ते सिद्धैर्भाविताम् प्रणवस्याकारोकारमकारबिन्दुनादाः पञ्चांशास्तत्र नादान्ते सिद्धैर्ध्याताम् तथा च श्रुतिः—

"यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः" ॥

इति ॥ २३ ॥

तयाऽऽत्मभूतया स्वेनैव भावेन चिन्तितया अमृतमये पिण्डे दीपेन प्रभया गृह इव व्याप्ते सति तस्मिन्नेवादौ मानसैरुपचारैः सम्पूज्य तन्मयः सन्नर्चादिष्वावाह्य स्थापनमुद्रया स्थापयित्वा ॥ २४ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता— दीपिकादीपिनी टिप्पणी ।

सूर्ये चेत्यर्द्धकम् । उपस्थानं स्तुतिः अर्घ्याद्यैरित्यादिना पाद्याद्युपचारग्रहः । तर्पणादिनेत्यादिना पुष्पाद्युपचारग्रहः ॥१७॥

सर्वत्र सर्वेष्वर्चाद्यधिष्ठाने साधारणं समानमुपचारमाह । अर्धकेन श्रद्धयेति । श्रद्धया आदरेण । अन्नं भोज्यमदं भक्ष्यम् ॥१८॥

अधिकारादिव्यवस्थामिति । सकामस्य विहितसर्वद्रव्यैरेवाधिकारः न तु हीनद्रव्यैरेव निष्कामस्य तु यथालब्धैरेवेति अधिकारव्यवस्था । आदिना अधिष्ठानभेदेनोपचारव्यवस्था सर्वसाधारणोपचारव्यवस्था च गृह्यते । पूर्वार्धे मध्यपदलोपाङ्गुपगमेऽपि सम्भाराः पूजाकाले तत्पूर्वं वा संपादनीया इति संक्षेपे बक्षेति ॥ १९ ॥

न्यस्ता कृता केशवादिन्यासा येन सः । तथा मूलमन्त्रेण द्वादशाक्षरेण अष्टाक्षरेण वा ॥ २० ॥

साधयेत् योजयेत् । विष्णुक्रान्ता अपराजिता । आदिना तुलसीचन्दनग्रहः ॥ २१ ॥

देशिकः पूजकाचार्यः । हृदयादिमन्त्रैरिति । हृदयाय नमः शिरसे स्वाहा शिखायै वषट् इति मन्त्रैः ॥ २२ ॥

भूतशुद्धिमाह । कोष्ठगतेनेति । अयमत्राभिप्रायोऽर्थः । पापपुरुषरूपे पिण्डे वायुना शोषिते इति धूम्रवर्णेन परमशोषकेण पूर्वं वामनासापुटे चिन्तितेन षोडशवारं जप्तेन पश्चान्मनसा नाभिमण्डलं नीतेन पुनः चतुःषष्टिवारं जप्तेन यं वीजेन कुम्भकं कृत्वोत्थापितो यो वायुस्तेन शोषिते इति पश्चाद्रमिति वह्निवीजेन मूलाधारगतवह्न्युत्थापकेन वायुसम्बद्धतया दक्षिणनासापुटे चिन्तितेन षोडशवारं जप्तेन पुनर्मूलाधारं नीत्वा चतुःषष्टिवारं जप्तेन कुम्भकं कृत्वोत्थापितो यो वह्निस्तेन दग्धे इति । पश्चात् वमिति चन्द्रवीजेन वामनासापुटे चिन्तितेन षोडशवारं जप्तेन पुनर्ललाटस्थचन्द्रं प्रति नीत्वा चतुःषष्टिवारं जप्तेन कुम्भकं कृत्वोत्थापितं यच्चन्द्रमण्डलस्थममृतं तत्प्लावनेनामृतमये जाते तत्पूजोपयोगिदेहे नारायणमूर्तिं ध्यायेदिति तथा च नारायणमूर्तेर्नादान्तत्वे प्रमाणं श्रुतिस्तत्र स्वरः प्रणवान्तनादरूपः वेदस्यादावन्ते च स इति तदुच्चारणानन्तरमेव वेदस्योच्चारणात् समापनाच्च प्रकृतिलीनस्य स्वरूपलीनस्य सतः यः परोऽधिष्ठाता स महेश्वरः श्रीनारायणः ॥२३॥

स्वेनैकभावेनेति । स्वस्य तदंशत्वात्तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वात् कामुकाः कामिनीमयमितिवत्तदाविष्टत्वाच्च स्वस्वरूपेण सहाभेदेन चिन्तयेदित्यर्थः । भेदस्यौपाधिकत्वे ध्यातृध्येयभावस्य पूज्यपूजकभावस्य च कण्ठोक्तस्य व्याकोपात् व्याख्यान्तरमुपेक्षितम् । तस्मिन्नेव पिण्ड एव । तन्मयः स्त्रीमयोऽयं जाल्म इतिवत् तदाविष्टः । मामिति अर्चायां सर्वत्राऽऽत्मच्छन्दस्यामानाधिकरण्येनाभेदोक्त्या शिलाबुद्ध्यादिकं सर्वथा परिहृतं शिलाबुद्धिः कृता किम्वा प्रतिमायां हरेमय इत्यादिना तन्निषेधात् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रोक्षणीयमिति कलशविशेषणम् ॥ २०—२१ ॥

हृदा शीर्ष्णा च शिखया हृदयशिरःशिखामन्त्रैः ॥ २२ ॥

पिण्ड इति । प्लावनस्याप्युपलक्षणार्थौ वाय्वग्निशब्दौ शोषणदाहनप्लावनैः शोधिते शरीरे इत्यर्थः । ममपरां जीवकलां ध्यायेदिति देहादिविलक्षणामपरां जीवकलां मदीयां ध्यायेत् ॥२३—२४॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सूर्ये चेति । अभ्यर्हणाम् उपस्थानेनार्हणां स्तुतिभिराराधनमित्यर्थः । सलिलं तु सलिलादिभिः अर्घ्यसलिलादिभिः आदिशब्देन गन्धपुष्पाक्षतादिसंग्रहः तर्पणादिभिरिति केचित् सर्वत्र साधारणमाह । श्रद्धयेति । भक्तियुक्तेन श्रद्धया समर्पितं वारि जलमपि प्रेष्ठं मम भवति ॥ १७ ॥

किं पुनः गन्धाद्यन्यतमं सुमनसः पुष्पाणि अन्नाद्यमित्यादिशब्देन पेयताम्बूलादिसंग्रहः अन्नं अन्नं ततोऽप्यन्यदपि अलं तद्धेत्यर्थः ॥ १८ ॥

अथ पूजाक्रमं प्रपञ्चयति । शुचिरित्यादिना । संभृताः संपादिताः सम्भाराः पूजोपकरणानि येन सः प्राग्भिरग्रैर्दर्भैः कल्पितमासनं यस्य सः प्रागुदग्वा प्राङ्मुख उदङ्मुखो वा अथवार्चायाः संमुखोऽभिमुखः आसीनो वारम्बारमनुतिष्ठन्नर्चयेत् ॥ १९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रथमं स्वाङ्गेषु कृतो न्यासः मातृकाप्रणवमूलमन्त्रन्यासो येन सः कृतः न्यासः स एव यस्यां तां मदर्चां मत्प्रतिमां पाणिना मृजत्परिमृजेत् प्रोक्षणीयमिति कलशविशेषणं पृथक् प्रोक्षणकलशपरं वा यथावदात्मनो वामपार्श्वे उपसादयेन्निदध्यात् ॥ २० ॥

तदद्भिः कलशोदकैः देवयजनं यागभूमिं द्रव्याणि साधनान्यात्मानं स्वदेहं पाद्यादीनि त्रीणि पात्राणि च प्रोक्ष्य ततोऽद्भिः कलशोदकैस्तैस्तैर्द्रव्यैस्तुलसीदूर्वाङ्कुरविष्णुक्रान्तासिद्धार्थकल्हारादिभिश्च साधयेत्पूरयेदित्यर्थः । पात्राणां च त्रित्वोक्तिरावश्यकत्वद्योतनार्था शुद्धोदकसर्वार्थोदकस्नानीयोदकादिपात्राणामपि तत्र तत्रोक्तत्वात् ॥ २१ ॥

कानि पुनस्तानि पात्राणीत्यतस्तान्निरूपयन् संस्कारान्तरमाह । पाद्येति । देशिकः आराधकः पाद्याद्यर्थं यानि त्रीणि पात्राणि तानि हृदादिभिरभिमन्त्रयेत् तत्र हृत हृदयमन्त्रः शिरः शिरोमन्त्रः शिखा शिखामन्त्रः गायत्री विष्णुगायत्री ॥ २२ ॥

अथ देहसंस्कारमाह । पिण्ड इति । वाय्वग्निशब्दौ शोषणदहनपरौ तौ प्लावनस्याप्युपलक्षणार्थौ शोषणदहनप्लावनैः शोधिते शरीर इत्यर्थः । तस्मिन् यत् हृदयपद्मं तत्स्थां मम मदीयां महात्मिकामिति यावत् परां देहेन्द्रियादिविलक्षणामणुस्वरूपां नाद उदात्तस्वरयुक्तः प्रणवस्तस्यान्तो मकारः तस्मिन्प्रतिपाद्यतया सिद्धैर्योगिभिर्भावितामनुभाविताम् जीवकलां जीवस्वरूपात्मिकां कलां ध्यायेत् कलाशब्दोऽत्र विद्याशब्दपर्यायः स च ज्ञानमाह ज्ञानस्वरूपामित्यर्थः । न त्वंशभूतामिति ममेत्यनेनैव तल्लाभात् ॥ २३ ॥

आत्मभूतया स्वरूपभूतया तया जीवकलया पिण्डे शरीरे व्याप्ते दीपप्रभया गेह इव धर्मभूतज्ञानद्वारा व्याप्ते सति व्याप्तं शरीरं ध्यात्वेत्यर्थः । संपूज्यत्यस्य मामित्यपकृष्टेन सम्बन्धः इत्थं संस्कृतशरीरे हृत्पद्मे तावन्मानसोपचारैर्मामभ्यर्च्येत्यर्थः ततोऽर्चादिष्वावाह्य मामादिशब्देन स्थण्डिलादिसंग्रहः अर्चाद्यन्यतमे आवाह्य स्थाप्य च इदं सन्निधापनादीनामप्युपलक्षणम् आवाहनादिविषयमुद्राप्रदर्शनेनावाहनादिकं कृत्वेत्यर्थः । न्यस्तान्याहितान्यङ्गानि हृदयाद्यङ्गमन्त्रदेवता यस्य तं मां प्रपूजयेदित्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सूर्ये पुष्पादिभिरभ्यर्हणां प्रेष्ठम् अतिशयितप्रीतिजनकं सर्वस्माद्भक्तिपूर्वकमुपाहृतं प्रेष्ठमित्याह । श्रद्धयेति ॥ १७—१८ ॥

प्रागुदगासीनः सम्मुखः अभिमुखः ॥ १९ ॥

कृतषडङ्गन्यासः कलशमर्घोदकपात्रं प्रोक्षणीयं पुष्पादिपात्रम् ॥ २०—२१ ॥

देशिको मन्त्रज्ञः हृदादिमन्त्रैर्नमआदिलक्षणैः ॥ २२ ॥

ध्येयस्वरूपमाह । पिण्ड इति । प्राणायामोज्ज्वलितवाय्वग्निसंशुद्धे पिण्डे देहे हृत्पद्मस्थां जीवः कला यस्याः सा जीवकला तां बिम्बस्वरूपामित्यर्थः । हरिस्त्वात्मा हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बकः । यद्वशो वर्तते जीवः सा तु जीवकला स्मृतेति वचनात् ध्यायेत् नादान्ते सिद्धभावितां नादः शब्दः मन्त्रोऽवसानं सर्वात्मना शब्देऽनुरक्तत्वात् शब्दागोचरतया सिद्धैः सनकादिभिरुपासितां शब्दैः सर्वात्मनानुक्तनादान्तस्था तु सा मतेत्युक्तेः ॥ २३ ॥

आत्मव्याप्तिभूता नित्यं वर्तमाना या जीवकला तया शरीरव्यापिन्या भगवन्मूर्त्या व्याप्ते पिण्डे देहे सम्पद्य सम्यक् प्रतिपत्तिं कृत्वा तन्मयः एवं ध्यानेन भगवत्प्रधानो भूत्वा अर्चादिषु आवाह्य संस्थाप्य सन्निरुध्य न्यस्ताङ्गं मातृकादिमन्त्राक्षरैर्न्यस्ततत्तदवयवं मां प्रपूजयेदित्यन्वयः—

व्याप्तो भूतश्च नित्यं यदात्मभूतो हरिस्ततः ।
जीवस्य तत्प्रधानत्वं तन्मयत्वमुदाहृतम् ॥

इति वचनात् अत सातत्यगमन इति धातोः मन्प्रत्ययादात्मेति रूपम्—

व्याप्तोऽपि भगवान्विष्णुर्देहे सर्वगतत्वतः ।
भक्तस्य फलदो यस्माद्व्याप्तिकृत्तस्य तेन सः ॥

इति अनेन मयि स्थित्वा स्वयमेव स्वात्मानमावाहयत्यर्चयत्यहं तदधीनतयावाहनादि करोमीत्याद्युक्तं भवति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सूर्येत्यर्द्धकम् ॥ १७ ॥

श्रद्धयेति सार्द्धकं गन्ध इत्यर्द्धस्य श्रद्धयेत्यर्द्धेनान्वयः तस्य भक्तस्य निष्किञ्चनत्वेऽपि मम सेवायामाग्रहश्चेत्तदा गन्धादिकं प्रेष्ठमिति पुनः किं वक्तव्यमित्यर्थः ॥ १८ ॥ १९ ॥

कृतन्यास इति । केशवादिन्यासादीनां यत्र यत्राङ्गविषयत्वं तत्र तत्तन्मूर्तीर्ध्यात्वा तत्तन्मन्त्रांश्च जप्त्वैव तत्तदङ्गस्पर्शमात्रं कुर्यात् न तु तत्तन्मन्त्रदेवतास्तत्र न्यस्ता ध्यायेत् भक्तानां तदनौचित्यात् भूतशुद्ध्यादिकं त्वेवं ज्ञेयं तत्र भूतशुद्धिर्निजाभिलषितभगवत्सेवौपयिकतत्पार्षददेहभावनापर्यन्तैव तत्सेवैकपुरुषार्थिभिः कार्या निजानुकूल्यात् एवं यत्र आत्मनो निजाभीष्टदेवतारूपत्वेन चिन्तनं विधीयते तत्र तत्रैव पार्षदविग्रहत्वं भाव्यम् अहंग्रहोपासनायाः शुद्धभक्तैर्द्विष्टत्वात् ऐक्यं च तत्र साधारण्यप्रायमेव मदीयचिच्छक्तिवृत्तिशुद्धसत्त्वांशविग्रहत्वात्पार्षदानामिति ॥ २० ॥

तदद्भिरिति युग्मकम् ॥ २१—२२ ॥

पिण्ड इति तैः तत्र श्रुतौ स्वरः प्रणवान्तनादरूपः दीर्घस्यादावन्ते च स इति तदुच्चारणानन्तरमेव वेदस्योच्चारणात् समापनाच्च प्रकृतिलीनस्य स्वस्वरूपलीनस्य सतः परः अधिष्ठाता ॥ २३ ॥

आत्मभूतया परमात्मरूपया आवाह्य तदैकात्म्येन विभाव्यापि मां स्वं भगवल्लक्षणमभेदेन चिन्तितमप्यौकिके पूजयेत् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अभ्यर्हणम् अर्घ्योपस्थानादि सलिलैस्तु सलिलादिभिरेव यजनम् ॥ १७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सुमनसः पुष्पाणि ॥ १८ ॥

इदानीं पूजाप्रकारमाह । शुचिरिति प्रागुदग्वा प्राङ्मुख उदङ्मुखो वा अर्चायामचलायां तु सम्मुखः अर्चाभिमुखः ॥ १९ ॥

ततश्च गुर्वादिनमस्कारपूर्वकं यथोपदेशं स्वस्मिन् कृतन्यासः कृतो मूलमन्त्रेण न्यासो यस्यां तां ममार्चाम् आमृजेत् निर्माल्यादिदूरीकरणेन शोधयेत् प्रोक्षणीयं प्रोक्षणोदकपात्रम् उपसाधयेत् पुष्पादिभिः संस्कुर्यात् ॥ २० ॥

तदद्भिः प्रोक्षणीयाभिरद्भिर्देवयजनं देवपूजास्थानं तैस्तैर्द्रव्यैरिति पाद्यं श्यामकदूर्वाब्जविष्णुकान्ताभिरिष्यते——

गन्धपुष्पाक्षतयवकुशाग्रतिलशर्षपाः ।
दूर्वा चेति क्रमादर्घ्यद्रव्याष्टकमुदीरितम् ॥
जातीलवङ्गकक्कोलैर्मतमाचमनीयकम् ।

इति ॥ २१ ॥

तानि च त्रीणि पात्राणि देशिकः पूजकः क्रमेण हृदयादिमन्त्रैर्गायत्र्या च ॥ २२ ॥

ततश्च पिण्डे देहे वाय्वग्निसंशुद्धे इति कोष्ठगतेन वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृतप्लावनेनामृतमये जाते तस्मिन् हृत्पद्मस्थां परां श्रेष्ठां जीवः कला यस्यास्तां । श्रीनारायणमूर्त्तिं ध्यायेत् । नादान्ते इति प्रणवस्याकारोकारमकारविन्दुनादाः पञ्चांशास्तत्र नादान्ते सिद्धैर्ध्यातम् । तथाच श्रुतिः । यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित इति ॥ २३ ॥

तया भगवन्मूर्त्या आत्मभूतया परमात्मस्वरूपया स्वप्रभाभिः पिण्डे देहे दीपेन स्वप्रभाभिर्गेहे इव व्याप्ते सति प्रथमं संपूज्य मानसैरुपचारैरभ्यर्च्य तन्मयः सन्नर्चादिषु आवाह्य स्थापयित्वा न्यस्ताङ्गं मां मदङ्गे न्यासान् कृत्वेत्यर्थः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूर्ये चेति । सलिले च सलिलादिभिः अभ्यर्हणां भजनं प्रेष्ठम् ॥ १७ ॥

सर्वत्र किञ्चिदपि जलादिकं मद्भक्तेन श्रद्धया निवेदितं मम प्रीतिकरं भवति किं पुनर्यथोचितं सुगन्धादिकं प्रीतिकरं भवतीति वक्तव्यम् अभक्तनिवेदितं तु भूर्य्यपि मम प्रीतये न भवति किं तन्निवेदितेन स्वल्पेनेत्याह सार्द्धेन श्रद्धयेति ॥१८॥

शुचिरिति । अथ शुचिः सन्नर्चेत् अर्चनप्रकारमाह । प्राक् सम्भृतसम्भारः दर्भैः कल्पितासनः प्राङ्मुख उदङ्मुखो वा आसीनः सन् अर्चायां स्थिरायां तु सम्मुखः अर्चाभिमुखः उपविष्टः सन् अर्चेत् ॥ १९ ॥

कृतन्यासः गुर्वादिप्रणामपूर्वकम् कृतो यथोपदेशं न्यासो येन सः कृतो मूलमन्त्रेण न्यासो यस्यां तां ममार्चां प्रतिमां पाणिना चन्दनादिसंस्कृतेन स्वहस्तेन आमृजेत् निर्माल्याद्यपकर्षणादिना शोधयेत् कलश प्रोक्षणीयं प्रोक्षणार्थजलपात्रं च उपसाधयेत् चन्दनपुष्पादिभिः संस्कुर्यात् ॥ २० ॥

तदद्भिः प्रोक्षणीयाद्भिर्देवयजनं देवजनस्थानं द्रव्याणि पुष्पादीनि आत्मानं स्वशरीरं च प्रोक्ष्य पाद्यपात्रमर्घपात्रमाचनपात्रमित्येवं त्रीणि पात्राणि स्थापितानि अद्भिः कलशोदकैस्तैस्तैः प्रसिद्धैर्द्रव्यैश्च साधयेत्—

पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्तादिरिष्यते ।
गन्धपुष्पाक्षतयवाः कुशाश्च तिलसर्षपाः ॥
दूर्वाचेति क्रमादर्घे द्रव्याष्टकमुदाहृतम् ।
जातीलवङ्गकक्कोलैर्मतमाचनीयकम् ।
द्रव्याभावे तु सर्वेषु तुलसीं योजयेत्पुनः ॥ २१ ॥

देशिकोऽर्चकः हृदयादिभिस्त्रिभिर्मन्त्रैस्तानि त्रीणि पात्राणि यथाक्रमं गायत्र्या च सर्वाण्यभिमन्त्रयेत् ॥ २२ ॥

तदनन्तरं पिण्डे देहे वायुना शोषिते अग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृतप्लावनेनामृतमयत्वेन भाविते तदुक्तम्—

इडाचक्रे धूम्रं सततगतिबीजं सलवकम् ।
स्मरेत् पूर्वं मन्त्री सकलभुवनोच्छोषणकरम् ॥
स्वकं देहं तेन प्रततवपुषापूर्य सकलम्—
विशोष्य व्यामुञ्चेत्पवनमथ मार्गेण गमने ॥

तेनैव मार्गेण विलीनमारुतं बीजं विचिन्त्यारुणमाशुशुक्षणेः आपूर्य देहं परिदह्य वामतो मुञ्चेत्समीरं सहभस्मना बहिः टपरमतीव शुभमृतांशु पथेन विधुं नवतु ललाटचन्द्रममुतः सकलार्णमयीम् लपरजवाणिपास्य रचयेच्च तया सकलं वपुरमृतौघवृष्टिमथ ककराङ्गमिदमिति तत्र हृत्पद्मस्थाम् अणवीं अणुर्ह्येष आत्मेति श्रुतेः अणुपरिमाणां परामुत्कृष्टाम् अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परामिति स्मृतिप्रसिद्धाम् जीवकलां जीवभूतां प्रकृतिम् नादः उदात्तस्वरयुक्तः प्रणवस्तदन्ते मकारे प्रतिपादितया सिद्धैः प्रणवार्थज्ञैर्भाविताम् ध्यायेत् उपासकस्वरूपं चिन्तयेदित्यर्थः ॥ २३ ॥

तया आत्मभूतया उपासकस्वरूपभूतया अणुस्वरूपयापि धर्मभूतज्ञानेन पिण्डे व्याप्ते—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ! ॥

इति स्मृतेः मामुपास्यं सम्पूज्य तन्मयस्तदात्मकः अर्चादिषु आवाहस्थापनमुद्रया सन्धाप्य संस्थापयित्वा न्यस्ताङ्गं न्यस्ताङ्गन्यासं प्रपूजयेत् ॥ २४ ॥

---

भाषा टीका ।

सूर्य के विषै उपस्थानादिकही पूजन है जल में तर्पणादिक से पूजन है श्रद्धा से मेराभक्त मेरे को जल मात्र देवै तो मेरे को अति प्रिय है ॥ १७ ॥

अभक्त का दिया बहुत भी मेरे सन्तोष के वास्ते नहीं होता है गंध चंदन धूप पुष्प दीप तथा अन्नादि भोजन जो भक्तने दिया हो तो फिर क्या कहना है ॥ १८ ॥

अब पूजा करने वाला पहिले पवित्र होकर पूजाकी सब सामग्री पास में रखकर पूर्व भाग में अग्र भाग वाले

पाद्योपस्पर्शार्हणादीनुपचारान् प्रकल्पयेत् ।
धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ॥ २५ ॥
पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ।
उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥ २६ ॥
सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ।
मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥ २७ ॥
नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ।
महाबलं बलञ्चैव कुमुदं कुमुदेक्षणम् ॥ २८ ॥
दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान् ।
स्वे स्वे स्थाने त्वभिमुखान् पूजयेत्प्रोक्षणादिभिः ॥ २९ ॥
चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः ।
सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥ ३० ॥
स्वर्णघर्मानुवाकेन महापुरुषविद्यया ।
पौरुषेणापि सूक्तेन सामनीराजनादिभिः ॥ ३१ ॥
वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ।
अलं कुर्वीत सप्रेम मद्भक्तो मां यथोचितम् ॥ ३२ ॥

भाषा टीका ।

कुशों का आसन बिछाकर पूर्व को या उत्तर को मुख करके बैठे यदि स्थिर प्रतिमा हो तो उसके सन्मुख ही बैठकर पूजन करै ॥ १९ ॥

अपने शरीर में अंगादि न्यास करै फिर भगवन्मूर्ति में भी अंगादि न्यास करै फिर मेरी मूर्ति को हस्त से मार्जन करै फिर प्रोक्षण जल के कलश को मंत्रों से सिद्ध करै ॥ २० ॥

उस पुण्याहवाचन के कलश के जलसे भगवन्मन्दिर और पूजा द्रव्य अपना शरीर इन सबों को प्रोक्षण करै फिर पाद्य अर्घ आचन के तीनों पात्रों में जल भर के उनमें जो जो पुष्प चंदनादि पदार्थ लिखे हैं तिनको डाले ॥२१॥

पूजा करने वाला पूर्वोक्त उन तीनों पात्रों को हृदय शिर शिखाओ विष्णु गायत्री इन मन्त्रों से अभिमन्त्रण करै ॥ २२ ॥

भूत शुद्धि के क्रम से वायु अग्नि से शुद्ध अपने शरीर के मध्य हृदय कमल में स्थित जो हमारे सूक्ष्म जीव कला है जिस को कि सिद्ध लोग प्रणव के नाद के अन्त में ध्यान करते हैं तिसका ध्यान करै ॥ २३ ॥

उस आत्मा के ज्ञान से जब सब शरीर व्याप्त होजावै तब भगवन्मय होकर परमात्मा का आवाहन करै फिर मूर्ति आदि में स्थापन कर के अङ्गन्यास कर के मेरा पूजन करै ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथं पूजयेत्तत्राऽऽह । पाद्येति द्वाभ्याम् । धर्मादिभिर्ममाऽऽसनं तत्र पद्मं च कल्पयित्वोभाभ्यां वेदतन्त्राभ्यामुभयसिद्धये मह्यं पाद्यादीनुपचारान्प्रकल्पयेदित्यन्वयः उपस्पर्शं आचमनमर्हणमर्घ्यम् उभयसिद्धये वेदतन्त्रोक्तभुक्तिमुक्तिप्राप्तये मयमर्थः धर्मज्ञानवैराग्यैश्वर्याण्यासनपर्यङ्कस्याग्नेयादिचतुष्कोणेषु पादाः अधर्मादीनि पूर्वादिदिक्षु गात्राणि त्रयो गुणाः पट्टिकाः तत्र पूर्वादिक्रमेण मध्ये च विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वीसत्येशानाऽनुग्रहेति न वशक्तयः एवं यथोपदेशं धर्मादिभिर्नवभिः शक्तिभिश्चाऽऽसनं कल्पयित्वेति कर्णिकया केसरैस्तत्रस्थसूर्यादिमण्डलैश्चोज्ज्वलमित्यर्थः ॥ २५—२६ ॥

आयुधादिपूजामाह । सुदर्शनमिति त्रिभिः । तत्र न्यस्ताङ्गमिःअङ्गावरणपूजा सूचिता आसनेनैव शक्त्यावरणमित्युक्तम् ततः सुदर्शनादिमुसलान्तान्यायुधान्यष्टदिक्षु कौस्तुभमालाश्रीवत्सानुरसि ॥ २७ ॥

नन्दादीन् पार्षदानष्टदिक्षु गरुडं पुरतः ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्गादीनि, कोणेषु गुरूनग्रतः सुरानिन्द्रादिलोकपालान्पूर्वादिदिक्षु एवमेतान्देवस्याभिमुखान्प्रोक्षणादिभिः अर्घ्यादिभिः पूजयेदित्यर्थः ॥ २९ ॥

पाद्यादीनुपचारान्प्रकल्पयेदित्युक्तं तानेव गुणविधिभिः प्रपञ्चयति । चन्दनेति षड्भिः ॥ ३० ॥

मन्त्रानाह स्वर्णघर्मानुवाकः—

सुवर्णं घर्मं परिवेदवेनमि' त्यादिः महापुरुषविद्या ।
जितं ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! ॥
सुब्रह्मण्य ! नमस्तेऽस्तु महापुरुषपूर्वज ! ।

इति पौरुषं सूक्तं सहस्रशीर्षेत्यादि नीराजनादीनि सामानि. इन्द्र नरो नेमधिता हवन्त इत्यस्यामृचि गीतानि आदिशब्देन रौहिणादीनि ॥ ३१ ॥

वस्त्राद्युपचारेष्वलङ्कारलक्षणं गुणं विधत्ते । वस्त्रेति । पत्राणि कपोलवक्षःस्थलादिषु लिखिताः पत्रभङ्गाः मकरकर्षत्सप्रेम यथा भवति तथा ॥ ३२ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

पाद्येति युग्मकम् । तदाह कथंभावाकाङ्क्षायामिति कर्त्तव्यतामाहेत्यर्थः तत्र आसने आग्नेयादीत्यादिना नैर्ऋतवायव्यैशानपरिग्रहः अधर्मादीनीति । अधर्माऽज्ञानावैराग्यानैश्वर्याणि धार्मिकादिषु तत्तदन्तर्यामिशक्तिरूपाणि पूर्वादिदिक्षु गात्राणि तदुक्तं नारदपञ्चरात्रे । अधर्मादिचतुष्कन्तु अग्नेयादि नियोजनमिति अन्यथाऽप्राकृतासने तेषां सन्निवेशानुपपत्तेः । सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः इत्युक्तेरप्राकृता अपि ते सन्त्येवेति गम्यते विशेषणानां व्यावर्त्तकत्वनियमादिति अथो गुणा अप्रकृता एव व्याख्येयाः पूर्वहेतोरेव । तत्र आसनस्थपद्मे पूर्वादिक्रमेणेति । पूर्वाद्यष्टदिक्षु यथासङ्ख्यं विमलामारभ्येशानापर्यन्ता अष्टौ शक्तयः मध्ये उपवेशस्थाने त्वनुग्रहेत्यर्थः । तत्र विमला कीर्त्याख्या । उत्कर्षणी उत्कर्षे हेतुर्जयाऽपरपर्याया । ज्ञाना ज्ञानशक्तिः सम्विदपरपर्याया । विशुद्धसत्त्वाख्या क्रियाल्हादिनी । योगा योगमाया । प्रह्वी विचित्रानन्तसामर्थ्यहेतुः । सत्या सन्धिन्यपरपर्याया यया सद्रूपोऽपि भगवान् सत्तां दधाति धारयति च सर्वदेशकालद्रव्यादि व्याप्तिकरीति यावत् । ईशाना सर्वाधिकारिताशक्तिहेतुः । अनुग्रहा भक्तविषयकाऽपारकृपाशक्तिहेतुरिति भगवत्सन्दर्भात् तल्लक्षणानि ज्ञेयानि कर्णिकायां न्यसेत् सूर्यं सोमाग्नीनुत्तरोत्तरमित्युक्तेः केसरशब्दस्य तत्रस्थसूर्यादिमण्डले लक्षणेति इत्यर्थ इत्युक्तम् ॥ २५ ॥ २६ ॥

अङ्गावरणानां केसवादीनां पूजा द्योतितेति आवरणपूजा प्रसङ्गादत्र व्याख्यताम् ॥ २७ ॥

नन्दमिति युग्मकम् ॥ २८

दुर्गादीनि कोणेष्विति दुर्गां वह्निकोणे पूजयेत् विनायकं गणेशं नैर्ऋत्ये । व्यासं वायव्ये । विश्वक्सेनमैशाने किन्तु तेऽप्राकृता व्याख्येयाः विश्वक्सेनसाहित्यात् न यत्र मायेत्यादिना प्रकृतिकार्यमात्रस्य तत्र निषेधाच्च स्थानाविभागस्य मूलेऽनुक्तेरित्यर्थ इत्युक्तम् ॥ २९ ॥

तानेव उपचारानेव गुणविधिभिरिति अङ्गप्रधानसम्बन्धबोधको विधिर्गुणविधिरिति तल्लक्षणं यथाग्निहोत्रं जुहोतीत्युत्पत्तिविधिना विहितं होममुद्दिश्य दध्ना जुहोतीत्यादि गुणविधिभिर्दध्यादिलक्षणगुणमात्रविधानं तथात्र पूर्वप्रोक्तस्नानजलादीनुद्दिश्य चन्दनादिगुणमात्रविधानमन्यथोभयविधाने वाक्यभेदः प्रसज्ज्येत तदुक्तं भट्टैः सर्वत्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे । विधिशक्त्युपसङ्क्रान्तेः स्याद्धातोरनुवादतेति ॥ ३० ॥

मन्त्रान् पाद्याद्युपचारेष्वङ्गरूपान् । स्वर्णघर्मानुवाकस्तन्नामकं वैदिकं सूक्तम् । सुवर्णं कुङ्कुमादिवासितत्वेन सुवर्णतुल्यजलादि भगवतो घर्मपरिवेदनं प्रस्वेदविनाशकमिति मन्त्रार्थः नेमधिता इति वक्तव्ये मे मधिता इत्यार्षम् अतिशयज्ञानवान्नर इन्द्रं परमेश्वरमुद्दिश्य हवन्त होमोपलक्षितयागं कुर्यादित्यर्थः । अत्र मेधातिथ्यानार्थः ॥ ३१ ॥

वस्त्राद्युपचारेष्विति । पूर्वोक्तवस्त्राद्युपचारानुवादेनालङ्कारलक्षणगुणमात्रम् विधत्त इत्यर्थः । यथोचितं सौन्दर्यानुरूपम् ३२

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

धर्मादिभिश्च नवभिरिति । धर्मादिभिरष्टभिः विमलादिभिर्नवभिः ॥ २५ ॥ ४१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथमित्यत आह । पाद्येति । इदं व्युत्क्रमेण योज्यं धर्मादिभिरित्यादिशब्देन ज्ञानवैराग्यैश्वर्यधर्माज्ञानावैराग्यानैश्वर्यसङ्ग्रहः एते पीठस्य पादाः एभिः सहिते पीठे नवभिः विमलोत्कर्षिणीज्ञाना क्रिया योगा ततः परम् । प्रह्वी सत्या तथेशानानुग्रहा नवमूर्त्तय इत्युक्ताभिर्मूर्त्तिभिर्युक्तमित्यर्थः । कर्णिकया केसरैश्चोज्ज्वलम् अष्टौ दलानि यस्य तत्पद्मं ममासनं कल्पयित्वा तत्र तस्मिन्मह्यं पाद्यादीनुपचारान् प्रकल्पयेत् तत्रोपस्पर्शनमाचमनम् अर्हणमर्घ्यमुभाभ्याम् वेदपञ्चरात्रोक्ताभ्याम् विधिभ्याम् मन्त्राभ्याम् वा उभयसिद्धये स्वर्गापवर्गसिद्धये मह्यं प्रकल्पयेदिति पूर्वेण सम्बन्धः ॥ २५—२६ ॥

अथायुधादिपूजामाह । सुदर्शनमिति ॥ २७ ॥

अथ पार्षदार्चनमाह । नन्दमिति । एते भगवत्पार्षदाः ॥ २८ ॥

सुरा इन्द्रादयः तांश्च स्वस्वस्थानेषु ममाभिमुखान्प्रोक्षणादिभिः पूजयेत् आदिशब्देन पाद्यादिसङ्ग्रहः तत्र न्यस्ताङ्गमित्यङ्गावरणपूजा सूचिता धर्मादिभिश्च नवभिरिति पीठदेवतापूजा सुदर्शनादीनि मुशलान्तान्यायुधान्यष्टदिक्षु कौस्तुभवनमालाश्रीवत्सानुरसि नन्दादीनष्टदिक्षु गरुडं पुरतः दुर्गादीन् कोणेषु गुरून्भगवतो दक्षिणपार्श्वे इन्द्रादीन् प्रागाद्यष्टदिक्षु दुर्गाया भगवन्मायाऽभिमानिदेवतात्वाद्विनायकस्य विष्वक्सेनपार्षदत्वाद्व्यासस्य वेदशाखावि-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भजनेन तत्प्रवर्त्तकत्वोपकारयोगात्सुराणां भगवद्विभूतित्वाच्च परिवारेषु पूजा विहिता ॥ २९ ॥

अथ चन्दनादिभिर्वासितैः परिमलितैर्मन्त्रैः स्वर्णघर्मानुवाकादिमन्त्रपाठसहितैः स्नापयेद्विभवे सति नित्यमित्थं स्नापयेदन्यथा यथासम्भवैश्चन्दनादिवासितैरित्यर्थः ॥ ३० ॥

मन्त्रानाह । स्वर्णेति तत्र स्वर्णघर्मानुवाकः सुवर्णं घर्मं परिवेदवेनमित्यादि महापुरुषविद्या जितं ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! नमस्तेऽस्तु हृषीकेश ! महापुरुष पूर्वज इत्ययं मन्त्रः पौरुषं सूक्तं प्रसिद्धं सामनीराजनादिभिः इन्द्रं मघोने मधिताद्वन्त इत्याद्या ऋचो नीराजनादयः आदिशब्देन रोहितादयः सामाश्चयाभिश्चैतैर्मन्त्रैः स्नापयेदिति सम्बन्धः ॥ ३१ ॥

पत्रेति । पत्राणि तुलसीदलानि सप्रेम प्रेम्णा सहितं यथा तथा मां यथोचितमलङ्कुर्वीत ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धर्मादिभिः विमलादिभिः नवभिः शक्तिभिश्चासनं पीठं कल्पयित्वा ॥ २५ ॥

तत्र धर्मादिकॢप्ते पीठे अष्टदलं पद्मं ध्यात्वा तत्र प्रकृतिसन्निहिते पद्मे मां पूजयेत् वेदतन्त्राभ्यां मह्यं महनीयं पूजनीयमुभयसिद्धये वेदतन्त्रप्रोक्तफलसिद्ध्ये ॥ २६ ॥

अन्वनन्तरम् ॥ २७—२८ ॥

मध्यावाहितप्रधानदेवताभिमुखान् प्रोक्षणीयादिभिः अर्घ्यादिभिः ॥ २९—३० ॥

स्वस्य सूक्तेन विष्णुसूक्तेन घर्मानुवाकेन घर्मासमन्ताद्विवृतं ध्यायतुरित्यादिसूक्तेन महापुरुषविद्यया जितं ते पुण्डरीकाक्षेत्यादिकया पौरुषेण सूक्तेनापि धाम सूक्तं समुद्रादूर्मिरिति पार्थीयेत्यादिसूक्तं स्तूयमानं सूक्तं नीराजनम्—

नितरां रञ्जयेद्यस्मात्पावमानं तु मण्डलम् ।
विष्णौ नीराजनं तस्माद्विप्राद्भिः समुदाहृतम् ॥

इति वचनात् आदित्यश्लोके रुद्रो जज्ञेति कुर्यात् ॥ ३१—३३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पाद्येति युग्मकम् केचित्तु श्रीनारदपञ्चरात्रदृष्ट्या धर्मादीन्यन्यथैव व्याचक्षते यथोक्तं तत्रैव—

अधर्मादिचतुष्कं तु आग्नेयादि नियोजनमिति ।

अधार्मिकादिषु तत्तदन्तर्यामिशक्तिरधर्माद्यभिप्रायः ॥२५॥२७ ॥

नन्दमिति युग्मकं तत्र दुर्गाद्या विष्वक्सेनादिवद्भगवतो नित्यवैकुण्ठसेवकाः ततश्च ते गणेशदुर्गाद्या ये परे माया शक्त्यात्मका गणेशदुर्गाद्यास्ते तु न भवन्ति न यत्र माया किमुतापरे हरे रनुव्रता यत्र सुरासुरार्चिता इति द्वितीयोक्तेः ततो भगवत्स्वरूपभूतशक्त्यात्मका एव ते अत एव श्रीकृष्णस्वरूपभूते श्रीमदष्टादशाक्षरादिमन्त्रगणेऽपि दुर्गानाम्नो भगवद्भक्त्यात्मकस्य स्वरूपभूतशक्तिवृत्तिविशेषस्याधिष्ठातृत्वं श्रुतितन्त्रादिषूपदिश्यते यथा नारदपञ्चरात्रे श्रुतिविद्यासंवादे

भक्तिर्भजनसम्पत्तिर्भजते प्रकृतिः प्रियम् ।
ज्ञायतेऽत्यन्तदुःखेन सेयं प्रकृतिरात्मनः ॥
दुर्गेति गीयते सद्भिरखण्डरसवल्लभेति ।
अस्या आवरिका शक्तिर्महामायेति कथ्यते ॥
यया मुग्धं जगत्सर्वं सर्वदेहाभिमानिनः ।

इति अत एव श्रीभगवदभेदेनैवोक्तं गौतमीयकल्पे यः कृष्णः सैव दुर्गा स्याद्या दुर्गा कृष्ण एव स इति त्वमेव परमेशानि ! अस्याधिष्ठातृदेवतेत्यादिकं तु विराट्पुरुषमहापुरुषयोरिव केषाञ्चिदभेदोपासनाविवक्षयैवोक्तं सा हि मायांशरूपा तदधीने प्राकृतेऽस्मिल्लोके मन्त्रस्थालक्षणसेवार्थे नियुक्ता चिच्छक्त्यात्मकदुर्गाया दासीयते न तु सैवाधिष्ठात्री मायातीतवैकुण्ठावरणकथने यथोक्तं पाद्मोत्तरखण्डे—

सत्याच्युतानन्त दुर्गाविष्वक्सेनगजानना इत्याद्युक्त्वा ।
नित्याः सर्वे परे धाम्नि ये चान्ये च दिवौकसः ॥
ते वै प्राकृतनाकेऽस्मिन्ननित्यास्त्रिदिवेश्वराः ।
तेह नाकं महिमानः सचन्त इति वै श्रुतिः ॥

इति भगवदंशरूपत्वं च तेषामुक्तं त्रैलोक्यसंमोहनतन्त्रे

सर्वत्र देवदेवोऽसौ गोपवेशधरो हरिः ।
केवलं रूपभेदेन नामभेदः प्रकीर्त्तितः ॥

इति अतो नाममात्रसाधारण्येनानन्यभक्तैर्न बिभेतव्यं किं तु भगवतो नित्यवैकुण्ठसेवकत्वाद्विष्वक्सेनादिवत्सत्कार्या एव ते अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु य इत्यादिवचने तदसत्कारे दोषश्रवणात् अत्र विशेषो भक्तिसंदर्भे दृश्यः अथ श्रीभगवद्धामे श्रीगुरुपादुकापूजनमेव संगच्छते यथा य एव भगवानत्र व्यष्टिरूपतया भक्तावतारत्वेन श्रीगुरुरूपो वर्तते स एव तत्र समष्टिरूपतया स्वधामप्रदेशे साक्षादवतारत्वेनापि तद्रूपो वर्त्तते इति ॥ २८—३१ ॥

श्रीगोपालपूजायामपि यज्ञोपवीतार्पणं विहितमस्ति यथोक्तं गौतमीयतन्त्रे यज्ञसूत्रं ततो दद्यादथवा स्वर्णनिर्मितमिति नारसिंहे

त्रिवृच्छुक्लं च पीतं च पट्टसूत्रादिनिर्मितम् ।
यज्ञोपवीतं गोविन्दे दत्त्वा वेदान्तगो भवेत् ॥ ३२ ॥ ३३॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपस्पर्शं आचमनम् अर्हणमर्घं प्रकल्पयेत् समर्पयेत् धर्मादिभिराग्नेयादिकोणेषु धर्मज्ञानवैराग्यैश्वर्यैः पूर्वादिदिक्षु तैरेवाधर्माद्यैश्च तन्मध्ये नवभिः शक्तिभिर्विमलाद्याभिश्च ममासनं योगपीठं तत्राष्टदलं पद्मं च कल्पयित्वा वेदतन्त्राभ्यां वेदोक्तेन च तन्त्रोक्तेन च प्रकारेण उभयसिद्धये भुक्तिमुक्तिप्राप्तये मह्यमुपचारान् दद्यात् २५ ॥ २६ ॥

सुदर्शनादिसुखलान्तान्यायुधान्यष्टदिक्षु कौस्तुभमाला श्रीवत्सानुरसि पूजयेत् ॥ २७ ॥

स्वे स्वे स्थाने स्वाभिमुखानिति नन्दादीन् पार्षदान् अष्ट

पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान् ।
धूपदीपोपहार्याणि दद्यान्मे श्रद्धयाऽर्चकः ॥ ३३ ॥
गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ।
संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥ ३४ ॥
अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ।
अन्नाद्यगीतनृत्यादिपर्वाणि स्युरुतान्वहम् ॥ ३५ ॥
विधिना विहिते कुण्डे मेखलागर्तवेदिभिः ।
अग्निमाधाय परितः समूहेत्पाणिनोदितम् ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दिक्षु गरुडं पुरतः दुर्गादीन् कोणेषु गुरून् वामतः सुरान् इन्द्रादिलोकपालान् पूर्वादिदिक्षु प्रोक्षणादिभिः प्रोक्षणपूर्वकार्घ्यादिभिः ॥ २८—३० ॥

केन मन्त्रेण पूजयेत्तत्राह । स्वर्णघर्मानुवाकेन सुवर्णं घर्मं परिवेदनमित्यादिना । महापुरुषविद्यया जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावनेत्यादिकया पौरुषेण सूक्तेन सहस्रशीर्षेत्यादिना सामनीराजनादिभिः इन्द्रं नरो मे मधिता इत्यस्यामृचि गीतैः आदिशब्देन रौहिण्याद्यैः ॥ ३१ ॥

पद्मस्रक् तुलसीपत्रमाला ॥ ३२ ॥ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्र प्रकारमाह । पाद्येति द्वाभ्याम । धर्मज्ञानवैराग्यैश्वर्यैरासनपीठस्याग्नेयादिचतुष्कोणेषु पादभूतैर्धर्माऽज्ञानाऽवैराग्याऽनैश्वर्यैः पूर्वादिदिक्षु गात्रभूतैश्चकारात्त्रिभिर्गुणैः पट्टिकारूपैः पूर्वादिक्रमेण मध्ये च नवभिर्विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्या ईशानाऽनुग्रहा एताभिर्यथोपयोगं योजिताभिः शक्तिभिश्च ममासनं तत्राष्टदलं कर्णिकायाः केसरैस्तत्रस्थसूर्यसोमाग्निमण्डलैश्चोज्ज्वलं पद्मं च कल्पयित्वा उभयसिद्धये भुक्तिमुक्तिसिद्धये वेदतन्त्राभ्यां पाद्योपस्पर्शार्ह्याद्यादीनुपचारान्मह्यं प्रकल्पयेदिति द्वयोरन्वयः उपस्पर्शः आचमनम् अर्हणमर्घम् ॥ २५ ॥ २६ ॥

आयुधादिपूजामाह । सुदर्शनमिति त्रिभिः ॥२७——२९ ॥
उपचारान्दर्शयति । चन्दनेति षड्भिः ॥ ३० ॥
मन्त्रान्दर्शयति । तत्र स्वर्णघर्मेति । स्वर्णघर्मानुवाकेन सुवर्णं घर्मं यदि परिवेदनमित्यादिना महापुरुषविद्यया—

जितन्ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! ।
नमस्तेऽस्तु हृषीकेश ! महापुरुषपूर्वज ।

इत्यनया पौरुषेण सूक्तेन सहस्रशीर्षेत्यादिना सामनीराजनादिभिः इन्द्रं नरो मे मधिताहवन्त इत्यादिभिः ॥ ३१ ॥

पत्राणि कपोलवक्षस्स्थलादिषु लिखिताः पत्रभङ्गाः ॥ ३२ ॥

भाषा टीका ।

पूजा करते समय पाद्य, आचमन अर्घ आदिक षोडश उपचारों को करै तिस से पहिले धर्म ज्ञान आदिक नौ तत्वों से न्यास करके मेरा आसन कल्पना करै ॥ २५ ॥

उस आसन के ऊपर अष्ट पत्रों की पद्म की कल्पना करै उस पद्म की कर्णिका केसर की उज्वलता की भावना करै उस आसन पर भुक्ति मुक्ति दोनों के सिद्धि के लिये वेद तथा पञ्चरात्र तन्त्र से मेरा यजन करै ॥ २६ ॥

सुदर्शनचक्र शंख गदा खड्ग बाण धनुष हल मुसल इन आठ आयुधों का कौस्तुभ मणि का वनमाला का श्रीवत्सचिन्ह का भगवान् के अनन्तर पूजन करै ॥ २७ ॥

नन्द सुनन्दन गरुड चण्ड प्रचण्ड महाबल बल कुमुद कुमुदेक्षण ॥ २८ ॥

दुर्गा विनायक वेद व्यासजी विश्वक्सेनजी अपने गुरु तथा और देवता इन सबों को अपने अपने स्थान में स्थापित कर के भगवत् सन्मुख उन को रखकर उन का भी प्रोक्षणादिकों से पूजन करै ॥ २९ ॥

यदि संपत्ति होवै तो चन्दन खस खस कुसुम्भ कर्पूर अगर इन से सुसुगन्धित जलों से मन्त्रों द्वारा नित्य प्रति स्नान करावै ॥ ३० ॥

स्वर्ण घर्म नामा जो वेद का अनुवाक तिस से जितं ते स्तोत्र से पुरुष सूक्त से सामनीराजन मंत्रों से स्नानादि पूजन करै ॥ ३१ ॥

उत्तम वस्त्र यज्ञोपवीत आभरण तुलसी पत्र पुष्प माला चंदन लेपन इन सबों से मेरा भक्त प्रेम पूर्वक यथोचित मेरा पूजन करै ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यथोचितमलंकुर्वीतेत्युक्तार्थम् सर्वसाधारणं श्रद्धालक्षणं गुणं विधत्ते । पाद्यमिति ॥ ३३ ॥

परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि ।
प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम् ॥ ३७ ॥
तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः ।
लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥ ३८ ॥
स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ३९ ॥
ध्यायन्नभ्यर्च्य दारूणि हविषाभिघृतानि च ।
प्रास्याज्यभागावाघारौ दत्त्वा चाज्यप्लुतं हविः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नैवेद्ये वैभवलक्षणां गुणां विधत्ते गुडपायसेति । शष्कुलयस्तैलपक्वविशेषाः आपूपाः अपूपानां मण्डकादीनां समूहाः सूपा व्यञ्जनानि सति विभव इति शेषः ॥ ३४ ॥

कालभेदेन गुणां विधत्ते अभ्यङ्गेति । अभिषेचनं पञ्चामृतादि स्नपनम् अन्नाद्येति । अन्नं भोज्यमाद्यं भक्ष्यम् पर्वणयेकादश्यादौ अन्वहं प्रत्यहं वा विभवे सति ॥ ३५ ॥

फलभूयस्त्वार्थिनोऽग्नावपि पूजाप्रकारमाह । विधिना स्वगृह्योक्तप्रकारेण मेखलादिभिरुपलक्षिते विहिते निर्मिते तदुक्तं "विस्तारोच्छ्रायतोऽस्तस्रो मेखलाश्चतुरङ्गुलाः । हस्तमात्रो भवेद्गर्तः सर्वासां निधिदिका तथे"त्यादि उदितं प्रज्वलितमग्निं परितः समूहेदेकत्र मेलयेत् ॥ ३६ ॥

दर्भैः परिस्तीर्य परितः प्रोक्षयेत् अन्वाधायान्वाधानसंज्ञकं व्याहृतिभिः समित्प्रक्षेपादिरूपं कर्म कृत्वा अग्नेरुत्तरतो द्रव्याणि होमोपयोगीन्यासाद्य निधाय प्रोक्षिण्या प्रोक्षणीपात्रोदकेन प्रोक्ष्याग्नौ मां ध्यायेत् ॥ ३७ ॥

शङ्खादिभिरुल्लसन्तः शोभमानाश्चत्वारो भुजा यस्य तम् ॥ ३८ ॥

स्फुरन्ति किरीटादीनि यस्य तम् ॥ ३९ ॥

हविषा घृतेनाभिघृतानि संसिक्तानि दारूणि शुष्कसमिधः प्रास्य प्रक्षिप्य आघारौ तत्संज्ञकौ यागौ एवमाज्यभागौ च दत्त्वा तदर्थाहुतीर्हुत्वेत्यर्थः । तत्राघारौ प्रजापतये स्वाहेन्द्राय स्वाहेति चोत्तरदक्षिणपरिधिसंधिमारभ्याग्निप्रत्यादपरिध्यन्तं घृतक्षारणरूपौ आज्यभागौ अग्नये स्वाहा सोमाय स्वाहेत्येवं होमरूपौ ॥ ४० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

उक्ता ये ये पाद्याद्यर्थास्तेषु सर्वेषु साधारणं तुल्यं श्रद्धालक्षणम् आदरविश्वासात्मकं गुणमङ्गं विधत्ते ॥ ३३ ॥

नैवेद्ये तदनुवादेनेत्यर्थः । गुणमङ्गं शष्कुल्यः कर्णाकाराः तैलेऽपि स्वदेशरीत्युद्देशेन वस्तुतस्तु घृतेति वाच्यं मण्डका गौडदेशे प्रसिद्धा आमीक्षाविकाराः वस्तुतस्तु आपूपा पूआ इति ख्याताः तत्रापि भक्ष्याभक्ष्यविधिः श्रीहरिभक्तिविलासे दृश्यः ॥ ३४ ॥

कालभेदेन एकादश्यादिपर्वविशेषेण भोज्यं खिचलोदनादि । भक्ष्यं लड्डुकादि ॥ ३५ ॥

स्वगृह्येति स्ववेदसूत्रोक्तविधिना तत् होमकुण्डनिर्माणम् । मेखलाः सीमासूत्राणि सोपानतुल्यानि ॥ ३६ ॥

अग्नौ मां तदन्तर्यामिरूपं ध्यायेत् ॥ ३७ ॥

तप्तजाम्बूनदेति सार्द्धत्रिकम् ॥ ३८ ॥ ३९ ॥

उत्तरमेखलासन्धिमारभ्य दक्षिणमेखलासन्धिपर्यन्तं दक्षिणमेखलासन्धिमारभ्योत्तरमेखलासन्धिपर्यन्तमित्यर्थः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततोऽर्चको मे गन्धं श्रद्धया पाद्यादीनि दद्यात् ततः सुमनसः पुष्पाणि उपहार्य नैवेद्यम् ॥ ३३ ॥

तत्प्रपञ्चयति । गुडेति । तत्र शष्कुल्यः घृतपक्वविशेषाः अपूपाः संयावा यवगोधूमपिष्टमया भक्ष्याः सूपाश्चैवंविधनैवेद्यं परिकल्पयेदिति सम्बन्धः सति विभव इति शेषः ॥ ३४ ॥

कालभेदेनोपचारविशेषान् विधत्ते । अभ्यङ्गेति । अभिषेचनं पञ्चामृतैः स्नापनं पर्वण्येकादश्यादौ विभवे सत्यन्वहं स्युरित्यर्थः ॥ ३५ ॥

अथाग्नावपि पूजाप्रकारमाह । विधिनेति । विधिना तन्त्रोक्तविधिना विहिते निर्मिते कुण्डेऽथवा स्थण्डिलेऽग्निमाधाय निधाय उदितं प्रज्वलितमग्निं परितः पाणिना समूहेदेकत्र नयेत् ॥ ३६ ॥

दर्भैः परिस्तीर्य पर्युक्षेत्परिषिञ्चेत् ततो यथाविध्यन्वाधाय स्वगृह्योक्तविधिना आधाय सर्वस्याग्निमुख्यस्य कर्मणः सङ्कल्पं कृत्वा प्रोक्षण्या प्रोक्षणीपात्रोदकेन द्रव्याणि आज्यस्थाल्यादीनि करणानि प्रोक्ष्याग्नौ मां भावयेत ॥ ३७ ॥

कथम्भूतं तप्तहेमाभं चक्रादिभिर्लसन्तः चत्वारो भुजा यस्य तं शान्तं न तूग्ररूपम् ॥ ३८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्फुरन्ति किरीटादीनि यस्य तं श्रीवत्सो वक्षसि यस्य तं भ्राजन् दीप्यमानः कौस्तुभो यस्य तं वनमालाऽस्यास्तीति तथा तं श्रीह्यादित्वान्मत्वर्थीय इनिः ॥ ३९ ॥

ध्यायन्निति । इत्थम्भूतं ध्यायन्नध्वरर्म दारूणि इध्मदारूणि अभिघृतानि हवींषि देवतोद्देश्यानि प्राक्याग्भावाधाय आघारौ तत्संज्ञकौ आज्यभागावाज्याहुती दत्वा जुहुयादित्यर्थः ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संयावं गोधूमपायसं राजान्नं वा वित्ते सति ॥ ३४ ॥ ३५ ॥
मेखलावर्तवेदिभिः सह विहिते उदितं ज्वलितम् ॥ ३६—३९ ॥
हविषा सर्पिषाभियुतानि मिश्रितानि दारूणि समिधः प्राश्य हुत्वा आघार्य कोणात् कोणं प्रतिहुत्वार्चाविधानतः पूजाविधानतः ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शष्कुल्यः कर्णाकारा घृतादिपक्वाः आपूपाः पूआ इति ख्याताः आपूपिकमिति वक्तव्ये आपूपमित्यार्षं नैवेद्ये विशेषश्च गौतमीये—

निवेदयेदुत्तमान्नं न कदन्नं कदाचन ।
उत्तमं विधिना प्राप्तमथवा यद्याचितम् ॥
शिलोञ्छविधिना प्राप्तं स्ववित्तोपचितं वाथ
कृष्णाय परिकल्पयेत् ॥
शूद्राल्लब्धं छलाल्लब्धमथ वार्धुषिकार्जितम् ।
इत्याद्यन्नं कदन्नं तु दानान्नरकमावहेत् ॥

हारीतस्मृतौ नामक्ष्यं नैवेद्यार्थं भक्ष्येऽप्याजेमहिषीक्षीरं पञ्चनखमत्स्यांश्च विष्णुधर्मोत्तरे—

अभक्ष्यञ्चाप्यहृद्यं च नैवेद्यं न निवेदयेत् ।
केशकीटाद्यपन्नं च तथाचाविहितं च यत् ॥

अभक्ष्यनियमश्च श्रीहरिभक्तिविलासे द्रष्टव्यः ॥ ३४—३६ ॥

आग्नौ तदन्तर्यामिरूपं मां विभावयेत् ॥ ३७-४१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गुडविकारान् मत्स्यण्डीफाणितादीन् पायसं परमान्नं शष्कुल्यः कर्णाकाराः घृतपक्वाः गुझा इति ख्याताः पूपाः पूआ इति ख्याताः सति विभवे इति शेषः ॥ ३४ ॥

अभ्यङ्गेति प्रथमं दन्तधावनं ततः सुगन्धितैलेनाऽभ्यङ्गः ततः कुङ्कुमकर्पूरचूर्णादिभिरुन्मर्दनं ततः पञ्चामृताद्यैः सुगन्धिजलेन चाभिषेचनं ततोऽत्रांशुकमपि अनर्घ्यकौशेयवस्त्ररत्नालंकारचन्दनाद्यालेपस्रगादिकं तत आदर्शो दर्पणः ततो गन्धपुष्पधूपदीपाचमनीयानि देयानि अत्राधीति चतुर्विधखाद्यसुगन्धजलताम्बूलमालारात्रिकपुष्पशय्याव्यजनादिकं ततो वाद्यगीतनृत्यानि स्युः पर्वणयुत्सवे सति उत विभवे सत्यन्वहमपि स्युः ॥ ३५ ॥

फलभूयस्त्वार्थिनोऽग्नावपि पूजाप्रकारमाह । विधिनेति । "विस्तारोच्छ्रायतस्तिस्रो मेखलाश्चतुरङ्गुलाः । हस्तमात्रो भवेद्गर्तः सयोनिर्वेदिका तथे"ति विधिः उदितं प्रज्वलितमग्निं समूहेत एकत्र मेलयेत् ॥ ३६ ॥

ततश्च दर्भैः परिस्तीर्य आवृत्य परितः प्रोक्षयेत् अन्वाधाय अन्वाधानसंज्ञकं व्याहृतिभिः समित्प्रोक्षणादिरूपं कर्म कृत्वा आसाद्य अग्नेरुत्तरतो निधाय प्रोक्षणया प्रोक्षणीपात्रोदकेन प्रोक्ष्य मामन्तर्यामितया वन्हौ वर्तमानम् ॥ ३७-३९ ॥

हविषा अभिघृतानि सिक्तानि घृतसेचने प्राश्य अग्नौ प्रक्षिप्य आघारौ तत्संज्ञकौ यागौ एवमाज्यभागौ च दत्वा तदर्थौ आहुतीर्दद्यादित्यर्थः । आज्यप्लुतं घृतसिक्तं हविस्तिलादिकं चाज्ञियं षोडशऋचो यस्मिन्स्तेन पुरुषसूक्तेन च अवदानतः प्रतिऋचमाहुतिग्रहणेनेत्यर्थः ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अच्युतान् साङ्गोपाङ्गान् ॥ ३३—३४ ॥

अभिषेचनं पञ्चामृतादिस्नपनम् अन्नं भोज्यम् अद्यं भक्ष्यम् विभवे सत्यन्वहम् ॥ ३५ ॥

फलभूयस्त्वार्थिना त्वग्नावपि मम पूजा कार्येत्याशयेनाह । विधिनेति सार्धैः षड्भिः विधिना शास्त्रोक्तप्रकारेण मेखलागर्तवेदिभिः विहिते रचिते कुण्डे उदितं प्रज्वलितम् परितः समूहेत् एकत्र मेलयेत् ॥ ३६ ॥

अथानन्तरं परिस्तीर्य पर्युक्षेत्परितः प्रोक्षयेत् अन्वाधाय व्याहृतिभिः समित्प्रक्षेपादिरूपमन्वाधाननामकं कर्म विधाय द्रव्याणि होमाङ्गानि आसाद्य अग्नेरुत्तरतो निधाय प्रोक्षितया तज्जलेन प्रोक्ष्य अग्नौ मां भजेत ध्यायेत् ॥ ३७ ॥

कथम्भूतं शङ्खादिभिर्लसन्तः शोभमानाश्चत्वारो भुजा यस्य तम् ॥ ३८ ॥

स्फुरन्ति सुप्रभाभिः किरीटादीनि यस्य तम् ॥ ३९ ॥

हविषा घृतेन अभिघृतानि तत्स्रावीणि दारूणि समिधः प्राश्य प्रक्षिप्य अग्निनेश्वे प्रजापतये स्वाहा इन्द्राय स्वाहेति घृतक्षरणरूपावाघारौ अग्नये स्वाहा सोमाय स्वाहेति होमरूपावाज्यभागौ च दत्वा तदर्थमाहुतीर्हुत्वेत्यर्थः ॥ ४० ॥

भाषा टीका ।

पूजा करने वाला पुरुष हमारे लिये पाद्य आचमन चंदन दोष रहित पुष्प धूप दीप नैवेद्य इन पदार्थों को श्रद्धा से अर्पण करे ॥ ३३ ॥

गुड है जिसमें घृत पूरी मालपूआ लड्डू मीठी थूली दही दाल आदिक यदि धन होवै तो ऐसे नैवेद्यों को अर्पण करे ॥ ३४ ॥

जुहुयान्मूलमन्त्रेण षोडशर्चाऽवदानतः ।
धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः ॥ ४१ ॥
अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ।
मूलमन्त्रं जपेद्ब्रह्म स्मरन्नारायणात्मकम् ॥ ४२ ॥
दत्त्वाऽऽचमनमुच्छेषं विश्वक्सेनाय कल्पयेत् ।
मुखवासं सुरभिमत्ताम्बूलाद्यमथार्हयेत् ॥ ४४ ॥
उपगायन् गृणन्नृत्यन् कर्माण्यभिनयन्मम ।
मत्कथाः श्रावयन् शृण्वन् मुहूर्तं क्षणिको भवेत् ॥ ४४ ॥
स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥ ४५ ॥
शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ।
प्रपन्नं पाहि मामीश ! भीतं मृत्युग्रहार्णवात् ॥४६ ॥
इति शेषां मया दत्तां शिरस्याधाय सादरम् ।
उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः ॥ ४७ ॥
अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् ।
सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः ॥ ४८ ॥

---

भाषा टीका ।

उवटन लगाना तैल मर्दन दंत धावन दर्पण दिखाना पंचामृतादि अभिषेक करना और अन्नादिकों का भोग देना गान करना नृत्य करना ये सब बात रोज होवै या एकादशि आदि पर्व के दिन होवैं ॥ ३५ ॥

फिर मेखला गर्त वेदि आदिकों से बने हुये कुंड मे अग्नि को स्थापन करके चेतन किये अग्नि को चारों तरफ से हाथ से बटोर ॥ ३६ ॥

फिर चारों ओर कुशों से परिस्तरण करै फिर अन्वाधान विधि से सेचन करके होम के सब पदार्थों को प्रोक्षणी के जल से प्रोक्षण करै फिर उस अग्नि मे मेरा ध्यान करै ॥ ३७ ॥

तपाये हुये सुवर्ण सरीकी कांती वाले शंख चक्र गदा पद्म इनसे शोभित चार भुजा वाले पद्म के केसर सरीके वर्ण पीत वस्त्र को पहिरे हुये ॥ ३८ ॥

प्रकाश मान किरीट कडा कौंधनी उत्तम बाजुबंद इन से शोभित हृदय मे श्रीवत्स चिन्ह से शोभित कौस्तुभ युक्त वन माला युक्त ॥ ३९ ॥

ऐसी मूर्ति का ध्यान करके पूजन करके घृत मे डुबाई हुई समिधाओं को अग्नि मे रख कर मंत्र से दक्षिण परिधि से लेकर उत्तर तक घृत की धारा छोडना आघार फिर दूसरे एक मंत्र से होम करना आज्यभाग इन को कर के फिर घृत मे भीजी हुई हविष पदार्थ को अग्नि में अष्टाक्षर नारायण मंत्र से होम करै ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मूलमन्त्रेणाष्टाक्षरेण तथा षोडश ऋचो यस्मिंस्तेन पुरुषसूक्तेन चावदानतः प्रत्यृचमाहुतिग्रहणेनेत्यर्थः । पुरुषसूक्तेनारायणपक्षे स एव मूलमन्त्रस्तेनैव प्रत्यृचमवदानतो होम इति मन्त्रैः स्वाहान्तैर्नाममन्त्रैः यथान्यायं पूजाक्रमेणैव अग्नये स्विष्टकृते स्वाहेत्येवं स्विष्टकृतं च हुत्वा ॥ ४१ ॥

ततो वह्निस्थं भगवन्तमन्तर्यामिणमभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो नन्दादिभ्योऽष्टदिक्षु बलिं हरेत् ततः पूजास्थानमागत्य देवस्याग्रे समुपविश्य यथाशक्ति मूलमंत्रं जपेत् ॥ ४२ ॥

तत्र उभयत्र भगवतो भोजनसमाप्तिं ध्यात्वा आसनं दत्वा उच्छेषं विष्वक्सेनाय कल्पयित्वा तदनुज्ञया पश्चात्स्वयं भुञ्जीत ततः सुरभिमत्सुगन्धवत्ताम्बूलाद्यं मुखवासं दत्वाऽथ पुनरप्यर्हयेत्पुष्पाञ्जलिना पूजयेत् ॥ ४३ ॥

अभिनयन्स्वाभिप्रायाविष्कुर्वन् क्षणिको वैयग्र्यं परित्यज्य लब्धावसरो भवेत् ॥ ४४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्तवस्तोत्राणां भेदं दर्शयति । पौराणैः प्राकृतैरपीति ॥ ४५ ॥

कथं प्रणामेदित्यपेक्षायामाह । शिर इति । बाहुभ्यां दक्षिणोत्तराभ्यां परस्परं मम दक्षिणोत्तरौ पादौ गृहीत्वा बद्धा पृष्ठतः परस्परं निबद्धाभ्यां कृतापराध इव प्रपन्नमित्यादिविज्ञप्त्या च प्रणमेत् ॥ ४६ ॥

ततः शेषाग्रहणपूर्वकं वैकल्पिकोद्वासनप्रकारमाह । इतीति अनयैव प्रार्थनया शेषां निर्माल्यं मया दत्तां ध्यात्वा शिरसाधाय धृत्वा यद्युद्वासयेत्तर्हि प्रतिमायां यन्न्यस्तं ज्योतिस्तत् पुनरपि हृत्पद्मस्थज्योतिष्येवोद्वास्यमुद्वासनीयम् ॥ ४७ ॥

एतेष्वधिष्ठानेषु किं मुख्यमित्यपेक्षायामाह । अर्चादिष्विति । यदा यत्र श्रद्धा तदा तत्र तदधिष्ठाने मुख्यामुख्यत्वम् कुतः यतः सर्वभूतेष्विति ॥ ४८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता—
### दीपिकादीपिनी टिप्पणी

अष्टाक्षरेण ॐ नमो नारायणायेति मन्त्रेण नाममन्त्रैरिति धर्माय स्वाहेत्यादिमन्त्रैः स्विष्टकृतम् तत् संज्ञकं कर्म यथा स्यात्तथा हुत्वेति शेषः चोऽत्र धर्मादिनिमित्तकहोमं समुच्चिनोति ॥ ४१ ॥

मूलमन्त्रमिति सार्द्धकम् । नारायणात्मकं नारायणरूपं शुद्धं स्मरन्निति स्मरणे निर्विशेषस्मरणं व्यावर्त्यते ततो मन्त्रजपानन्तरम् उभयत्र प्रतिमायां वह्नौ च ताम्बूलाद्यमित्याद्यशब्देन कर्पूरखदिरचूर्णगुवापूगपरिग्रहः ॥ ४२ ॥ ४३ ॥

स्वामिमात्रिति गोपीवल्लियोगदर्शनवलम्ब्योक्तम् ॥ ४४ ॥

पौराणैः प्राचीनैरार्षैरित्यर्थः प्राकृतैरर्वाचीनैस्तत्र स्तवानां प्राकृतत्वं भावसाधनत्वेन तथा प्रतीतेः स्तोत्राणां पौराणत्वं करणसाधनत्वेन तथा प्रतीतेरित्यर्थक्रमेण व्याख्येयम् ॥ ४५ ॥

"अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे । जपहोमनमस्कारान् न कुर्यात् केशवालये" इत्यतिनिकटे प्रणामनिषेधाद्दूतीयपक्षमाह यद्वेति ॥ ४६ ॥

उद्वासयेद्विसर्जयेत् ॥ ४७ ॥

अर्चादिष्वित्यादिना सूर्योऽग्न्यादिपरिग्रहः । प्रह्लादादिश्रद्धया हिरण्यकशिपुस्तम्भादौ सुलभत्वदर्शनात् सर्वभूतेष्वित्युक्तम् ॥ ४८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

धर्मादिमन्त्रैः धर्मादिभ्यश्च यथान्यायं हविर्जुहुयादिति शेषः पुनः स्विष्टकृतं कुर्यात् ॥ ४१ ॥

नारायणात्मकं मूलमन्त्रमष्टाक्षरम् ॥ ४२—४६ ॥

ज्योतिरात्मरूपं ज्योतिः ज्योतिषि अन्तरात्मनि ॥ ४७—५१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो मूलमन्त्रेण श्रीमदष्टाक्षरस्वाहान्तेन षोडशर्चावदानतः पुरुषसूक्तस्य षोडशभिः ऋग्भिर्वान्यवदानानि तैश्चाज्यप्लुतं हविर्जुहुयात् ततो यथान्यायं धर्मादिभ्योऽङ्गदेवता आवरणदेवता अस्त्राणि भूषणानि पार्षदाश्च संगृह्यन्ते ततः स्विष्टकृतं जुहुयात् ॥ ४१ ॥

ततो वह्न्यावाहितं भगवन्तमभ्यर्च्य पार्षदेभ्यो नन्दादिभ्यः बलिं हरेदष्टदिक्षु दद्यात् नारायणात्मकमिति मन्त्रदेवतयोरैक्यभावना विधीयते ब्रह्म स्मरन्मामनुध्यायन् ॥ ४२ ॥

ततो विष्वक्सेनायाचमनं समर्प्य उच्छेषं भगवन्निवेदितं कल्पयेत्समर्पयेत् ततः सुरभिमत्कर्पूरादियुक्तं ताम्बूलादिकं मुखवासं समर्पयेत् अथार्हयेत्पुनः पुष्पाञ्जलिना पूजयेत् ॥ ४३ ॥

मम कर्माणि चेष्टितानि मुहूर्तं यथोऽस्वाास्तीति तथा प्रत्यर्थीयष्ठक् मुहूर्तं क्षणावन्नयन्नित्यर्थः ॥ ४४ ॥

उच्चावचैर्नानाविधैर्वेदोक्तैः पुराणोक्तैः प्राकृतैर्द्रविडादिगाथात्मकैः ॥ ४५ ॥

कृत्वा निधाय मृत्युग्रहार्णवान्मृत्यादितुल्यात्संसाराद्भीतं तत्र ग्रहः पिशाचः गृहेति पाठे तेन संसारो लक्ष्यते मृत्युतुल्यादर्णवतुल्याच्च गृहादित्यर्थः ॥ ४६ ॥

मया दत्तां दत्तमिव भावितां शेषां मदुपभुक्ततुलसीं सादरं यथा तथा शिरस्याधाय धृत्वा उद्वास्यं चेत् ज्योतिर्मयरूपम् उद्वासयेत् क्वेत्यत आह । तज्ज्योतिः पुनर्ज्योतिष्यन्तरात्मनि उद्वासयेत् ॥ ४७ ॥

इत्थमर्चाद्यन्यतमे श्रद्धानुसारं तत्र मामर्चयेत् इत्थं भावयेत्याह । सर्वभूतेष्विति । आत्मनि स्वस्मिन्नहमवस्थितः अन्तः प्रविश्य धारकत्वेन स्थितः अत एव सर्वात्मा सर्वशरीरकः ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धर्मादिमन्त्रैः धर्मादिभ्यश्च यथान्यायं हविर्जुहुयादिति शेषः पुनः स्विष्टकृतं कुर्यात् ॥ ४१ ॥

अभ्यर्चायामिति पाठे अभिमुखो भूत्वा अर्चायां सन्निहितं भगवन्तं नमस्कुर्यादित्यर्थः ॥ ४२ ॥

सुरभिमन्मुखवासताम्बूलाद्यं च हवनानन्तरं चामराद्युपचारैः अर्हयेत्सम्भावयेत् ॥ ४३ ॥

न केवलम् उपगायन् गृणान्नृत्यंश्च किन्तु मम कर्माणि अन्यैः कीर्तयित्वाभिनयन् सर्वेषां प्रकाशयन् अर्थान्तरं चाह । मत्कथा इति । अनेनाभिनयकन्दार्थोऽपि विवृतः किमुक्तं स्यादत्राह । मुहूर्तं क्षणिक इति । मत्कथार्थमेव मुहूर्तः क्षणश्चाकाङ्क्ष्येत्यस्मिन्नर्थे ठप्रत्ययः मत्कथातिवाहितसर्वकालो भवेदित्यर्थः ॥ ४४ ॥

स्तवैर्मुक्तकश्लोकाभिवन्दनैः ॥ ४५ ॥

परस्परं बद्धाभ्यां बाहुभ्यां सह शिरः मत्पादयोः कृत्वा ॥ ४६ ॥

शेषां मालात्ततादिवाने शेषोऽस्त्री अन्त्यादिमनुपयुक्तः मादर्पणादिदाने स्त्रीति यादवः ॥ ४७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत्र येष्वर्चादिषु यथा श्रद्धा तथा मामर्चयेत् ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पञ्चरात्रे विशेषश्चोक्तः—

पुनराचमनं दद्यात्करोद्वर्त्तनमेव च ।
सकर्पूरं च ताम्बूलं कुर्य्यान्नीराजनं ततः ॥

गारुडे च—

अथ भुक्तवते दत्वा जलैः कर्पूरवासितैः ।
आचमनं च ताम्बूलं चन्दनैः करमार्जनम् ॥
पुष्पाञ्जलिं ततः कृत्वा भक्त्यादर्शं प्रदर्शयेत् ।
नीराजनं पुनः कार्य्यं कार्पूरं विभवे सति ॥

अगस्त्यसंहितायाम्—

स्नेहसंयुक्तविपुलवर्त्तिकाभिरनेकधा ।
आरात्रिभिरनेकाभिः स्थापिताभिः प्रयत्नतः ॥
पद्मस्वस्तिकरूपेण हंसाकारेण चानघ ! ।
भ्रामयेद्रघुनाथस्य पुरस्तात्प्रयतोऽन्वहम् ॥

अत्र विशेषो हरिभक्तिविलासे द्रष्टव्यः ॥ ४२ ॥ ४३ ॥

क्षणिकः गानादिमयतयोत्सवाविष्टो भवेत् ॥ ४४ ॥

स्तवैः स्वनिर्मितैः क्रियात्वेन निर्देशात् कर्तृजन्यत्वापत्तेः उच्चावचैर्नानाप्रकारैः स्तूयत एभिरिति स्तोत्रैः करणतया निर्देशेन पूर्वसिद्धत्वापत्तेः पौराणैरित्युपलक्षणं तान्त्रिकैः श्रौतैश्च प्राक्तैरधुनान्येन निर्मितैश्च यथोक्तं कालिकापुराणे—

यः स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः ।
क्रियते भक्तियुक्तेन वाचिकस्तूत्तमस्तु सः ॥ ४५ ॥

दूरतो नमस्कारमुक्त्वा किञ्चिद्दूरत आह । शिर इति । अतिनिकटे गर्भमन्दिरे च तन्निषेधात् टीकायां द्वितीयं पक्षमाह अग्रेति यदुक्तम्—

अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे ।
जपहोमनमस्कारान्न कुर्य्यात्केशवालये ॥

इति गौतमीयेतु विशेषः—

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा ।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥

आगमे जानुभ्यां चैव बाहुभ्यां शिरसा वचसा धिया ।
पञ्चाङ्गकः प्रणामः स्यात्पूजासु प्रवराविमाविति ॥ ४६ ॥

ज्योतिषि महागृहाग्रादौ पृथक्कृतं ज्योतिरिव तद्रूपं ज्योतिर्हृद्येवोद्वासयेदित्यर्थः ॥ ४७ ॥

यद्यप्येवमर्चायामेव प्राधान्यमुक्तं तथापि श्रद्धैव ममाविर्भावकारणं यां विना साक्षाद्भूतस्यापत्यस्य ममोपलब्धिर्विराड्विदुषामित्यादिवत् स्यादित्यभिप्रेत्य श्रद्धाया आवश्यकत्वं दर्शयितुमाह । अर्चादिष्विति । सत्यां तु श्रद्धायां न च मम स्वतः कुत्रापि दौर्लभ्यं हिरण्यकशिपुस्तम्भादौ च सुलभत्वदर्शनादित्याह । सर्वभूतेष्विति ॥ ४८ ॥ ४९ ॥



श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यथान्यायं पूजा क्रमेण मन्त्रैः स्वाहान्तैः अग्नये स्विष्टकृते स्वाहेत्येवं स्विष्टकृतं च हुत्वा ॥ ४१ ॥

नारायणस्वरूपं ब्रह्म स्मरन् मूलमन्त्रं जपेत् उच्छेषं विश्वक्सेनाय कल्पयित्वा तदनुज्ञया स्वयं भुञ्जीतेति श्रीस्वामिचरणाः ॥ ४२ ॥ ४३ ॥

क्षणं उत्सवस्तेन दीव्यतीति क्षणिकः उत्सवमग्नो भवेदित्यर्थः ॥ ४४ ॥

स्तवस्तोत्रयोरार्षपौरुषेयत्वेन भेदः कल्प्यः प्रसीद भगवन्निति विज्ञापयन् दण्डवद्भूमौ पतन् वन्देत ॥ ४५ ॥

तत्र दण्डवद्वन्दने प्रकारमाह । शिर इति

अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे ।
जपहोमनमस्कारान्न कुर्य्यात् केशवालये ॥

इत्यग्रपृष्ठादौ प्रणतिनिषेधान्मत्पादयोर्दक्षिणपार्श्वे किंचिद्दूरे शिरः कृत्वा वन्देत कीदृशं बाहुभ्यां च परस्परं सम्मुखीभूतकर्कमुद्राभ्यां संहितमिति शेषः । किं ब्रुवाण इत्यपेक्षायां प्रपन्नमित्यर्द्धम ॥ ४६ ॥

इति वन्दनानन्तरं शेषां निर्माल्यं मया कृपया दत्तां ध्यात्वा शिरस्याधाय ज्योतिर्मदीयं सैकतप्रतिमादिस्थमुद्वास्यं चेत् पुनरपि ज्योतिषि स्वहृत्पद्मस्थे एव उद्वासयेत् उत्कर्षेण वासयेत् ॥ ४७ ॥

यद्यप्येवमर्चायामेव प्राधान्यमुक्तं तदपि श्रद्धैव ममाविर्भावे कारणम् यां विना साक्षाद्भूतस्याप्यस्य ममोपलब्धिर्विराड्विदुषामित्यादिवन्न स्यादित्यभिप्रेत्य श्रद्धाया आवश्यकत्वं दर्शयितुमाह । अर्चादिष्विति । अधिष्ठानेषु प्राधान्यमेव दर्शयितुमर्चाद्या उक्ताः किं तु श्रद्धाधिक्ये सति मम सर्वं वस्त्वेवाधिष्ठानं हिरण्यकशिपुस्तम्भादावपि मत्सुखमस्य दर्शनादित्याह । सर्वभूतेष्विति ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

मूलमन्त्रेण पञ्चपदेन सर्वमन्त्रेषु मुख्येन कृष्णस्तथैकोऽपि जगद्धितार्थं शब्देनासौ पञ्चपदो विभातीति श्रुतेः मम मूर्तिभूतेनेत्यर्थः । यदा तु मूर्त्यन्तरद्वारा मां यजेत तदा तु मन्त्रान्तरेण जुहुयादिति सूचयितुमाह । षोडशर्चावदानत इति । षोडशभिः पुरुषसूक्तऋग्भिर्यदवदानं प्रत्यृचमाहुतिग्रहणं तेन जुहुयात् पुरुषसूक्तेन यजनपक्षे स एव मूलमन्त्रः तेनैव प्रत्यृचमवदानेन होम इत्यर्थः । मन्त्रैः स्वाहान्तैर्नाममन्त्रैर्यथान्यायं यथासम्भवम् अग्नये स्विष्टकृते स्वाहेत्येवं स्विष्टकृतं च हुत्वा ॥ ४१ ॥

सन्निहितं मद्रूपमभ्यर्च्याथ नमस्कृत्य पार्षदेभ्योऽष्टदिक्षु बलिं हरेत् ततोऽर्चनस्थलमागत्य ममाग्रे यथाशक्ति मूलमन्त्रं जपेत् पक्षान्तरे ब्रह्म पुरुषसूक्ताख्यं वेदं नारायणात्मकपुरुषात्मकं स्मरन् ध्यायन् जपेत ॥ ४२ ॥

ततः कृतभोजनं मां ध्यात्वा आचमनं दत्वा उच्छेषं मधुच्छिष्टमन्नादिकम् विष्वक्सेनाय कल्पयेत् ततः सुरभिमत्

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥ ४९ ॥
मदर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेद्दृढम् ।
पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान् ॥ ५० ॥
पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् ।
क्षेत्रापणपुरग्रामान् दत्त्वा मत्सार्ष्टितामियात् ॥ ५१ ॥
प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥ ५२ ॥
मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ।
भक्तियोगं स लभते एवं यः पूजयेत माम् ॥ ५३ ॥
यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ।
वृत्तिं स जायते विड्भुग्वर्षाणामयुतायुतम् ॥ ५४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुगन्धवत्ताम्बूलाद्यं मुखवासं दत्वा अथ पुनरर्हयेत् पुष्पाञ्जलिं निक्षिपेत् ॥ ४३ ॥

अभिनयन् स्वाभिप्रायाविष्कुर्वन् क्षणिको लब्धावकाशः ॥४४ ॥
प्राकृतैरपि स्तोत्रैः स्तुत्वा हे भगवन् ! प्रसीदेति विज्ञाप्य दण्डवन्नमेत ॥ ४५ ॥

प्रणामप्रकारं दर्शयति । शिर इति । शिरः मत्पादयोर्मध्यगं कृत्वा बाहुभ्यां च परस्परं मम दक्षिणोत्तरौ पादौ गृहीत्वा मृत्युग्रहार्णवात् मृत्युः जन्ममरणप्रवाहलक्षणः संसारः सः एव व्यामोहकत्वाद्ग्रहः पिशाचः दुस्तरत्वादर्णवस्तस्माद्भीतं हे ईश ! प्रपन्नं त्वां शरणं प्राप्तं मां पाहीति विज्ञप्त्या च प्रणमेत् ॥ ४६ ॥

शेषां निर्माल्यं मया दत्तां ध्यात्वा शिरस्याधाय नमस्कारेण स्वीकुर्यादित्यर्थः । ज्योतिर्मद्रूपं ज्योतिषि स्वान्तर्यामिणि मयि उद्वासयेत् ततो भुञ्जीत ॥ ४७—४८ ॥

---

भाषा टीका ।

फिर मूल मंत्र से तथा पुरुष सूक्त की षोडश ऋचाओं से आहुति करके धर्मादिकों को अपने नाम मन्त्रों से होम करे फिर अन्त में स्विष्टकृत नाम का होम करे ॥४१॥

फिर हमारा पूजन करके नमस्कार करके पार्षदों को भाग देवे फिर नारायण रूप ब्रह्म का स्मरण करके मूल मंत्र का जप करे ॥ ४२ ॥

फिर भगवान् को आचमन कराकर बाकी प्रसाद विश्वक्सेनजी को अर्पण करे फिर भगवान् को मुख का सुगंधि पान सुपारी आदिक देवे ॥ ४३ ॥

फिर गान करै नृत्य करे कथा कहै मेरे चरित्रों का अनु करण करै मेरी कथा सुनावे सुनै फिर मुहूर्त भर प्रेम में निश्चित होजावे ॥ ४४ ॥

छोटे बडे स्तोत्र पुराणों के अथवा भाषा के स्तोत्रों से स्तुति करके फिर हे भगवन् प्रसन्न होवो ऐसा कहकर दंड की नाई पृथिवी पर गिरके प्रणाम करै ॥ ४५ ॥

मेरे चरण की तरफ शिर रखकर दोनों भुजों को परस्पर जोड कर कहै कि हे ईश ! इस संसार रूपी घोर पिशाच या समुद्र से मेरी रक्षा करो ॥ ४६ ॥

इस प्रकार करके फिर मानो मेरी दी हुई प्रसादी को आदर पूर्वक मस्तक पर रखै और जब चल मूर्ति विना प्रतिष्ठा की होवे तो अपने हृदय जोति ही में उस मूर्ति की ज्योति का विसर्जन कर देवै ॥ ४७ ॥

मूर्ति आदिकों में जब जहां श्रद्धा होवे तब तहां मेरा पूजन करै सर्व भूतों में तथा अपने आत्मामें मैं सर्वत्र ही पूर्ण हूं ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उभयतः इहामुत्र च ॥ ४९ ॥

समर्थं प्रत्याह । मदर्चामिति त्रिभिः । पुष्पोद्यानानि च कारयेत् पूजायात्रोत्सवाश्रितान् पूजा प्रत्यहम् यात्राविशिष्टे पर्वणि बहुजनसमागमः उत्सवो वसन्तादिमहोत्सवः तदाश्रितान् क्षेत्रादीन् दत्वा ॥ ५० ॥

पूजायात्रोत्सवाश्रितानित्यस्य विवरणम् पूजादीनामिति । प्रवाहार्थं सन्तताप्रवृत्त्यर्थम् मत्सार्ष्टितां मत्समानैश्वर्यम् ॥ ५१ ॥

कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च ।
कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे श्रीभगवदुद्धवसम्वादे
सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रतिष्ठादीनां व्यस्तसमस्तानां फलमाह । प्रतिष्ठयेति । मत्सा-म्यतां मया साम्यमित्यर्थः ॥ ५२ ॥

सकामं प्रत्युक्तमहेतुकभक्तं प्रत्याह । मामेवेति । अहैतुको भक्ति-योग एव कथं भवति तत्राऽऽह । भक्तियोगमिति ॥ ५३ ॥

दातुः फलमुक्त्वापहर्तारं निन्दति । य इति । विड्भुक् विष्ठा-भोजी कृमिः ॥ ५४ ॥

कर्तुर्यत्फलं तदेवान्येषामपीत्याह । कर्तुरिति । सारथेः सह-कारिणो हेतोः प्रयोजकस्याऽनुमोदितुश्च प्रेत्यैतत्फलमित्यन्वयः कुतः यतः कर्मणामेते भागिनो भागार्हाः तत्रापि विशेषमाह । भूयसि कर्मणि सारथ्यादौ च भूयोऽधिकं फलमिति ॥ ५५ ॥

पयः पत्रादिमात्रेण पूजितो यः परं पदम् ।
प्रागेव दिशति प्रीतः स कृष्णः शरणं मम ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

क्रियायोगपथैः मदर्चनलक्षणोपायप्रकारैः ॥ ४९ ॥

मन्दिरं कारयित्वा मदर्चां सम्यगिष्ठापयोदिति वाच्ये वैपरीत्योक्तिर्मन्दिरेऽनद्यार्चाप्रतिष्ठापनज्ञापनाय भवापवर्गो भ्रमतो यदा भवेदितिवत् । विशिष्टे पर्वणि अक्षयतृतीयादौ वसन्तादौत्सवादिना होलिकाहिन्दोलादिमहः । तदाश्रितान् ते पूजादय आश्रिता अधीना येषां क्षेत्रादीनां तान् दत्त्वेति परतोऽन्वयाभ्युपगमः ॥ ५० ॥

विभवे सत्यन्वहम् ॥ ५१ ॥

साम्यमित्यार्षम् अतएव इत्यर्थं इत्युक्तम् ॥ ५२ ॥

नैरपेक्ष्येण भक्तिं विना सालोक्यादि सुखेष्वपेक्षयेण । एवं निष्कामतया भक्तियोगं प्रेमाणम् ॥ ५३ ॥

सुरविप्रयोरिति । सामान्योक्तिर्बहिर्मुखानामपि तत्प्रलोभना-नार्थम् ॥ ५४ ॥

तत्रापि तुल्यफलत्वेऽपि ॥ ५५ ॥

कीर्त्तनात्मकयज्ञेन यः सन्तुष्टः शुनोऽपि हि ।
तं चैतन्यं प्रपद्येऽहं गान्धर्वीभावकान्तिकम् ॥

इति श्रीमद्भागवतव्याख्याने एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मया साम्यं यस्य स मत्साम्यः तस्य भावो मत्साम्यता नैरपेक्ष्येण ॥ ५२—५३ ॥

विड्भुग् अमेध्यभोजी ॥ ५४ ॥

सारथेर्हेतोः सहकारितया हेतुभूतस्य भूयः भूयिष्ठम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तविंशोऽध्यायः ॥ २७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपसंहरति । एवमिति । क्रियायोगानां पथिभिर्मार्गैः प्रका-रैरिति यावत् उभयतः इहामुत्र चाभीप्सितां सिद्धिं फलं विन्दति लभते ॥ ४९ ॥

शक्तं प्रत्याह । मदर्चामिति । तावद्दृढं मन्दिरं कारयेत्तत्र मदर्चां मत्प्रतिमां प्रतिष्ठाप्य पुष्पोद्यानानि च कारयेत् ॥ ५० ॥

महापर्वस्वन्वहं च पूजादीनां प्रवाहार्थं सन्ततानुवृत्त्यर्थं पूजाद्याश्रितान् क्षेत्रादीन् दत्त्वा आराधकेभ्य इति शेषः । मद्-भूतिं वा मत्सार्ष्टितां मत्समानैश्वर्यं प्राप्नुयात् तत्र यात्रावि-शिष्टेषु पर्वसु महाजनसमागमः उत्सवो वसन्तादिमहोत्सवः तैराश्रितांस्तद्युक्तानित्यर्थः । तान् क्षेत्रादीन् इति सम्बन्धः ॥ ५१ ॥

सार्वभौमं सर्वपृथ्वीपतित्वं सद्मना मन्दिरनिर्माणेन त्रिभिः प्रतिष्ठासद्मपूजनैः मत्साम्यतां मत्सारूप्यमिति यावत् ॥ ५२ ॥

यस्तु नैरपेक्ष्येण फलाभिसन्धिविरहेण मामित्थं पूजयेत्स भक्तियोगं लभते तेन च भक्तियोगेन मामेव विन्दते प्राप्नोति ॥ ५३ ॥

दत्त्वा मत्सार्ष्टितामियादिति दानफलमुक्तं किं तदपहारफल-मित्यत आह । य इति । सुरविप्रयोर्देवब्राह्मणयोः विड्भुगमेध्य-भोजी ॥ ५४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलमिदं फलं दात्रपहर्त्रोरेवापि त्वन्येषामपि केषांचिदित्याह । कर्तुरिति । कर्तुः प्रयोज्यस्य सारथेः सहकारिणः हेतोः प्रयोजकस्यानुमोदितुश्चैतत्फलं कुतः यतः कर्मणां दानापहाररूपाणां भागिनः भोगिन इति पाठे तत्फलभोगिनः तत्रापि विशेषमाह । तत्फलं दानापहारादिफलं प्रेत्य परलोके भूयो भूयः उत्तरोत्तरं भूयिष्ठमित्यर्थः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अर्चानुभावतः प्रतिमासामर्थ्यात् ॥ ४९—५० ॥

प्रवाहरूपेण प्रवर्तनार्थं प्रतिष्ठागृहकरणपूजानां फलतारतम्यमाह । प्रतिष्ठयेत्यादिना । मत्साम्यतां निर्दुःखानन्दानुभवरूपताम् ॥ ५१ ॥ ५२ ॥

ज्ञानं विना प्रतिष्ठादिभिरेव साम्यता कथं स्यादत्राह । मामेवेति । नैरपेक्ष्येण भक्तियोगेनैव मां विन्दति । साम्यं लभते—

निर्दुःखत्वं हरेः साम्यं न तादृशसुखोत्मता ।
सर्वोत्तमस्तदानन्दः कथं कस्यचिदाप्यते ॥
आधिपत्यं त्रिलोकस्य योग्यानामिन्द्रता स्मृता ।
अयोग्यानां त्रिलोकेऽपि पूज्यत्वं समुदाहृतम् ॥
तद्भवेत्परया भक्त्या विष्णोरालयकारिणः ।
ततोऽप्युद्रिक्तया भक्त्या विष्णुं पूजयतः सदा ॥
अवाप्यते ब्रह्मलोकस्तदुद्रिक्तश्च मुच्यते ।

इति मानाद्विशेषोऽवगन्तव्यः नन्वेवं तर्हि प्रतिमादिपूजा व्यर्थेति तत्राह । एवमिति । य एवं मां पूजयेत्स भक्तियोगं लभते तेन मामाप्नोतीति शेषः । अनेन ज्ञानभक्तिद्वारेण भगवत्प्राप्तिरित्युक्तं भवति ॥ ५३ ॥

देवस्वापहरणे महान्दोष इत्याह । य इति ॥ ५४ ॥

न केवलं प्रतिमादिपूजाकर्तुरुक्तं फलं साहाय्यकर्तॄणामप्यतोऽयं फलं भवतीत्याह । कर्तुरिति । सारथेः कार्यहेतोः प्रेत्य कर्मणां फलभागिनो भवन्तीत्यर्थः । फलतारतम्यमाह । भूय इति । भूयसि महति । तत्फलं भूयो भवति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मन्दिरं कारयित्वा मदर्चां संप्रतिष्ठापयेदिति वाक्ये नैरपेक्ष्योक्तिस्तत्रावश्यकतत्प्रतिष्ठापनज्ञापनाय ॥ ५०—५२ ॥

नैरपेक्ष्येण भक्तिं विना पद्मान्तरसूचनेन । तत्रापि नैरपेक्ष्येणेत्यर्थः ॥ ५३ ॥ ५४ ॥

न केवलं दात्रपहर्त्रोरेव तत्तत्फलमपि तु तत्तत्सहायादीनामपीत्याह । कर्तुरिति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उभयतः इहामुत्र च ॥ ४९ ॥

समर्थं प्रत्याह । पूजा प्रात्यहिकी यात्रा जन्माष्टम्यादाश्च उत्सवो वसन्तादिमहोत्सवश्च तान् अस्माकमयं भार इति सद्भावेन आश्रिता ये धार्मिका धनिनस्तान् मन्दिरादिकान् कारयेत् ॥ ५० ॥

ते धनिनोऽपि कृतार्था भवन्तीत्याह । पूजादीनामिति । मत्सार्ष्टितां मत्समानैश्वर्यम् ॥ ५१ ॥

प्रतिष्ठादीनां पार्थक्येन सामस्त्येन च फलमाह । प्रतिष्ठया भगवत्प्रतिमास्थापनेन सद्मना मन्दिरनिर्माणेन पूजादिनिर्वाहेण मत्साम्यतां मत्सारूप्यं स्वार्थे ष्यञ् ॥ ५२ ॥

यस्तु नैरपेक्ष्येण ज्ञानकर्मकामनान्तरराहित्येनैव एवं मां पूजयेत् अर्चनं कुर्यात् यद्वा धनक्षेत्रापणादिदानेन पूजां कारयेत् स भक्तियोगं प्रेमाणं लभते ततश्च भक्तियोगेन प्रेम्णा मामेव विन्दति ॥ ५३ ॥

भगवत्पूजार्थं धनक्षेत्रादि दातुर्द्विविधं फलमुक्तं तदपहर्तुः फलमाह । य इति ॥ ५४ ॥

अपहर्तुर्यत् फलं तदेव तत्सहायादीनामपीत्याह । कर्तुरिति । सारथेः सहकारिणः हेतोः प्रयोजकस्य अनुमोदितुश्च प्रेत्य मरणानन्तरं तत्फलमित्यन्वयः कुतः यतः कर्मणामेते भागिनः भागार्हाः तत्रापि विशेषमाह । भूयसि कर्मणि सारथ्यादौ भूयो ऽधिकमेव फलम् ॥ ५५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशे सप्तविंशः सङ्गतः सङ्गतः सताम् ॥ २७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उभयतः इहामुत्र च ॥ ४९ ॥

शक्तौ सत्यां कृत्यमाह । मदर्चामिति त्रिभिः । पूजाद्याभिः तान् सन्निवेशकान् क्षेत्रादीन् दद्यादिति शेषः ॥ ५० ॥

तत्समर्पणफलमाह । पूजादीनामिति । मत्सार्ष्टितां मत्समानैश्वर्यम् ॥ ५१ ॥

प्रतिष्ठादीनां फलमाह । प्रतिष्ठयेति ॥ ५२ ॥

निष्कामस्तत्फलाभिसंधिशून्येन भक्तियोगेन मां प्राप्नोतीत्याह । मामिति । तादृशं भक्तियोगं प्राप्य मत्पूजनजन्येन मदनुग्रहेणैव प्राप्नोतीत्याह । भक्तियोगमिति ॥ ५३ ॥

स्वभक्तौ सहायकारिणां स्वभक्तस्य च फलमुक्त्वाथ स्वभक्तौ विघ्नकर्तुस्तत्सहायकादीनां च फलमाह । य इति द्वाभ्याम् ॥ ५४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सारथेः सहकारिणः हेतोः प्रयोजकस्य अनुमोदितुश्च तत्फलं पूर्वोक्तफलं भवति यतः कर्मणामेते भागिनः भागार्हाः किं च भूयसि अपराधे भूयोऽधिकमेव फलम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तविंशाध्यायार्थप्रकाशः ॥ २७ ॥

---

भाषा टीका।

पुरुष मात्र इस प्रकार से वैदिक और तान्त्रिक क्रिया योग मार्गों से पूजन करता रहै तो मेरे से भुक्ति मुक्ति रूप दोनों मन वांछित सिद्धी को प्राप्त होता है ॥ ४९ ॥

बडा पुख्ता मंदिर बना कर मेरी मूर्ति का स्थापन करै नित्य की पूजा यात्रा उत्सवों के चलने के वास्ते मनोहर फूलों के बगीचा जमीन आदिक लगा देवै ॥ ५० ॥

नित्य प्रति अथवा पर्वादिकों में पूजा तथा उत्सवों के चलने के वास्ते कोई खेत या दुकान सहर ग्राम इनको मंदिर में जो अर्पण करता है सो सकाम हो तो मेरे तुल्य ऐश्वर्य को पाता है ॥ ५१ ॥

मंदिर की प्रतिष्ठा करने से सार्वभौम पद मिलता है मंदिर के बनाने मात्र से त्रिभुवन का सुख मिलता है पूजादिक मात्र करने से ब्रह्म लोक मिलता है तीनों काम करै तो मेरी साम्य मुक्ति को प्राप्त होता है ॥ ५२ ॥

निरपेक्ष भक्ति योग से इन कामों को करै तो ऐसा पूजा करने वाला जो पुरुष सो मेरे भक्ति योग को प्राप्त होकर मेरे को प्राप्त होता है ॥ ५३ ॥

जो कोई अपनी दिई या दूसरे की दिई हुई ब्राह्मण की या देवता की जीविका को हरण करैगा वह तो हजारों वर्ष तक विष्ठा का खाने वाला कीडा होजायगा ॥ ५४ ॥

इन दोनों तरह के कामों में जो करने वाला है या जो किसी प्रकार से कारण है या इस बात का संमति अनुमोदन करता है ये सब मनुष्य परलोक में उन कर्मों के फलों को पाते हैं परन्तु जिसको अधिक सहायता होती है उसको अधिक फल होता है ॥ ५५ ॥

इति श्रीमद्भागवत एकादशस्कंध
सत्ताईस में अध्याय की
भाषा टीका समाप्त ॥ २७ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे सप्तविंशोऽध्यायः ॥ २७ ॥

## अथ अष्टाविंशोऽध्यायः ।

श्रीभगवानुवाच ॥

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।
विश्वमेकात्मकं पश्यन्प्रकृत्या पुरुषेण च ॥ १ ॥

परस्वभावकर्माणि यः प्रशंसति निन्दति ।
स आशु भ्रश्यते स्वार्थादसत्यभिनिवेशतः ॥ २ ॥

तैजसे निद्रयापन्ने पिण्डस्थो नष्टचेतनः ।
मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक् पुमान् ॥ ३ ॥

किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।
वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥

छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः ।
एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ ५ ॥

आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ।
त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ ६ ॥

तस्मान्न ह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः ।
निरूपितेयं त्रिविधा निर्मूला भातिरात्मनि ।
इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ ७ ॥

एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम् ।
न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ।
ज्ञानयोगः पुनश्चासौ समाहृत्य निरूप्यते ॥

इदानीमतिविस्तरेणोक्तं ज्ञानयोगं संक्षेपेण वक्तुमाह । परेषां स्वभावान् शान्तघोरादीन् कर्माणि च । तत्र हेतुः विश्वमिति ॥ १ ॥

विपक्षे दोषमाह । परेति । स्वार्थात् ज्ञाननिष्ठालक्षणात् असति । मिथ्याभूते द्वैतेऽभिनिवेशात् ॥ २ ॥

भ्रंशमेव दृष्टान्ततो दर्शयति । तैजसे राजसाहङ्कारकार्ये इन्द्रियगणे निद्रया आपन्नेऽभिभूते सति । पिण्डस्थो जीवः स्वप्नरूपां केवलं मनोमात्रेण मायां प्राप्नोति ततो मनसि लीने सति नष्टचेतनः सन्मृत्युं वा मृत्युतुल्यां सुषुप्तिं वा प्राप्नोति । यथा तद्वदेव नानार्थदृक् द्वैताभिनिवेशी विक्षेपं लयं च प्राप्नोति । यथा प्राज्ञसम्पर्काद्विश्वस्य भोगलयलक्षणौ भ्रंश एवमनात्मसम्पर्कादात्मनोऽपि स्वरूपभ्रंश इति भावः ॥ ३ ॥

द्वैतासत्यतया स्तुतिनिन्दयोर्निर्विषयत्वं प्रपञ्चयति सार्धैः षड्भिः किं भद्रमिति । अवस्तुनो द्वैतस्य मध्ये किं भद्रं किं वाऽभद्रं कियद्भद्रं कियद्वाऽभद्रमित्यर्थः । अवस्तुत्वमेवाऽऽह । वाचेति । बाह्येन्द्रियोपलक्षणम् वाचा उदितमुक्तं चक्षुरादिभिश्च यद्दृष्टं तदनृतमिति ॥ ४ ॥

नन्वेवं सति देहादिभावानामप्यसत्त्वात्कथं भयहेतुत्वं तत्र सदृष्टान्तमाह । छाया प्रतिबिम्बः प्रत्याह्वयः प्रतिध्वनिः आभासः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शुक्तिरजतादिः एते यथाऽसन्तोऽप्यर्थकारिणो भवन्ति आमृत्युतो मृत्युमभिव्याप्य यद्वा मृत्युञ्जयः यावन्नैव जीवन्ते तावत्पर्यन्तमित्यर्थः ॥ ५ ॥

ननु सृष्ट्यादिश्रुतिभिरेव द्वैतं निरूपितं कथमसत्यं स्यात्तत्राऽऽह । आत्मैवेति सार्धद्वाभ्याम् । त्रायते पाल्यते त्राति पालयति ॥ ६ ॥

अन्यस्मोत्सृज्यादिव्यतिरिक्तात् त्रिविधा आध्यात्मिकादिरूपा भातिः प्रतीतिः ननु कथं निर्मूलं प्रतीयते तत्राऽऽह । इदमिति ॥ ७ ॥

ज्ञानविज्ञानयोर्नैपुणीं निष्ठाम् सूर्यवत्समो भूत्वा ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

असौ सः । समाहृत्य संक्षिप्य । तत्र प्रशंसागर्हाभावे प्रकृत्या गुणसाम्यरूपया । पुरुषेण प्रकृतीक्षणकर्त्रा सह एकात्मकम् एकः सर्वावयवी यः परमात्मा स एवात्मा मूलस्वरूपं यस्य तथाभूतं पश्यन् ॥ १ ॥

विपक्षे प्रशंसागर्हणरूपे विरुद्धपक्षे । मिथ्याभूते परमात्मसत्तां विनेति शेषः ॥ २ ॥

ततः स्वप्नावस्थानन्तरम् । द्वैताऽभिनिवेशी । परमात्मैकदृष्ट्यभावात् ॥ ३ ॥

आगमापायिधर्मेषु यदनपायि तद्धर्मीति रीत्या परमात्मानमन्तरा स्वतन्त्रावस्थितया मतस्य द्वैतस्यावस्तुनो मध्य इत्यादि योजनीयम् ॥ ४ ॥

तत्र आशङ्कायाम् । अर्थकारिणो भ्रमेण व्यवहारप्रयोजका भवन्ति । पूर्वार्थे मृत्योरनन्तरमपि संसारप्रतिभासादर्शनेनेति ॥ ५ ॥

विश्वस्यैकात्मत्वं मनसि कृत्वा शङ्कते । नन्विति । निरूपितं स्वतन्त्रसत्ताकत्वेनैव वर्णितम् । सिद्धान्ते तु प्रकृतेस्तद्बहिरङ्गशक्तित्वे पुरुषस्य च तत्तटस्थशक्तित्वे तदभेदात्तदात्मकस्य विश्वस्यापि तद्रूपत्वात्तद्द्वारात्मन एव सृज्यत्वादित्वं द्वारत्वेऽपि साक्षान्निर्देशः श्रुतौ श्रूयत एव यथा पूर्वमीमांसायां पशुना यजेत व्रीहिभिर्यजेतेत्यादौ पश्वादीनां द्रव्यादिरूपं हविर्द्वारैव करणत्वं सिद्धान्तितं तथोत्तरमीमांसायामपि तत्तद्द्वारैव सृष्ट्यादिक्रियायां कर्मत्वमित्यर्थः ॥ ६ ॥

यस्मात् सृज्यादिवस्तुनः स्वतन्त्रसत्ता नास्ति तस्मात् स्वरूपशक्त्या सृज्यादिव्यतिरिक्तात् सृष्ट्यादीति लेखकभ्रमः ॥ ७ ॥

इदमिति सार्धकम् । इदमाध्यात्मिकादिरूपं मायया वस्तुतस्तत्सम्बन्धाभावेऽपि तत्तत्सम्बन्धप्रत्यायिकया भगवतो बहिरङ्गशक्त्या यथोक्तं तृतीये सेयं भगवतो माया यन्नयेन विरुध्यत इत्यादिना ॥ ८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भगवदन्तर्यामिकं पश्येत् अन्यथा प्रकृतिपुरुषयोः परस्परपूर्णत्वेन द्व्यात्मकत्वमेव स्यात् नत्वेवं द्व्यात्मकत्वं भगवदात्मकत्वज्ञानेन रागद्वेषनिवृत्त्या स्तुतिनिन्दानिवृत्तिः ॥ १ ॥

असत्याभिनिवेशतः सत्यं भूतहितम् अहिताभिनिवेशत इत्यर्थः यद्वा देहगतगुणदोषाणामात्मन्यारोपणादसत्याभिनिवेशेन विश्वामिति प्रकृत्या पुरुषेण च युक्तं चिदचिन्मिश्रप्रपञ्चमेकात्मकं पश्येत् एक ईश्वरः ॥ २ ॥

देहात्माभिमानी प्रबुद्धोऽप्यज्ञः सुप्तप्राय इत्याह । तैजस इति । तैजसशब्दोऽहङ्कारकार्ये देहात्माभिमाने स्वप्नायां वर्तते आपन्नः विनष्टः पिण्डस्थो जीवः नष्टचेतनः सन् ज्ञानलोपहेतुतया मृत्युतुल्यां मायां सूक्ष्मरूपां प्रकृतिं प्राप्नोति प्रकृत्या तिरोहितो भवति नानार्थदृक् देहात्माभिमानी पुरुषः प्रबुद्धोऽपि तद्वत् तत्त्वज्ञानविरहात्सुप्तकल्प इत्यर्थः ॥ ३ ॥

किमद्रमिति । अवस्तुनो द्वैतस्यात्मवस्तुव्यतिरिक्तत्वाविशेषात् देवादिभेदस्य किं कियद्भद्रं देवशरीराद्यभिमानस्य भ्रान्तिरूपत्वाविशेषेण न भद्रत्वम् अभद्रत्वमित्यर्थः वाचोदितं मनसा ध्यातम् अहमभिमानं च यद्देवादिशरीरमनृतं देहगतदेवत्वादिकमात्मन्यसत्यमिति वार्थः ॥ ४ ॥

असद्यावत् गृह्यमाणानामिव देहादीनां भयहेतुत्वं न यथावद् गृह्यमाणानामित्युपपादयति । छायेति । छाया राक्षसत्वेन प्रतीप्रतीयमाना भयहेतुः नत्वनात्मत्वेनानात्मीयत्वेन च प्रतीयमाना इत्यर्थः ॥ ५ ॥

एवं स्तुति निन्दाहेतुभूतरागद्वेषाभावाय चिदचिदात्मके प्रपञ्चे चिदचिद्भेदमुक्त्वा कृत्स्नस्य भगवदात्मकत्वं भगवतः सर्वविधकारणत्वं च प्रतिपादयति । आत्मैवेति । आत्मा परमात्मा सृज्यते सृजतीति उपादानत्वं निमित्तत्वं च दर्शितम् ॥ ६ ॥

तस्माभद्रीति । अब्रह्मात्मकं वस्तु न प्रामाणिकमित्यर्थः । त्रिविधा समवाय्यसमवायिनिमित्तरूपकारणभेदविषया मतिरात्मनि परमात्मनि मूलप्रमाणशून्या तस्यैव सर्वविधकारणत्वादित्यर्थः । परमात्मन एवोपादानत्वे तस्य गुणत्रयकालुष्यव्युदासार्थमाह । इदं गुणमयमिति । गुणमयं सर्वं मायया कृतं प्रकृतिपरिणामरूपं परमात्मस्वरूपे प्रकारिणि मयि कृतमित्यर्थः । शरीरभूतचिदचिद्गता गुणत्रयतद्वश्यत्वादिदोषाः परमात्मानं न स्पृशन्तीत्यभिप्रायः ज्ञानविज्ञाननैपुणं प्रकृत्यात्मविवेकज्ञानं ब्रह्मात्मकत्व विज्ञानकौशलम् ॥ ७ ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यप्येवं दाता तस्मात्स्थावरस्य प्रशस्याः अपहर्त्रादयस्तु निन्द्यास्तथापि प्रशंसानिन्दे न कुर्यादित्याह । परेति । परस्यान्यस्य स्वभावकर्माणि स्वभावानुगुणानि दानापहारसहक्रियाद्यात्मकानि कर्माणि न प्रशंसेत् नापि गर्हयेत् किं तु विश्वमेकात्मकं मदन्तर्यामिकं मच्छरीरभूतं पश्येदित्यर्थः । शरीरभूतं च जगत्प्रकृत्या पुरुषेण च द्व्यात्मकं पश्यन् एवं चिदचिदीश्वरयाथात्म्यज्ञानेन रागद्वेषनिवृत्त्या स्तुतिनिन्दानिवृत्तिरिति भावः ॥ १ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्यथा त्वनर्थं इत्याह । परस्वभावकर्माणीति । यः प्रशंसति निन्दति च सः भवति देहे अभिनिवेशतः आत्माभिमानात्स्वार्थादाशु भ्रश्यते स्वार्थोऽत्र स्वाधिकृतो ज्ञानयोगः ॥ २ ॥

असत्याभिनिवेशस्य स्वार्थभ्रंशहेतुत्वमुपपादयति । तैजस इति । तैजसशब्दोऽत्राहङ्कारकार्ये देहात्माभिमाने लक्षणया वर्तते तस्मिन्निद्रया तत्तुल्यया अविद्यया देहविलक्षणात्मयाथात्म्याज्ञानेन व्यापन्ने प्राप्ते सति पिण्डस्थो देहस्थोऽपि जीवः नष्टचेतनः लुप्तसंज्ञानः मृत्युं वा वाशब्द इवार्थः मृत्युतुल्यां मायां सूक्ष्मरूपां प्रकृतिं प्राप्नोति प्रकृत्या तिरोहितो भवति नानार्थदृक् नानाविधदेहात्माभिमानी पुरुषः प्रबुद्धोऽपि तद्वत्तत्त्वज्ञानविरहात्सुप्तकल्प इत्यर्थः ॥ ३ ॥

ननु देहधर्माणामात्मन्यारोपेण स्तुतिनिन्दयोरित्थमनर्थहेतुत्वेऽपि तेषां तद्गतत्वं पश्यतो निन्दतः स्तुवतश्च न कोऽप्यनर्थ इत्यत आह किं भद्रमिति न वसत्येकरूपतयेत्यवस्तु तस्य द्वैतस्य भिन्नस्य नानाविधस्य देहस्यात्मवस्तुव्यतिरिक्तत्वाविशेषात् किंवत् किं भद्रं किं मङ्गलं किं वाऽभद्रं देवादिशरीरस्य कृम्यादिशरीरस्य च प्रकृतिपरिणामरूपत्वाविशेषान्निषेकगर्भादिकालकृतावस्थाद्यविशेषाच्च भद्रत्वाभद्रत्वरूपेषु किमभद्रत्वादिचिन्तयेत्यर्थः वाचोदितं देवादिशब्दोदितं मनसा ध्यातम् अहमभिमानास्पदं देवादिशरीरं तदनृतं देहगतदेवत्वादिकमात्मन्यसत्यमित्यर्थः अतो देहदृष्ट्यात्मदृष्ट्या च न स्तुतिनिन्दे युक्ते इति भावः ॥ ४ ॥

नन्वात्मनि देहगताकारस्यासत्यत्वे कथं तर्हि तदभिनिवेशमात्रेणानर्थं इत्यपेक्षायामयथावद्गृह्यमाणानामनर्थहेतुत्वं दृष्टान्तमुखेनोपपादयति छायेति । यथा छाया वास्तवत्वेन प्रतीयमाना भयहेतुत्वात्मच्छायेति प्रतीयमाना यथा च प्रत्याह्वयः प्रतिशब्दः स च गिरिगुहागतस्वान्तरशब्दत्वेन प्रतीयमानो भयहेतुर्न त्वात्मीयत्वेन प्रतीयमानः आभासः स्वाप्नो बाधकवर्गः स च जाग्रदवस्थाप्रतिपन्नतुल्यतया प्रतीतो भयहेतुर्न तु स्वाप्नतया असन्तो ह्यर्थकारिणः स्वयमकार्थकरस्वरूपा अपि अयथावद्गृह्यमाणाः कार्यकरा भवन्ति एवं देहादयो भावा अर्थाः आत्मतया प्रतीयमाना आमृत्युतः मृत्युरत्र प्राकृतप्रलयः आप्रलयादित्यर्थः । भयं संसृतिभयं यच्छन्ति ॥ ५ ॥

एवं स्तुतिनिन्दाहेतुभूतरागद्वेषाभावाय चिदचिदात्मकप्रपञ्चे चिदचिद्वैलक्षण्यमुक्त्वाथ कृत्स्नस्य जगतो ब्रह्मोपादानकत्वेन तदनन्यत्वाच्च न स्तुत्यादीत्याह । आत्मैवेति सार्धैस्त्रिभिः । आत्मा परमपुरुषः तदेकात्मकं तदात्मकं चेदं विश्वमात्मैव परमात्मैवेत्यर्थः । तदुपपादयति । सृज्यत इति । स्वयं चिदचिद्विशिष्टाकारेण सृज्यते अवति ह्रियते इत्यैतैः पदैरुपादानत्वमुक्तं सृजतीत्यादिभिर्निमित्तत्वं तच्च विशेषाकारेणैवेत्यवगतं तत्र प्रभुरित्यनेन उपादानत्वोपयुक्तं सर्वशक्तिमत्त्वं विवक्षितं प्रभुः समर्थः सर्वशक्तिरिति यावत् रक्ष्यरक्षकत्वयोरेकस्मिन्ननुपपत्तिद्योतनाय विश्वात्मेत्युक्तम् आत्मा स्वान्तः प्रविश्य प्रशासनेन धारकः कर्मानुगुणं तदात्मेव ईश्वरस्य रक्षकत्वं नाम विश्वस्य शरीरत्वोक्त्या साक्षाद्रक्ष्यत्वं तद्द्वारा त्वात्मन इति फलितं शरीरगतधर्माणां तद्द्वारा शरीरिपर्यवसानं नाम सन्निधापक-त्वमेव ईश्वर इत्यनेन कृत्स्नस्य जगतः संहार्यत्व तद्विभूतित्वावगमात्तदिच्छाप्रतिघातकाभावः फलित इति ॥ ६ ॥

तस्मादिति । तस्मात्स्वनिष्ठस्याब्रह्मात्मकस्य वस्तुनोऽभावात् यद्वा ब्रह्मण एव कृत्स्नप्रपञ्चोपादानत्वान्निश्वाकारेण तस्यैवावस्थितत्वादन्यस्मात्पृथक् सिद्धादात्मनो ब्रह्मणः सकाशादन्यः पृथक्सिद्धो भावः न हि निरूपितः अन्यस्मादात्मा पृथक् सिद्धः तस्मादात्मनः पृथक् सिद्धमित्येवं न निरूपयितुं शक्यमित्यर्थः । ननु वैशेषिकादय ईश्वरस्य निमित्तत्वमेव मन्यन्त इति कथं तस्योपादानत्वमपीत्यतस्तान्निराकुर्वन्नाह । निरूपितेति । त्रिविधा समवाय्यसमवायिनिमित्तरूपा मिथः कारणभेदविषया आत्मनि वैशेषिकाद्यात्मनि भातिराभातिः प्रतीतिरिति यावत् निर्मूला प्रमाणशून्येति निरूपिता यद्वा जगत्कार्ये चैककारणेन मिथोऽभिन्नेन भवितव्यमित्येवं निरूपिता भातिर्निर्मूलेत्यर्थः । प्रमाणाभावोऽपि युक्तेरेव मूलमिति न वाच्यं कालादृष्टसंयोगं प्रति कालस्यैकस्यैव निमित्तोपादानत्वोभयविधकारणत्वस्य तैरप्यवश्याभ्युपगम्यत्वादिति भावः यद्वा यतोऽन्योऽन्या भावो न निरूप्यस्ततो निन्दाप्रशंसोपेक्षारूपेण त्रिविधविषया प्रतीतिर्भ्रमात्मिकेत्याह । निरूपितेति । निर्मूला प्रमाणशून्या केवलं भ्रमरूपेति यावत् निरूपिता निश्चिता ॥ ७ ॥

ननु परमात्मन उपादानत्वे विकाराश्रयत्वापत्तिरित्यत आह । इदमिति । इदं परिदृश्यमानं त्रिविधं निन्दाप्रशंसोपेक्षाविषयत्वेन प्रतीयमानं यद्वा सर्गस्थितिलयरूपावस्थायुक्तं जगद्गुणमयं सत्त्वादिप्रकृतिगुणविकाररूपं विद्धि अतो विकाराः परिणामादयो गुणगता एवेति भावः गुणमयस्य कथं परमात्मोपादानकत्वमित्यतस्तद्विशिनष्टि । मायया कृतं मायया सङ्कल्परूपेण ज्ञानेन गुणेषु प्रविश्य कृतमत उपादानत्वमप्यविरुद्धं तस्य सर्वात्मकत्वादिति भावः । एतदिति । ज्ञानविज्ञाननैपुण्यं ज्ञानं प्रकृतिपुरुषयोः परस्परवैलक्षण्यज्ञानं विज्ञानं ताभ्याम् परमपुरुषस्य विलक्षणात्मज्ञानं तत्र नैपुण्यं कौशलं विद्वान् निन्दति नापि च स्तौति किं तु सूर्यवद्गुणदोषाभिनिवेशरहितश्चरति चरेदित्यर्थः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेः परमस्वातन्त्र्यं तदधीनसत्ताकत्वेन जगतोऽत्यन्तमस्वातन्त्र्यमेतादृशतत्त्वज्ञानेन सत्यबन्धनिवर्तनं नाभद्रज्ञानेनेत्यादिकमुपदिशत्यस्मिन्नध्याये तत्रादौ दुर्जनस्वभावतत्कृतपापकर्मप्रशंसननिन्दाभ्यां सज्जनस्वभावतदनुष्ठितपुण्यकर्मस्तुतिनिन्दाभ्यां चावश्यमवक्तव्यं पुरुषेणेति शिक्षयति । परस्वभावेत्यादिना । परोऽरिपरमात्मनोरित्यतः परः शत्रुः जीवब्रह्मणोर्वैलक्षण्यसत्यतायाः असहमानित्वादिति शेषः । तस्य यः स्वभावः यानि तदाचरितानि पापकर्माणि तानि सर्वाणि न प्रशंसेत् न प्रशंसयेच्च निन्देत् निन्दयेच्च किञ्च परः परमात्मा परे श्रीनारायणे स्वभावः आत्मा मनो यस्य स तथा यद्वा परो लोकबाह्यो ज्ञानी तस्य स्वभावः तेनाचीर्णानि पुण्यकर्माणि च इतरैर्न गर्हयेत् स्वयं न गर्हेच्च प्रत्युत प्रशंसेत् प्रशंसयेच्च एतादृशः पुरुषो दुर्लभ इति तत्राह । विश्वमिति । प्रकृत्यैकतया पुरुषेण हिरण्यगर्भेण सह स्थितं विश्वमेकेन

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

परमात्मानात्मकं व्याप्तमेकात्मकं पश्यन् स यथार्थज्ञानी भविष्यतीत्यतो न दुर्लभ इति अनेन तथा पश्यत एव यथार्थज्ञानं भवतीत्युक्तं भवति

न प्रशंसेत निन्द्यांस्तु प्रशंस्यांश्चैव निन्दयेत्।
उभयं यः करोत्येतदसत्यात्स पतत्यधः॥
यः प्रशंस्यान्न प्रशंसेन्निन्द्यो येन न निन्द्यते।
सोऽपि तद्वदधो याति यतोऽरिवदुदासकः॥

इति वाक्यात् परस्वभावकर्मणां प्रशंसा निन्दा च न कार्येति प्रतीतार्थः किं न स्यादितीयं शङ्का दूरोत्सारितेति ज्ञातव्यम् ॥ १ ॥

उक्तार्थानङ्गीकारे बाधकमाह। परस्वभावेति। परोऽन्यो हरिविमुखत्वेन निन्द्यस्तस्य स्वभावकर्माणि स्तौति परो हरिणा बन्धुत्वः श्रीहरिपरायणः तस्य स्वभावकर्माणि निन्दति स पुरुषः असत्याभिनिवेशतो मिथ्याज्ञानाभिनिवेशतः स्वस्थानाद्भ्रश्यते अन्धं तमो यातीत्यन्वयः यः प्रशंस्यान्न प्रशंसेदित्यादेरप्ययमेवार्थः ॥ २ ॥

असत्याभिनिवेशे निमित्तमाह। तैजस इति। निद्राशब्देन निद्रा सुनिद्रेति द्विविधा निद्रोच्यते तत्र निद्रा स्वापापरपर्याया सुनिद्रा मरणकालीना तथा चैवमस्य श्लोकस्यार्थः तैजसे तैजसाहङ्कारकार्ये श्रोत्रादीन्द्रियगणे मनसि च निद्रया दैनंदिनस्वापेनापन्ने सुप्ते सति पिण्डस्थो जीवो नष्टचेतनः सुप्तो भवति तदा स्वापे जाग्रतामन्यादिवदिच्छया प्रबोधितमनोगतसंस्कारजन्यत्वान्मायां स्वप्नं प्राप्नोति सुनिद्रयापन्ने मृत्युं मरणं प्राप्नोति नानाविधसंस्काराविष्टमनः स्वप्नदशायां नानार्थप्रदं दृष्टं हि जाग्रदाद्यवस्थायां किमु वर्णनमिति भावेनाह। नदिति तन्मन एव नानार्थदं नानाविधविषयप्रत्यायकं हि प्रसिद्धत्वान्मन एव मिथ्याप्रत्ययनिमित्तमिति भावः

तैजसाहंकृतेजाते इन्द्रियग्रामके परात्।
निद्रया वशमापन्ने जीवः स्यान्नष्टचेतनः॥
अतो विष्णोर्वशे सर्वं तेन व्याप्तमिति स्मरेत्।

इति निद्रा चैव सुनिद्रा च द्विधा निद्रा प्रकीर्तिता तत्र निद्रा भवेन्नित्या सुनिद्रा मृतिकालगेति मनोमात्रस्वरूपत्वात् स्वप्नो मायेति कथ्यते इत्येतद्वाक्यैरुक्त एवार्थोऽङ्गीकार्य इति ॥ ३ ॥

अवस्तुनो नित्याप्रतिहतलक्षणावस्त्वजानतो द्वैतस्याशुभस्य मिथ्याज्ञानिनः पुंस आशीर्वादादिना किं भद्रं भवति कालगुणात् स्वाद्गुणाद्वा भवति चेदपि तत्क्रियदेवाल्परूपमेव भद्रवदभद्रमपि विशेषापादकं न भवतीत्याह। किमभद्रमिति। नित्यमशुभात्मनः तस्य विशेषतः अभद्रं किं न किमपि भवति चेदपि तत्क्रियदेव यत्नवतोऽपि मायावादिनः स्वयोग्यतादिकेन न भवतीति यस्मात्तस्मादशुभं जीवमुद्दिश्य सज्जनवाचोदितमुक्तं मनसा शुभादिकं भवत्विति ध्यातं चिन्तितमपि अनृतमसत्यमेव विशेषापादकं न भवतीत्यर्थः। अनेन वैष्णवेनावैष्णवमुद्दिश्य तत्प्रशंसादिवदाशीर्वादादिकं न कर्तव्यमित्युक्तं भवति "उच्यते ध्यायते वापि कुनरं प्रति यच्छुभम्। असत्यमेव भवति स्वभावोऽसत्त्वमेव च"इति वचनात् द्वैतनिषेधोऽत्र क्रियत इत्यन्यथा व्याख्यानं चशब्दसूचितेन एवं तु शुभमुद्दिश्य मशुभं द्वैतमुच्यते। पुंसोऽशुभस्य किं भद्रं किमभद्रं विशेषतः सर्वदा शुभरूपत्वाद्विशेषोऽस्त्यत एव हीति वाक्येन निरस्तत्वादुपेक्षणीयमिति भावः ॥ ४ ॥

ननु स्वभावतोऽशुभजीवस्य सदाप्यशुभरूपत्वात् अन्यस्माच्छुभाशुभयोरल्पत्वात्तद्विषयशुभवचनादेरप्यनृतत्वादशुभदेहादिकमपि नाशुभकारणमिति तत्राह। छायाप्रत्युदकाभासा इति। हि शब्दो याथार्थ्ये यथा छायाप्रत्युदकाभासा जीवमपेक्ष्यासन्तोऽपि निःशक्ता अप्यर्थकारिणोऽर्थक्रियाकारिणो दृष्टाः एवं देहादयो भावा अमङ्गला अप्यामृत्युतोऽन्धतमः प्रवेशपर्यन्तं भयमित्युपलक्षणं शुभाशुभफलं यच्छन्ति अशुभजीवानामिति शेषः नीहारः प्रत्युदकश्चैव धूममित्यपि शब्द्यते इत्यतः प्रत्युदकं नीहारः आभासाः सूर्यकान्तादयः नेदं रजतमितिवच्चेयं छायेति बाधकप्रत्ययानुदयात् एतद् दृष्टान्तेन न देहादीनां मिथ्यात्वं विवक्षितं किन्तु निःशक्तित्वमेव व्यपेक्ष्य जीवं देहादिनिःशक्तत्वादस्त्वपि पुनः शुभाशुभं नृणां यच्छेदेव शुभाशुभं छायानीहारकाभासा निःशक्ता अपि कार्यदाः एवं शुभादिदेहादेर्भवेत्कार्यं शुभादिकम् एतद्वचनाद्भयमभयमिति वा पदच्छेदः ॥ ५ ॥

सत्यसङ्कल्पेन सत्यकर्मणा निरस्तकुहकेन परमेश्वरेण सृष्टत्वादिदं सर्वं सत्यं न मिथ्याभूतमिति भावेनाह। आत्मैवेति। प्रकृत्याद्युपसर्जनं विना सर्जनादिकर्तुः समर्थ इत्यर्थः एवशब्दः परमात्मैवेदं सर्वं सृजति त्राति हरति विश्वात्मा स्वयमेव स्वात्मनैव सृज्यते त्रायते ह्रियते च द्वीपाद्द्वीपान्तरवत् ईश्वर इत्यनेन कर्मकर्तृत्वविरोधं परिहरति प्रभुरित्यनेन च मनुष्येष्वेतावन्तं कालं स्थास्यामीति चिन्तनमेवात्मनस्त्राणं नान्यदखण्डस्वामित्वात्समर्थत्वाच्चेति सूचयति द्वीपाद्द्वीपान्तरं यद्वत्सृष्टिरीशस्य कीर्त्यते एतावत् कालमाशिष्ये मानुष्येष्विति चिन्तनं विष्णोस्त्राणं समुद्दिष्टं स्वस्यैव स्वेच्छयैव तु द्वीपाद्द्वीपान्तरस्येव ह्येकीभावश्च संहृतिरितिवचनात् अविद्यया क्षिप्तमतिः स्वात्मानं सृजतीत्यादिदुर्मतं निरस्तमित्यादिवोद्धव्यं ह्रियत इत्यनेन द्वीपान्तरस्य द्वीप इवैकीभावः संहार इति दर्शयति—

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

इति श्रुतेः ॥ ६ ॥

ननु हिरण्यगर्भादेः स्रष्टृत्वादिवादीनि वेदे जग्रति कथं हरेरेव स्रष्टृत्वादिकमवधीयत इति शङ्कां धिक् कुर्वन्निव परिहरन्नुपसंहरति। तस्मादिति। यस्मान्निरवकाशप्रमाणबलाद्धरिरेव सृष्ट्यादिकर्ता तस्मादमुष्मात् आत्मनो हरेरन्यो भावः सृष्ट्यादिकर्ता न निरूपितः कुत्रापि वेद इत्यन्वयः ननु पितेव पुत्रादिर्हरेरपि सृष्ट्यादिकर्तान्यः किं न स्यादित्यतो वाह तस्मादिति यस्मात्स्वात्मनैव स्वयं सृज्यते इत्यादिकं प्रामाणिकं तस्मादात्मनः परमेश्वरस्य भावः सृष्ट्यादिकर्तामुष्माद्धरेरन्यो नास्ति—

सृष्टिस्थितिश्च संहारो भावनं समुदाहृतम्।
तद्यः करोति पुरुषः स भाव इति कीर्तितः॥

इतिवचनात् भावशब्दस्य सृष्ट्यादिकर्तृत्ववाचकत्वं सिद्धम् अनेनोक्तशङ्कायाः कः परिहार आयात इति तत्राह। निरूपितेति। अत्रेम सृष्टिस्थितिसंहार इति त्रिविधा मतिर्विभ्रमैव

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निरूपिता निर्मूला प्रमाणवर्जिता—

अन्यस्मात्सृष्टिसंहारौ स्थितिश्च परमात्मनः ।
निरूपिता न विद्वद्भिः प्रमाणाभावतो हरेरिति

विद्वद्भिरिति विशेषणादासुरमत एव तथा प्रतिभानमिति ज्ञायते परमात्मनः सत्त्वादिगुणराहित्यादन्यतः सृष्ट्यादिकं न युक्तं गुणस्य गुणवद्धत्वादन्यतो युज्यत इत्याशयेनाह । इदमिति । मायया हरेरिच्छया कृतमिदं त्रिविधं सृष्टिस्थितिसंहारा इति त्रित्वसंख्याविशिष्टमात्मनि जीवे गुणमयं सत्त्वादिगुणाधीनं विद्धि न परमात्मन इति शेषः—

गुणसम्बन्धयोग्यानामुत्पत्त्याद्याः स्युरन्यतः ।
सर्वदा निर्गुणस्यास्य सर्गाद्याः स्युःकुतोऽन्यतः ॥

इति अतो विशेषः कल्प्यत इति अनेन सत्त्वादिगुणेषु कारणत्वेन सिद्धेषु कथमन्यो भावो नास्तीति समञ्जसं स्यादितीयमाशङ्का परिहृता विद्धीति पुरुषार्थोपायाङ्गत्वादिदमेवावश्यं ज्ञेयमिति निर्द्धारयति माययेत्यनेन गुणानामचेतनत्वेन स्वतः प्रवृत्त्यनुपपत्तेः कार्येषु प्रवर्तकत्वेन हरेर्मुख्यकारणत्वमेव धृतम् ॥ ७ ॥

परस्वभावेत्यादिशिक्षितज्ञानफलमाह । एतद्विद्वानिति । मदुदितमेतद्विद्वान् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ तादृशे भक्तियोगे बाह्यदृष्टिं परित्याजयितुमथवा भक्तियोगस्य सुगमतां सुफलतां च दर्शयिष्यन् दुर्गमादिरूपं ससाधनं ज्ञानमाह । परस्वेति । प्रकृत्या पुरुषेण सह विश्वमेकात्मकमिति आद्यावन्ते जनानां सद्बहिरन्तःपरावरमित्यादिसप्तमस्कन्धान्तव्याख्यानरीत्या वस्तुतस्तु तत्सर्वावयवी यः परमात्मा स एवैक आत्मा यस्य तथाभूतं पश्यन् वक्ष्यते च ज्ञानं विवेक इत्यादिभ्याम् ॥ १

स्वार्थात्परमात्माभिनिवेशात् असति ततोऽन्यस्मिन् कल्पिते नानावयविनि ॥ २ ॥

किञ्च तैजस इति । परमात्मैकदृष्ट्यभावेन नानार्थदृक् पुमान् कदाचिद्बहिर्नष्टचेतनः सन् मायां लौकिकमायामयतुल्यं मायाख्यभगवदचिन्त्यशक्तिमयं स्वप्नं यद्वत्प्राप्नोति कदाचिद्बहिरन्तरपि नष्टचेतनः सन् मृत्युं मृत्युतुल्यं सुषुप्तं वा यद्वत्प्राप्नोति तद्वदेव मायां तादृशीं जन्मादिरूपदेहाद्यभिनिवेशं मृत्युदेहपरित्यागं च प्राप्नुवन् भ्रमतीत्यर्थः ॥ ३ ॥

आभाषितोऽपि ह्याभास इति सप्तमान्तव्याख्यानरीत्यैव पृथगवयविलक्षणद्वैतस्यावस्तुतया स्तुतिनिन्दयोर्निर्विशेषत्वं प्रपञ्चयति सार्द्धैः षड्भिः । किं भद्रमिति । तत्परमात्मचैतन्यादन्यत् अवयविरूपं द्वैतम् ॥ ४ ॥

ननु यदि परमात्मैव सर्वत्रावयवी ततोऽन्यन्नास्त्येव तर्हि कथं शशविषाणतुल्ये तस्मिन्नभिनिवेशः स्यात् तेन वा कथं भ्रंश इत्याशङ्कयाह । छायेति ॥ ५ ॥

विश्वस्यैकात्मकत्वं योजयति । आत्मैवेति द्वयेन । प्रभुः तत्तच्छक्तियुक्त आत्मा स्वयमेव तदिदं विश्वमवयविरूपं सृजति अतः स्वमेव सृज्यते प्रकाश्यत इत्यर्थः एवं त्राति त्रायत इत्यादि ॥ ६ ॥

तस्माद्विश्वस्मिन् यः कश्चिदपि भावः स परमात्मनो नान्यो निरूपितः कारणं विना कार्यस्यासिद्धत्वादिति भावः । तर्हि तस्यैव विकारित्वं स्यादित्याशङ्कयाह । अन्यस्मादिति । तथाप्यचिन्त्यशक्त्या निर्विकारत्वेन स्वत एव तत्सद्भावात् तस्यान्यत्वमिति भावः । यात्विवमाध्यात्मिकादिरूपा त्रिविधा भातिः प्रतीतिस्ततोऽन्यत्वेनाविवेकिभिर्निरूपिता साप्यात्मनि शुद्धे निर्मूलैव वस्तुतस्तत्सम्बन्धाभावादिति भावः ॥ ७ ॥

कथं तत्राह । इदमिति सार्द्धकं तस्मादुपक्रान्तमेव कथितमित्याह । एतदिति ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अष्टाविंशे ज्ञानयोगं जगन्मिथ्यात्ववादिनाम् ।
अद्वैतदर्शिनां प्राख्यत् प्रभुः सर्वमतं ब्रुवन् ॥

वेदाष्टसङ्ख्याधिकविंश ईरिते मते जगत् स्यात् सदसत्त्वयोरुभे । किमस्ति नास्ति व्यपदेशभूषितामस्युक्तिरस्त्येव विभेदेऽपि । अद्वैतदर्शिनो ज्ञानिनो हि द्विविधा भवन्ति । विश्वस्यास्य परब्रह्मोपादानकत्वेऽवश्यं व्याख्येये परिणामवादे ब्रह्मणो विकारप्रसक्तेस्तमनङ्गीकृत्य विवर्त्तवादमेवाङ्गीकुर्वाणा ब्रह्मणो निर्विकारत्वं विश्वस्यास्य तु मिथ्यात्वमाचक्षते खल्वेके । अन्ये तु प्रकृतेः स्वशक्तित्वात्तद्द्वारैव परब्रह्मणो जगदुपादानत्वमतस्तस्याः किल विकारित्वेऽपि स्वरूपतस्तदतीतस्य परब्रह्मणो निर्विकारत्वमेवेति परिणामवादे किल न कापि क्षतिः । तथाचोक्तं भगवता । प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहमित्यतः सत्यपि द्वैते प्रकृतिकार्याणां तदनन्यत्वात् प्रकृतेश्च परमेश्वरानन्यत्वात् परमेश्वरस्य तु बहुमूर्त्तित्वेऽप्यैक्यादद्वैतमेव प्रह्मत्याहुः उभयेषामेव ज्ञानित्वेऽप्युत्तरे एव श्रीभागवतसंमतमताः । पूर्वेषामपि मध्ये ये भगवद्विग्रहभक्तधामनामाद्यतिरिक्तपदार्थानामेव मिथ्यात्वं व्याचक्षते तेषां मतमादिभरतचरितादौ क्वचित् क्वचिदुट्टङ्कितमिति तन्मतमपि सर्वमतजिज्ञासुमुद्धवमाह । परस्वभावकर्माणीति पञ्चभिः । ततः परमध्यायपरिसमाप्तिपर्यन्तं विवर्त्तवादिनां परिणामवादिनाञ्च मते व्याख्यानं तुल्यमेव किन्तु असद्वादिशब्दैर्विवर्त्तवादिनां मते अवश्यैवोच्यते परिणामवादिनः मते तु असर्वकालसत्ताकं वस्तूच्यत इत्येतावानेव भेदः दृष्टव्यः कार्याणां सत्त्वेऽप्यचिरस्थायित्वमसत्त्वमेवेति परिणामवादिनः कार्याणां मिथ्यात्वमेवासत्यत्वमिति विवर्त्तवादिनः प्राहुरिति तत्र तत्र विवेचनीयमिति ॥ १ ॥

विपक्षे दोषमाह । परेति । स ज्ञानी स्वार्थात् ज्ञाननिष्ठालक्षणात् असति मिथ्याभूते द्वैतेऽभिनिवेशात् ॥ २ ॥

भ्रंशमेव दृष्टान्तेन दर्शयति । तैजसे राजसाहङ्कारकार्ये इन्द्रियगणे निद्रया स्वापेन आपन्ने अभिभूते सति पिण्डस्थो जीवः केवलं मनोमात्रेण मायां स्वप्नरूपां प्राप्नोति ततो मनस्यपि लीने सति नष्टचेतनः सन् मृत्युं वा मृत्युतुल्यां सुषुप्तिं वा प्राप्नोति यथा तद्वदेव नानार्थदृक् द्वैताभिनिवेशी विक्षेपं लयञ्च प्राप्नोतीति ॥ ३ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्वैतस्यासत्यतया स्तुतिनिन्दयोर्निर्विषयत्वं प्रपञ्चयति सार्द्धैः षड्भिः किमद्रमिति । अवस्तुन इति मद्विग्रहधामनामभक्तादिकं चिद्रूपत्वाद्ब्रह्मवस्त्वेव तद्भिन्नस्यैव द्वैतस्य सम्बन्धि यद्वाचाऽऽदितं यन्मनसा ध्यातं तत् सर्वमनृतं किं भद्रं किं वा अभद्रं कियद्वा भद्रमित्यन्वयः यतस्तुतिनिन्दे स्यातामिति भावः । एवमग्रेऽप्यसच्छब्देन चिद्भिन्नमेव ज्ञेयं व्याख्यान्तरं सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तय इति तासां मध्ये साक्षाद्ब्रह्मगोपालपुरी इति आश्य जानन्तो नाम चिद्विविक्तेनेति प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुमिति मान्निकेतं तु निर्गुणमिति निर्गुणा मदपाश्रय इत्यादिवचनेभ्यो गुणातीतत्वेनावगमितस्यापि वस्तुष्वनृतत्वप्रसक्तिः स्यादतस्तन्नापाद्यम् ॥ ४ ॥

ननु यदि द्वैतमसत्यमेव कथं तर्हि घटपटादिमयस्य तस्यार्थक्रियाकारित्वं तत्राह । छाया प्रतिबिम्बं प्रत्याह्वायः प्रतिध्वनिः आभासः शुक्तिरजतादिः एते खल्वसन्तोऽप्यर्थकारिणो यथा भवन्ति तथैवासदपि द्वैतमर्थक्रियाकारीत्यर्थः । एवमेव देहादयो भावा मिथ्याभूता अपि आमृत्युतो मृत्युपर्यन्तमेव भयं संसार दुःखमय यच्छन्ति जीवेभ्यो ददाति ॥ ५ ॥

ननु च सृष्ट्यादिश्रुतिभिरेव द्वैतं निरूपितं कथमसत्यं स्यात्तत्राह । आत्मैवेति द्वाभ्याम् । सृज्यते सृजतीति सृष्ट्यादेः कर्तापि कर्माप्यात्मैव न द्वैतं ततोऽन्यदिति भावः त्रायते पाल्यते ॥ ६ ॥

आत्मनः परमात्मनः सकाशादन्यो भावः पदार्थो न आत्मनः कीदृशात् अन्यस्मात् सृज्यादिवस्तुव्यतिरिक्तात् त्रिविधा आध्यात्मिकादिरूपा भातिः प्रतीतिः निर्मूलेति यदि परमात्मैव विश्वमभूत् तदा परमात्मनस्त्रैविध्याभावात् कुत आयातमेतत्त्रैविध्यमिति निर्मूलत्वम् ॥ ७ ॥

ननु कथं त्रैविध्यं प्रतीयते तत्राह । मायया कृतं मायया दुस्तरशक्त्येति परिणामवादिनः मायया अज्ञानेनेति विवर्त्तवादिनः अत एतन्मदुदितं मदुक्तं ज्ञानविज्ञानयोर्नैपुण्यं विद्वान् जानन् सूर्यवत् समो भूयादित्यर्थः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वार्थावाप्तिहेतुर्हि स्वार्चा भगवतोदिता ।
अदृष्टिवशे तु स्वस्यैव स्वातन्त्र्यं जगतो न हि ॥
अस्वतन्त्रस्य देवादेर्गुणदोषधिया क्वचित् ।
स्तुतिनिन्दे न कर्तव्ये हरिरित्यादिदेश ह ॥

पूर्वाध्याये स्वपूजयैव भगवता स्वभक्तस्य सर्वपुरुषार्थप्राप्तिरुक्तेदानीं तस्य तदेकनिष्ठां द्रढयितुं कदाचित्सत्सङ्गेन देवराजादिगुणदोषश्रवणात्तत्र रागद्वेषौ माभूतामित्येतदर्थमुपदिशन्नाह परेति । मत्पूजकः परेषां देवराजादिजीवानां स्वभावकर्माणि सौम्यक्रौर्यादीन्स्वभावान् शुभाशुभानि कर्माणि च न प्रशंसेत् तथा न गर्हयेन्निन्दयेत् तथाभावे साधनमाह । विश्वमिति । एकोऽतिशयसाम्यशून्यः सर्वज्ञः सर्वशक्तिः स्वतन्त्रसत्ताश्रयो भगवानात्मान्तर्यामी उपादानकारणं वा यस्य तत्तथाभूतं मन्नियम्यत्वेन मदुपादानकत्वेन मदनतिरिक्तं चेतनरूपं सर्वं जगत्पश्यन् पृथक् स्वतन्त्रत्वेन देवादिदर्शने तु गुणबुद्ध्या द्वेषः स्याद्भगवदात्मकत्वनास्वतन्त्रत्वेन च दर्शने तु नोभयं स्यादिति भावः ननु तथा ब्रह्मादिश्वपचान्तदेहेषु भेदस्य शास्त्रसिद्धत्वात्कथमेकात्मभावनेति चेत्तत्राह । प्रकृत्येति । उक्तसर्वविधदेहानामष्टविधप्रकृतिकार्यत्वाविशेषादैकात्म्यमविरुद्धमित्यर्थः नन्वेवमपि सर्वदेहेष्वात्मन एकत्वे सर्वान्तर्वृत्तिसुखदुःखादिज्ञानं सर्वेषां समानं स्यादहन्त्वममेत्यादिप्रत्ययानां विभागाभावश्च स्यात् आत्मनः प्रति देहं स्वरूपतो भिन्नत्वाङ्गीकारे नानात्मकत्वमेव विश्वस्य स्यादिति चेत्तत्राह । पुरुषेण चेति । भगवदात्मकसनातनतदंशतन्नियम्य तत्तन्त्रस्वरूपत्वेन जीवचेत्रज्ञाक्षरादिशब्दाभिधेयेन पुरुषेण पुरुषत्वेन चैकात्मकत्वमुक्तस्वरूपस्य सर्वदेहेषु समानत्वादित्यर्थः ॥ १ ॥

उपदिष्टार्थानङ्गीकारे दोषमाह । परस्येति । परः शिवगणेशेन्द्रादिर्देवविशेषः राजादिः पुरुषविशेषो वा स्वानुकूलभक्तानां सर्वाभीष्टप्रदोऽयमिति बुद्ध्या तत्स्वभावकर्माणि यः पुरुषः प्रशंसति तथाऽभक्तानामनिष्टकरोऽयमिति बुद्ध्या स्वानिष्टकारित्वभयेन परोक्षे तत्स्वभावकर्माणि निन्दति वा स स्वार्थात् स्वेन मुमुक्षुणोपादेयादर्थात्सर्ववेदान्तसिद्धसर्ववस्तुविषयकवासुदेवात्मकत्वज्ञानलक्षणादाशु भ्रश्यते तत्र हेतुः असत्यभिनिवेशत इति देवमनुष्यादेरिष्टानिष्टदातृत्वकल्पनमसत् तस्मिन्नभिनिवेशादित्यर्थः ॥ २ ॥

उक्तार्थं दृष्टान्तेन दर्शयति । तैजस इति । तैजसे राजसाहंकारकार्ये बाह्याज्ञानकरणे इन्द्रियगणे निद्रयाऽऽपन्ने लीने सति पिण्डस्थो जीवो नष्टचेतनो ज्ञानहीनः सन् ईश्वरोद्बोधितमायाकार्यमनोगतसंस्कारजन्यत्वान्मायां स्वप्नात्मिकां प्राप्नोति ततस्तुच्छभोगानन्तरं मृत्युं सुषुप्तिं मरणं प्राप्नोति यथा तद्वज्ज्ञानार्थदृक् नानादेवमनुष्यादिकृतेष्टार्थान्पश्यति स नानार्थदृक्दुःखमिश्रितांस्तुच्छभोगान् प्राप्य संसारी भवतीत्यर्थः ॥ ३ ॥

ईश्वरव्यतिरिक्तस्य स्वत एवास्वतन्त्रत्वेनावस्तुत्वादन्येषु शुभाशुभकर्तृत्वप्रतीतिरपार्थेत्युपपादयति । किम्भद्रमित्यारभ्य निःसङ्गो विचरेदित्यन्तेन । द्वैतस्य परमात्मनोऽन्यस्य देवविशेषस्य राजादिमनुष्यविशेषस्य वा किं भद्रं श्रेय इष्टप्राप्तिरिति यावत् अभद्रमश्रेयोऽनिष्टं किं स्यात्कियद्वा स्यान्न किमपीति भावः तत्र हेतुगर्भितविशेषणं कथम्भूतस्य द्वैतस्यावस्तुनः अवस्तुत्वादित्यर्थः । अवस्तुत्वमत्रास्वतन्त्रत्वमनित्यत्वं वा विवक्षितं तथाभूतद्वैतस्येष्टानिष्टहेतुत्वं यद्वाचा उदितमुक्तं मनसा ध्यातं चिन्तितं वा तदनृतमज्ञानकल्पितमेव न वास्तवमित्यर्थः देवाः राजानो वा परमात्मनः परस्मात् सकाशादितरत्वेनाभिज्ञाः अत एव स्वश्रेयस्येवासमर्थाः कुतोऽन्येषां तत्कृतयो भवेयुरिति भावः ॥ ४ ॥

नन्वेवञ्चेत्तर्हि लोके कथं देवराजादिभ्यो भयं प्रतीयते इत्याशङ्क्य दृष्टान्तेन समाधानमाह । छायेति । छाया प्रतिबिम्बः छायैव वा प्रत्याह्वयः प्रतिध्वनिः आभासो मृगमरीचिकादिः ते यथाऽसन्तोऽपि बिम्बादिनैरपेक्ष्येण अविद्यमाना अपि बिम्बादिसापेक्ष्यसिद्धत्वादतज्ज्ञजनविषये अकार्यकारिणोऽपि अर्थकारिणः तत्त्वबुद्ध्या दुःखादिकार्यकारिणो दृष्टाः अज्ञानां पशूनां चेति शेषः छायादीनामप्यज्ञानेनैव दुःखादिकार्यकारित्वं ननु छायादि

**प्रत्यक्षेणानुमानेन निगमेनाऽऽत्मसंविदा ।**
**आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥ ९ ॥**

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ज्ञानेन छायायाश्च तत्त्वबुद्ध्या पलायनपतनादिकार्यं दृश्यते गालिप्रदानादिप्रतिध्वनेः कार्यं मृगमरीचिकाया जलबुद्ध्या धावनरूपं कार्यं दृश्यते एवं देवराजादिदेहादयो भावाः कार्यरूपाः अस्वतन्त्राः अनित्या अपि ईश्वराधीनं सर्वमिति ज्ञानाभाववतामामृत्युतः मृत्युमभिव्याप्य भयं प्रयच्छन्ति ननूक्तज्ञानवतां देहादिव्यतिरिक्तानां चेतनानां ज्ञानस्वरूपत्वेन भगवदात्मकत्वेन तदधीनत्वेन च सर्वत्र समत्वाच्च भयादिहेतुत्वमतो देहादिभयादिहेतुत्वमुक्तमिति भावः ॥ ५ ॥

एवं नानादेवादिभावदर्शनस्य भयहेतुत्वं श्रुत्वा यथा येन ज्ञानेन भयं न भवेत्तदेवादिश्यतामित्युद्धवविवक्षां ज्ञात्वा विश्वमेकात्मकं पश्यन्निति यदुक्तं तदेव विवृणोति । आत्मैवेति । यस्मात्सर्वं ब्रह्मात्मकं जगत्तस्मादात्मैव परमात्मैवेदं विश्वं सृजति त्राति हरति विश्वात्मा च स्वात्मनैव सृज्यते त्रायते ह्रियते एवकारः कारकापेक्षां निराकरोति ईश्वर इत्यनेन कर्तृत्वविरोधः परिहृतः प्रभुरित्यनेन तस्य सर्वरूपत्वेऽपि सर्वदोषास्पृष्टस्वभावत्वं द्योतितम् अनेन परमात्मनो जगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वमप्युक्तं "यतो वा इमानि भूतानि जायन्ते सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत जन्माद्यस्य यतः तदनन्यत्वमारम्भणशब्दादिभ्यः प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्,, इत्यादिश्रुतिसूत्रेभ्यः ॥ ६ ॥

इत्थं सर्वज्ञः करुणासागरो भगवानुद्धवमुपलक्ष्य सर्वमुमुक्षुहिताय सर्वशास्त्रसिद्धान्तमुपदिश्येदानीमेकोऽद्वितीयो निर्विशेषश्चिन्मात्रः शुद्धबुद्धात्मा निष्क्रियत्वान्नसृष्ट्यादिकर्ता किं तु तदज्ञानादिमायाकल्पित ईश्वराख्य एवोपाधिभूतरजःसत्त्वादिगुणकृतब्रह्मविष्णुरुद्ररूपैर्जगत्सृष्टिस्थितिसंहारान् करोतीति केषांचिन्मतं निराकुर्वन्नाह । तस्मादिति । यस्मात्प्रबलश्रुत्यादिप्रमाणबलात् परमात्मैव सृष्ट्यादिकर्ता परमार्थभूतश्च तस्मादमुष्मादात्मनः सृष्ट्यादिकर्तुरीश्वरादन्यो भावः सृष्ट्यादिकर्तृत्वशून्यः सत्योनाहि निरूपितः व्यासादिभिरिति शेषः मुमुक्षूणां मोक्षफलार्थब्रह्मजिज्ञासां विधाय तज्ज्ञानार्थं जगज्जन्मादिकारणत्वस्यैव ब्रह्मलक्षणस्य सूत्रितत्वात् अन्यस्मादिति पाठेतु अन्यस्मान्मायातद्गुणकालकर्मादिविलक्षणादात्मनोऽन्यो भावः मायाकल्पित ईश्वराख्यः सृष्ट्यादिकर्ता नहि निरूपितः कुत्रापि शास्त्रे इत्यर्थः उभयस्मिन्नपि पाठे आत्मनि परमात्मनि इयं त्रिविधा भातिर्मायया ब्रह्मविष्णुरुद्रात्मिका त्रिविधकारणप्रतीतिर्निरूपिता मायावादिभिरिति शेषः निर्मूला वेदप्रमाणशून्या तस्माज्जीवानां परतत्त्वविमुखीकरणाय तेषां प्रवृत्तिरिति भावः अथवा सर्वात्मकत्वाद्यतःपरमात्मन एव सर्वविधकारणत्वं तस्मादमुष्मदात्मनोऽन्यो भावोऽब्रह्मात्मकपदार्थः कश्चिन्न निरूपितः एवं सर्वकारणरूपे आत्मनि सति समवाय्यसमवायि निमित्तभेदेन त्रिविधा भातिर्मायिकैः कैश्चिन्निरूपिता निर्मूला श्रुतिप्रमाणशून्येत्यर्थः ॥ ७ ॥

तत्त्वेकेश्वरकृतभेदाभिति ब्रेरकर्ण शान्तघोरादिरूपभिन्नाभिव्यपेक्षायामाहार्द्धेन । इदमिति त्रिविधं देवासुरमनुष्यादिरूपमिदं विश्वं मायया ईश्वरशक्त्या कृतं गुणमयं सत्त्वादिगुणपरिणामं विद्धि गुणत्रयपरिणामित्वादेव स्वरूपस्वभावभेद इत्यर्थः । उपदिष्टविषयकयथावज्ज्ञानस्य माहात्म्यं कथयन्नुपसंहरति द्वाभ्याम् एतन्मदुदितं मयोक्तं ज्ञानविज्ञानयोर्नैपुण्यं निष्कर्षरूपं विद्वान् विशेषेण जानन् सूर्यवत् समचित्तः स्तुतिनिन्दारहितः सन् लोके चरति ॥ ८ ॥

---

भाषा टीका ।

श्रीभगवान् बोले दूसरे के स्वभाव कर्मों को न प्रसंशा करे न निंदा करे सब संसार को प्रकृति पुरुष से एक रूप देखना चाहिये ॥ १ ॥

दूसरे के कर्म स्वभाव की जो निंदा करता है या प्रसंशा करता है सो शीघ्र ही असत् पदार्थ में अभि निवेश होनेसे अपने मार्ग से भ्रष्ट होजाता है ॥ २ ॥

अहंकार वर्ग जब निद्रा युक्त होजाता है तब शरिर में रह कर भी चेतना से नष्ट होजाता है तब माया को प्राप्त होता है या मृत्यु को प्राप्त होता है किसी प्रकार से नाना-बुद्धि वाला पुरुष होता है ॥ ३ ॥

अवस्तु जो भेद है तिस में क्या अच्छा है क्या कितना बुरा है बचन से जो कहा जाता है सो अनित्य है जो मन से ध्यान किया जाता है सोभी वैसाही है ॥ ४ ॥

पुरुष की छाया तथा प्रति ध्वनि आभास ए सब नहीं रह कर भी कार्यकारी होते हैं इसी प्रकार से देहादिक भाव भी मरण पर्यंत भय को दिखाते हैं ॥ ५ ॥

यह सब संसार परमात्मा हीं है वही प्रभु सृजने वाला है वही सृजा जाता है वही रक्षा करता है वही रक्षा किया जाता है वही विश्वात्मा हरण करता है वही ईश्वर हरण किया जाता है ॥ ६ ॥

तिससे इस आत्मा से अन्य से कोई भी भाव मात्र नहीं निरूपण किया जाता है यह तीन प्रकार की अध्यात्मादि जो निरूपणा है सो आत्मा में निर्मूल मालूम पड़ती है यह तीन प्रकार का सब माया से किया हुआ संसार गुण मय है ऐसा जानो ॥ ७ ॥

मेरे कहे हुये इस ज्ञान को जानने वाला ज्ञान विज्ञान में कुशलता वाला विद्वान् न निन्दा करता है न स्तुति करता है लोक में सूर्य सरी का विचरता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतन्निष्ठाप्राप्त्युपायमाह । प्रत्यक्षेणेति । यदाद्यन्तवत् द्वैतं तदसदिति ज्ञात्वा निःसङ्गो विचरेत् आद्यन्तवत्त्वे प्रमाणानि प्रत्यक्षेण घटादि अनुमानेन सावयवत्वेन द्वैतं

उद्धव उवाच ।

नैऽऽवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः ।
अनात्मस्वदृशोरीश ! कस्य स्यादुपलभ्यते ॥ १० ॥
आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः ।
अग्निवद्दारुवदचिद्देहः कस्येह संसृतिः ॥ ११ ॥

श्रीभगवानुवाच ॥

यावद्देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम् ।
संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पृथिव्यादि निगमेनाप्रत्यक्षमाकाशादि आत्मसंविदा स्वानुभवेन सर्वं दृश्यमाद्यन्तवदसदेवेति ज्ञात्वा निःसङ्गस्तदासक्तिशून्यः ॥ ९ ॥

ननु यद्यात्मसंविदा सर्वं दृश्यमसदित्युच्यते तर्ह्यात्मा स्वप्रकाशो देहादि द्वैतं च जडमित्युक्तं स्यात्तथा च संसारप्रतिभासो न घटेतेति चोदयति । नैवेति । अनात्मस्वदृशोर्जडाजडयोः अत्र हेतुः द्रष्टृदृश्ययोः माभूद्द्वयोरपि तर्ह्याऽऽह । उपलभ्यत इति ॥ १० ॥

एतत्प्रपञ्चयति । आत्मेति । अव्ययत्वादिपञ्चविशेषणैर्नाशादिरागादिपुण्यापुण्याज्ञानपरिच्छेदानामसम्भवं दर्शयति । हेतुहेतुमत्त्वं तु यथेष्टम् अचिज्जडः अयं भावः यथैवाग्निदारुणोर्भेदेनानुपलम्भेऽपि दारु प्रकाश्यमेवाग्निश्च प्रकाशकः तथा देहात्मनोरपीति न संसृतिस्तयोरन्यतरस्यापि घटत इति ॥ ११ ॥

सत्यं तथाप्युभयोरेवमविवेक एव संसारालम्बनमित्याह पञ्चभिः । यावदिति । सन्निकर्षणम् सम्बन्धः नन्वसङ्गस्य कुतः सम्बन्धस्तत्राऽऽह । अविवेकिनः अज्ञानकृत इत्यर्थः । ननु स्वप्रकाशस्य कथमज्ञानकृतः संसारस्तत्राऽऽह । अपार्थोऽपि मिथ्याभूतोऽपि केवलं फलवान् फलं स्फूर्तिर्न तु तत्त्वतोऽस्तीत्यर्थः ॥ १२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी

आद्यन्तवज्जन्मनाशवत् असदिति स्वतन्त्रसत्ताऽभ्युपगमे तु मिथ्याभूतमेवेति ज्ञात्वा । सावयवत्वेनेति पृथिव्यादि आद्यन्तवत् । सावयवत्वात् घटादिवत् यथैव तथैव यथात्मेति निगमेन तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यादि वेदेन ॥ ९ ॥

तथा च आत्मनः स्वप्रकाशत्वे द्वैतस्य च जडत्वे सति । चोदयति । दूषणमुपन्यस्य पृच्छति । अत्र देहात्मनोर्जडाजडत्वे । उपलभ्यते जन्ममरणादिसंसृतिरनुभूयते इति अनुभवसिद्धस्यापलापायोगादित्यर्थः ॥ १० ॥

एतत् संसाराघटनम् । पञ्चविशेषणैरिति अव्ययत्वान्नाशाद्यसम्भवं निर्गुणत्वाद्रागाद्यसम्भवं शुद्धत्वात् पुण्यपापासम्भवम् । स्वयंज्योतिष्ट्वादज्ञानासम्भवम् अनावृतत्वात् परिच्छेदासम्भवमित्यर्थः । इह देहात्मनोर्मध्ये । दृष्टान्तस्यास्फुटत्वादयं भाव इति ॥ ११ ॥

सत्यमित्यङ्गीकारे तथापि द्वयोरन्यतरस्य संसाराघटनेऽपि । द्वयोर्देहात्मनोः । अज्ञानकृत इति । अज्ञानं भयं द्वितीयाभिनिवेशतः स्यादिति न्यायेन भगवद्बहिर्मुखत्वलक्षणमायाकृत आत्मज्ञानलोपो देहात्मबुद्धिश्च तत्कृत इत्यर्थः ॥ १२

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रत्यक्षेण छिन्नानां देहस्याङ्गुल्याद्यवयवानामनात्मत्वं प्रत्यक्षम् एवमेवेत्यनुमानादवयवान्तराणामनात्मत्वसिद्धिः न जायते म्रियते इत्यादिर्निगमः देहस्यावस्थाभेदे सति अहमित्येकरूपात्मानुभवश्च देहस्यानात्मत्वे हेतुः ॥ ९ ॥

अनात्मस्वदृशोः देहात्मनोः ॥ १० ॥

अभिप्रेतं विवृणोति । आत्माऽव्यय इति आत्मस्वरूपस्य परिशुद्धत्वेन शास्त्रैरुपपादितत्वात् सुखदुःखानुभवरूपस्य संसारोऽनुपपन्नः देहस्याचित्त्वान्न दुःखानुभवः तत्कस्य संसार इत्यर्थः ॥ ११ ॥

स्वतः शुद्धस्यात्मनः प्रकृतिसम्बन्धेनाशुद्धत्वात्संसार इति परिहरति । यावदिति । सन्निकर्षणं सन्निकर्षः संसर्गः अपार्थोऽपि आत्मनि स्वत एवाविद्यमानोऽपि अविवेकतः अहङ्कारममकारकृतपुण्यपापाधीनप्रकृतिसम्बन्धात्संसार इत्यभिप्रायः अविद्यासञ्चितं कर्मेति वचनान्तरादविवेकस्य प्रकृतिसम्बन्धहेतुत्वं कर्मद्वारा ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सूर्यवद्भवेदिति दृष्टान्तमुखेनाभिमतमर्थं दार्ष्टान्तिके स्पष्टयति । प्रत्यक्षेणेति । प्रत्यक्षादिभिः कृत्स्नमाब्रह्मकीटशरीरजातमाद्यन्तवत् उत्पत्तिनिधनवदसत् आत्मनोऽन्यदेवेति ज्ञात्वा निःसङ्गः कामयमानस्सन् इह लोके विचरेत् अङ्गुल्याद्यवयवविच्छेदेऽप्यात्मनस्तद्दर्शनाच्छिन्नानां देहावयवानामनात्मत्वं प्रत्यक्षम् एवमे-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वेत्यनुमानादवयवान्तराणामनात्मत्वसिद्धिः न जायते म्रियते इत्यादिनिगमः देहस्यावस्थाभेदे सत्यप्यहमित्येकरूपात्मानुभवादपि देहस्यानात्मत्वसिद्धिः ॥ ९ ॥

यदि देहात्मानौ मिथोऽत्यन्तविलक्षणौ कस्य तर्हि सुखदुःखानुभवात्मकः संसार इति पृच्छति । नैवेति । आत्मनो न संसृतिः स्वतः शुद्धस्वरूपत्वात् नैव देहस्य जडत्वादिति भावः अनात्मस्वदृशोर्जडाजडयोस्तत्र हेतुर्द्रष्टृदृश्ययोर्देहात्मनोर्मध्ये हे ईश ! कस्य स्यात्संसृतिरित्यनुषज्यते न कस्यापीत्यत आह । उपलभ्यत इति । सुखदुःखानुभवो दृश्यते ह्यतः प्रत्यक्षविरोधान्न संसृतिरपन्होतुं शक्येति भावः ॥ १० ॥

संसृत्यसम्भावनायां हेतुत्वेनात्मानं विशिनष्टि । आत्मेति । स्वयं शब्दः पूर्वोत्तराभ्याम् सम्बध्यते, स्वयमात्मना शुद्धः स्वभावतः शुद्ध इत्यर्थः स्वयंज्योतिः । स्वयं प्रकाशः अनन्याधीनप्रकाशः अनावृतः कर्मरूपावरणरहितः अगुणः सत्त्वादिगुणानाश्रयः अव्ययः जन्ममरणादिविकाररहितः देहस्त्वचिज्जडः विजातीययोरपि देहात्मनोरविभागेनावस्थितौ दृष्टान्तोऽग्निवद्दारुवदिति । कस्येह संसृतिः अजडस्याप्यात्मनः स्वतः शुद्धत्वाशुद्धस्यापि देहस्य जडत्वान्न कस्यापि संसृतिः स्यादिति प्रश्नार्थः ॥ ११ ॥

स्वतः शुद्धस्याप्यात्मनः प्रकृतिसम्बन्धेनाशुद्धत्वात्संसार इति परिहरति । यावदिति यावदात्मनो देहादिभिः सन्निकर्षणां सम्बन्धः तावदपार्थोऽप्यात्मनि स्वत एवाऽविद्यमानोऽपि संसारः तदावहो देवाद्याकारः फलवान्विद्यमानकल्पः सुखदुःखजनकः कुतः अविवेकतो देहविलक्षणस्वस्वरूपाज्ञानात् अविवेककृतदेहादिसम्बन्धादेव तस्याशुद्धिरिति भावः अविवेकिन इति पाठे तदात्मनो विशेषणं अविवेकादिभिः सन्निकर्षणं ततः संसारः फलवान् अविद्यासञ्चितं कर्मेति वचनादविवेकस्य प्रकृतिसम्बन्धहेतुत्वं कर्मद्वाराऽवगन्तव्यम् एवं चाहङ्कारममकारकृतपुण्यपापाधीनप्रकृतिसम्बन्धात्संसार इत्यभिप्रायः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पूर्वमग्निरित्युक्तं दार्ष्टान्तिके कथमित्यतो विवृणोति । प्रत्यक्षेणेति । प्रत्यक्षादिप्रमाणवलेनेदं गुणमयमाद्यन्तवत्त्वादसदसमर्थमस्वतन्त्रमिति ज्ञात्वा—

असमर्थमसत्प्रोक्तं समर्थं सत्प्रकीर्तितम् ॥

इतिवचनात् असत्त्वं न शून्यत्वमत्राभिप्रेतम् इह जगति निःसङ्गो निर्लेपः निर्ममेन वेदेनात्मसम्बिदा साक्षिणा ॥ ९ ॥

स्वप्रकाशत्वेन देहपरमात्मनोः जडत्वेन संसारासम्भवं जानन्नप्युद्धवो विवेकार्थं लोकदयालुः पृच्छति । नैवेति । निःसङ्ग इत्यनेन प्रस्तुतः सङ्गलक्षणः संसारः कस्यात्मनो हरेरुत देहस्य द्रष्टृदृश्ययोरुभयोरपि न सम्भवति अनात्मस्वदृशोरनात्मत्वाज्जडत्वात् दृश्यस्य स्वदृक्त्वात् स्वयं प्रकाशत्वात् द्रष्टुरतः कस्येयं संसृतिरुपलभ्यते ॥ १० ॥

देहस्यैव हरेरियमपि न युज्यत इत्याह । आत्मेति । अग्नि-

वदीश्वरः दारुवद्देहः जीवपक्षस्तु परमात्मकोटावन्तर्भूतत्वान्न पृथगुक्तः कस्येति पुनरुक्तिरवश्यपरिहारवक्तव्यार्था ॥ ११ ॥

जीवस्यैव संसृतिरिति भावेनाह । यावदिति । आत्मनो जीवस्य यावद्देहेन्द्रियप्राणैः सन्निकर्षणं सम्बन्धः तावत्संसारः कस्येत्यत उक्तमविवेकिन इति नित्यानन्दादपार्थोऽपि अविवेकिनः इति विशेषणाद्विवेकिनो मोक्षहेतुत्वात्फलवानपि—

फलवान्मोक्षहेतुत्वान्नित्यानन्दादपार्थकः ।
जीवात्मनस्तु संसारः स्वप्नवच्चाप्यवस्थितः ॥

इति वचनात् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अत्र द्विविधं द्वैतम् अवयवरूपं परमात्मेतरकल्पितावयविरूपं चेति तत्र पूर्वं जन्मनाशवत् उत्तरं त्वसदेवेत्युभयत्रापि तद्विलक्षण आत्मा न सक्तः ततस्तत्सङ्गं त्यजेदित्युपसंहरति । प्रत्यक्षेणेति । आद्यन्तवत् जन्मनाशवत् ॥ ९ ॥

यद्येवं जीवस्य संसारनाशार्थमुपदेशोऽयं कृतस्तत्राशङ्कते नैवेति ॥ १०–११ ॥

सिद्धान्तयति । यावदिति । सन्निकर्षणं सम्बन्धः अत्र हेतुः अविवेकिनः अत्राविवेकित्वं भयं द्वितीयाभिनिवेशतः स्यादित्यनुसारेणेशज्ञानाभावलब्धमायाकृत आत्मज्ञानलोपोऽतोऽस्मत्स्वरूपावस्थ ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रत्यक्षेणाद्यन्तवत् घटादि अनुमानेनाद्यन्तवत् दृश्यं पृथिव्यादि निगमवाक्येनाप्रत्यक्षमाद्यन्तवदाकाशादि आत्मसम्विदा स्वानुभवेन सर्वं चिद्भिन्नं दृश्यमाद्यन्तवदसच्चेति ज्ञात्वा इत्यर्थः ॥ ९ ॥

ननु आद्यन्तयोरसत्त्वेऽपि मध्ये यावत् सत्त्वं प्रतीयते तावत् कस्य संसारः स्यात् द्रष्टुर्दृश्यस्य वेत्याह । नैवेति । द्रष्टृदृश्ययोः द्रष्टा जीवः दृश्यो देहस्तयोर्द्वयोरपि संसृतिर्न सम्भवति कुत अनात्मस्वदृशोः देहो ह्यनात्मा जडः तस्य संसारदुःखस्यासम्भवात् जीवो हि स्वदृक् स्वतः सिद्धज्ञानः तस्य ज्ञानलोपासम्भवात् मास्तु द्वयोरपि तत्राह । उपलभ्यत इति ॥ १० ॥

एतत्प्रपञ्चयति । आत्मेति । अव्यय इति नाशाद्यभावः अगुण इति रागाद्यभावः शुद्ध इति पापपुण्याद्यभावः स्वयं ज्योतिरित्यज्ञानाभावः अनावृतः न केनाप्यावृतो वस्तुतो न बद्ध इति बन्धाभावश्चोक्तः अचित् अचेतनः अयं भावः यथैवाग्निदारुणोर्भेदेनानुपलम्भेऽपि दारु प्रकाश्यमेव अग्निः प्रकाशकः तथा देहात्मनोरपि देहः प्रकाश्य एव जीवात्मा प्रकाशकः किं तु स्वपरमात्मप्रकाशित एव प्रकाशकः संसृतिस्तयोरन्यतरस्यापि न घटत इति ॥ ११ ॥

सत्यं जीवस्याविवेक एव संसारालम्बनमित्याह पञ्चभिः । यावदिति । संनिकर्षणं सम्बन्धः तावदेव अपार्थो मिथ्याभूतोऽपि संसारः फलवान् फलति नन्वसङ्गस्य कुतः सम्बन्धस्तत्राह । अविवेकिनः अज्ञानकृत इत्यर्थः ॥ १२ ॥

---

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ १३ ॥
यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ।
स एव प्रतिबुद्धस्य नवै मोहाय कल्पते ॥ १४ ॥
शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नाऽऽत्मनः ॥ १५ ॥
देहेन्द्रियप्राणमनोभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः ।
सूत्रं ह्यानित्युरुधेव गीतः संसार आधावति कालतन्त्रः ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

किं कृत्वा न निन्दति नच स्तौति तदाह । प्रत्यक्षेणेति । स्तुतिनिन्दयोर्विषयभूतमिदं देवमनुष्यादिरूपं त्रिगुणकार्यं देहादि प्रत्यक्षादिप्रमाणबलेन आद्यन्तवत्तत एवासदकिञ्चित्करमनित्यं वा ज्ञात्वा निःसङ्गो विचरेदित्यन्वयः तत्र प्रत्यक्षेण छेदनदाहनादिहनाशदर्शनात् देवादिदेहा आद्यन्तवन्तोऽत एवानित्याः कार्यत्वान्मनुष्यादिदेहवदित्यनुमानेन निगमेन वेदेन नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते इत्यारभ्य सर्वा देवताः सर्वे ऋषयः सर्वाणि च भूतानि नारायणादेव समुत्पद्यन्ते नारायणात्प्रवर्तन्ते नारायणे प्रलीयन्ते इत्यादिना ब्रह्मरुद्रादिदेहानामेव जन्म नत्वात्मनां न जायते म्रियते वा विपश्चित् न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः वासांसि जीर्णानि यथा विहाय नवानिगृह्णाति नरोऽपराणीत्यादिश्रुतिभिर्निषिद्धत्वात् आत्मसम्विदा आत्मनो धर्मभूतज्ञानसम्वित् तया सुषुप्त्याद्यवस्थासु आत्मव्यतिरिक्तस्य सर्वस्यानुभवात् तस्मादिह लोके निःसङ्गः रागद्वेषसङ्गलक्षणवर्जितः सन् विचरेत् ॥ ९ ॥

निःसङ्गो विचरेदित्युक्तं तत्र सङ्गलक्षणाप्रतीतेः तस्य देहात्मनोरुभयोरसम्भवं मत्वाऽवाधितप्रतीतेश्च संदिह्य पृच्छति । नैवेति । हे ईश ! सङ्गलक्षणा संसृतिर्देहात्मनोर्मध्ये कस्य स्यात् तत्र नैवात्मनो न देहस्य तत्र हेतुः अनात्मस्वदृशोः अत एव द्रष्टृदृश्ययोः आत्मनः स्वदृक्त्वात् द्रष्टृत्वाच्च देहस्यानात्मत्वात् दृश्यत्वाच्च न घटते इत्यर्थः । नास्ति संसार इत्यपि नेत्याह । उपलभ्यते देवदत्तस्य पुत्रो जातः यज्ञदत्तो मृतः सुखदुःखहर्षशोकमोहविषादादिलक्षणः प्रत्यक्षत उपलभ्यते सर्वैर्ज्ञायते इत्यर्थः ॥ १० ॥

पुनस्तदेवोपपादयति । आत्मेति । अव्ययः अविनाशी अगुणः गुणकार्यरहितः तत एव शुद्धः स्वयंज्योतिः तत एवानावृतः स्वरूपानुबन्ध्यावरणरहितः अनित्यावरण इत्यर्थः तत्र दृष्टान्तः अग्निवत् यथाग्निः काष्ठावरणवानपि निर्मथ्य ततो निर्गतश्चेत्काष्ठं दग्ध्वा निरावरण एव प्रकाशते तद्वदात्मापि देहोऽचित् जडः तत्र दृष्टान्तो दारुवदिति तस्मादुभयोरसम्भवात्कस्येयं संसृतिरिति शङ्काभिप्रायः ॥ ११ ॥

स्वतः शुद्धस्य स्वयंप्रकाशस्याप्यात्मनः स्वानाद्यज्ञाननिमित्त प्रकृतिकार्यदेहादिसम्बन्धात्संसार इत्यभिप्रायेण तत्परिहारमाह । यावदिति । सत्यमुक्तमात्मनः स्वानाद्यज्ञाननिमित्तः। प्रकृतिकार्यदेहादिसम्बन्धात्संसार इत्यभिप्रायेण तत्परिहारमाह । यावदिति । सत्यमुक्तमात्मनः संसारोऽपार्थोऽपि यद्यपि स्वरूपनिरूपितस्तु न भवति तथापि अविवेकिनः यावद्देहेन्द्रियप्राणैरात्मनः संनिकर्षणाम् आवरणलक्षणसंसर्गः फलवान् सुखदुःखादिभागित्वमस्त्येवेत्यर्थः ॥ १२ ॥

---

### भाषा टीका ।

प्रत्यक्ष से अनुमान से शब्द से अपने अनुभव से इन पदार्थों को आदि अंत वाले होने से अनित्य जान कर इन से आसक्ति छोड कर संसार में विचरा करे ॥ ९ ॥

उद्धवजी बोले हे ईश ! श्रीकृष्ण जी देह तो जड दृश्य है तो उस को सुख दुःख संसार नहीं है आत्मा द्रष्टा है तो दोनों को नहीं है फिर किस को बन्ध होगा ॥ १० ॥

आत्मा तो नाश रहित है निर्गुण है शुद्ध है स्वयं ज्योति है आवरण रहित है अग्नि के तुल्य है और देह तो अचेतन काष्ठ सरी का है तब इहां पर किस को संसार होता है ॥ ११ ॥

श्रीभगवान् बोले जब पर्यंत देह इन्द्रिय प्राण इन के साथ आत्मा का संबंध है तब पर्यंत अविवेकी पुरुष को संसार फल होता है ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वसतो देहादेः कुतः संसारस्फूर्तिहेतुत्वमपि तत्राऽऽह । अर्थे हीति । अस्याऽऽत्मनः ॥ १३ ॥

ननु कथञ्चिज्ज्ञानतो विषयस्फूर्तिर्जीवन्मुक्तस्यापि दुर्वारत्वानिर्मोक्षप्रसङ्गः स्यात्तत्राऽऽह । यथा हीति । प्रस्वापः स्वप्नः बहूननर्थान् बिभर्ति पुष्णातीति तथा ॥ १४ ॥

अहङ्कारलक्षणो देहादिसन्निकर्ष एव संसारालम्बनमित्य-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न्वयव्यतिरेकाभ्यां दर्शयति । शोकेति । सुषुप्त्यादौ तेषामदर्शनादहंसुखीतिवच्चैतन्यं सुखीतिप्रतीत्यभावाच्च दृश्यत्वाच्च सुखादीनां कृशत्वादिवद्‌द्रष्टृधर्मत्वानुपपत्तेरिति भावः । उक्तं च—

सुप्तेऽहमि न दृश्यन्ते सुखदोषप्रवृत्तयः ॥
अतस्तस्यैव संसारो न मे संसृतिसाक्षिणः ।

इति ॥ १५ ॥

ननु यद्यहङ्कारस्य संसारस्तर्हि मुक्तिरपि तस्यैवेति मुक्तावहङ्कारावशेषः प्रसज्जेत तत्राऽऽह । देहेति । देहादिष्वभिमानो यस्य सः आत्मैव तेषामन्तर्हितो जीवः अत एव गुणकर्ममयी मूर्तिर्यस्य सः एवं च सूक्ष्मोपाधिभिर्बहुधैव सूत्रादिशब्दैर्गीतः संसारे परमेश्वराधीनः सर्वतो धावत्यतो नायं दोष इति भावः ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

असतः स्वस्वरूपत्वेन मिथ्याभूतस्येत्यर्थः । तत्र तस्यामाशङ्कायां दृष्टान्तमाह ॥ १३ ॥

कथञ्चित् देहारम्भककर्मानुसारेण । विषयस्फूर्त्तिर्भोजनादिकाले अन्नादिज्ञानम् ॥ १४ ॥

अहङ्कारसत्त्वे संसारसत्त्वमन्वयः तदभावे तदभावो व्यतिरेकस्ताभ्याम् । नात्मन इत्यस्याभिप्रायं व्यञ्जयति सुषुप्त्यादाविति । तेषां शोकादीनाम् । दृश्यत्वाच्च प्रत्यक्षादिभिर्ज्ञातत्वाच्च यथा कृशत्वादि दृश्यते । तस्मादृश्यात्मधर्मत्वम् न तेषामुपपद्यत इत्यर्थः ॥ १५ ॥

तस्यैवाहङ्कारस्यैव । स देहाद्यभिमानवानात्मैव तेषां देहादीनामन्तःस्थितो जीव इत्युक्त्या स्वरूपभूतास्मदर्थत्वं जीवस्य व्यञ्जितम् । अत एवाभिमन्तुर्जीवत्वादेव । ततः अहङ्कारादीनां कल्पितत्वादेव अयं प्राकृताहङ्काराद्यशेषलक्षणः । तथा च जीवस्यैव अहन्त्वेन मुक्तौ स्थितिर्नाहङ्कारादीनामित्यर्थः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्थे हीति । देवत्वाद्याकारे आत्मन्यविद्यमानेऽपि स्थूलोऽहमित्याद्यध्यासात्संसारः विषयान् ध्यायतः पूर्वानुभवसंस्कारतः स्वप्ने स्वाप्नदेहस्यानात्मत्वं सम्प्रतिपन्नं तथापि तस्यात्मन्यध्यासात्तादात्विकदुःखानुभवस्तद्वदित्यर्थः ॥ १३ ॥

प्रबोधदशायां स्वप्नदेहस्यानात्मत्वसम्प्रतिपत्ति तद्देहापगमेन तदभिमानप्रयुक्तदुःखाभावं च दर्शयति । यथाहीति । प्रस्वापशब्दः स्वप्नपरः देहात्माभिमानद्वारा बह्वनर्थकरत्वं विवक्षितं न मोहाय कल्पते आत्माभिमानप्रयुक्तानर्थाय न प्रकल्पत इति भावः ॥ १४ ॥

अहङ्कारस्य दृश्यन्ते इत्युपचारात् व्यपदेशः दुःखाज्ञानमयाः धर्माः प्रकृतेस्ते नत्वात्मन इतिवत् अनात्मन्यात्माभिमानप्रयुक्ताः शोकादयः न त्वात्मनः स्वाभाविका इत्यर्थः ॥१५॥

संसारस्य हेतुत्वे अहंकारस्य प्राधान्यमुक्तं संसृतिहेतून् सकलान् दर्शयति । देहेन्द्रियेति । अभिमानः अनात्मन्यात्मबुद्धिः जीवस्य संसृतिहेतुत्वं कर्मानुष्ठातृतया अन्तरात्मा परमात्मा तस्य संसृतिहेतुत्वं कर्मफलप्रदातृतया गुणकर्ममूर्त्तिः गुणाश्च कर्माणि च मूर्तिवद्यस्य विधेयानि स गुणकर्ममूर्तिरिति 'अन्तरात्मविशेषणं गुणकर्म मूर्तीर्ति पाठे गुणाश्च कर्माणि च मूर्तिश्च गुणकर्ममूर्त्तिः मूर्त्तिशब्दो मनुष्यत्वादिजातिपरः देहस्य प्रथममुक्तत्वात् सूत्रं महान् सूत्रभूतहंकारादिकार्यत्वाच्च धारकभूतो महान् ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मन्यविद्यमानादपि देवमनुष्याद्याकारात्संसृतिरित्येतदेव दृष्टान्तमुखेन उपपादयति । अर्थे हीति । अर्थे देवमनुष्याद्याकारेऽविद्यमानेऽप्यात्मन्यसत्यपि विषयान् ध्यायतोऽस्य संसृतिर्न निवर्त्तते स्थूलोऽहं कृशोऽहं ममैते कलत्रादयो ममैते प्रतिकूलाः शब्दादय इमे त्वनुकूला इत्येवं ध्यायत इत्यर्थः । यथा स्वप्नेऽनर्थागमः स्वाप्नदेहस्यानात्मत्वं सम्प्रतिपन्नं तथापि तस्यात्मन्यध्यासादनर्थागमस्तादात्विकदुःखानुभवो भवति तद्वदित्यर्थः ॥ १३ ॥

स्वाप्नदेहस्यानात्मत्वसम्प्रतिपत्तिं तद्देहापगमे तु तदभिमानप्रयुक्तदुःखाभावं च दर्शयति । यथा हीति । प्रस्वापशब्दः स्वप्नपरः तस्य देहात्माभिमानद्वारा बह्वनर्थकरत्वं विवक्षितं स एव प्रस्वाप एव प्रतिबुद्धस्य तस्मादुत्थितस्य मोहाय न कल्पते तद्देहात्माभिमानाय न कल्पते तद्देहात्माभिमानरूपमोहजननद्वारा सुखदुःखकृन्न भवतीत्यर्थः ॥ १४ ॥

दृष्टान्तेनाभिप्रेतमर्थं दार्ष्टान्तिके दर्शयति । शोकेति । शोकादयो जन्ममृत्यू चा हङ्कारस्याहङ्कारयुक्तस्यात्मनः ननु तद्वियुक्तस्य मत्वर्थीयार्शआद्यजन्तोऽत्राहङ्कारशब्दः अनात्मन्यात्माभिमानहेतुः प्रकृतिपरिणामविशेषोऽहङ्कारस्तत्प्रयुक्ताः शोकादयो नत्वात्मनः स्वाभाविका इत्यर्थः । दुःखाज्ञानमया धर्माः प्रकृतेस्ते नत्वात्मन इत्यादिष्वयमेवार्थः ॥ १५ ॥

अहङ्कारस्य दृश्यन्त इत्यहङ्कारस्य संसृतिहेतुत्वेन प्राधान्यमुक्तं अथ संसृतिहेतून् सर्वान् संकलय्य दर्शयति । देहेति । अभिमानः अनात्मन्यात्मबुद्धिः जीवस्य संसृतिहेतुत्वं कर्मानुष्ठातृतया अन्तरात्मा परमात्मा तस्य संसृतिहेतुत्वं कर्मफलप्रदत्वेन गुणकर्ममूर्तीरिति व्यत्ययेन द्वितीया गुणाः सत्त्वादयः कर्माणि पुण्यात्मकानि च मूर्त्तयश्च मूर्तिशब्दो देवत्वमनुष्यत्वादिजातिपरः देहस्य पृथगुक्तत्वात् सूत्रं महान्सूत्रभूतोऽहङ्कारादिकार्यं तत्त्वाधारभूतो महानित्यर्थः उरुधा बहुधा इतिशब्दो हेत्वर्थः उरुभ्य एतेभ्य इत्यर्थः । संसारः कालतन्त्रः कालवशः कालोऽपि हेतुरिति भावः आधावति प्रवर्त्तते ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संसृत्यभावस्यैव फलरूपत्वान्निरर्थ एव संसार इति अवधारयति । अर्थे पीति । अपिशब्दोऽल्पफलार्थः "उद्यते निष्फलत्वेनाप्यल्पफलं भवे"दितिवचनात् अर्थे अविद्यमानेऽपि अस्मात्संसारात्प्रयोजनाभावेऽपि पुंसः संसृतिर्न निवर्तते तत्रेदं निमित्तं ध्यायतो विषयानिति कथमिव अस्य स्वप्नदर्शिनो यथानर्थागमः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रयोजनविधुरत्वमुदाहरणाभिसंभवति अत्रापि निमित्तं ध्यायत इति यथा स्वप्नार्थानामस्थिरत्वेऽपि निरन्तरविषयानुस्मरणानुगतसंस्कारवन्तस्यानर्थागमो न निवर्तते एवं संसारोऽपि ॥१३॥

अज्ञानिन एव संसारोऽनर्थकरः न ज्ञानिन इत्याह । यथा हीति । अप्रतिबुद्धस्य स्वप्नावस्थामास्थितस्य यथा प्रस्वापो बह्वनर्थकृत् स एव प्रस्वापः प्रतिबुद्धस्य प्रमोहाय न कल्पते एवं संसृतिरज्ञानिनामनर्थकृत् सैव ज्ञानिनां मोहाय नैव विषयलोलुपत्वेन दुर्जनस्याफलः सज्जनस्य स्वस्वरूपानन्दापेक्षयाफलोऽपि मज्ज्ञानेन स्वरूपानन्दसाधनत्वेन सफलत्वादफल इति द्वेधः संसार इत्यवधारणार्थं पुनर्वचनमिति भावः ॥ १४ ॥

जीवस्यापि संसारः प्राभिमानिक एव न स्वाभाविकः अन्यथा तन्निवृत्तिसाधनविधानानुपपत्तिरित्याशयेनाह । शोकेति । शोकादयो जन्ममृत्युश्चाहंकारस्य सकाशाज्जीवस्य दृश्यन्ते न स्वतः परमात्मनस्त्वनभिमानात् सुतरामसम्भव इत्यर्थः । परमात्मन एव निषेधो न जीवस्येत्येतत् "अहङ्कारस्य सकाशात् दृश्यते नात्मनः स्वतः । अहङ्कारात्तु संसारो भवेज्जीवस्य न स्वतः । कुतश्चिदानन्दतनोः स्वरूपेऽच्युतस्य स" इत्यनेन निरस्तम् ॥ १५ ॥

कया युक्त्या जीवस्यैव संसार इति तत्राह । देहेति । देहेन्द्रियप्राणमनसां संघातोऽभिमानी यस्य स तथा सर्वेषामन्तःस्थत्वा सधर्मात्वस्य इत्यन्तरात्मा च गुणैः कर्मभिश्चारब्धा मूर्तिर्यस्य स तथा सूत्रं महानिद्याद्यधिकारनामभिर्बहुधा पुराणेषु गीतश्च कालतन्त्रः कालाभिमानी दुर्गाधीनो जीवः पुरुषो हिरण्यगर्भोऽपि संसारं प्राप्नोति किमुतान्ये जीवा इति कैमुत्यन्यायलक्षणया युक्त्या जीवस्यैव संसार इति निश्चीयते "संसारयुक्तश्चापि सर्वजीवेश्वरेश्वरः । विष्णुवशीनः सदा ज्ञानी किमुतान्येऽल्पचेतना" इति अनेन जीवोपाध्यवच्छिन्नस्य परमात्मनः संसार इति मतं निरस्तमिति ज्ञातव्यम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अज्ञानजेऽप्यस्य संबन्धेऽनर्थोपातं सदृष्टान्तमाह । अर्थे हीति ॥१३॥

तदेव व्यतिरेकेण द्रढयति । यथा हीति ॥ १४ ॥

वस्तुविवेके त्वहङ्कारस्यैवैते धर्मा नत्वात्मन इत्याह । शोकेति । अहङ्कारोऽत्र देहद्वयाभिमानः यावत्स्वत्वं स्फुरति । तावदेव शोकादेर्दर्शनात्तदस्फूर्तिसमयसुषुप्तावदर्शनात्तस्यैव ते धर्मा न तु शुद्धस्य एवं जन्म मृत्युश्चेत्यर्थः ॥ १५ ॥

अतोऽहङ्कारस्य यस्य संसारस्तस्यैव मुक्तिरपि प्रसज्येतेति मुक्तावहङ्कारशेषत्वमायातं यतो य एवाहङ्कारः स्वरूपनिष्ठः स एवाज्ञानेनोपसंसृष्टोपाध्याविष्टो भवति । निरहङ्कारस्याज्ञानसम्बन्धश्च न सम्भवति तस्माद्यद्यपि स्वरूपाहङ्कारव्यतिरिक्तस्यैव ते धर्मास्तथापि परंपरातत्तत्संबन्धाज्जीवो देहाभिमानी भवति । ततः संसरति मुच्यते चेत्याह । देहेति ॥१६॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु देहादीनामसत्त्वात् कुतस्तैः सम्बन्धः यतः संसारः स्यात्तत्राह । अर्थे वस्तुनि अविद्यमानेऽसत्यपि संसृतिः स्यादेव यथा स्वप्ने मिथ्याभूतेऽपि विषयध्यायिनो जनस्य अनर्थागमः व्याघ्रसर्पादिभयानुभवः ॥ १३ ॥

ननु तर्हि विवेकिनो जीवन्मुक्तस्यापि यत् किञ्चिद्विषयध्यानं दुर्वारमित्यनिर्मोक्षप्रसङ्गस्तत्राह । यथा हीति । प्रस्वापः स्वप्नः बहून् अनर्थान् बिभर्ति प्रतिबुद्धस्य प्राप्तजागरस्य न [illegible] तस्य मिथ्यात्वनिश्चयात् ॥ १४ ॥

न च भयशोकादयो वस्तुत आत्मधर्मा इत्याह । शोकेति । सुषुप्त्यादौ तेषामदर्शनादिति भावः । यद्यप्यहंकारस्यैव शोकादयस्तदपि तस्य जडत्वादेव तत्तदननुभव इति नास्ति तस्य संसार इति भावः ॥ १५ ॥

ननु यदि शोकहर्षादयोऽहङ्कारस्यैव धर्मा न त्वात्मनस्तर्हि कथमात्मा तान् धर्मान् स्वीकृत्य संसारदुःखमनुभवति नहि कश्चित् स्वदुःखार्थं परधर्ममुपादत्ते इत्यत आह । देहेति । अभिमानोऽहङ्कार एव जीवः जीवोपाधिः गुणकर्मभ्यां मूर्तिर्यस्य तथाभूतः सन् संसारं निमित्तं आधावति जीवात्मानं स्वधर्मान् ग्राहयितुं प्राप्तो भवति कालतन्त्रः कलयतीति काल ईश्वरस्तदधीनः कीदृशः देहादिरूपैरुरुधैव नानाशास्त्रेषु गीतः; देहश्च इन्द्रियाणि च प्राणाश्च मनश्च तेषां संघरूपम् अन्तरात्मा बुद्धिः तेन बलादेवाहङ्काररूपया अविद्यया निबध्य जीवः संसारदुःखं पाल्यते इति भावः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अपार्थत्वेऽप्यविवेकिनः फलवत्त्वं दृष्टान्तेन दर्शयति । अर्थे हीति । देवोऽहं राजाहं रङ्कोऽहं स्थूलोऽहं कृशोऽहमित्यादिना प्रतीयमाने अर्थे देवादिदेहे स्थूलत्वकृशत्वादिधर्मे चार्थस्वरूपे विद्यमानेऽपि असत्यविवेकिनः अहं सुख्यहं दुःख्यहं मृत इत्यादिरूपा संसृतिर्न निवर्तते तत्र दृष्टान्तः विषयान्ध्यायतः पुंसः स्वप्नेऽनर्थागमो यथा तद्वत् ॥ १३ ॥

ननु यद्यविवेकिन एवानर्थागमस्तर्हि देहेन्द्रियादिसंसर्गस्य संसरणहेतुत्वं तस्यैवोच्यते तर्हि विवेकिनोऽपि देहादिसंसर्गस्य विद्यमानत्वात्तस्यापि संसारः किं न स्यादित्याशङ्क्य विवेकिनस्तद्भावाभावौ दृष्टान्तेन दर्शयन् समाधत्ते हीति । यथा अप्रतिबुद्धस्य स्वप्नावस्थायामास्थितस्यैव प्रस्वापो बह्वनर्थकृत् स एव प्रस्वापः प्रतिबुद्धस्य मोहाय नैव कल्पते एवमज्ञानिन एव देहादिसंसर्गः अनर्थकृत् अनर्थभूदिति वा पाठः विवेकिनस्तु देहादिमत्त्वेऽपि तत्संसर्गो मोहाय नैव कल्पते सुखदुःखस्थूलत्वकृशत्वादीन्देहधर्मानात्मनि न मन्यते इति भावः ॥ १४ ॥

तत्र कारणमाह । शोकेति । शोकादयो जन्ममृत्युश्चाहङ्कारस्य दृश्यन्ते इत्यन्वयः अनात्मन्यात्माभिमानोऽहङ्कारस्तस्य कर्तृत्वकरणापादाननिमित्तादिरूपत्वात् षष्ठ्या सामान्यसम्बन्धवाचकत्वात्

अमूलमेतद्बहुरूपरूपितं मनोवचःप्राणशरीरकर्म ।
ज्ञानासिनोपासनया शितेन च्छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥ १७ ॥
ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ।
आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥ १८ ॥
यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥ १९ ॥
विज्ञानमेतत्त्रियवस्थमङ्ग ! गुणत्रयं कारणकार्यकर्तृ ।
समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥ २० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वसम्बन्धानां तत्रान्तर्गतत्वात्तया निर्दिष्टत्वप्रयुक्ता एव जीवस्य शोकादयो भवन्ति न स्वाभाविकाः अन्यथा तन्निवृत्तिसाधनविधायकशास्त्रवैयर्थ्यं स्यात् न च तत्केवलाहङ्कारस्यैवेति वक्तुं शक्यते तस्यापि जडत्वात् अङ्गीकारे च तस्यैव मुक्तिः स्यान्न त्वात्मनः अहङ्कारकृतं बन्धमात्मनोऽर्थे विपर्ययमिति हंसगीते स्वोक्तिविरोधाच्च दृश्यन्ते ह्यनेन केनचित्पुरुषेण दण्डयोग्यं कर्म कृतं स राजपुरुषैर्दण्डाय नीयते तदा तत्पितृभ्रात्रादयोऽस्मिन्दुःखिते मृते वा वयमेव दुःखिता मृताश्चेत्याकारेण तदनुतापिनश्चेत्तर्हि तेऽपि बध्यन्ते यस्तु तत्राहंममताशून्यस्तटस्थः पश्यति स न बध्यते इति लोकप्रसिद्धिः सूचिता ॥ १५ ॥

एवमात्मनः संसारं प्रत्यहङ्कारस्य प्रधानकारणत्वमुक्त्वेदानीं प्राधान्यादेव तस्य सर्वरूपतां प्रतिपादयति । देहेन्द्रियेति । सर्वेषां भूतानामन्तर्हृदयेऽततीति प्राप्नोतीत्यन्तरात्मा अहङ्कारः कालतन्त्रः कालरूपेश्वराधीनः संसारे आधावतीत्यन्वयः सुखदुःखादिफलभोगार्थमासमन्तात्त्रिगुणमूर्तिमयः धावन् गच्छतीत्यर्थः । ननु स्वर्गनरकादिषु तत्फलभोगाय जीव एव गच्छतीति सर्वैः प्रतिपाद्यते कथमहङ्कार इत्युच्यते इति चेत्सत्यं सोऽप्यहङ्कारप्रयुक्त एवेत्याह । देहेन्द्रियेति । देहेन्द्रियप्राणमनस्सु अभिमानो यस्य स तथा तत्रात्मबुद्धिरित्यर्थः स एव जीवो देहाद्यहङ्कारवानेव पुण्यादिकर्मफलभोक्ता न तु तत्राभिनिवेशशून्यः तथा चागतमहङ्कारस्यैव प्राधान्यं स्यादेतत्तथापि कथमहङ्कारस्य व्यक्तिरित्यपेक्षायामाह । गुणकर्ममूर्तिरिति । सात्विकादिगुणाभिव्यक्तकर्मभिर्मूर्तिर्व्यक्तिरिति भावो यस्य तथा सः निर्दिष्टकर्मध्यानादिकर्मप्रवृत्त्या सात्विकः दुःखोद्धारादिकर्मप्रवृत्त्या राजसः द्यूतादिहिंसादिकर्मप्रवृत्त्या तामसोऽहङ्कारो बोध्यः इति भावः किं च महतः कार्यत्वात् त्रिविधो महानप्ययमेवेत्याह । सूत्रं महानिति । क्रियाशक्तिप्रधानज्ञानशक्तिप्रधानात्मना इत्यर्थः । इत्युक्तप्रकारेणैवेह गतिः बहुप्रकारेणाहङ्कारो गीतः उक्तश्चेति पाठान्तरं तस्मादहङ्कारकृत एवात्मनो बन्धो नान्यथेति सिद्धम् ॥ १६ ॥

### भाषा टीका ।

नित्य अर्थ न रहने पर भी अनेक प्रकार विषयों के ध्यान करने वाले का संसार नहीं निवृत्त होता है जैसे कि ध्यान से स्वप्न में अनर्थ की प्राप्ति होती है ॥ १३ ॥

जैसे कि निद्रा से नहीं जगने वाले पुरुष को स्वप्न बहुत अनर्थकारी होता है वही स्वप्न जागने वाले को मोह कारक नहीं होता है ॥ १४ ॥

शोक हर्ष भय क्रोध लोभ मोह स्पृहादिक तथा जन्म मृत्यु ए सब अहंकार के संबंध से दीखते हैं आत्मा के स्वरूप कुछ नहीं हैं ॥ १५ ॥

देह इंद्रिय प्राण मन इन के साथ अभिमान करने वाला जीव मध्य में रहकर गुण की मूर्ति बन जाता है वही सूत्रोपाधि महान् उपाधि से बहुत प्रकार से शास्त्रों में गाया जाता है काल रूप परमात्म के अधीन हो कर संसार में दौडता रहता है ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवमहङ्कारकृतं बन्धमुपपाद्येदानीं ज्ञानेन तन्निवृत्तौ मुक्तिरित्याह । अमूलमिति । वस्तुतो मूलशून्यमज्ञानतस्तु बहुभी रूपैर्देवादिशरीरै रूपितं प्रकाशितमेतज्जीवस्वरूपमिति वा किं तत्तदाह । मन इति । मनआदीनां द्वन्द्वः एषां मनआदिषु क्रियत इति कर्म अवहूर्या गुरोरुपासनया निशितेन तीक्ष्णेन ज्ञानखड्गेन छित्त्वा ॥ १७ ॥

तदेव ज्ञानं स्वरूपसाधनफलैर्निरूपयति । ज्ञानमिति । विवेको ज्ञानम् साधनान्याह । निगमो वेदः तपः स्वधर्मः प्रत्यक्षं स्वानुभवः ऐतिह्यमुपदेशः अनुमानं तर्कः फलमाह । आद्यन्तयोरस्य जगतो मध्येऽपि तदेव केवलं न तु जगदिति । किं तत्कालः कलयति प्रकाशयति यत्तथा हेतुः कारणं च यत् तदेव एतदुक्तं भवति यद्ब्रह्म विश्वस्य कारणं प्रकाशकं च ब्रह्म तदात्मकमेवैतत् ततः पृथगित्येवं निश्चयफलो निगमादिसाधनैर्जायते यो विवेकस्तज्ज्ञानमिति ॥ १८ ॥

---

अपदस्यामीति विज० पाठः ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनीटिप्पणी ।

छन्दोऽनुरोधेनेति । तत्र मानन्तु व्याडिगालवयोर्मतेनैके यथा व्यवधीयन्ते इति शब्दस्मृतिरेव । सामान्यज्ञानमात्रेण निरुपाधिप्रकाशमात्रेण कर्त्रा यः समन्वयः सत्यत्वादिस्तेन विशिष्टं भवति तथाच येन परमात्मनानुगतं व्याप्तं सद्विश्वं प्रकाशत इति फलितोऽर्थः । तमेव परमात्मानमेव भान्तं सतः प्रकाशमानमनुलक्ष्यीकृत्य सर्वं विश्वं भाति प्रकाशत इति तत्स्वसत्तैव निषिद्धा चक्षुषश्चक्षुरिति रूपादिप्रकाशनशक्तिः परमात्मन एव न चक्षुरादीनामित्यत्रापि सैव निषिद्धा । समाध्यादावित्यादिना वैकुण्ठादिप्रदस्तथा च तदुपलम्भे विद्वदनुभव एव दृढतरं मानमिति सूचितम् ॥ २० ॥

अव्यभिचारिणः परमात्मनः व्यभिचारिणः पृथक् सत्तया वैशेषिकादिभिरभ्युपेतस्य विश्वस्य तु असत्यतां मिथ्यात्वम् । विकारो घटशरावादिकार्यावस्था वाचा व्यवहारेणारभ्यते स्वयोरविशेषात् स्पृश्यते सम्बध्यते इति यावत् । तन्नामधेयं नाम मात्रं सर्वं मृत्तिका मृत्तिकालक्षणमेकमेव द्रव्यं नतु पृथक्सत्ताकं किञ्चिदप्यस्ति इत्येव सत्यम् । आलम्भः स्पर्शो हिंसयोरिति नैघण्टुकाः । वाचेति कर्मणि ल्युट् । सर्वं खल्विदं ब्रह्मेति बाधितसामानाधिकरण्यम् । वैष्णवमते तु सर्वस्य तच्छक्तित्वात्तच्छरीरत्वात्तदव्यतिरेकात्तदायत्तवृत्तिकत्वाच्च तच्छब्दानां तावत्पर्यन्तधावनशीलत्वेन मुख्यमेव सामानाधिकरण्यमन्यथाऽव्यक्तज्ञानं नाधिष्ठानज्ञानेनेति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापरिणामदृष्टान्तश्च न सङ्गच्छेतेति ज्ञेयम् । मायार्थस्तु सर्वसिद्धान्तानुयायी पृथक् सत्तयाभक्तैरनभ्युपेतत्वात् ॥ २१ ॥

सामान्यतः प्रकृतेऽप्रकृते चेत्यर्थः । तत्र लोके कार्यस्य घटादेः कारणेन मृदा तथा प्रकाश्यस्य प्रभादेः प्रकाशकेन दीपादिनाऽभेदः प्रसिद्ध इति प्रस्तुते प्रकृते विश्वब्रह्मणोः कार्यकारणादिभावे तदुभयेति कार्यकारणप्रकाश्यप्रकाशकोभयपृथक्त्वज्ञानपूर्वकमेतच्छब्दवत्त्वादयमित्यध्याहृतं यच्छब्दघटात् स इत्यपि किन्त्वध्याहृततच्छब्दसान्निध्यादेतच्छब्दस्य प्रसिद्धार्थत्वमित्यालङ्कारिकाः । विकारसमूहः महदादिकार्यप्रपञ्चः । प्रागविद्यमान इत्यादि पदद्वयस्य मेलयित्वा व्याख्यानादित्यर्थं इत्युक्तम् । एवं परत्राप्यपिशब्दस्य दूरान्वयाद्ब्रह्मपदाध्याहाराच्च तथोक्तम् । एवं प्रपञ्चस्य कार्यत्वप्रकाश्यत्वे अभिधाय ब्रह्मणः कारणत्वप्रकाशकत्वे योजयितुं तुशब्दाध्याहारः भिन्नोपक्रमत्वात् । नतु कार्यमिति किन्तु कारणमित्यर्थः । अतः विश्वब्रह्मणोः कार्यत्वप्रकाश्यत्वकारणत्वप्रकाशकत्वादेतोः इन्द्रियादिविकारपर्यन्ताः पदार्था एव चित्रं नानाविधं विश्वं स्वाभाविकाचिन्त्यशक्त्या अद्वैव भाति उपाधिकल्पते मानाभावाद्वयवादिनां मते तु बाधितसामानाधिकरण्यमेव टीकाकारोक्तं व्याख्यानन्तु यथामूलं सर्वोन्मुखं यथारुचि ग्राह्यमिति तादृश्येन सुधीभिर्विभाव्यम् ॥ २२ ॥

निगमाश्च पूर्वपक्षरूपा अत्र विशेष्यत्वेनादृताः सूत्रे अदः भावात् अयमुदयात् मुद्राभञ्जनः पाथनीनामितिवत् ॥ २३ ॥

इदमित्यात्रीयं जीवात्मानं विवेक्तुं परस्य देहादेरपवादम् आत्मत्वनिरासं विस्तारयति । अशोषदृश्यत्वात् अन्नोपजीव्यत्वात् । पूर्वार्थे इन्द्रियादीनां बहुवचनानामन्नमात्रमित्येकवचनेन सामानाधिकरण्यायोगाद्बद्धेति आदिना देवा आत्मा न जडसात्त्विकाहङ्कारकार्यत्वात् वायुर्नात्मा स्पर्शवत्त्वात् घटवत् । जलं नात्मा शीतस्पर्शवत्त्वात् शीतशिलावत् । हुताशो नात्मा उष्णस्पर्शवत्त्वात् आतपवत् । धिषणा बुद्धिर्नात्मा करणत्वादिन्द्रियवत् । चित्तं नात्मा करणत्वादेव बुद्धिवत् । अहंकृतिर्नात्मा जडत्वात् करणत्वाच्च इन्द्रियवत् । इत्यनुमानानि बोध्यानि ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मनोवचः प्राणशरीरकर्म मननादिभिः कृतकर्म ज्ञानासिना छित्वा अमूलमिति छिदिक्रियाविशेषणममूलं यथा भवति तथा छित्वेत्यर्थः ॥ १७ ॥

ज्ञानासिनेत्युक्तज्ञानस्य हेतून् कथयति । ज्ञानं विवेको निगम इति । कार्यकारणभावाभिप्रायं नित्यत्वादिभिरात्मपरमात्मनोः परस्परव्यावर्तकधर्मेण निरूपणं विवेकः तपः कर्मयोगः आत्मानात्मनोरहन्तया ममतया चानुभवः प्रत्यक्षं विवेकादिज्ञानं विवेकादिभिरेव ज्ञानं निष्पाद्यत इत्यर्थः । आद्यन्तयोरिति । देहस्याद्यन्तयोः यत्केवलं शरीररहितं मध्येऽपि तदेवात्मस्वरूपं नतु शरीरमात्मेत्यर्थः ॥ १८ ॥

तदेव दृष्टान्तेन दर्शयति । यथा हिरण्यमिति । शुद्धमपि हिरण्यं कटकमुकुटादिनिर्माणादिदशायां रजतादिभिर्मिश्रं क्रियते रजतमिश्रमपि भूषणावस्थं हिरण्यमिति व्यपदिश्यते तद्भ्रान्तिमूलं रजतमिश्रणात्पूर्वमग्निसंशोधनात्पश्चाच्च केवलं हिरण्यमेव हिरण्यशब्दवाच्यं तथा केवलं हिरण्यमेव मध्येऽपि हिरण्यशब्दवाच्यं नतु रजतांश इति निरूपकेर्ज्ञायते एवमहमर्थोऽपि देहसंबन्धात्पूर्वापरकालयोरिव मध्येऽपि देहविलक्षण एव देहसम्मेलनेनाहमिति प्रतिपत्तिस्तु भ्रान्तिरेवेत्यर्थः । दार्ष्टान्तिकसामर्थ्यात् दृष्टान्तस्य तथात्वमित्यवगम्यते ॥ १९ ॥

विज्ञानमिति । गुणत्रयं गुणत्रयात्मकं कारणमिन्द्रियवर्गः कार्यं शरीरं कर्तृ महत्तत्त्वकार्यमनात्मन्यात्माभिमानहेतुभूतमहङ्कारतत्त्वमिति । त्रियवस्थं विज्ञानमवस्थात्रितयविलक्षणेन येनान्वयव्यतिरेकाभ्यां प्रवर्तते तदेवात्मस्वरूपं सत्यमपरिणामीत्यर्थः आत्मनि देहान्तरवस्थिते सति इन्द्रियादीनां प्रवृत्तिः तदपगमे तु न प्रवृत्तिः अन्वयव्यतिरेकसिद्धा ॥ २० ॥

न यदीति । यत् शरीरं पुरस्तात् उत्पत्तेः पूर्वकाले नास्मा भवति मरणात्पश्चाच्च नास्मा भवति तन्मध्येऽपि नास्मा भवति स्थूलोऽहमिति व्यपदेशमात्रं भ्रान्तिमूलं देहस्य पूर्वापरकालयोरपि भूतं विद्यमानमिति यत्प्रत्यक्षप्रमाणेन प्रसिद्धं तदेव तत् स्यात् तदात्मस्वरूपं स्यादित्यर्थः ॥ २१ ॥

अविद्यमानोऽपीति । वैकारिकः प्रकृतिविकारभूतो राजससर्गः रजोगुणोद्रेकतया प्रवृत्तिकर एव सर्गः शरीररूपसृज्यपदार्थः आत्मनिस्तत्र एषोविद्यमानोऽप्यवभासते अत्र परिशुद्धजीवात्मस्वरूपं स्वयं ज्योतिरजडं जडदेहादिविलक्षणं तथापि तज्जीवात्म-

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वरूपमिन्द्रियजलगोचरं शरीरविकारं चित्रं भाति अतोभाति पूर्वोक्तप्रकृतदेहसंसर्गात् तन्मिश्रतया भाति न तु व्यापकतया वभासत इत्यर्थः । ब्रह्मभूयाय कल्पते ब्रह्मणो हि प्रतिष्ठाहमिति परिशुद्धात्मनि ब्रह्मशब्दः प्रयुज्यते ॥ २२ ॥

एवमिति । स्फुटब्रह्मविवेकाभ्यां भिन्नकहेतुज्ञानं स्फुटतरपरिशुद्धात्मस्वरूपज्ञानवान् परापवादेन देहेन्द्रियप्राणानामात्मत्वापनोदनेन आत्मिककामुकेभ्यः उपायभेदफलकामिभिः सङ्गं न कुर्यात् ॥ २३ ॥

परापवादमेव विवृणोति । नात्मा वपुरिति पार्थिवं वपुर्नात्मा इन्द्रियदेवतान्यानीन्द्रियाणि नात्मेत्येवं योजनीयं मनोऽन्नमाद्यमन्नात्मकमितं नात्मा "अन्नमयं हि सौम्य ! मन" इति हि श्रुतिः धिषणा ज्ञानं सत्त्वं बुद्ध्यात्मकमन्तः करणम् अयमात्मा वपुरादीनामर्थतः व्याप्यमस्ति अनात्मत्वेन त्याज्यमस्तीत्यर्थः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्तर्हि तन्निवृत्त्युपाय इत्यत आह । अमूलमिति । बहुभिर्देहादिभी रूपैर्हेतुभिः रूप्यत इति तथा तन्मननादीनां कर्म मननादिभिः कृतं कर्मेत्यर्थः । तदेतत्संसृतिमूलममूलं यथा तथा ज्ञानासिना छित्त्वा कथंभूतेनोपासनया महोपासनया शितेन संततानुवृत्तेन छिन्द्यादित्यस्य छेदनार्थोपक्रमत्यर्थः । अविद्यायां निर्मूलच्छेदनासंभवात् न तृष्णा शब्दादिषु यस्य स अतृष्णः मुनिः शुभाश्रयसशीलनशीलः गां भूमिं विचरेदित्यर्थः । ज्ञानोपासनं तन्निवृत्तिहेतुरिति भावः ॥ १७ ॥

कीदृशं तज्ज्ञानं कानि पुनस्तस्य साधनानीत्यत आह । ज्ञानं विवेको निगम इति । कार्यकारणयोरभेदाभिप्रायकं सामानाधिकरण्यं विवेकादिना ज्ञानं निष्पाद्यत इत्यर्थः । तत्र नित्यत्वादिभिरात्मनोः परस्परव्यावर्तकधर्मेण निरूपणं विवेकः तपः कर्मयोगः निगमः शास्त्रश्रवणजं ज्ञानम् आत्मानात्मनोरत्यन्तभेदं तथा चानुभवः पञ्चभूतैरमुपदेशः अनुमानं कृष्यादिदृष्टान्तेन कर्मफलानित्यत्वानुमानम् एवं साधनान्युक्तानि । अथ ज्ञानाकारमभिनयेन निरूपयति सार्धश्लोकाभ्याम् । आद्यन्तयोरिति । अस्य देहस्याद्यन्तयोर्यदेकमेवं शरीरव्याहृतं मध्येऽपि तदेवात्मस्वरूपं नतु शरीरमात्मेत्येवं विधं ज्ञानमित्यर्थः । कालश्चेति चकारार्थो उभयोरपायमाद्यो वा काल एव हेतुः यदुत स्यादिति भगवत्सङ्कल्पकाल एवेति विमृश्यात्मनो देहसम्बन्धमिमिति समितार्थः ॥ १८ ॥

तदेव ज्ञानं दृष्टान्तेन दर्शयति । यथेति । सुकृतं सुष्ठु कृतं कटकमुकुटप्राकरणोचितमित्यर्थः । तत्सवर्ण्यस्य हिरण्मयस्य कटकमुकुटादेः पुरस्तात्पश्चाच्चातो मध्येऽपि तदेव नानापदेशैर्नानानामभी रजतादिमिश्रणानलङ्घनैर्वस्तुर्यं भवति विशुद्धहिरण्यं कटकमुकुटादिनिर्माणदशायां रजतादिमिश्रं क्रियते तन्मिश्रमपि भूषणावस्थं हिरण्यमिति व्यवह्रियते स च व्यवहारो भ्रान्तिमूल निरूपकैस्तु रजतादिमिश्रणात्पूर्वमविनाशात्पश्चाच्च यत्केवलं हिरण्यं तदेव मध्येऽपि हिरण्यमात्रत्वाच्छ्यं न तु रजताद्यंशोऽपीति व्यवह्रियते स च भ्रान्तिमूलः तद्वदेव अहमर्थोऽप्यात्मा अस्य देहस्य पुरस्तात्पश्चाच्च मध्येऽपि स एव देहसम्बन्धात्पूर्वापरकालयोरिव मध्येऽपि देहविलक्षण एव देहसम्मेलनेनाहमिति प्रतीतिस्तु भ्रान्तिरेवेत्यर्थः । दार्ष्टान्तिकसामर्थ्याद्दृष्टान्ते बोद्धात्मकमिश्रत्वमवगम्यते ॥ १९ ॥

किञ्च विज्ञानमिति । कारणमिन्द्रियवर्गः कार्यं शरीरं कर्तृ महत्तत्त्वकार्येऽनात्मन्यात्माभिमानहेतुरहङ्कारतत्त्वमिति त्रिधा त्र्यवस्थं त्रिधावस्थितं यकारस्य पृथक् पाठश्छन्दोऽनुरोधात् अङ्ग हे उद्धव ! गुणत्रयं त्रिगुणपरिणामात्मकमचेतनं समन्वयेन व्यतिरेकेतश्चान्वयव्यतिरेकाभ्यां येन तुर्येणावस्थात्रयरहितेनात्मतत्त्वेन प्रवर्तत इति शेषः तदयात्मतत्त्वं सत्यमपरिणामीत्येवं विधमध्येतज्ज्ञानाङ्गसनोपासनयत्युक्तं विज्ञानमित्यर्थः । त्रयवस्थमित्यस्य उत्पत्तिस्थितिनिधनात्मकावस्थात्रयभागिति वार्थः । तत्रात्मनि देहान्तर्वर्तिनि सतीन्द्रियादीनां प्रवृत्तिरित्यन्वयः तदपगमे तु न प्रवृत्तिरिति व्यतिरेकः ॥ २० ॥

न यदिति । यच्छरीरं पुरस्तादुत्पत्तेः पूर्वकाले नात्मा भवति उतापि च पश्चान्नाशानन्तरमपि नात्मा तन्मध्येऽपि नात्मा भवति स्थूलोऽहमिति व्यवहारमात्रं स एव व्यवहारो भ्रान्तिमूलक इत्यर्थः । भूतदेहस्य पूर्वापरकालयोरपि विद्यमानं यदात्मतत्त्वं परेणाप्रमाणेन प्रसिद्धं तदेव स्यात् सदेकरूपं स्यादिति च तत् ज्ञातासिनेदमुक्तं ज्ञानमिति मे मनीषा मतिः मे मतमित्यर्थः ॥ २१ ॥

किञ्च अविद्यमान इति । वैकारिकः प्रकृतिविकारभूतः राजसः रजोगुणोद्रिक्ततया प्रवृत्तिस्वभावः एष सर्गः शरीररूपसृष्टिपदार्थः अविद्यमानोऽप्यात्मेति स्वतः एवाविद्यमानोऽप्ययमात्मेति स्वाभिमानविषयतया प्रतीयते ब्रह्म परिशुद्धं जीवात्मस्वरूपं तु स्वयंज्योतिरतो विभाति अत इति ल्यब्लोपे कर्मणि पञ्चमी इमं सर्गमपोह्य पुनरावृत्तं यथा तथा निवृत्त्येत्यर्थः । स्वयंज्योतिः स्वयंप्रकाशमवभासते ब्रह्मप्रकृतिस्तु इन्द्रियार्थात्मविकारचित्रमिन्द्रियाण्यर्थाः शब्दादिविषयास्तद्रात्मानस्तद्रूपा ये विकारास्तैश्चित्रं भातीत्येवं विधमपि तद्विज्ञानमित्यर्थः । अत्राद्यो ब्रह्मशब्दो मुक्तात्मस्वरूपपरः ब्रह्मभूयाय कल्पते ब्रह्मणो हि प्रतिष्ठाहमिति परिशुद्धात्मनि तत्प्रयोगदर्शनात् द्वितीयस्तु प्रकृतिपरः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते मम योनिर्महद्ब्रह्मेति प्रकृतावपि तत्प्रयोगदर्शनात् बद्धात्मस्वरूपं देहसंयोगात्तन्मिश्रतयावभाति नतु व्यापृततया शुद्धात्मस्वरूपं च तदभावात्पृथगेवावभासत इत्यर्थः ॥ २२ ॥

तत्राद्यन्तयोरक्षेपेन संसृतिनिवृत्त्युपायतयोक्तस्य ज्ञानस्य देहपूर्वोत्तरमध्यकालत्रयानुवृत्तदेहविलक्षणात्मस्वरूपविचारात्मकत्वाकार उक्तः यथा हिरण्यमित्यनेन देहसंमेलनेनाहमिति प्रतीतेर्भ्रान्तिरूपत्वानिर्णयात्मकत्वाकारः विज्ञानमेतदित्यनेन त्वन्वयव्यतिरेकाभ्यामात्मनो देहादिप्रवर्तकत्वविचारात्मकत्वाकारः न यत्पुरस्तादित्यादिना देहस्यानात्मत्वनिश्चयाकारः अविद्यमान इत्यनेनतु परिशुद्धात्मस्वरूपस्य स्वानुवृत्ततया अवभासविचारात्मकत्वाकारः तदेवमुक्तविधस्य ज्ञानस्य संसृतिनिदानभूतदेहात्माभिमानच्छेदकत्वमुक्तमथान्यान्यपि तदुपकारकाणि वदन्नेतदुपसंहरति । एवमितीदं स्फुटं यथा तथा ब्रह्मविवेकहेतुभिः ब्रह्मणः परमात्मनो विवेकः उक्तविधाभ्यां प्रकृतिपुरुषाभ्यां वैलक्षण्यनिर्णयस्तद्धेतुभिर्विचारात्मकैर्ज्ञानैर्विचारेण निपुणेन परापवादेन चात्मनि संदेहं छित्त्वा तत्स्वपरस्वरूपात्मकमोहं छित्त्वा अस्य पूर्वं दर्शितज्ञानवतुष्ट्याः अस्यात्मकश्चात्मानुभवानन्दतुष्टः आत्मिककामुकेभ्य उपरमेताखिलेः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

स्वातन्त्र्यमेव निषिध्यते ननु प्रतीत्यन्यथानुपपत्त्यानिर्वचनीयत्वं परमार्थसत्त्वाभावेन नाशोपपत्तेः ॥ २१ ॥

सत्यत्व वाच्येतत्वस्यादपेन्यथोपपत्तेरिति भावेनाह। अविद्यमान इति। सत्सद्वैतत्वप्रसमनुपपन्नं चजगदस्येव इत्यादिति शून्यवादिमतं वारेन मत्याह। अविद्यमान इत्यादिना। वैकारिकः विकारत्रोऽन्यो राजसः सर्गः रजोगुणसम्बन्धी सर्गो यस्य प्रपञ्चस्य स तथा एषः प्रपञ्चः अविद्यमानोऽपि असत्र स्वतन्त्रोऽपि सत्वमासते स्वतन्त्र इति अज्ञानामिति शेषः यतः स्वयंज्योति ब्रह्म परमार्थसत् स्वतन्त्रं विभाति विदुषामिति शेषः इतोऽप्यविद्यमानत्वमस्वातन्त्र्यमेव नत्वन्यादिति भावेनाह। अत इति। अत्र मूलप्रकृतिः श्रोत्रादीन्द्रियाणि अर्थाः शब्दादयः आत्मा जीवः विकारा इन्द्रियाभिमानिदेवाः एवमादिभिश्चित्रं विचित्रं जगदतो ब्रह्मण एव विभातीत्यतो नानिर्वाच्यं न शून्यमित्यर्थः तस्य भासा सर्वमिदं विभातीति श्रुतेः–

अविद्यमानतानाम जगतः परतन्त्रता।
यथा शशकस्तु पुत्रादिरसौमित्युच्यते जनैरिति॥
जगतो नास्तिता सैव या पराधीनता सदा।
अभावस्तु कुतस्तस्य यद्विभातीह सर्वदेति॥

प्रमाणाद्रुत्वेन कथित एवार्थः न स्वकपोलकल्पितः ॥ २२ ॥

एवं तावज्ज्ञातव्यार्थं ज्ञात्वा मुनिना यत् कर्तव्यं किमित्यत्राह। एवमिति। एवमुक्तप्रकारेण विवेकबुद्ध्या सर्वस्माद्वैलक्षण्यज्ञानेनानुगृहीतैर्हेतुभिः निर्दोषोपपत्तिभिः परापवादेन परस्यापवादेन नेदं नेदमिति निषेधमुखेन एष आत्मा नेति नेतीतिश्रुतेः स्फुटं ब्रह्म विविच्य पृथक्कृत्य ज्ञात्वात्मसन्देहं मनसि स्थितं संशयं छित्वाऽखिलकामुकेभ्यः अनल्पतृष्णाजननशीलेभ्यो विषयेभ्य उपारमेत शब्दादिविषयोपरमे सुखानुपपत्तिरत्राह। स्वानन्दतुष्ट इति। स्वानन्दानुभवेनाखं तुष्टि प्राप्तः अनेन जीवपरमैक्यज्ञानमेव मुक्तिसाधनं नाभेदज्ञानमतः श्रेयोर्थिभिरभेदमतं सर्वथा हेयमिति ध्वनितम् ॥ २३ ॥

परापवादप्रकारं विवृणोति। नात्मेति। अत्र नेति प्रत्येकं सम्बन्धितव्यं पार्थिवं वपुः शरीरम् आत्मा परमात्मा न भवति इन्द्रियाणि नहि देवा इन्द्रियाभिमानिनो न हि वायुजलं हुताशः वायुजलहुताशनकृतशरीरोऽसुः मुख्यप्राणश्च न–

वायुरेव स्वयं प्राणस्तत्रस्थ ओजतेजसि।
उदेन तेजसा चैव प्राणस्य हि कृतम्वपुः॥

इत्यस्मात्–

प्राणस्य वायुरूपस्य भूतत्रयकृतम्वपुः।
यतो हि पार्थिवं नात्र सं चाल्पमुदाहृत–

मित्यस्माच्चोक्तं युक्तं मनश्चात्मा न अन्नमात्रम् अन्नं पृथिवीमात्रं गन्धादिमात्रा च न एकपञ्चाशद्विधया हूस्त्वं विषया प्राकृतबुद्धिश्च न सत्त्वं मूलबुद्धिः अहंकृतिरहङ्कारतत्त्वं खमहाकाशम् न क्षितिर्दर्शनादिक्रिया च न अहं शृणोम्यहं स्पृशाम्यहं पश्यामीति सर्वार्थेषु समानस्त्वहंकारोऽभिमानविशेषोऽर्थसाम्ये चात्मा न भवतीत्यर्थः ॥

न देहो नेन्द्रियश्च प्राणमनो बुद्ध्यहमादयः।
विष्णुश्चिदानन्दतनुः स हि जीवाधिपः सदा॥

इति वाक्यात् सत्रा एष आत्मा नेति नेति श्रुत्यर्थ एव विवृत्ते ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यच्च चाज्ञानकृतत्वादमूलमित्यादि ॥ १७ ॥

तत्र पञ्चभिर्ज्ञानमेवोपदिशन् परमात्मज्ञानं तावत्साक्षादाह। ज्ञानमिति द्वाभ्याम्। यदेव परमात्मलक्षणं वस्तु ज्ञानविरूपकालहेतुरूपदानं च तदेवाद्यन्तयोः किन्तु केवलं निजाश्रितं श्रीभगवति प्रविशति तिरोहितसर्वशक्तिकं भवतीत्यर्थः। तत्र ज्ञानं विवेकस्य कारणं विवेको विचारः कालो निमित्तहेतुरुपादानं पुरुष इति ज्ञेयम् ॥ १८ ॥

यथेति। अत एव स एव परमार्थतः सर्वाश्रय इति भावः ॥ १९ ॥

किञ्च जीवचैतन्यस्य तत्र तत्रान्वयात् सुषुप्त्यादौ तद्व्यतिरेकेऽपि स्वतोऽवस्थानाच्चिन्मू व्यष्ट्युपाधीनां रज्जौ सर्पावयवानामिवारोपितत्वमेव तस्य तु रज्जुवत्सत्यत्वं सिध्यति एवं परमात्मचैतन्यसमष्ट्युपाध्योरपि ज्ञेयमित्याह। विज्ञानमिति द्वाभ्याम्। यो विज्ञाने तिष्ठन्नित्यादिश्रुतेः विज्ञानं जीवचैतन्यमेव गुणत्रयोपाधिकं सत् त्रिधावस्थं भवति तदेवाह कार्यकारणकर्त्रिति तत्तद्रूपावभासमानमित्यर्थः। किन्तु समन्वयेनेत्यादि तत्र ऽवधास्यामीति वक्तव्ये त्रिधावस्थामिति व्याडिगालवयोर्मतेनैक यथा ऽवधीयते, इति शब्दस्मृतेः गुणानां त्रयं यस्मिन्निति बहुव्रीहिः ॥ २० ॥

गुणत्रयोपाधिकमित्येव विवृणोति। न यदिति ॥ २१ ॥

अतः शुद्धे ब्रह्मणि अविद्यमान एव प्रपञ्चः तत्कारणशक्तिशबलतयाभिप्रेतेतु विद्यत एव तद्वैचित्रीत्याह। अविद्यमान इति। टीकायामवभासतेऽपीति पूर्वेणान्वयो योज्यते अस्य च प्राधमाह। अध्यप्रकाशत्वेत्यर्थः ॥ २२ ॥

ज्ञानासिनेत्युक्तमेवोपसंहरति। एवमिति ॥ २३ ॥

परापवादेन हरिमत्याज्यत्वं पदार्थं तावन्निरूप्यव्यपैति। नात्मेति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

नहि कथमहङ्कारबन्धादस्मान्मुक्तिरित्याह। अमूलमेतदहङ्कारबन्धनं वस्तुतो मूलशून्यम् अथ बहुधा रूपे रूपितं निरूपितं बहुरूपत्वमाह। मनआदीनां ग्रन्थः उपासनया भक्त्या शितेन निशितेन तीक्ष्णीकृतेन ॥ १७ ॥

तच्च ज्ञानं विवेक एव तस्य साधनान्याह। निगमो वेदः तपः स्वधर्मः प्रत्यक्षं स्वानुभवः ऐतिह्यमुपदेशः अनुमानं तर्कः फलमाह। आद्यन्तयोरस्य जगतो यदेव तदेव केवलं मध्येऽपि ननु जगत् तदेव किं कालः कल्पयति प्रकाशयतीति कालो ब्रह्मैव हेतुः कारणं च ब्रह्मैव ॥ १८ ॥

सुवर्णं सुष्ठु कुण्डलादिरूपेण विराजितमपि हिरण्यमेव

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हिरण्मयस्य कटककुण्डलादेः पुरस्तात् पश्चाच्च वर्त्तमानं यत्तदेव मध्येऽपि नानापदेशैः कुण्डलादिनामभिर्व्यवहार्य्यमाणमपि न वस्तुतस्तदन्यत् तद्वदेवाहमस्य विश्वस्य पुरस्तात् पश्चान्मध्येऽपि ॥ १९ ॥

तदेवं कार्य्यस्य कारणमात्रात्मकतामुक्त्वा प्रकाश्यस्य प्रकाशकमात्रात्मकतामाह । विज्ञानं बुद्धितत्त्वं तिस्रो जागराद्या अवस्था यत्र तत् त्रियवस्थं ऽध्यात्मादिगालवयोर्मतेन यकारध्य-यथानं तदवस्थाकारणभूतं गुणत्रयं यच्च कारणकार्य्यकर्तृ-कारणमध्यात्मं कार्य्यमधिभूतं कर्तृ अधिदैवम् एवं गुणत्रय-कार्य्यभूतं त्रिविधं जगत् एतत् येन तुर्य्येण सामान्यज्ञान-मात्रेण समन्वयेन भवति येनानुगतं प्रकाशत इत्यर्थः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति तथा चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुरिति श्रुतेः ननु विशेषविज्ञानव्यतिरेकेण न तुर्य्यमुपलभामहे तत्राह । व्यतिरेकतः समाध्यादौ यदस्ति तदेव सत्यम् ॥ २० ॥

एवं कालत्रयेऽप्यव्यभिचारित्वात् सत्यत्वमुक्त्वा व्यभिचारित्वस्य असत्यतामाह । न यदिति । मध्ये च तत्पृथक् नास्ति किन्तु व्यपदेशमात्रं नाममात्रं कुतः यतो यद्यत् परेण अन्येन भूतं जातं प्रसिद्धं प्रकाशितं च तत्तदेव कारणं प्रकाशकं तावन्मात्रं स्यात् न ततः पृथगिति मे मनीषा बुद्धिः ॥ २१ ॥

एवं सामान्यतः कार्य्यप्रकाश्ययोः कारणप्रकाशकाभ्यामभेदं व्युत्पाद्य प्रस्तुते तदुभयाविवर्तकपूर्वकं प्रपञ्चस्य ब्रह्मागेकमाह । अविद्यमानः प्रागसन्नपि योऽयमवभासते विद्यमानत्वेन भाति वैकारिकः विकारेभ्यो महदादिभ्यो जातः स एष राजससर्गः रजोद्वारेण ब्रह्म तु स्वयं स्वतः सिद्धं न तु कार्य्यं ज्योतिः प्रकाशकम् अतो हेतोः इन्द्रियाणि च अर्थास्तन्मात्राणि च आत्मा मनश्च विकाराः पञ्चभूतानि च एतैश्चित्रं विश्वमिदं ब्रह्मैव भातीति ॥ २२ ॥

एवं प्रत्यक्षैतिह्यानुमानैः स्फुटं यथा स्यात्तथा ब्रह्मविवेकहेतुभिः तथा परस्परदेहादेरपवादेन आत्मभ्रमनिरासेन कोविदेन विशारदेन निपुणेन आत्मविषयकसन्देहं छित्त्वा स्वानन्दतुष्टः सकलेभ्यः कामुकेभ्यः इन्द्रियेभ्यः उपारमेत निःसङ्गो भवेत् ॥ २३ ॥

परापवादं प्रपञ्चयति । वपुरात्मा न भवति कुतः पार्थिवं पार्थिवत्वाद् घटवत् तथा इन्द्रियाणि तदधिष्ठातारो देवाः प्राणः बुद्धिः सत्त्वं चित्तम् अहङ्कार इत्येते आत्मा न भवन्ति कुतः अन्नमयत्वम् अन्नोपष्टम्भत्वात् शरीरवत् वायुर्जलं हुताशनः तेजः क्षितिरिति पञ्चभूतानि अर्थाः शब्दादयः । प्रकृतिश्च आत्मा न जडत्वाद् घटवदिति ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्यादेतत् यदेकारणस्यास्य कथं निवृत्तिः स्यादिति चेत्तत्राह । असूक्ष्ममिति । मुनिरेतत् ज्ञानासिना छित्त्वाऽस्पृष्टः सन् गां विचरतीत्यन्वयः मुनिरुक्तबन्धस्वरूपविमर्शनशीलः एतच्छब्देन बन्धकारणमुक्तं कारणनाशे कार्य्यनाशः स्वयमेव भवतीति भावः । अमूलमिति क्रियाविशेषणं तथा चोपासनया भगवदाराधनेन तीक्ष्णीकृतेनासिनैतद्बन्धकारणममूलं यथा स्यात्तथा छिन्नत्त्यर्थः अमूलमज्ञानं यथा नावशिष्येदिति भावः । कथं भूतं बहुरूपरूपं बहूनि रूपाणि रूपयतीति यथा बहुभिरूपैः रूप्यत इति वा तदेवाह । मनोवचःप्राणशरीरकर्मभिः । मनआदिष्वनात्मसु क्रियते तथा स अहं मन्ता वक्ता स्थूलः कृश इत्याद्याकारेण जायमानमित्यर्थः ॥ १७ ॥

ज्ञानासिना छिन्दीत्युक्तं तदेव ज्ञानं स्वरूपसाधनफलनिर्देशेनाह । ज्ञानमिति । ज्ञानस्य स्वरूपं विवेकः चित्त्वजडत्वनित्यत्वादिभिः परस्परं व्यावर्तकधर्मैरात्मानात्मनोर्निरूपणं सर्वज्ञत्वाल्पज्ञत्वस्वतन्त्रत्वादिभिः परस्परव्यावर्तकधर्मैः परमात्मापरमात्मनोर्वा निरूपणं विवेकः ननु स्वयंगूढात्मैव वक्तुं विवेक्तुं शक्यते न त्वज्ञातं जीवात्मपरमात्मनोः स्वरूपगुणादिज्ञानाभावात्कथं तद्विवेकः स्यादिति चेत्तत्राह । निगमेति । निगमो वेदस्तज्ज्ञापकोऽस्ति तस्मादेव तत्स्वरूपादिज्ञानं स्यादित्यर्थः स्यादेतत् वेदार्थस्याप्यतिगूढत्वात्कथं तज्ज्ञानमित्यत आह । तप इति । तपः स्वधर्मवर्तित्वं यथा स्वधर्माचरणादन्तःकरणशुद्ध्या वेदार्थज्ञानं भवेदित्यर्थः । कीदृशं तदित्यपेक्षायामाह । प्रत्यक्षमिति अन्तः प्रत्यक्षं स्वानुभवगम्यमित्यर्थः । ननु वेदेऽपि सविशेषगुणसकलकारणकारणत्वाणोरणीयस्त्वादिविचारबाहुल्यश्रवणात्कथं तदर्थैकत्वनिश्चय इति चेत्तत्राह । ऐतिह्यं सदाचार्यपरम्परागतत्वं तदेव वेदार्थनिश्चायकं वेदार्थनिश्चयार्थं सम्प्रदायाश्रयणं कर्तव्यमिति भावः । सदाचार्यास्तु भगवता स्वयमेव निर्दिष्टाः एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिरित्यादिना अनुमानं सदाचार्योपदिष्टस्य स्वस्य स्वानुभवविषयीकरणाय लौकिकव्यादिसादृश्येन ग्रहणं साधनमुक्तं फलितार्थमाह । अस्य जगत आद्यन्तयोरुत्पत्तेः पूर्वं प्रलयसमये च यदेव केवलं स्वतन्त्रं तदेव सृष्टिप्रलयमध्येऽपि स्वतन्त्रं प्रवर्तते नतु जगत्कदापि स्वतन्त्रमिति भावः । किन्तदित्यत्राह । काल इति । जीवानां मादृष्टोद्बोधकः शुभाशुभतत्कर्मफलभोगसमयगणकः कलं संख्यानं धातोः कालयति गणयतीति कालरूप ईश्वर इत्यर्थः सः कालः कालः कलयतामहमिति भगवदुक्तेः किञ्च हेतुः सर्व चेतनाचेतनात्मिकानां सूक्ष्मावस्थापन्नानां स्वस्वाभाविकानां नामरूपसद्रूपकार्याणां वा स्थूलतया प्रकाशकः स्वस्वानादिकर्मसंस्कारवशीभूतात्यन्तसंकुचितभोगस्मरणानर्हज्ञानधर्माणां चेतनानां कर्मफलभोगार्हज्ञानशक्तिप्रकाशेन तत्तत्कर्मफलभोगसाधनैः सह योजयिता चेत्यर्थः चकाराभ्यां मध्यपालकः भोगावसाने संहर्ता च बोध्यः ॥ १८ ॥

जगत आद्यन्ते च मध्ये च कारणभूतस्य ब्रह्मण एव स्वातन्त्र्यमुक्तं तदेव दृष्टान्तेनोपपादयति । यथेति । यथा शुद्धमेव हिरण्यं कटककुण्डलमुकुटादिनिर्माणावस्थायां सुकरं स्वर्णकारैः सुष्ठु रजतादिमिश्रितमपि कृतं तस्य हिरण्मयस्य भूषणस्य भावतः पुरस्तात् रजतादिमिश्रणात्पूर्वं पश्चाच्च क्रियाविकालेऽग्नौ संशोधनात्केवलं हिरण्यमेव व्यपदिश्यते । मध्ये च रजतादिमिश्रभूषणावस्थायां कटककुण्डलादिनानाव्यपदेशैस्तदेव हिरण्मयमेव व्यपदिश्यते नतु रजतमादि तद्वत् । जगत आद्यन्ते च

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीप: ।

ससद्रूपत्वामितया वर्तमान: सुरनरादिनानाव्यपदेशै: अतश्चोऽहमेव व्यपदेश्यो विविक्तिमिनोऽस्मीत्यर्थ: । भगवत: सर्वत्र व्याप्तेरेव सर्वाभिव्यपदेशहेतु: सर्वं समाप्नोऽषि ततोऽसि सर्वं इत्यर्जुनोक्ते: ॥ १९ ॥

एवं चिज्जडमिश्रजगत: परमात्मस्वरूपाविवेकमुक्त्वा इदानीं जीवात्मस्वरूपविवेकमाह । विज्ञानमिति । हे अङ्गोद्धव । एतद्विज्ञानं प्रत्यगात्मस्वरूपं त्रिपदस्थं त्रीणि पदान्यर्था: शब्दार्थयोरभेदविवक्षया पद्यत्युक्तं पद्यन्ते गच्छन्तीति पदान्यनित्यानि तेषु त्रिष्वनित्येषु स्थितमित्यर्थ: । किंतत्त्रयं तदाह गुणत्रयं गुणत्रयकार्यमित्यर्थ: । किं तत्कार्यं तदाह । कारणकार्यकर्तृ कारणमिन्द्रियवर्ग: कार्यं शरीरं कर्तृ अहङ्कारस्तत्त्रयस्थं तत्तद्रूपा रूपाद्याकारेण स्थूलकृशत्वादिधर्मेण ईश्वरत्वभोगित्वसुखित्वदु:खित्वादिभिश्चोक्तत्रिपदार्थधर्मैर्मिश्रितमिवाभाति तथापि विवेचनीयमिति भाव: विवेचनमेवाह । समन्वयेनेति उक्तकारणादित्रयं समन्वयेन व्यतिरेकतश्च येनैव तुर्येणावस्थात्रयातीतात्मस्वरूपेण प्रवर्तते इति शेष: । तदेव सत्यमविनाशि नित्यं वस्त्वित्यर्थ: । त्रिपदस्थमिति पाठे तु पकारस्य पृथक् पाठश्छन्दोऽनुरोधात् तत्त्रयस्थमिति प्रथम एतद्विज्ञानं त्र्यवस्थं त्रिषु कालेष्ववस्थितं नित्यस्वरूपमित्यर्थ: । प्रत्यक्समानं देहेन्द्रियादिसंघातस्तुरीयाभिन्नत्वेन सत्य: प्रवृत्तिमत्त्वात् कुलालाद्यधीनचक्रादिप्रवृत्तिवदिति आत्मव्यवस्थायां अन्वय: आत्मसंबन्धाभावे प्रवृत्त्यभावादसत्त्वं सुषुप्त्यादाविति व्यतिरेक: ॥ २० ॥

देहस्याचेतनत्वम् आत्मनश्च विज्ञानात्मत्वमुपपादयति । नेति यत् भूतं पृथिव्यादिभूतमयं शरीरं पुरस्तादुत्पत्ते: पूर्वं न तस्मात् विज्ञानं न स्यात् यत्र पश्चात् विज्ञानं स्यात् तन्मध्येऽपि न विज्ञानं स्यात् कथं तर्हि यज्ञदत्तो जानातीति व्यवहार इत्यत आह । व्यपदेशमात्रमिति । यज्ञदत्तादिनामके भूते ज्ञातृत्वोपचार इत्यर्थ: । कस्तर्हि ज्ञानात्मा इत्यत आह । परेण श्रुत्यादिप्रमाणेन प्रसिद्धं प्रकर्षेण सिद्धं तदेव सत् स्याद्विज्ञानात्मस्वरूपं स्यात् विज्ञानं यत् तनुते न जायते म्रियते वा विपश्चित् न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूय इत्यादिश्रुतिस्मृतिभ्य: ॥ २१ ॥

ननु अनुक्तं विज्ञानात्मनो देहादिविलक्षणत्वेन प्रसिद्धत्वमिति न तथा प्रतीयते किन्तु देवदत्तादि नामकदेहाद्यात्मत्वेनादिदेहात्मनैव भातीति चेत्तत्राह । अविद्यमान इति । वैकारिक:प्रकृतिविकारभूतो राजस एव सर्ग: देवादिदेह: यद्यपि सर्वं देवमनुष्यादिदेहास्त्रिगुणात्मकास्तथापि राजसोद्रिक्ततया प्रकाशविशेषस्वभावाद्राजस इति निर्दिष्ट: स आत्मनि स्वतो नित्यतया चाविद्यमानोऽपि अवभासते स्वरूपज्ञानहीनानामिति शेष: स्वरूपं निर्दिशति । ब्रह्मेति । ब्रह्मत्वमेव दर्शयति । स्वयञ्ज्योति: स्वयं प्रकाश: अतो देहादिभिन्नज्ञानात् अक्षेन्द्रियार्थात्मविकारैश्चित्रं भाति ब्रह्म मूलप्रकृति: मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमिति ब्रह्मशब्दस्य मूलप्रकृतेरपि वाचकत्वात् इन्द्रियाणि श्रोत्रादीनि अर्था: शब्दादय: आत्मा देह: विकार: कौमाराद्यवस्था एतैश्चित्रं भाति ॥ २२ ॥

एवमक्षरविमुक्त्वा तदनुवादपूर्वकं मुमुक्षुणा ज्ञात्वा यदवश्यं कर्तव्यं तच्छिक्षयति । एवमिति । आत्मस्वरूपस्य देहादिविलक्षणत्वेऽपि अज्ञानां देहेन्द्रियविषयादिविचित्रत्वेन भासते मुमुक्षुर्विशारदेन सन्देहनिवर्तने समर्थेन सर्वज्ञेन गुरुणा हेतुभूतेन स्फुटं यथा स्यात्तथा ब्रह्मविवेकहेतुभि: शुद्धात्मस्वरूपविवेकहेतुभिर्निगमादिभि: पराणवादेन देहेन्द्रियादेरात्मत्वनिराकरणेनात्मन: स्वस्य सन्देहं छित्त्वा स्वानन्दतुष्ट: सन् अखिलकामुकेभ्यस्तुच्छसुखेभ्य: शब्दादिविषयेभ्य उपारमेत निवृत्तो भवेत् तेषूपादेयबुद्धिं न कुर्यादित्यर्थ: ॥ २३ ॥

परापवादमेव कृपया स्वयमेव विशदं दर्शयति । नात्मेति । नेति प्रत्येकमन्वेतव्यं तथाहि वपुरात्मा न पार्थिवमिति हेतुगर्भितं विशेषणं पार्थिवत्वात् घटादिवदित्यर्थ: । इन्द्रियाणि आत्मा न भवन्ति करणत्वात् हिशब्देन सर्वत्र हेतुर्बोध्य: देवास्तदधिष्ठातारो नात्मानो भवन्ति इन्द्रियमात्रप्रवर्तकत्वात् इन्द्रियै: सह तेषु मर्त्यत्वव्यपदेशसत्त्वात् असु: प्राणो नात्मा वायुत्वात् व्यजनवायुवत् मनो न अन्नमात्रं विशेषणम् अन्नमात्रत्वात् शरीरवत् "अन्नमयं हि सोम्य मन" इति श्रुते: अन्त:करणत्वावच्छिन्ना बुद्धि: सत्त्वं चित्तं च अहङ्कृतिरहङ्कारश्च नात्मा अन्त:करणत्वात् मनोवत् वायुर्जलं हुताशोऽग्नि: समाकाश: क्षितिरिति पञ्च भूतानि अर्था विषया अर्थसाम्यं प्रकृतिश्च नात्मा जडत्वात् शरीरवत् ॥ २४ ॥

---

भाषा टीका ।

यह सब संसार अज्ञान मूलक है बहुत रूपों से चित्रित है जिस से कि मन वचन प्राण शरीर कर्म रूप है ज्ञानरूप तीक्ष्ण तरवार से इसको काटकर मुनि होकर तृष्णा को छोडकर पृथिवी में विचरता रहै ॥ १७ ॥

ज्ञान विवेक वेद तप प्रत्यक्ष ऐतिह्य और अनुमान इन प्रमाणों से ऐसा जाने कि जो जिसके आदि अन्त में होता है सोई कार्य हेतु रूप से मध्य में भी है ॥ १८ ॥

जैसे सुवर्ण पहिले सुन्दर रहता है कडा कुंडलादिक बनने पर भी वैसा ही रहता है सोई मध्य में भी व्यवहार के वास्ते नामादिक से रहता है तैसे नाना प्रकार से हमारा शरीर रूप जगत् भी है ॥ १९ ॥

हे उद्धवजी तीन अवस्था वाला यह विज्ञान है तीनों गुणमय जगत् कारण कार्य कर्ता रूप है सो अन्वय से तथा व्यतिरेक से जिस तुर्य परमात्मा से व्याप्त है उसी को सच सत्य जानो ॥ २० ॥

जो देहादिक उत्पत्ति से पहिले नहीं हैं नष्ट होने पीछे भी नहीं रहते हैं बीच में केवल व्यवहार के लिये मात्र रहते हैं जो उत्पत्ति मान पदार्थ अन्य से प्रकाशित होताहै सो अनित्य है तिस में जो सदा रहनेवाला आत्मा सोई सत्य है ऐसा मेरा मत है ॥ २१ ॥

जो यह राजस अहङ्कार का सर्ग है सो नहीं रहने पर भी भान होता है इस से पृथक् स्वयं ज्योति आत्मा प्रकाशमान होता है और जगत् तो प्रकृति विकार इंद्रिय शब्दादि अर्थ आदि षोडस विकारों से विचित्रित रूप है ॥ २२ ॥

इस प्रकार से ब्रह्म के विवेक होने के हेतुओं से अति निपुण आत्मा से व्यतिरिक्त के आत्मत्व निषेध करने

समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः ।
विक्षिप्यमाणैरुत किंनु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥ २५ ॥
यथा नभो वाय्वनलाम्बुभूगुणैर्गतागतैर्वर्तुगुणैर्न सज्जते
तथाऽक्षरं सत्त्वरजस्तमोमलैरहम्मतेः संसृतिहेतुभिः परम् ॥ २६ ॥
तथाऽपि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत् ।
मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनःकषायः ॥ २७
यथाऽमयोऽसाधु चिकित्सितो नृणां पुनः पुनः संतुदति प्ररोहन् ।
एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसङ्गम् ॥ ५८ ॥
कुयोगिनो ये विहितान्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ।
ते प्राक्तनाभ्यासबलेन भूयो युञ्जन्ति योगं न तु कर्मतन्त्रम् ॥ २९ ॥
करोति कर्म क्रियते च जन्तुः केनाप्यसौ चोदित आनिपातात् ।
न तत्र विद्वान् प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या ॥ ३० ॥
तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्तमदन्तमन्नम् ।
स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थमतिर्न वेद ॥ ३१
यदि स्म पश्यत्यसदिन्द्रियार्थं नानाऽनुमानेन विरुद्धमन्यत् ।
न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम् ॥ ३२ ॥

भाषा टीका ।

के ज्ञान से आत्मा के विषय जो संदेह है तिस को छेदन करके अपने आत्मस्वरूप में आनन्द होकर सब कामनाओं को छोड़ कर संसार से निवृत होजावै ॥ २३ ॥

पृथिवी का विकार शरीर आत्मा नहीं है इंद्रिय आत्मा नहीं हैं इंद्रिय के देवता आत्मा नहीं है प्राण आत्मा नहीं है वायु जल अग्नि मन अन्न बुद्धि अंतःकरण अहंकार तथा आकाश पृथिवी एवम् आत्मा नहीं हैं क्योंकि ए सब समान से प्राकृति के कार्य हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं विवेकज्ञानवतो मुक्तस्य नेन्द्रियादिकृतगुणदोषसंबन्ध इत्याह । समाहितैरिति । मत्सुविविक्तधाम्नः मम सुष्ठु विविक्तं धाम स्वरूपं येन तस्य प्रकाशकस्य प्रकाश्यगुणदोषा न भवन्तीति रविदृष्टान्तेनोक्तम् ॥ २५ ॥

असङ्गत्वेनावस्थितस्य न केऽपि गुणदोषा इत्याकाशदृष्टान्तेनाऽऽह । यथेति । वाय्वादीनां शोषणदहनक्लेदनरजोभूसरत्वादिभिर्गतागतैरागमापायिभिर्ऋतुगुणैः शीतोष्णादिभिर्वा अहंमतेरहङ्कारात्परमक्षरं संसृतिहेतुभिर्न युज्यते यद्वा अहंकारस्य संसृतिहेतुभिरिति ॥ २६ ॥

मुक्तवदसम्यक्ज्ञानी न यथेष्टमाचरेदित्याह तथाऽपीति । गुणेषु विषयेषु सङ्गो रागः मनसः कषाय इति दुर्निरासतामाह ॥ २७ ॥

तदेव दृष्टान्तेनोपपादयति । यथेति । नृणामामयो रोगः असाधु सम्यक् यथा भवति तथा अपक्वकषायकर्म अदग्धाः कषाया रागादयस्तन्मूलानि कर्माणि यस्मिंस्तत् अत एव सर्वसङ्गं सर्वेषु पुत्रादिषु सज्जमानं मनः कुयोगिनमसम्यक्ज्ञानिनं विध्यति प्रक्षयति ॥ २८ ॥

ननु कथञ्चिद्विषयसङ्गे यदि योगभ्रंशः स्यादेवं तर्हि सोपायेन योगमार्गेण तत्राऽऽह । कुयोगिन इति । मनुष्यभूतैर्बन्धुशिष्यादिरूपैस्त्रिदशैरुपसृष्टैः प्रेरितैः तथा च श्रुतिः 'तस्मादेषां न प्रियं यदेतन्मनुष्या विदुः' इति भूयो जन्मान्तरे न तु कर्मतन्त्रं कर्मविस्तारम् ॥ २९ ॥

ननु विदुषामपि सर्वथा कर्म दुष्परिहरमिति पुनः संसारः स्यादत आह । करोतीति । विदुषोऽप्यसौ जन्तुर्देह एव भोजनादि कर्म करोति क्रियते विक्रियते च तेन कर्मणा पुण्यापापे प्राप्नोतीत्यर्थः । केनापि संस्कारादिना चोदितः आनिपातान्मरणपर्यन्तं करोति विद्वांस्तु प्रकृतौ देहे स्थितोऽपि कर्मणि न विक्रियते निरहंकारित्वात् हर्षविषादादिभिः संसारं न प्राप्नोति ॥ ३० ॥

किञ्च आस्तां तावदैहिककर्मभिर्विकारशङ्का यतो देहमप्यसौ

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्मतोऽन्यात्किमपि न वेदस्मार्थः । स्वभावं देहस्य प्रियाप्रियव्यपायम् ॥ ३१ ॥

यदि कश्चित्प्रारब्धकर्मवशात्तडितमिव पश्यति तथापि स्वातन्त्र्यतया न पश्यतीत्याह । यदिस्मेति । यदि स्मरणवासनया स्वच्छन्दस्वादीन्द्रियार्थमसङ्कलमिन्द्रियविषयं देहगेहादिजगत्कर्म-निबन्धनतया पश्यति मनीषी तथापि वस्तुतया स्वातन्त्र्यतया न मन्यते मत्कृतं इत्येव उक्तं नानेति तत्स्वातन्त्र्यं नानानुमानेनोत्पत्त्यादिमत्त्वाविधानानुमानेन विरुद्धं हि एतमर्थं निदर्शयति-स्वप्नमिति । यथा स्वप्नद्रष्टा स्वप्नादुत्थाय स्थिताखिलरागभान-मनित्यं परतन्त्रं स्वस्वप्नं जाग्रत्वेन न मन्यते स्वप्नजाग्रत्त्वस्य नानानुमानविरुद्धत्वात् नहि स्वप्नं पश्यन् स्वप्नं बाध्यं मन्यते अपितु स्वप्नमद्राक्षमित्यबाध्यमेव जानाति स्वातन्त्र्य-मारोपितं पश्यतीति भावः । तथा विद्वानपि जगद्बाध्यमेव स्वात-न्त्र्यमारोपितं पश्यतीति भावः—

नानामानविरुद्धं हि स्वातन्त्र्यं जगतः सदा ।
स्वतन्त्रो भगवान्विष्णुरेक एव न संशयः ॥

इत्यनेन—

अस्त्येव स्वाप्नमखिलं वासनारूपमात्मनि ।
जाग्रदेतदिति भ्रान्तं यत्तदेव भ्रमादिकम् ॥
तद्वज्जगदिदं सर्वं विद्यमानं न संशयः ।
स्वातन्त्र्यमेतदित्येतु यज्ज्ञानं तद्भ्रमात्मकम् ॥

इत्यनेन च—

उत्थितो नैव जाग्रत्वं क्वचित्स्वप्नस्य पश्यति ।
स्वातन्त्र्यमेव जगतो ज्ञानवान्नैव पश्यति ॥

इत्यनेन सिद्धत्वात् स्वप्नदृष्टान्तबलेन जगतो बाध्यत्वमुच्यते इत्येतदासुरमतमित्यवगम्यते ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अस्तु मत्स्वरूपनिष्ठस्तस्य त्वंपदार्थशोधनापेक्षापि नास्तीत्याह । समाहितैरिति । समाहितैर्विक्षिप्यमाणैर्वा अन्यकृतविक्षेपोऽपि तं न स्पृशतीति भावः ॥ २५ ॥

यावज्ज्ञानीयतत्पदार्थे तु सर्वथैव तत्सम्बन्धो नास्तीति दर्शयति । यथेति । अहंमतेरहङ्कारोपाध्यहङ्कारस्य जीवस्य परं केवलं संसृतिहेतुः नतस्वरूपस्य भावविलक्षणात्मज्ञानादिव्यक्तस्तस्य-त्यर्थः ॥ २६ ॥

असम्यग्ज्ञानिनं सङ्कोचयन् भक्तियोगोपदेशेन कृतार्थयति । तथापीति द्वाभ्याम् ॥ २७-२८ ॥

नन्वन्तरायेऽपि न नश्यतीत्याह । कुयोगिन इति । वक्ष्यते च "योगचर्यामिमां योगी विचरन्मदपाश्रयः नान्तरायैर्विहन्येत" इति ॥ २९ ॥

सिद्धानां तु न कापि हानिरिति विवृणोति । करोतीति । त्रयेण ॥ ३०—३२ ॥

---



श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं निरूपकज्ञाननिष्ठो मुक्तस्य नेन्द्रियादिगुणकृतदोषसम्बन्ध इत्याह । समाहितैरिति । 'मत् सुष्ठु विविक्तं विचारितं धाम स्वरूपं येन तस्य इन्द्रियैः समाहितैर्निश्चलैर्वा को गुणः विक्षिप्य-माणैश्चञ्चलैर्वा को दोषः ॥ २५ ॥

जीवन्मुक्तः खलु ब्रह्मैव भवत्यतस्तत्र न कोऽपि गुणदोष इत्याकाशदृष्टान्तेनाह । यथेति । वाय्वादीनां शोषणदहनक्लेदन-जोधूमरत्वादिभिर्गतागतैरागमापायिभिऋतुगुणैः शीतोष्णादि-भिर्वा नभो न युज्यते तथैवाहंमतेरहङ्कारात् परमक्षरं ब्रह्म संसृतिहेतुभिः सत्त्वादिमलैर्न युज्यते ॥ २६ ॥

मुक्तवदसम्यक्ज्ञानी न वर्तेतेत्याह । तथापीत्याह । काम्यगुणेषु विषयेषु रजः रागः ॥ २७ ॥

असाधु असम्यक् यथा स्यात्तथा विनिर्जितमनाः न पक्वाः कषायाः तन्मूलानि कर्माणि च यस्य तस्मिन्मनःकृतं ॥ २८ ॥

त्रिदशोपसृष्टैर्देवप्रेरितैर्मनुष्यभूतैर्बन्धुशिष्यादिरूपैः न तु स्त्रीसङ्गाभिनिवेशः अत एव "यांकि न समुद्धरन्ति यतयो हृदि कामजटा" इत्यप्युक्ता, यतश्च एकोऽपि सिद्धान्त इति शेषं तथा च श्रुतिः "यस्मात्तदेषां न प्रियं यदेतन्मनुष्या विदुः" इति भूयो जन्मान्तरेऽपि ॥ २९ ॥

कर्मविज्ञानी पुनर्बन्धनं प्राप्नोतीत्याह । करोतीति । असौ जीवः केनाप्यन्तर्यामिणा चोदितः प्रेरितः कर्म करोति तथा क्रियमाणेन कर्मणा तेनासौ जन्तुः शूकरकुक्कुरादियोनिगतोऽपि क्रियते निपातो यावत्तत्पर्यन्तं तत्र तन्मध्ये विद्वान् ज्ञानी तु प्रकृतौ देहे स्थितोऽपि कर्म न करोति नापि कर्मणा तथाभूतः क्रियते ॥ ३० ॥

ज्ञानी देहस्थोऽपि देहं नानुसन्धत्ते इत्याह । तिष्ठन्तमिति । उपसन्ते सूत्रयन्तमात्मानं देहमात्मस्थमतिः परमात्मनि स्थितधीः ॥ ३१ ॥

किञ्च यदि कदाचित् समाधिभङ्गे सति नानाभूतं असदिन्द्रियार्थं पश्यति तदपि कार्यं कारणाभिन्नं घटवदित्यनुमानेन विरुद्धं बाधितं सत् आत्मव्यतिरिक्तं मनस्वी वस्तुतया न मन्यते यथा स्वप्नादुत्थाय स्थितः पुरुषः स्वाप्नं विषयं संस्कारमात्रेण स्फुरन्तं वस्तुतया न मन्यते यतः स्वयमेव विरोधधानम् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एवमुक्तप्रकारेण सुविविक्तात्मपरमात्मस्वरूपज्ञानवत इन्द्रियकृतगुणदोषसम्बन्धो न भवतीति फलमाह । समाहितैरिति । मत्सुविविक्तधाम्नः मम मदीयस्य वा सुष्ठु विविक्तं धाम स्वरूपं येन तस्य यथार्थज्ञानिनः पुरुषस्य गुणात्मभिः सत्त्वादिगुणकार्यभूतैः करणैरिन्द्रियैः समाहितैः सावधानतया स्वविषयेष्वेव स्थापितैः को गुणो भवेन्न कोऽपि उत च विक्षिप्यमाणैः कथं विविषयेषु गतैः किं दूषणं भवेन्न किमपि तत्र दृष्टान्तमाह । घनैरिति स्पष्टार्थः । तत्सुविविक्तधाम्नः इति वा पाठः तत्रैवमन्वयः गुणात्मभिः करणैः समाहितैः पुरुषस्य को गुणः उत विक्षिप्यमाणैः किम्वा दूषणं भवेन्न कोऽपीत्यर्थः कुतः यतस्तत्सुविविक्तधाम्नः तस्य इन्द्रियेभ्यः शास्त्रानुमानैर्विज्ञातस्य तथा दृष्टान्तः स एव ॥ २५ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विविक्तस्वरूपत्वाद्देहात्मत्वाहङ्कारशून्यस्य विवेकिनः सत्त्वादिगुणसङ्गदोषोऽपि नास्तीत्याकाशदृष्टान्तेनाह । यथेति । यथा नभः आकाशं वाय्वनलाम्बुभूगुणैः स्पर्शरूपरसगन्धैर्गतागतैरागमापायिभिः ऋतुगुणैः शीतोष्णवर्षादिभिर्वा न सज्जते तथा कूटस्थमात्मस्वरूपं संसृतिहेतुभूतैः सत्त्वरजस्तमोमलैर्न सज्जते कुतः यतोऽहम्मतेरहङ्कारात्परं तस्य परत्वज्ञानादित्यर्थः । यद्यपि सत्त्वं तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयमिति वचनान्निर्मलमनामयं च "तथापि सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ" इति बन्धहेतुत्वोक्तेर्बन्धहेतुतृष्णासङ्गप्रमादालस्यादिरजस्तमोमलवत्सुखसङ्गस्यापि बन्धहेतुत्वाविशेषान्मलत्वेन विवक्षितत्वात्सत्त्वस्यापि ग्रहणमिति भावः ॥ २६ ॥

सूर्याकाशदृष्टान्ताभ्यां ज्ञानिन इन्द्रियसत्त्वादिगुणदोषसम्बन्धाभाव उक्तः स तु हरिभक्त्यासम्यक्शोधितमनस्कस्यैव सामान्यज्ञानिनस्तु सङ्गो वर्ज्य एवेत्याह । तथापीति । यद्यपि ज्ञानिन इन्द्रियसत्त्वादिगुणदोषभाक्त्वं न तथापि मनःकषायः अपक्वता तमेव कषायं रजः विषयेषु रागः दृढेन मद्भक्तियोगेन यावन्निरस्येत निःशेषेण मृष्येत छिद्येत तावन्मायारचितेषु गुणेषु शब्दादिविषयेषु सङ्गः परिवर्जनीय इत्यर्थः ॥ २७ ॥

नृणामामयो रोगः असाधु यथा स्यात्तथा चिकित्सितः न निर्मूलित इत्यर्थः । प्ररोहन् पुनः पुनः प्रादुर्भवन् संतुदति व्यथयति एवं तद्वत् अपक्वकषायकर्म न पक्वा दग्धाः कषायाः फलाभिसन्धिरूपा येषां तथाभूतानि कर्माणि यस्य तत् अत एव सर्वसङ्गं सर्वविषयेष्वभिलाषो यस्य एवं भूतं मनः कुयोगिनमदृढभक्तियोगाभावादपरिपक्वयोगयुक्तं पुरुषं विध्यति ताडयति ॥ २८ ॥

यद्यपक्वयोगिनोऽन्तरायबहुलाश्चेत्तर्हि स्वरूपासवे पुनर्योगं कर्मबन्धक्षयमुपायं कुर्वन्तीत्यपेक्षायामाह । कुयोगिन इति । ये कुयोगिनः ध्यानपरिपाकरहिताः त्रिदशोपसृष्टैर्देवैः प्रेरितैर्मनुष्यभूतैः स्त्रीपुत्रमित्रशिष्यादिरूपैः स्वस्थानमेवं गच्छन्तीति विघ्नभूतैर्विहताः भ्रंशिताः तथा श्रुतिः यस्मात्तदेषां न प्रियमस्यैतन्मनुष्या विद्युरिति ते जन्मान्तरे प्राक्तनाभ्यासबलेन पूर्वजन्मकृतयोगाभ्यासबलेन भूयः पुनरपि योगं युञ्जति न कर्मतन्त्रं कर्मसाधनं न कुर्वन्ति कतिपयजन्मभिर्ध्यानयोगेन मामेव प्राप्नुवन्ति न नश्यन्तीति भावः ॥ २९ ॥

ननु यदुक्तं योगं युञ्जति न कर्मतन्त्रमिति तदनियतकर्मकरणाकरणयोर्जीवस्वातन्त्र्याभावात् योगयोग्योऽपि कश्चित्कर्मवशः करोति कश्चिन्न करोति तस्मात्प्रयोजककर्तान्य एवानुमीयते तेन कर्मैव मीयते तेन कर्मैव कार्यते चेत्कथमुक्तार्थसिद्धिरिति चेत्तत्राह । करोतीति जन्तुर्जीवः कर्म करोति तत्रासौ केनापि पुरुषेण चोदितः प्रेरित एव क्रियते कार्यते आनिपातात् शरीरपातपर्यन्तम् एतेन प्रयोजकोऽन्यः स्वतन्त्रः सिद्धः स सर्वेश्वरो हरिरेव स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशितापि इति श्रुतेः अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वेति स्मृतेश्च विद्वान् हेयवस्तुस्वरूपगुणादिभिः प्रकृतौ प्रकृतिकार्ये देहे स्थितोऽपि तत्र कर्माणि न क्रियते तेन कार्यते तेनेश्वरेण न प्रयुज्यते इत्यर्थः । यतः स्वसुखानुभूत्या स्वस्य ध्येयस्य स्वरूपगुणादिविषयकसुखानुभवेन निवृत्ततृष्णः कर्मफलादौ वासनाशून्यः ॥ ३० ॥

निवृत्ततृष्णत्वे हेतुं दर्शयन् तस्य योगारूढदशामाह । तिष्ठन्तमिति । स्थित्यादिक्रियां कुर्वन्तम् उत्क्रान्तमिति पाठान्तरं मूत्रयन्तमित्यर्थः । स्वभावस्य प्रियाप्रियवद्रूपमन्यत्किमपीहमानं चेष्टां कुर्वन्तमात्मानं देहं न वेद नानुसन्धत्ते कुतः यत आत्मरूपमात्मा ध्येयस्वरूपसौन्दर्यमाधुर्यलावण्यादिगुणानिधिः सर्वेश्वरस्तस्मिन् स्थिता मतिर्वृत्तिरसाधारणभूता बुद्धिर्यस्य सः ॥ ३१ ॥

नन्विन्द्रियाणां पराङ्दर्शनादिस्वभाव एव पराञ्चि खानि व्यतृणत्स्वयम्भूरिति श्रुतेः तद्वतः पुरुषस्य कथं सर्वथा दर्शनं सम्भवतीत्यत आह । यदीति । परमात्मध्याननिष्ठो विद्वान् बाह्यपदार्थं न पश्यति तथापीन्द्रियाणां बहिर्मुखस्वभावत्वेनासत्त्वादुष्टत्वाद्यदि कदाचिदसदिन्द्रियार्थमसन्तं बहिर्मुखाणामिन्द्रियाणामर्थं रूपादिविषयं पश्यति स्मेति सम्भावनायां पश्यतीति सम्भाव्यते तथापि आनन्दघनध्येयरूपादन्यत् नानानुमानेन विरुद्धं सुखे विपरीतं सुखं वस्तुतया निस्वकरसतया न मन्यते यतो मनीषी नित्यानित्यपदार्थमननशीलः तत्र दृष्टान्तः स्वाप्ने यथा स्वप्नावस्थायां वस्तुत्वेन पश्यन्नपि स्वप्नादुत्थाय तदेव स्वाप्ने विषये हस्त्यश्वरथादिकं तिरोधानं नश्यन्तं वस्तुतया न मन्यते तद्वत् ॥ ३२ ॥

---

### भाषा टीका ।

जिस पुरुष का चित्त मेरे सुन्दर रूप के ज्ञान होनेसे मेरे मे लगा है उसको गुणमय बहुत इन्द्रियों के संयम करने से क्या प्रयोजन होगा तैसही उसकी इन्द्रियों का विक्षेप होने से भी क्या दोष है जैसे कि मेघों के रहने से वा जाने से सूर्यको कुछ दोष गुण नहीं होता है ॥ २५ ॥

जैसे आकाश जो है सो वायु अग्नि जल पृथिवी इन के आने जाने से भी उनके गुणों से नहीं लिप्त होता है तैसे अक्षर आत्मस्वरूपको अहङ्कार वाले के होने वाले मलों से कुछ दोष नहीं होता है क्यों कि वह मलग है ॥ २६ ॥

ऐसा होनेपर भी माया से रचित जो विषय हैं उनका संग पहिलेही छोड देना चाहिये जब तक कि मेरी दृढभक्ति से रजोगुण का मलम छूट न जावै तब तक खोटे संगो से वर्जित रहना चाहिये ॥ २७ ॥

जिस तरह से रोगको अच्छे चिकित्सासे नाश न किया हो तो वह रोग फिर फिर पैदा होकर उसको दुखी करता है इसी प्रकार से कुयोगि पुरुषका सब संगों में लगा जो मन सो कषाय कर्मों के पक न होने से सब बखत दुःख देता रहता है ॥ २८ ॥

जो पहिले जन्म के योग से भ्रष्ट भये हैं उनको देवतों ने विघ्न करने को स्त्री पुत्रादिको मे लगा दिया है ऐसे योगि विघ्नों से युक्त हो गये हैं तो भीवे लोग पूर्व जन्म के योगाभ्यास के बल से फिर भी योग ही मे युक्त होते हैं कर्म में नहीं लगते हैं ॥ २९ ॥

मनुष्य कर्म को करता है आप भी किया जाता है किसी परमात्मा से प्रेरित होकर ऐसा करता रहता है जन्मभर उसी देह मे रहने पर भी विद्वान् पुरुष वो

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनीटिप्पणी ।

मिति न बन्धमोक्षयोरात्मस्पर्शित्वम् । अतो बन्धमोक्षयोर्वास्तवत्वाभावादात्मनो विकार इत्यर्थः ॥ ३३ ॥

एतदेव मुक्तेरात्मोऽविद्याज्ञाननिवृत्तिरूपत्वमेव । मे मत्सम्बन्धिनी समीक्षा सम्यग् ज्ञानं आत्मविद्येति फलितोऽर्थस्तस्या एव सम्यग् ज्ञानत्वात् मूले पुरुषस्य जीवस्य या मुक्तिः स्वरूपभूतं ज्ञानं तदावृतमिन्नमावरकमज्ञानं हन्यान्न तु स्वरूपं करोति ॥ ३४ ॥

प्रपञ्चयति चतुर्विधक्रियाफलाभावेन विवृणोति एतच्छब्दस्यापरोक्षार्थत्वे समीपतरवर्तिचैतद्रूपमिति मानम् । अतिशयः शक्तिविशेषः । महानुभूतिरिति महती देशकालपरिच्छेदशून्या अनुभूतिः स्वरूपज्ञानं यस्य स तथा । कालपरिच्छेद एव जन्मान्तरादिमत्त्वविपरिणामापक्षयनाशाः सम्भवन्ति नतु तदभावे तथा देशपरिच्छेद एव वृद्धिः सम्भवति नतु तदभावे इति तथा व्याख्यातम् । एकः सजातीयभेदशून्यः अद्वितीयो विजातीयभेदशून्यः इति पदद्वयं कर्तृपदद्वयेन वा भगवान् विकारनिमित्तस्यान्यस्य सजातीयस्य विजातीयस्य चाभावान्न कोऽपि विकार उत्पत्त्यादिरस्तीति दर्शयति । श्रुतिविषयस्य श्रुतिप्रकाश्यस्य । प्राणोत्तरत्वेन अनन्तत्वादविषयत्वेन । तथा च अनन्तत्वेनाविषयत्वे प्रमाणं श्रुतिः अप्राप्यावधिमनुपलभ्य भ्रान्ता वाच उपनिषदो मनसा सह यतो अप्राप्य निवर्तन्त इति वागाद्यविषयं तदित्यर्थः । तत्र अविषयत्वे । तथा च वागादीनां तत्प्रेरितत्वे प्रमाणं श्रुतिः तवल्कारोपनिषत् । कश्चित् प्रतिपन्नो ब्रह्मजिज्ञासुः जडानां मनआदीनां प्रवृत्त्यन्यथानुपपत्त्या तत् प्रवर्तकपरमात्मबुभुत्सया पृच्छति । केनेति मनः कर्तृ केन देवेन प्रेषितं सत् इषितम् इष्टं स्वस्वसाधुविषयं प्रति पतति गच्छति मनसः करणत्वावश्यं तत् प्रेरकेण केनचिज्जीवभिन्नेन कर्त्रा भाव्यं निगृह्यतापि जीवेन निग्रहीतुमशक्यत्वात् मनोवशोऽन्येषामवश्य इत्युक्तेः । इषितमितीडागमश्छान्दसः । प्रथमः पञ्चानां मध्ये मुख्यः प्राणः केन कर्त्रा युक्तः प्रेरितः मनः प्रैति याति स्वव्यापारं करोतीत्यर्थः इमां लौकिकीं च वाचं केनेषितां प्रेरितां वदन्ति जीवा इति शेषः । चक्षुः श्रोत्रमिति प्राणवक्तृत्वादेकवद्भावः । सम्बुद्धौ को देशिक । को देवो युनक्ति नियुङ्क्ते प्रेरयतीत्यर्थः । इदमुपलक्षणं शेषकरणानाम् । एवं शिष्येणानुयुक्त आचार्य उवाचेति शेषः श्रोत्रस्येति अतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्तीति आचार्यः श्रुतिशेषो ज्ञेयः । यत् यः श्रोत्रस्य श्रोत्रं शब्दावभासकत्वशक्तिप्रदः मनसो मनः मननशक्तिप्रदः वाचो वागिन्द्रियस्य वाक् शब्दोच्चारणशक्तिप्रदः । वाचमित्यपि पाठोऽर्थः स एव प्राणस्य प्राणः प्राणनशक्तिप्रदः चक्षुषश्चक्षुः दर्शनशक्तिप्रदः स श्रोत्रादीनां नियन्ता त्वया पृष्टो देव इत्यन्वयः । धीराः धीमन्तः श्रोत्रादिप्रेरकत्वेन परमात्मानं जानन्तः अस्माल्लोकाल्लौकिकदेहात् प्रेत्योत्क्रमणं विधाय अतिमुच्य लिङ्गदेहं च हित्वा अमृता मुक्ता भवन्तीत्यर्थः ॥ ३५ ॥

अद्वितीयत्वं ज्ञानिनां भेदस्फूर्तिराहित्यमुपपादयितुम् उपपत्त्या युक्त्या साधयितुं विकल्पो भेदः । माश्रयो नास्तीति माश्रय एवाश्रयत्वविषयत्वेऽभ्युपेते यथोक्तम् माश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवलेति इह ब्रह्मणि किञ्चन नाना भेदो नास्ति अपवादार्थं कल्पिताकारपरां श्रुतिमाह इन्द्र इति । इन्द्रः परमेश्वरः मायाभिः कल्पितोपाधिभिः पुरुरूपः देवनरादिबहुरूपः ईयते प्रतीयते वस्तुत एकमेवाद्वैतमित्यर्थः । अन्येन्द्रस्य दशसंख्या इन्द्रियलक्षणा विषयाहरणाद्धरयः प्राणिभेदात् शता शतसंख्याश्च युक्ताः संयुक्ताः प्रेरिता जडत्वेन स्वतः प्रवृत्त्यसम्भवात् अधीनाः सन्तीत्यर्थः यथोक्तं शङ्कराचार्यैः ये हि परविद्याधिकारे केचित् प्रपञ्चा उच्यन्ते यथा युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयो यं वै दश च शतानि सहस्राणि बहूनि चानन्तानि चेत्येवमादयः ते भवन्तु प्रविलयार्थाः तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमित्युपसंहारात् इति । व्याख्यातञ्च तट्टीकायां रत्नप्रभायाम् । अस्य जीवभावं प्राप्तस्येश्वरस्य दश हरयो विषयाहरणादिन्द्रियाणि प्राणिभेदापेक्षया शतानि सहस्राणि च तेषामीश्वराद्भेदमाशङ्क्याह । अयमिति । ईश्वर एव हरय इत्यर्थ इति । इत्यभेदाभिप्रेत्येयं श्रुतिः भेदस्यावास्तवत्वे उदाहृतेति ज्ञेयम् ॥ ३६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मा न गृह्यते पूर्वमिव स्थूलोऽहमित्यादि देहाकारो न गृह्यते नापि विसृज्यः नच सर्गसंहारादिभाक् स्यात् ॥ ३३ ॥

ततु यद्यपि सम्यक् मिथ्ये तमो नावस्थापयति किन्तु हन्त्यादेव मे समीक्षा मद्विषयज्ञानम् ॥ ३४ ॥

परिशुद्धो जीवात्मा महानुभूतिः अपरिच्छिन्नधर्मभूतज्ञानः सकलानुभूतिः सर्वार्थगोचरज्ञानवान् एकः अनेकात्मकत्वाभावादेकः अद्वितीयः अत एव वचसां विरामः देवमनुष्यादिशब्दानामविषयतया तद्विरहितस्वभूतः इहता चेष्टमानेन वागसवः वागिन्द्रियाणि प्राणाश्च चरन्ति व्याप्रियन्ते ॥ ३५ ॥

केवले शरीररहिते आत्मनि विकल्पः देवत्वमनुष्यत्वाद्याकारो वा तस्यात्मनः असम्बन्धः प्रकृत्यवलम्बो नास्ति तमात्मानं मानादृते प्रमाणादृते न पश्यतीत्यर्थः ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च पूर्वमिति गुणकर्मभिश्चित्रं सत्त्वादिगुणानुगुणैः कर्मभिः पुण्यापुण्यात्मकैश्चित्रं नानाविधमङ्ग देवमनुष्यादिशरीरमज्ञानं च देहात्माभिमानरूपं पूर्वं ज्ञानोत्पत्तेः प्रागात्मनि अविविक्तं यथा तथा गृहीतं तत्पुनर्ज्ञानोदयानन्तरमीक्षया मद्विषयज्ञानेन निवर्तते निरपासेपर्यरलेस्य निवर्तते इत्यर्थः । आत्मा न गृह्यते पूर्वमिव स्थूलोऽहमित्यादिदेहाकारेण न गृह्यते नापि विसृज्यः नच संहारादिभाक् स्यात् न स पुनरावर्तते इति श्रुतेरिति भावः ॥ ३३ ॥

ईक्षाया अज्ञाननिवर्तकत्वे दृष्टान्तेन प्रपञ्चयति । यथाहीति । तमोऽन्धकारमिह न्यायेन ननु लोचने लोचयति चावस्थापयति एवं सती विद्यमाना मे समीक्षा मद्विषयं ज्ञानं पुरुषस्य

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बुद्धेस्तमिस्रं स्थूलोऽहमित्यादिबुद्धिमित्यर्थः । तन्मूलां संसृतिं च हन्यादिति भावः ॥ ३४ ॥

तद्विघाते कथंभूतोऽवतिष्ठत आत्मेत्यत्राह । एष इति । एष परिशुद्धो जीवात्मा स्वयंज्योतिः स्वयंप्रकाशोऽजः जन्मादिविकाररहितोऽप्रमेयः प्रत्यक्षादिभिः प्रमातुमशक्यः महानुभूतिरपरिच्छिन्नधर्मभूतज्ञानः सकलानुभूतिः सर्वार्थगोचरज्ञानवान् एकः अनेकत्वद्वयात्मकत्वाभावादेकः अद्वितीयः प्राकृतदेहरहितः अत एव वचसां विरामः देवमनुष्यादिशब्दानामविषयतया तन्निवृत्तिहेतुभूतः येनेषिताः प्रेषिताश्चोदिता वागसवश्चरन्ति व्याप्रियन्ते स एव इति पूर्ववत्प्रदर्शनम् ॥ ३५ ॥

छित्त्वात्मसम्मोहमज्ञानमात्मनि तमिस्रं पुरुषस्य बुद्धेरित्यादौ संसृतिनिदानतया व्याख्यातमात्मसम्मोहं क्रियानिवृत्तस्वं निष्कृष्य दर्शयति । एतावानिति । अत्र ज्ञानस्वःप्रकृत्यवस्वः देहगतः विकल्पः देवाद्याकारः यस्यात्मनो नास्ति तं स्वमात्मानमृते विना विहाय विस्मृत्येति यावत्केवले ज्ञानैकस्वरूपे तस्मिन्नात्मनि विकल्पः देवोऽहं मनुष्योऽहं कृशोऽहमित्याद्यभिरूपोऽभिमानभेद इति यत् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु जगत्स्वातन्त्र्यप्रतीतौ किं कारणमित्याशङ्क्याज्ञानं कारणमित्याशयेनाह । पूर्वमिति । ज्ञानोदयात्पूर्वमात्मनि परमात्मनि अज्ञानं गृहीतं परमात्मस्वरूपविषयत्वेनाज्ञानमार्जितं जीवेनेति शेषः । न केवलं तत्स्वरूपविषयमेवेत्यत उक्तं गुणकर्मचित्रमिति भगवतो गुणविषयत्वेन कर्मविषयत्वेन च चित्रं नानाविभ्रमज्ञानसद्भावे प्रमाणमाह । अविविक्तमिति । एतमहं जानामीति विवेकशून्यं नन्वेतदज्ञाननिवृत्तौ का प्रतिभटीति तत्राह । मन्नेति । भक्त्याभ्यस्यते यथं माकार्षीरित्याह पुनः पुनरीक्षया हरेः स्वरूपस्य गुणानां कर्मणां चासौ चनलक्षणोपासनाजनितेन ? तदज्ञानं निवर्तते पुनस्तदज्ञानं न गृह्यते ज्ञानोदयानन्तरम् आत्मा परमात्मापि न विसृज्यः स्वस्वरूपसुखाविष्कारादिलक्षणापरोक्षीकृतो न परोक्षीभवति । तस्य जगत्स्वातन्त्र्यं च न प्रतीयेत इत्यर्थः—

अन्येषां तेऽपि चाज्ञाते न विशेषो हरेः कथंचित् ।
तेषामेव विशेषः स्यादज्ञानापगमेन तु ॥

इति वचनाज्जीवस्यैव विशेषो न हरेर्विशेष इति च ज्ञातव्यं ज्ञानार्थिनेति भावः ॥ ३३ ॥

मम साक्षात्कारेणाज्ञानं निवर्तते इत्युक्तं तत्र तेन मम कश्चन विशेषो नास्तीति समर्थितं चोदाहरणमाह । यथेति । हिरण्यः साक्षिसूचको यथा भानोः सूर्यस्य उदयो नृचक्षुषां तमो निहन्यात्तु तमः संविधत्ते कमप्यतिशयं नाधत्ते एवं वैराग्यादिलाञ्छनसामर्थ्या निपुणा सती मे समीक्षा पुरुषस्य सर्वथा श्रीनारायणशरणं गतस्य बुद्धेस्तमिस्रं हन्यात् ननु मम कञ्चनविशेषं कुर्यात् ॥ ३४ ॥

वस्तुतः श्रुतपरमात्मस्वरूपस्यापि तस्य स्वरूपं कीदृशमित्युक्तवस्यान्तरं चोद्यं परिहरति । एष इति । एषोऽहं स्वयंज्योतिः स्व एव पूर्णप्रकाशः अतः एवाजः अत एवाप्रमेयः महती अनुभूतिर्ज्ञानं यस्य स महानुभूतिः सर्वज्ञ इत्यर्थः । सकलानुभूतिः पूर्णसुखानुभव एकः ज्ञानानन्दादिगुणाभिन्नत्वात्स्वगतभेदरहितः अद्वितीयः सर्वोत्तमः अप्रमेयत्वाद्देदादिवाचामगोचरः वाचामगोचरश्चेत्तर्हि शास्त्रोपर्थं कथं वर्तेतेति तत्राह । येनेति । वाग्वचनाः वैदिकलौकिकसर्वशब्दव्यवहारा येनेरिताः वर्तन्त इत्यनेन भगवदनुगृहीतवाग्व्यवहारविषयत्वेन तज्ज्ञानमुदेतीति ज्ञातव्यम्

ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः ।
अद्वितीयो महाविष्णुः पूर्णत्वात्पुरुषः स्मृतः ॥

इति वचनात् ॥ ३५ ॥

एवं ज्ञानं ज्ञेयस्वरूपं निरूप्य मिथ्याज्ञानस्वरूपं तत्कारणाज्ञानस्वरूपं च विविच्य निरूपयति । एतावानिति । यद्विकल्पः प्रमाणविरुद्धं कल्पनं जीवस्वातन्त्र्यं परमात्मस्वातन्त्र्यं जीवपरात्मसदादिविषयोऽयम् एतावानात्मसम्मोहः अतोऽन्यः भ्रमस्य वायकज्ञानाद्यर्थं तत्कथमत्राह । केवल इति । आत्मा जीवः केवले स्वतन्त्रे अभूते नित्यमुक्ते परमात्मनि स्थितं सदाधारतया स्थितं स्वमात्मानं स्वस्वभावं कदाप्यनपलाप्यस्वातन्त्र्यमचलं स्थिरं न पश्यति । यावद्यावद्भ्रमो न निवर्तत इत्यतः स्वस्वाज्ञानं निमित्तं तन्निवृत्तौ भ्रमो निवर्तत इति निश्चीयते "एतावानात्मसम्मोहो यद्विरुद्धस्य कल्पनं यत्परात्माश्रयान् जीवानिश्वरत्वेन न पश्यती"ति वचनात् नाद्वैतज्ञानेन भेदभ्रमो निवर्तेत इत्यर्थः ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नचैवं गुणकर्मणोः अहमात्मा तत्सम्पदाद्यो विकारी समात्मस्य अज्ञानमात्मनः संसरणस्योत्याह । पूर्वमिति ॥ ३३ ॥

तस्य च मदंशस्य प्रकाशो मदनुग्रहेणाज्ञानलोपात् स्वत एव भवतीति दृष्टान्तेनाह । यथा हीति । नतु पूर्ववत् यज्जीवोऽयमलक्षणं सद्वस्तु तत्पुनर्विधत्त इत्यर्थः । मे समीक्षा कृपादृष्टिः ॥ ३४ ॥

ततस्त्वम्पदार्थस्यापि प्रकाशस्तत्सर्वप्रकाशमात्मसाक्षात्कारस्य स्वयमेव स्यादित्याह । एष इति । तद्विज्ञाने सर्वविज्ञानात् सकलानुभूतिः तत्र हेतुर्महानुभूतिरिति ॥ ३५ ॥

ननु भ्रम एव ब्रह्माख्यं शुद्धं तत्पदार्थमाश्रित्य द्वैतं कल्पयति यथोक्तं "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवले"ति तर्हि कथं भ्रममयोपाधिकस्येश्वराख्यस्य ब्रह्मण एव तथानुमङ्गत्वादस्य भ्रमोऽपयाप्यति कश्चित्प्रतिपद्यते तत्र किमुच्यते तत्राह । एतावानिति । विविधं कल्प्यते येन स विकल्पो भ्रमः यतः केवले इतरसम्बन्धसम्भावनारहितस्यावलम्बो न विद्यते स्वमात्मानं जीवभूते यस्य भ्रमस्यावलम्बो न विद्यते तदुक्तं वैष्णवे—

ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंस्थितौ ।
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥

इति सर्वज्ञसूक्ते च—

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः ।
स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः ॥

इति ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मादज्ञाननिवर्तकं ज्ञानमेवोपादेयमित्याह । पूर्वं बद्धावस्थायां गुणकृतकर्मभिर्विचित्रं यत् अज्ञानमेवात्मनि स्वंपदार्थविषये गृहीतमासीत् कीदृशम् अविविक्तं कुत आगतं किंस्वरूपमेतदित्यविचारितं तदेवाज्ञानं, मुक्तदशायामीदृशा ज्ञानेन निवर्तत इत्यतः खलु ज्ञानमेव पूर्वोत्तरदशयोरगृहीतं गृहीतं च भवेत् स्वंपदार्थ आत्मा तु न गृह्यते नापि विसृज्यते कदापीति सत्यकरस एवेति भावः ॥ ३३ ॥

सदा वर्त्तमान एवात्मा ज्ञाने सति स्वत एवोपलभ्यते तदिमस्मिन्नसति नोपलभ्यते सूर्यप्रकाशे सति असति च घटपटादिरिवेत्याह । यथा हीति । चक्षुषस्तमआवरणमेव हन्यात् नतु तच्चक्षुर्विधत्ते यतः सत् चक्षुस्तु सदैव वर्तमानमेकरसमेवेति भावः एवं निपुणा मे समीचा दृढं ज्ञानं मदीया विद्या शक्तिरित्यर्थः पुरुषस्य स्वंपदार्थस्य बुद्धेर्बुद्ध्युपाहितस्य तमिस्रं ज्ञानावरणमेव हन्यात् ॥ ३४ ॥

ततश्च शुद्धेन स्वंपदार्थेनात्मना परमात्मानं सूर्यस्थानीयं भक्त्या किं स्वयं पश्येत् नतु जीवात्मविलक्षण एवेत्याह । एष इति स्वयंज्योतिः स्वप्रकाशः जीवस्तु तत्प्रकाश्यः अजः जीवस्तूपाधिद्वारा जन्यः अप्रमयः सर्वेषामेकत्वात्प्रमातुमशक्यः जीवस्तु न तथा भूतः महानुभूतिः चित्पुञ्जः जीवस्तु चित्कणः सकलानुभूतिः सर्वज्ञः जीवस्त्वल्पज्ञः एकः परमेश्वरान्तराभावात् सजातीयभेदरहितः जीवस्त्वनेकः अद्वितीयः जीवमाययोस्तच्छक्तित्वेनैक्याद्विजातीयभेदरहितश्च जीवस्तु नैवंभूतः नच जीववद्वाङ्मनसगोचर इत्याह । वचसां विरामे अगोचरत्वेन पूर्णे सत्यां तथाच श्रुतिः यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति तर्हि स कथं प्रत्येतव्य इत्यत आह येनेषिताः यत्प्रेरिता वागसवश्चरन्ति यदुक्तं गुणप्रकाशैरनुमीयते भवानिति ॥ ३५ ॥

ननु विश्वस्यास्य पृथक् प्रत्यक्षत्वात् कथमद्वितीयत्वं तत्राह एतावानिति । केवलं एकस्मिन्नद्वयात्मन् आत्मनि सति विकल्प इति यत् एतावानेव आत्मसम्मोहः जीवस्याविवेकः अस्य आत्मसम्मोहस्य समाश्रयं मुक्ते स्वीयं जीवात्मानं विना अवलम्बो नास्ति जीवात्मन एवाज्ञानेन द्वैतं पृथक् प्रतीतं अस्य द्वैतस्य परमात्मकार्यत्वेन परमात्मैकयात् नेह नानास्ति किञ्चनेत्यादिश्रुतेः पार्थक्यं नास्तीत्यर्थः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नन्वनित्यासुखरूपे प्राकृते सुखदुःखे किंकारणमित्यपेक्षायाम-ज्ञानमेवेत्याह । पूर्वमिति । परमानन्दरूपपरमात्मज्ञानात्पूर्वमात्मनि परमात्मनि अज्ञानं गृहीतं परमात्मविषयत्वेनोपात्तं जीवेनेति शेषः न केवलं स्वरूपविषयं तज्ज्ञानमपितु गुणकर्मचित्रं परमात्मनो गुणविषयत्वेन कर्मविषयत्वेन चित्रं नानाविधम् अज्ञानस्य विषयं स्वरूपमाह अविविक्तमिति भावे निष्ठा ब्रह्मानन्दविषयानन्दयोरविवेचनमित्यर्थः विज्ञानमानन्दमानन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् भूमैव सुखं नाल्पे सुखमस्ति यो भूमा तदमृतं यदल्पं तन्मर्त्यं सच्चिदानन्दरूपाय कृष्णायेत्यन्वयव्यतिरेकश्रुतिभ्य उभयोर्विवेचनं किञ्च यथा कश्चित्पुरुषो वने गजसिंहखड्गहस्तकम्पादवानलभयाज्जीवितापदमापन्नः पलायन् कच्चावृतकूपे पपात स तत्र कूपतले महासर्पं दृष्ट्वा मध्य एव वल्लीमादाय लम्बमानो दंशादिबहूपद्रुतोऽपि उपरितस्च्युतं मधुबिन्दुरसास्वादासक्तस्तत्रैवातिष्ठति तत्र मधुबिन्दुवद्विषयसुखमिति भारताख्यानप्रसिद्धेरित्येवं परमानन्दतुच्छानन्दयोर्ब्रह्मसुखविषयसुखयोरविवेचनमेवाज्ञानमित्यर्थः कथमस्य निवृत्तिरिति चेत्तत्राह । निवर्तते इति । गुरूपदेशेन परमानन्दस्य भगवतः स्वरूपगुणकर्मणां पुनरीक्षयैव सम्यग्ज्ञानेनैव भगवत्कृपाकटाक्षेणैव वा तत्कारणमज्ञानं निवर्तते पुनः शब्दस्योभयत्र सम्बन्धः पुनस्तदज्ञानं न गृह्यते ज्ञानमेव गृह्यते इत्यर्थः । ज्ञानोदयादात्मा परमात्मापि न विसृज्यः न त्याज्यः पूर्वमज्ञानेनात्मा विसृज्य आसीत् पुनस्तज्ज्ञानेन विषयसुखस्य दुःखरूपत्वनिश्चयात् परमानन्दरूपः परमात्मा न विसृज्यो भवत्यपितु भजनादिना गृह्यत एवेति भावः ॥ ३३ ॥

भगवद्विद्ययाऽज्ञानं निवर्तते आत्मा च प्राप्तो भवतीत्युक्तम् इदानीं ज्ञानादुदेयमानमनुभूयते न तु जन्यते इत्याह । यथेति । हिरण्यधारणो यथा भानो रश्मयो नृचक्षुषां तम एव निहन्त्यानु वह्निघ्नो भानुप्रकाश्यभूतं वस्तु पूर्वमेव सत् विद्यमानं न विधत्ते न करोति एवं सती असत्तर्कशून्या निपुणा साधनादिसम्पन्ना मे भगवतः सर्वज्ञस्य समीक्षा समीचीना विद्या मद्विषयिणी विद्येत्यर्थः पुरुषस्य जीवस्य बुद्धेस्तमिस्रमज्ञानं हन्यात् नतु मत्प्रकाश्यभूतं वस्तु चिदचित्स्वरूपादिकं विधत्ते उत्पादयति ॥ ३४ ॥

कीदृशं त्वत्स्वरूपमित्यपेक्षायामाह । एषइति । एष प्रत्यक्षोऽहं स्वयं ज्योतिः स्वयं प्रकाशः अत एवाजः स्वेच्छां विनाऽऽविर्भावरहितः असम्बाद्धेवाप्रमेयः अन्यैः प्रमातुमशक्यः स्वयं महानुभूतिः महती देशकालादिपरिच्छेदशून्याऽनुभूतिर्ज्ञानं यस्य सः सर्वदेशकालवस्तुविषयकज्ञानाश्रय इत्यर्थः । इत्यनेन सामान्यतः सर्वज्ञत्वमुक्तं सकलानुभूतिरित्यनेन सकलविशेषज्ञानाश्रयत्वाद्विशेषसर्वज्ञत्वमुक्तं यः सर्वज्ञः सर्वविदिति श्रुतेः एकः ब्रह्म नारायणरामकृष्णादिनानाशब्दवाच्योऽपि स्वरूपभेदरहितः अद्वितीयः समानाधिकशून्यः न तत्समश्चाऽप्यधिकश्च दृश्यते न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य इतिश्रुतिस्मृतिभ्यां ननु शब्दवाच्यत्वे कुतोऽप्रमेयत्वमिति चेत्तत्राह वचसां विरामे स्वरूपगुणानामियत्तामप्राप्य विरामे निवर्तने सति अप्रमेयत्वमित्यर्थः । वाच्यत्वं तु इयत्ताच्छेदाभावेनेत्युभयप्रकारकत्वमविरुद्धं यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् बिभेति कुतश्चनेति श्रुतेःनन्वप्रमेयत्वेऽपि शब्दवाच्यत्वाङ्गीकारे शब्दप्रकाश्यत्व

यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ।
व्यर्थेनाप्यर्थवादोऽयं द्वयं पण्डितमानिनाम् ॥ ३७ ॥
योगिनोऽपक्वयोगस्य युञ्जतः काय उत्थितैः ।
उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥ ३८ ॥
योगधारणया कांश्चिदासनैर्धारणान्वितैः ।
तपोमन्त्रौषधैः कांश्चिदुपसर्गान्विनिर्दहेत् ॥ ३९ ॥
कांश्चिन्ममानुध्यानेन नामसंकीर्तनादिभिः ।
योगेश्वरानुवृत्त्या वा हन्यादशुभदान् शनैः ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्यादेव तथाऽप्येवं स्वयंप्रकाशत्वहानिरिति चेत्तत्राह । येनेषिता वागसवश्चरन्तीति । येन प्रेरिताः सन्तो वाचोऽसवः प्राणाश्चरन्ति स्वस्वव्यापारे समर्था भवन्ति असुशब्देन तद्वन्तो जीवा अपि गृह्यन्ते तेऽपि तत्प्रेरिताः प्रवर्त्तन्त इत्यर्थः ॥ ३५ ॥

तदेवं परमात्मनः स्वयंज्योतिष्ट्वमजत्वमप्रमेयत्वमेकत्वमद्वितीयत्वं सर्वज्ञत्वं वागसुशब्दोपलक्षितचेतनाचेतननियन्तृत्वादि निरूपितमिदानीं करुणासागरः सर्वज्ञो भगवान् स्वमताहितोपदेशायोक्तसिद्धान्तवादिनो ये जीवानां सन्मार्गभ्रंशाय प्रवर्तमानाः सजातीयविजातीयस्वगतभेदशून्यं सर्वप्रमाणागोचरमात्मतत्त्वं परमार्थवस्तु तस्याविद्यात्मककार्यकारणोपाधिपरिच्छेदात् जीवेश्वरत्वाविभागस्तत एवेशजीवयोः सर्वज्ञत्वाल्पज्ञत्वे सर्वशक्तित्वाल्पशक्तित्वे स्वतन्त्रत्वपरतन्त्रत्वे नियन्तृत्वनियम्यत्वे भवतः नतु सर्वोपाधिविनिर्मुक्ते ते सम्भवतः अचिन्मात्रन्तु असदेव शुक्तौ रजतप्रतीतिवन्मिथ्यैव प्रतीयते तत्प्रतिपादकशास्त्रं त्वर्थवादमात्रं तस्माज्ज्ञातृज्ञाननियम्यसम्बन्धान्तराभावात्परमात्मनि सर्वज्ञत्वनियन्तृत्वादि न वास्तवमस्तीति तेषां मतमनूद्य दूषयति । एतावानिति आत्मसम्मोहः आत्मनोऽन्यथानुभवः एतावानेव नह्यतोऽन्य इत्यर्थः । कोऽसावित्यपेक्षायामाह । यत् आत्मन् आत्मनि परमात्मनि विकल्पः अविद्योपाधिना विविध ईश्वरत्वजीवत्वसर्वज्ञत्वाल्पज्ञत्वादिविकल्पः भेदकल्पनं तदुक्तेरुन्मत्तप्रलापतुल्यतां दर्शयितुमात्मविशेषणमाह । केवले । अविद्यागन्धसम्बन्धशून्ये तत्कल्पनायां प्रमाणमपि नेत्याह । स्वमात्मानमृते तेषां स्वबुद्धिं विना यस्य समोहस्यावलम्बो न ह्यस्ति ॥ ३६ ॥

---

भाषा टीका ।

हे उद्धवजी ज्ञान होने से पहिले आत्मा के विवेक नहीं होने से अनेक गुण कर्मों के भान होने से चित्रित आत्माको जो ग्रहण किया रहता है सो स्वरूप ज्ञान होने से मेरी कृपा दृष्टि से आत्माकी विचित्रता बुद्धिमिट जाती है और आत्मा को न ग्रहण किया जाता है न छोड़ा जाता है ॥ ३३ ॥

जैसे सूर्य का उदय होना मनुष्यों के नेत्रों के अन्धकार को नाश करदेता है और किसी घटादि पदार्थ को बनाता नहीं है इसी प्रकार से उत्तम मेरा ज्ञान इस पुरुष की बुद्धि के अन्धकार को नाशकर देता है ॥ ३४ ॥

यह आत्म स्वरूप तो स्वयं ज्योति है प्रत्यक्षादिकों से जानने योग्य नहीं है देशादि नियमरहित है सब ज्ञानों का कारण है एकाकार है अपने देहादिकों से भिन्न है जिसको मन वचन भी यथार्थ नहीं पा सकतेहैं जिसकी प्रेरणासे वाणी प्राणादिक संचार करतेहैं ॥ ३५ ॥

इतना ही आत्म स्वरूप का मोह है जोकि एकरूप केवल आत्मस्व रूपोंमें देव मनुष्यादि भेद प्रतीत हैं जिस मोह का अवलम्बभी आत्मा के विना दूसरा कोई नहीं है ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

केचित्पुनः प्रत्यक्षादिप्रतीतस्य प्रपञ्चस्य बाधायोगाद्वेदार्थानां च कर्तृभोक्तृप्रतिपादनपरत्वेनार्थवादत्वादद्वैतं ब्रह्मासिद्धमिति मन्यन्ते तन्मतमनूद्य दूषयति यदिति । नामाकृतिभिर्ग्राह्यं नामरूपात्मकमिदं पञ्चवर्णं पञ्चभूतात्मकं रूपं द्वैतं यदबाधितमिति पण्डितमानिनामत्र वचनमेव पाण्डित्यं इत्यभिमानवतां वेदान्तेष्वर्थवाद इति प्रतीति र्न तत्त्वविदां यतो व्यर्थेनापि विनाऽर्थेन सा प्रतीतिः तथाहि न तावद्द्वैतस्यैकवाक्यत्वे तेषामस्ति यतोऽर्थवादत्वं स्यात् नचाऽकर्तृभोक्तृपरमानन्दरूपात्मप्रतिपादने कर्मविधिशेषतां भजते नचाबाधितत्वं द्वैतस्य नामरूपात्मकत्वात् ग्राह्यत्वात् पञ्चवर्णात्मकत्वात् स्वप्नवदित्याद्यनुमानैर्वाचारम्भणादिश्रुतिभिश्च बाधितत्वादिति ॥ ३७ ॥

तदेवं ज्ञानयोगं सपरिकरं निरूप्येदानीं तन्निष्ठस्य विघ्नप्रतीकारमाह । योगिन इति त्रिभिः योगं युञ्जतः कायो यद्यन्तरे उत्पन्नैरुपसर्गै रोगाद्युपद्रवैरभिभूयेत विधिः प्रतीकारः ॥ ३८ ॥ योगधारणया सोमसूर्यादिधारणया सन्तापशैत्यादीन् आसनैः सहधारणयाऽनिलैर्वातादिरोगान् तपोमन्त्रौषधैः पापग्रहसर्पादिकृतान् ॥ ३९ ॥

ममानुध्यानादिभिः कामादीन् योगेश्वरानुवृत्त्या दम्भमानादीन् हन्यात् ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनी टिप्पणी ।

केचिन्मीमांसकाः । वाधोऽस्मिन्मिथ्यात्वासम्भवात् वेदान्तार्थानां तत्त्वमसि ब्रह्माहमस्मीत्यादि वेदान्तार्थानां क्रतुयज्ञस्तदर्थस्तदङ्गभूतः कर्ता यजमानस्तत्प्रतिपादनपरत्वेन तत्श्लाघापरत्वेनार्थवादत्वात् गुणवादरूपार्थवादत्वात् । यथादित्यो यूप इत्यत्र यूपस्यादित्यत्वं प्रत्यक्षबाधितं तथोज्ज्वलत्वयज्ञनिर्वाहकत्वादिगुणमादाय प्रशंसामात्रं यूपस्य तथा जीवस्यैश्वर्यत्वं प्रत्यक्षबाधितं कर्मवश्यत्वात् किन्तु यज्ञादि ज्ञातृत्वगुणमादाय तस्यैश्वरत्वेन स्तुतिमात्रं क्रियत इत्यर्थः । तन्मतं मीमांसकमतं नाम ब्राह्मणादि रूपं द्विपदत्वादि । अत्र द्वैतस्य सत्यत्वप्रतिपादने । अयं ब्रह्मात्मवादः । अर्थवादः यजमानस्तुतिमात्रम् । तादृशप्रतीतेः पण्डितमानिप्रतियोगित्वे हेतुमाह यत इति । विनान्वयेन विध्येकवाक्यत्वप्रयोजनासम्भवादित्यर्थः । तथाहि । वेदान्तार्थानामर्थवादत्वप्रतीतेर्व्यर्थत्वं दर्शयति । न तावदिति । यथा वायुर्वै क्षेपिष्ठा देवता वायुदेवेन भूतिं गमयतीत्याद्यर्थवादानां यतो वायुः प्रशस्तोऽतो वायव्यं श्वेतमालभेतेत्यनेन प्रकारेण विध्येकवाक्यत्वं न तथा वेदान्तवाक्यानां विध्येकवाक्यत्वं सम्भवति तादृशविध्यभावात् यतो विध्येकवाक्यत्वादर्थवादत्वं स्यात् सङ्गच्छेतेति तथा प्रतीतेर्व्यर्थत्वं दर्शितम् । न चाग्नेयोऽष्टाकपालो भवतीत्यत्र विधिः कल्प्यः परमानन्दप्रतिपादनस्य तुच्छकर्मविध्यङ्गत्वानौचित्यादित्याह । न चेति । बाधितत्वान्मिथ्यात्वात् ॥ ३७ ॥

सपरिकरत्वं परिकरोऽत्र बाधकस्य निरासः साधकस्य कथनं तत् सहितम् । तन्निष्ठस्य ज्ञानयोगनिष्ठस्य अन्तरा ज्ञाननिर्वाहमध्य एव तत्र तेषूपसर्गेषु । प्रतीकारो दूरीकरणोपायः ॥ ३८ ॥

सोमसूर्यादीत्यादिनाऽऽभ्यां क्रियारूपपरिग्रहः सन्तापशीत्यादीनित्यादिना वनाग्न्यादीनां संस्तम्भनपरिग्रहः । तदुक्तं धारणासिद्धिप्रसङ्गे अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुरिति ॥ ३९ ॥

योगेश्वरा भक्तास्तेषामनुवृत्त्यानुगत्येन ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पञ्चवर्णा पञ्चभूतात्मत्वात्पञ्चविधं देवादिनामरूपेण ग्राह्यं शरीरम् अर्थेनाप्यर्थवादोऽयम् अर्थः स्वर्गादिपुरुषार्थः शरीरं च भोग्यविषयैः सह अबाधितं नित्यमिति भ्रममित्यर्थः । शरीरनित्यत्वं भोगनित्यत्वं चार्थवादमात्रं वस्तुतस्तदुभयमपि न नित्यमित्यर्थः ॥ ३७—३९ ॥

योगेश्वरानुवृत्त्या योगनिष्ठसदाचारानुवृत्त्या ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा देवमनुष्यादिनामरूपैर्ग्राह्यं पञ्चवर्णं पञ्चभूतात्मकत्वात् पञ्चविधं शरीरं ह्यर्थेनापि ह्यर्थेन सह बाधितं नित्यमिति यच्चालस्यात्मानं मन्यमान इति सम्बन्धः विविधोऽर्थो ह्यर्थः स्वर्गादिपुरुषार्थः भोग्यविषयैः सह शरीरं नित्यमिति तथा देवोऽहं कृशोऽहमित्येतद्द्वयं पण्डितमात्मानं मन्यमानानामर्थवादस्तन्मात्रं वस्तुत उभयमपि भ्रान्तिरूपमित्यर्थः ॥ ३७ ॥

निवर्तते तत्पुनरीक्षयैवेति निष्पत्तिपर्यन्तेक्षया नापि विसृज्य इत्युक्तं तत्राधिव्याध्यादिभिर्विघ्नैर्योगानिष्पत्तिमाशङ्क्य तत्प्रतिक्रियामुपदिशति । योगिन इति । न पक्वः परिनिष्पन्नो योगोऽस्य तस्य योगिनः योगं युञ्जतः कुर्वतः सतः कायो देहः उदितैरुत्पन्नैरुपसर्गैरुपद्रवैः रोगादिभिर्विहन्येत तत्राय विधिः प्रतीकारो विहितः ॥ ३८ ॥

योगधारणया सोमसूर्यादिधारणया कांश्चित्सन्तापशैत्यादीन् आसनैर्वायुधारणाभिर्वातादिरोगान् तपोमन्त्रौषधैः पापग्रहसर्पादिकृतान् ॥ ३९ ॥

ममानुध्यानादिभिः कामादीन् योगीश्वरानुवृत्त्या योगनिष्ठसदाचार्यानुवृत्त्या दम्भादीन् इत्थं शुभैरुपायैरशुभदानुपसर्गान् हन्यात् एवमुपसर्गान्निहत्य योगं निष्पादयेदिति भावः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि पञ्चविधभेदभ्रमः अद्वैतज्ञानेन निवर्तत इत्युपदेशो न विदुषां परिषदि स्वारस्यमावहे इति भावेनाह । नामाकृतिभिरिति । नामाकृतिभिर्नामरूपैर्ग्राह्यं ज्ञेयं पञ्चवर्णं पञ्चभूतात्मकरूपञ्चभेदात्मना वर्तनीयं जगत्तदबाधितमद्वैतज्ञानबाध्यं न भवति जगदबाधितमित्यर्थः व्यर्थो वादो न भवति किन्त्वर्थवादः यथार्थवाद एव कुतः सूरयो जीवं परमात्मानं च द्वयं द्वित्वसंख्याविशिष्टं विन्दन्ते लभन्त इति भावः । अनेन जगत् ज्ञानबाध्यमिति वदन्तोऽपण्डिताः अन्ये तु पण्डिता इत्युक्तं भवति—

> पञ्चभूतात्मकं विश्वं भ्रान्तिसिद्धमपण्डिताः ।
> वदन्ति पण्डितास्त्वद्धा जगदाहुरबाधितम् ॥
> प्रवाहरूपेण सदा विष्णोरिच्छावशस्थितः ।

इति वचनात् ॥ ३७ ॥

पूर्वमन्तरायहतयोगाः कुयोगिनो जन्मान्तरेऽपि योगमभ्यस्यन्तीत्युक्तमधुना तस्मिन् जन्मन्येव प्राप्तयोगान्तरायपरिहारं वक्तुमाह । योगिन इति । काले योगाभ्यासविहितसमये प्रभातादिलक्षणे योगं युञ्जत उपसर्गरूपद्रवैर्विविधवक्ष्यमाणैः ॥ ३८ ॥

कोऽयमिति तमाह । योगधारणयेति । योगधारणया यमनियमादीनामावर्तनेन ॥ ३९ ॥

अनुध्यानेन तत्तदन्तरायविहतपरिहारसमर्थहरिस्मरणेन नामसंकीर्तनादिभिरित्यनेनाधिकारिणः कालविशेषाश्च लक्ष्यन्ते । अशुभान्विघ्नान् ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु द्वैतं यदि स्वस्वरूपे आरोपितं स्यात् तदैवेश्वरानुग्रहेण तज्ज्ञाने सति तत्र मिथ्या भावेत नत्वेवं किन्तु तदनुलपाकपाकसंयुक्तमेव ततः कथं ज्ञानमात्रेणापगच्छेदित्येक आशङ्कय तथा जीवेनाज्ञानारोपितत्वेऽपि यथास्थितिस्वपरजातवद्द्वैतं नाम वस्तु पूर्णमात्रे नित्यमादित एव पूर्वपूर्वभ्रमजसुखदुःखादेर्व्यक्ते

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदा को वेश्वरो नाम कोवा तदनुग्रह इत्यन्यै चाक्षिपन्तीत्याशङ्कयाह । वस्त्विति । यन्नामादिभिर्ग्राह्यं पञ्चभूतात्मकरूपमबाधितं नास्तीति भावनया बाधितुमशक्यं ग्राहकादित्वेन संयोगस्यैव सिद्धेरिति मन्यन्ते यश्च व्यर्थेन पदार्थे विनान्वयेन वाक्यमात्रं मन्यन्ते द्वयमप्येतत्पण्डितमानिनामेव नतु पण्डितानां पूर्वत्र ग्राहकग्राह्ययोरुपरूपयोश्च चिज्जडयोस्तेजस्तिमिरयोरिव संयोगासम्भवाद्ज्ञानेनैव तत्प्रतीतिरिति यथोत्तरत्र नह्यत्यन्तासन् वष्टभूतादिः कुत्राप्यारोपितो दृश्यते समुच्छ्रितफणो शशशृङ्गमिवेति भावः ॥ ३७—४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्मात्कार्यकारणवस्त्वैक्यमदर्शनं पटतन्तुवदिति न्यायेन कार्यस्य पृथक् सत्त्वं बाधितमेव तदप्यबाधितमेवेति ये मन्यन्ते ते पण्डितमानिन एव नतु पण्डिता इत्याह । यत् नामभिराकृतिभी रूपैश्च सहितमिन्द्रियैर्ग्राह्यं च पञ्चवर्णं पञ्चभूतात्मकं तत् द्वयं द्वैतमबाधितमेवेति पण्डितमानिनामेव नतु पण्डितानां यतो व्यर्थेन विनान्वयेन अर्थवादः अर्थ इति वादोऽयं नह्यात्यन्तमानर्थः सत्यो भवेत् "प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा । आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह" इति मदुक्तेः ॥ ३७ ॥

तदेवं ज्ञानयोगं सपरिकरं निरूप्येदानीं तन्निष्ठस्य विघ्नप्रतीकारमाह । योगिन इति त्रिभिः । युञ्जतः योगाभ्यासं कुर्वतः कायो यदि दैवादुपसर्गैः रोगाद्युपद्रवैरभिभूयेत तत्रायं विधिः प्रतीकारः ॥ ३८ ॥

योगधारणया सोमसूर्यादिधारणया सन्तापशैत्यादीन् आसनैर्वायुधारणान्वितैर्वातादिरोगान् तपोमन्त्रौषधैः पापग्रहसर्पादिकृतान् ॥ ३९ ॥

ममानुध्यानादिभिः कामादीन् योगेश्वरानुवृत्त्या दम्भमानादीन् हन्यात् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च नामाकृतिभिर्नामभिराकृतिभिर्यत् ग्राह्यं ज्ञेयं नामरूपात्मकं पञ्चवर्णं पञ्चभूतात्मकं सर्वं जगत् तत्, व्यर्थेनापि अबाधितमदृष्टावधि [illegible] जीवानां यावदज्ञानं तावत्सत्यमेव प्रतीयते इत्याहुः । ननु यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष ते आत्मान्तर्याम्यमृतः एवमेवाकाशाद्युत्पत्तिस्थितिनियमनादेर्वेदेनैव प्रतिपादितत्वाज्जगदबाधितमेवेति चेत्तत्राहुः अर्थवादोऽयमिति सृष्टिनियमनाद्यभिधायकोऽयं वेदभागोऽर्थवादः अज्ञानकल्पितप्रपञ्चाश्रिततज्जगदभिधायको वेदादिनैरर्थ्यपरः अधिष्ठानस्य मेयतामिति वाक्यवादिति तन्मतं निरासयति । द्वयमिति परमात्मन उपाधिसम्बन्धेन जीवेशादिभेदकल्पनं नामरूपात्मकं जगत्सत्यमपि तत्प्रत्ययस्याज्ञानहेतुत्वं प्रकल्प्य तत्प्रतिपादकश्रुतिस्मृत्यादेरर्थवादत्वकल्पनमिति द्वयं पण्डितमानिनाम्

अध्यारोपापवादाभ्यां तत्त्वावधारणप्रकारेण वयमेव पण्डिता इत्यभिमानवतामेव नतु पण्डितानामिति तत्र तावद्ब्रह्मण्यविद्यासम्बन्धोपक्रमशक्यस्तस्य स्वयं प्रकाशत्वात् सूर्येऽन्धकारमनुन्मत्तः को ब्रवीतीति भावः । अन्यथा शुद्धस्य स्वयंप्रकाशस्यैवाविद्यावरणाङ्गीकारेऽन्यस्याविद्याराहित्यस्य निवर्तकस्याभावादविद्यानिवृत्तिर्न स्यात् नापि ब्रह्मणि जगदारोपसम्भव इत्यलं विस्तरेण वेदान्तग्रन्थेषु चिरतरं निरस्तत्वात् पण्डितास्तु सत्यकर्मणो भगवतः सत्यसङ्कल्पपूर्वकमिदं कार्यं सदेवेति शास्त्राज्जानन्ति तथा च शास्त्रं सदेव सौम्येदमग्र आसीत् यदिदं किञ्च तत्सत्यमित्याचक्षते तत्सदासीत् प्राणा वै सत्यं तेषामेष सत्यम् अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते प्रलयेऽप्यविभक्तनामरूपकं सूक्ष्मतामापन्नं सदेव नत्वसदित्यभावः भगवतः श्रीबादरायणस्य सत्कार्यवादाङ्गीकारात् तथा सूत्राणि "सत्त्वाच्चावरस्य, असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च पटवच्चेति इत्यन्वयेन जगतः सत्यत्वं प्रतिपादितं व्यतिरेकेणाप्युच्यते असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हीति श्रुतेः असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरमिति भगवदुक्तेश्च तस्माद्ब्रह्मणो जगत्सृष्टिनियन्तृत्वाद्यभिधायकवाक्यानामर्थवादत्वकल्पने किञ्चित्प्रमाणं नास्ति ननु द्वैतस्य सत्यत्वे ब्रह्मणि एकाद्वितीयत्वादिप्रतिपादकश्रुत्यादिवाक्यसहस्रमनर्थकं स्यात्तदन्यथानुपपत्तिरेव जगतः आरोपितत्वे तत्प्रतिपादकवाक्यस्यार्थवादत्वे च प्रमाणं द्वितीयाद्वै भयं भवति भयं द्वितीयाभिनिवेशतः स्यादिति श्रुतिस्मृतिभ्यां द्वितीयस्य भयहेतुत्वप्रतिपादनाच्च कथमप्रमाणत्वमिति चेन्न ब्रह्मपदार्थस्य सर्वैरेकत्वेनैवाङ्गीकारात् एकाद्वितीयपदयोः पूर्वं निरन्तरमेव व्याख्यातत्वात् न तद्वाक्यानुपपत्तिः अद्वितीयो राजा अद्वितीयः पण्डित इत्यादिवत्समाधिकव्यावृत्त्यैवाद्वितीयत्वस्य सिद्धत्वाच्च नहि परतन्त्राद्वितीयवस्तुना स्वतन्त्रस्याद्वितीयत्वं विहन्यते भयमपि स्वतन्त्रसमाधिकाद्वितीयादेव भवति नत्वस्वतन्त्रात् अन्यथा स्त्रीपुत्रादिभ्यो देवकादिभ्योऽपि भयं भवेन्न तु तदस्ति प्रत्युत सुखार्थं तत्परिग्रहणमेव दृश्यते किञ्च मायावादिभिर्द्वैतापत्तिभयाच्चेतनाचेतनप्रतिपादकवाक्यमात्रस्यार्थवादत्वमङ्गीक्रियते तर्हि ब्रह्मसत्त्वे किं प्रमाणं न स्यात् शब्दमात्रस्य किञ्चिद्धर्मावच्छिन्नवस्तुप्रतिपादकत्वनियमात् शब्दवाच्यत्वाङ्गीकारे द्वैतापत्तिः स्यादेव अनङ्गीकारे शशशृङ्गखपुष्पतुल्यं स्यात् वस्तुतः सर्वज्ञत्वसर्वशक्तित्वसर्वनियन्तृत्वादिगुणमात्रनिराकरणे जीवत्वमेव तस्य स्यादित्यलमपसद्वादनिरासेन ॥ ३७ ॥

एवं करोति कर्मेत्यष्टभिः पद्यैः प्रासङ्गिकं समाप्य प्रकृतमनुसरति तत्र योगिनो विघ्नस्य प्रकृतत्वादिदानीं तत्प्रतीकारमुपदिशति । योगिन इति । योगं युञ्जतः काये उत्थितैः शरीरप्रवेशपरैरुपसर्गैर्रोगाद्युपद्रवैर्विहन्येत तत्रायं वक्ष्यमाणो विधिः प्रतीकारो विहितः ॥ ३८ ॥

योगधारणया यमनियमादीनामावर्तनेनोपसर्गान् रोगान् आसनैरासनविशेषैर्गरुडादिधारणान्वितैः पापात्मकान् तपसा रक्षोभूतादीन्मन्त्रैः कफवातपित्तादीनौषधैर्निर्दहेत ॥ ३९ ॥

कांश्चिन्मानसान् कामान् ममानुध्यानेन निरन्तरमुप-

केचिद्देहमिमं धीराः सुकल्पं वयसि स्थिरम् ।
विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ॥ ४१ ॥
न हि तत्कुशलादृत्यं तदायासो ह्यपार्थकः ।
अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥ ४२ ॥
योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात् ।
तच्छ्रद्दध्यान्न मतिमान् योगमुत्सृज्य मत्परः ॥ ४३ ॥
योगचर्यामिमां योगी विचरन्मदपाश्रयः ।
नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे परमार्थनिर्णयोनाम
अष्टाविंशोऽध्यायः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुणचिन्तनेन नामसंकीर्तनादिभिः वाग्ज्ञानपशब्दोच्चारणादीन् योगेश्वरानुवृत्त्या अधृतिसङ्गादीन् शनैरुद्वेगं न कुर्यादित्यर्थः ॥४०॥

---

भाषा टीका ।

जो कि देहादिक नाम रूप से ग्रहण किया जाता है पाँच तत्त्व का बना है वह भी सत्य ही आत्मा सा है इस प्रकार का जो व्यर्थ से भी अर्थ वाद रूप भेद है वह केवल अपने को पंडित मान ने वालों का है ॥ ३७ ॥

जो पुरुष योग में सिद्ध नहीं है उसका शरीर उसी में से उत्पन्न होने वाले रोगादिकों से नष्ट होजायगा तो योग में विघ्न होगा तिस के लिये यह विधि विधान किया है ॥ ३८ ॥

तिस में शीतोष्णादि दोषों को सूर्यादिक की धारणा से रोगों को आसन धारणादिकों से दूर करै पाप ग्रह सर्पादिक दोषों को तप मन्त्र औषधों से नाश करै ॥ ३९ ॥

कामादिक दोषों को मेरे नाम संकीर्तन ध्यानादिकों से नाश करै अथवा दम्भादि दोषों को जो कि अशुभ दायक हैं उनको योगेश्वरों के सेवन कर के नाश करे ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्येतु देहसिद्ध्यर्थमेवैतत्सर्वं कुर्वन्ति । तद्दूषयति । केचित्तु नरैतैरन्यैश्चोपायैर्देहमेव सुकल्पं जरारोगादिरहितं वयसि तारुण्ये स्थिरं च कृत्वा अद्भुतपरकायप्रवेशादिसिद्धये तत्सङ्कारणारूपं योगं युञ्जन्ति न तु ध्याननिष्ठारूपम् ॥ ४१ ॥

कुशलैः प्राज्ञैरादरणीयं न भवति । वनस्पतिवद्धात्मैवस्थायी शरीरं तु फलवन्नश्वरमित्यर्थः ॥ ४२ ॥

ननु क्वचित् समाध्यङ्गत्वेनापि प्राणायामादियोगे क्रियमाणे जरारोगाद्यभावो दृश्यते सत्यम् तथापि समाधिमुत्सृज्य न तत्र सज्जेतेत्याह । योगमिति । तत् तां देहसिद्धिं न श्रद्दध्यान्न विश्वसेत् ॥ ४३ ॥

तदेवं विघ्नप्रतीकारैर्योगं कुर्यादित्युक्तं मच्छरणस्य तु न विघ्नशङ्कापीत्याह । योगचर्यामिति । विचरन् स्वसुखं अनुभूयत अनुभूतिर्यस्य सः स्पृहा मूला हि विघ्नाः सा च मदपाश्रयस्य निवर्ततेऽतोऽन्तरायैरविहतः स्वानन्दपूर्णो भवतीति ॥ ४४ ॥

समाहृत्य स्वयोगं तु समस्तोपनिषद्रसम् ।
सख्ये मुख्यतमां भक्तिं मुक्तौ पुनरुपादिशत् ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

अन्ये सकामा एतत् सोमसूर्यादिधारणम् । तद्देहसिद्धिप्रयोजनं दूषयति द्वाभ्यामिति शेषः ॥ ४१ ॥

मूले तदिति देहसिद्धिकरणम् ॥ ४२ ॥

तत्र देहसिद्धौ कल्पतां जरारोगादिराहिततम् ॥ ४३ ॥

मच्छरणस्य मद्भक्त्येकवलस्य । सा च स्पृहा । अतः स्पृहाराहित्यात् । समाहृत्य संक्षेपेण वर्णयित्वा ॥ ४४ ॥

येनाज्ञानं विनश्येत विना यत्नं हि देहिनाम् ।
तन्नामकीर्तनं येन दत्तं गौरं भजामि तम् ॥

इति श्रीमद्भागवते एकादशस्कन्धीये
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
अष्टाविंशोऽध्यायः ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

केचिदिति। वयसि स्थितं वृद्धशरीरमपि मन्त्रौषधादिभिः पटुतरं विधाय युञ्जन्ति ॥ ४१ ॥

नहि तत्कुशलं तत्र कुशलं न तत्कुशला इति पाठे तत्र न कुशला इत्यर्थः। यदायासः देहस्थितिकरणायासः अनर्थकः निष्फलः ॥ ४२ ॥

करणापाटवसद्भावेऽप्यायुषो मन्त्रौषधादिभिः संपाद्यत्वाभावात् अदेहदृढीकरणं कालक्षेपमपहाय तस्मिन्नपि कालेऽपि योगः कर्तव्य इत्यर्थः ॥ ४३ ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने श्रीसुदर्शनसूरिकृतशुकपक्षीये अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अन्येतु देहसिद्ध्यर्थमेवं कुर्वन्ति तद्दूषयति। केचिदिति। वयसि स्थितं वृद्धशरीरमपि मन्त्रौषधादिविविधोपायैः सुकल्पं पटुतरं विधाय सिद्धये कायसिद्ध्येऽन्तर्धानपरकायप्रवेशादिसिद्धये योगं युञ्जन्तीति यत् ॥ ४१ ॥

तत्कुशलैः प्राज्ञैर्नाहतं नादरणीयं कुतः यतस्तदायासः देहदृढीकरणायासः अपार्थको विफलः कुतः अन्तवत्त्वाच्छरीरस्य करणापाटवसद्भावेऽप्यायुषो मन्त्रौषधादिभिः सम्पाद्यत्वाभावादतो देहदृढीकरणकालक्षेपमपहाय तस्मिन्नपि काले योगः कर्तव्य इति भावः। फलस्येव वनस्पतेरिति फलमत्र दृष्टान्तः वनस्पतेरित्येतद्दार्ष्टान्तिकस्य आत्मनो नित्यत्वसूचनार्थम् ॥ ४२ ॥

क्वचित्समाध्यङ्गत्वेनापि प्राणायामादिषु क्रियमाणेषु जरारोगाद्यभावो दृश्यते सत्यं तथापि समाधिमुत्सृज्य न तत्र सज्जेतेत्याह। योगमिति। कल्पतां पटुतरत्वमियात्प्राप्नुयात्तां देहस्थितिम् न श्रद्दध्यान्न विश्वसेत् ॥ ४३ ॥

मत्प्रपन्नस्य विघ्नशङ्कैव नास्तीत्याह। योगचर्यामिति। विचरन्कुर्वन्मदुपाश्रयः अहमेवोपाश्रयः शरणं यस्य सः अत एवाशीरादिषु निःस्पृहः स्वसुखं मदेकपरैकरसस्वात्मसुखमनुभवतीति तथा अन्तरायैर्न विहन्येत ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

रसायनादिनानाविधोपायैः शरीरस्य नाशाद्यन्तरायपरिहारस्य सुशकत्वेन सिद्धसाधनलौल्यार्थं योगधारणादिविधानमत्राह। केचिदिति। केचिदविवेकिनः परेण धार्यं सुकल्पमिन्द्रियसामर्थ्योपेतं वयसि स्थितं तारुण्यवयसोपेतम् अथ शरीरस्य चिरकृत्वात्स्थिरत्वानन्तरं योगसिद्धये युञ्जन्ति मन इत्यन्वयः ॥ ४१ ॥

तेषामविवेकित्वं कुत इति तत्राह। नहीति। तदायासः तस्य देहस्य पोषणायासः अपार्थकत्वमाह। अन्तवत्त्वादिति ॥ ४२ ॥

योगस्य शरीररक्षणयोगत्वाभावात्तदायासस्य तत्फलत्वात्तद्वैयर्थ्यं शरीररक्षणायासस्येत्याशङ्क्याह। योगमिति। नित्यं योगं भगवद्ध्यानलक्षणं रसायनं निषेवतः सेवमानस्य पुंसः अद्यापि कायः कल्पतां समर्थत्वमियात्प्राप्नोति तर्हि स मतिमान् योगमेव श्रद्दध्यात् तं योगमुत्सृज्यान्यत्र रसायनादौ श्रद्धां न कुर्यादित्यन्वयः मत्पर इत्यनेन मतिमत्त्वं विवृतम् अनेन योगस्यापि शरीररक्षणफलत्वात् रसायनादौ प्रवर्तमाना अविवेकिनोऽतो मतिमद्भिर्योग एवाभ्यसनीय इति सिद्धम् ॥ ४३ ॥

अतः युक्तयोगान्तरायपरिहारमाचरन्नेव योगपारं गमिष्यतीति भावेनाह। योगचर्यामिति। स्वसुखं स्वस्वरूपसुखमनुभवतीति स्वसुखानुभूरित्यनेन योगः सर्वापेक्षिताशेषपुरुषार्थसाधनमित्युक्तं भवति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

केचित्पुनर्विविधोपायैरेतैरन्यैश्चोपायैर्देहमेव सुकल्पं जरारोगादिरहितं वयसि तारुण्ये स्थिरं च कृत्वा अन्तर्धानपरकायप्रवेशादिसिद्धये तत्कारणरूपयोगं युञ्जन्ति नतु ज्ञाननिष्ठारूपम् ॥ ४१ ॥

कुशलैः प्राज्ञैरादरणीयं तन्न भवति वनस्पतिवदात्मैव स्थायी शरीरं तु फलवन्नश्वरमित्यर्थः ॥ ४२ ॥

तत् कायकल्पत्वम् ॥ ४३ ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
एकादशेऽष्टाविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

महाफलार्थमिमं योगं नश्वरं देहार्थं युञ्जतः पुरुषान् दूषयति केचिदिति। द्वाभ्याम्। केचिदविवेकिनो विविधोपायैरिमं देहं धार्यानादिनाश्यैर्धार्यं सुकल्पमिन्द्रियादिसामर्थ्योपेतं वयसि तारुण्ये स्थिरं विधाय कृत्वाथानन्तरं सिद्धये परकायप्रवेशपराचित्ताद्यभिज्ञताद्यर्थं युञ्जन्ति तत्कारणरूपयोगं कुर्वन्ति ॥ ४१ ॥

तत्तेषां योगकरणं कुशलानां विवेकिनामादरणीयं न भवति हि यतः तदायासः नश्वरदेहार्थमायासः अपार्थकः तत्र हेतुः

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शरीरस्यानित्यत्वात् तत्र दृष्टान्तः वनस्पतेः फलस्येव वनस्पतिस्थानीय आत्मैवेत्यर्थः ॥ ४२ ॥

एवं केतरपरमार्थार्थमपि योगं कुर्वतो यदि कदाचिद्योगप्रभावात् कायकल्पतादिः स्यात्तर्हि किं कुर्यादिति चेत्तत्राह । योगमिति योगिमस्मद्ध्यानलक्षणं महारसायनं नित्यं निषेवतः पुंसो यदि कायः कल्पतां समर्थत्वमियात् प्राप्नुयात्तर्हि स मतिमान् योगमुत्सृज्य त्यक्त्वा कायकल्पत्वमेवफलं जातमिति न श्रद्दध्यात् मत्परः अहमेव परं फलं यस्य सः ॥ ४३ ॥

योगिनां योगान्तरायप्रतीकारानुक्त्वा प्रधानप्रतीकारमाह । योगचर्यामिति । इमामुक्तप्रकारां योगचर्यां विशेषेण चरन् अन्तरायैर्न विहन्येत यतो मदपाश्रयः मत्परायण इतिपाठः एतेन भगवदाश्रयणमेव सर्वविघ्ननाशनमुक्तं तद्व्यतिरेकेण योगकुशलोऽपि साधनान्तरसम्पन्नोऽपि विघ्नाभिभूतः स्यादेव भगवदाश्रयत्वे गमकमाह । निस्पृह चतुर्वर्गलोकवृत्तिसुखेषु स्पृहारहितस्तर्हि किं तस्य योगफलमत आह । स्वसुखानुभूः स्वस्य जीवस्य स्वरूपगुणादिसुखमनुभवतीति तथा सः ब्रह्मानन्दानुभवितेत्यर्थः ॥ ४४ ॥

दुरूहार्थमिमं यो मे हृदयाब्जोत्थमद्भुतेः ।
चक्रावतार भाषायैतं श्रीनिम्बार्कमाश्रये ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टाविंशाध्यायार्थप्रकाशः ॥ २८ ॥

### भाषा टीका ।

कोई धीर पुरुष तो वृद्ध होते पर भी इस देह को अनेक प्रकार के उपायों से सुंदर समर्थ युवा स्थिर कर के सिद्ध करने की युक्ति करते हैं ॥ ४१ ॥

यह सब बात अति निपुण पुरुषों के आदर के योग्य नहीं है क्योंकी शरीर तो कभी न कभी नाश होने ही वाला है तो यह परिश्रम व्यर्थ है जैसे कि वृक्ष में फल अनित्य हैं तैसे आत्मा का देह अनित्य है ॥ ४२ ॥

नित्य योग सेवन करने वाले पुरुषका शरीर यदि दृढ समर्थ भी होजावे तौभी बुद्धिमान् उस पर श्रद्धा न करै किंतु उस सिद्धि को छोड कर मेरे मे ही मन को लगावे ॥ ४३ ॥

मेरे में भक्ति रूप योग के करने वाला तो निस्पृह होने से सब विघ्नों से रहित हो जावैगा और मेरे आश्रय से रहैगा तो उस के कोइ, विघ्न न होंगे सो संसार मे परमात्म सुख का अनुभव करताहुआ विचरता रहैगा ॥ ४४ ॥

इति भागवत एकादश स्कन्ध
अठ्ठाइस में अध्याय की
भाषा टीका समाप्त ॥ २८ ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

## अथ एकोनत्रिंशोऽध्यायः ।

——:*:——

। उद्धव उवाच ।

सुदुस्तरामिमां मन्ये योगचर्यामनात्मनः ।
यथाऽञ्जसा पुमान् सिध्येत्तन्मे ब्रूह्यञ्जसाऽच्युत ! ॥ १ ॥
प्रायशः पुण्डरीकाक्ष! युञ्जन्तो योगिनो मनः ।
विषीदन्त्यसमाधानान्मनोनिग्रहकर्शिताः ॥ २ ॥
अथात आनन्ददुघम्पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन ! ।
सुखं नु विश्वेश्वरयोगकर्मभिस्त्वन्माययाऽमी विहता न मानिनः ॥ ३ ॥
किं चित्रमच्युत ! तवैतदशेषबन्धो ! दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ।
योऽरोचयत् सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ॥ ४ ॥
तन्त्वाखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं सुकृतविद्विसृजेत को नु ।
को वा भजेत्किमपि विस्मृतयेऽनुभूत्यै किम्वा भवेन्न तव पादरजोजुषां नः ॥ ५ ॥
नैवोपयन्त्यपचितिं कवयस्तवेश! ब्रह्मायुषापि कृतमृद्धमुदः स्मरन्तः ।
योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ॥ ६ ॥

श्रीशुक उवाच ॥

इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ।
गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेम मनोहरस्मितः ॥ ७ ॥

श्रीभगवानुवाच ॥

हन्त ते कथयिष्यामि मम धर्मान् सुमङ्गलान् ।
यान् श्रद्धया चरन्मर्त्यो मृत्युं जयति दुर्जयम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनत्रिंशे तु यः पूर्वं विस्तरेण निरूपितः ।
भक्तियोगस्तमेवाऽऽह स्वभक्ताय समासतः ॥
अनिष्कर्षमिवाऽऽलक्ष्य योगेऽसङ्कैकसत्पथि ।
सुखोपायं पुनः कृष्णमुद्धवः परिपृच्छति ॥

अनात्मनोऽवशीकृतमनसः अञ्जसा अप्रयासतो यथा सिध्येत्तथा अञ्जसा सुबोधं यथा तथा मे ब्रूहि ॥ १ ॥

सुदुष्करतां प्रपञ्चयति । प्रायश इति । मनो युञ्जन्तो निगृह्णन्तो विषीदन्ति खिद्यन्ति कुतः असमाधानादनिग्रहात् कथञ्चिन्मनसो निग्रहे च कर्शिताः श्रान्ताः सन्तः ॥ २ ॥

यस्मादेवं केचन विषीदन्ति । अथातः अत एव ये हंसाः सारासारविवेकचतुरास्ते आनन्ददुघं समस्तानन्दपरिपूरकं तव पदाम्बुजमेव सुखं यथा भवति तथा नु निश्चितं श्रयेरन् सेवन्ते अमी तु त्वन्मायया विहताः के ये योगकर्मभिर्मानिनः सन्तो न श्रयन्ते यद्वा अमी त्वद्भक्तास्त्वन्मायया न विहता अत एव योगकर्मभिः कृत्वा मानिनो न भवन्ति । अन्ये तु त्वन्मायया मोहिताः सन्तो वयं योगाढ्या वयं कर्मकुशला इति केवलं गर्विता भवन्ति । न तु सुखयन्त इत्यर्थः ॥ ३ ॥

त्वद्भक्तास्तु त्वत्प्रसादेन कृतार्था भवन्तीति नाति चित्रमित्याह किमिति। अनन्यशरणेषु दासेषु तवाऽऽत्मसात्त्वं तदधीनत्वं यद्यथा

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्दगोपीवत्सप्रभृतिष्वेतत्किंचित्रं नाश्चर्यमित्यर्थः । यतो यो भवान् श्रीरामरूपेण मृगैर्वानरैः सह साहित्यं सख्यमिति यावत् अरोचयत् प्रीत्या कृतवान् कथं भूतः ईश्वराणां ब्रह्मादीनां यानि श्रीमन्ति किरीटानि तेषां तटान्यग्राणि तैः पीडितं विलुठितं पादपीठं यस्य स्वयं तथा भूतोऽपि सन् ॥ ४ ॥

अतस्त्वां परित्यज्य को नामान्यत्संभजेदित्याह । तत्रैवेति । तमेवं भूतं त्वां को नु विसृजेत् भजेत् कथं भूतः स्वकृतवित् बलिप्रह्लादादिषु त्वया कृतमनुग्रहं जानन् यद्वा स्वस्मिन्नेवान्तर्यामितया कृतमुपकारं विद्वान् तदेवाऽऽह । अखिलाऽऽत्मदयितेश्वरम् अखिलस्य जगत आत्मानं चेतयितारमात्मत्वादेव दयितं प्रेष्ठं सुसेव्यमीश्वरत्वादवश्यं भजनीयम् किञ्च आश्रितानां सर्वार्थदम् तर्हि किं फलोद्देशेनाहं सेव्यः नहि नहि किमत्र निरुक्तं त्वद्व्यतिरिक्तं स्वर्गादि त्वया दत्तमपि को वा भजेत्सेवेत कथं भूतं तत् यत्केवलं भूत्यै इन्द्रियभोगाय अनु अनन्तरमेव त्वद्विस्मृतये भवति यद्वा त्वद्व्यतिरिक्तं किमपि देवतान्तरं धर्मज्ञानादिसाधनं वा भूत्यै ऐश्वर्याय संसारस्य विस्मृतये मोक्षाय को वा भजेत्न कोऽपि ननु तत्साधनं विना भोगमोक्षादिफलं कथं स्यात्तत्राऽऽह । किंवेति । तदुक्तम्
या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये
तया विना तदाप्नोति नरो नारायणाश्रय इति ॥ ५ ॥

आस्तामन्यभजनवार्ता त्वत्कृतोपकारस्य त्वय्यात्मनिवेदनेनैव निष्कृतिर्नास्त्येवेत्याह । नैवेति । अपचितिं प्रत्युपकारमानृण्यमिति यावत् कवयो ब्रह्मविदोऽपि नैव प्राप्नुवन्ति यतः त्वत्कृतमुपकारं स्मरन्तः ऋद्धमुद उपचितपरमानन्दाः उपकारमेवाऽऽह । यो भवान् बहिराचार्यवपुषा गुरुरूपेणान्तश्च चैत्यवपुषाऽन्तर्यामिरूपेणाशुभं विषयवासनां विधुन्वन्निरस्यन् स्वगतिं निजं रूपं प्रकटयति ॥ ६ ॥

तस्य तव ईश्वरेश्वरत्वे हेतुः जगत्क्रीडनकं क्रीडोपकरणं यस्य सः ननु जगत्सृष्ट्यादिना ब्रह्मेशादयः क्रीडन्ति तत्राऽऽह स्वशक्तिभिः सत्त्वादिभिर्गृहीतं मूर्तित्रयं येन सः सप्रेम प्रेमसहितं मनोहरं स्मितं यस्य सः सप्रेम यथा तथा जगादेति वा ॥ ७ ॥

इत्येति सहर्षसंबोधनम् सुमङ्गलान् सुस्वरूपान् मृत्युं संसारम् दुर्जयमन्यैरुपायैः ॥ ८ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता—
### दीपिकादीपिनी टिप्पणी

तमेव भक्तियोगमेव । समासतः संक्षेपतः । पूर्वाध्यायेन सहास्याध्यायस्य सङ्गतिमाह । अतिक्लेशमिवेति । भक्तिमिश्रयोगे क्लेशाभावादिवेत्युक्तम् । इमां निरन्तराध्यायोक्तां योगचर्यां योगपरिपाटीम् ॥ १ ॥

युञ्जत इति द्वितीया प्रथमार्थे । भक्तिप्रधानतया तु न विलश्यन्ति किन्तु भक्त्युपसर्जनतयैवेति भावस्त इत्युक्तम् ॥ २ ॥

मूले तवेति सम्बन्धिपदानुक्तिः साक्षात्तद्दर्शनाभिनयव्यञ्जनार्था । पूर्वार्थे नकारस्यास्थानपतितत्वं अवेरन्नित्यावृत्तिगौरवं तुकाराध्याहारः भक्तानामुत्कर्षाकथनञ्चेत्यरुचौ यद्वेति । अत एव माययाऽविहतत्वादेव । अन्ये त्वभक्ता इति आर्थिकार्थतया व्याख्यानादित्यर्थं इत्युक्तम् । भक्तानां मानित्वाभावे तु भगवतो निरुपाधिदीनजनविषयकृपाया एव पुरुषार्थसाधनं प्रति हेतुत्वं न स्वस्मत्प्रयत्नस्येति दैन्यमेव हेतुश्चेयः ॥ ३ ॥

अनन्यशरणेषु योगज्ञानकर्माद्याश्रयान्तररहितेषु । रामरूपेणेत्यत्र साक्षाद्रूपेणापि वृन्दावनचारिभिर्वानरैः सख्यं व्याख्येयम् एवं विहारैः कौमारैः कौमारं जहतुरित्यत्र मर्कटोत्प्लववादिभिरित्युक्तेः । तस्माद्भक्तेरेव मुख्यत्वं प्रतिभातीति तामेव ब्रूहीति भावः ॥ ४ ॥

अतो भक्तानामात्मसात्करणात् । अन्यत् स्वर्गादिकं धर्मज्ञानादिसाधनं च । पूर्वार्थे स्वेषु स्वीयेषु त्वदीयेषु बल्यादिषु इति व्याख्याने स्वशब्देन वाक्ये यः कर्ता तस्यैव परामर्शकत्वमिति नियमव्याघातात् यद्वेति । तदेव उपकारित्वमेव । यदि सर्वार्थदोऽस्मि तर्हि अनिरुक्तं सदसद्भ्यामनिर्वचनीयम् । अविस्मितं ते परिपूर्णकाममित्यादौ देवतान्तरभजनादेरकामितानां निषिद्धत्वादर्थान्तरमाह । यद्वेति । तथा साधनसम्पदा ॥ ५ ॥

निष्कृतिमानृण्यम् । यावदिति नातः परम्पदार्थविवरणमित्यर्थः । एवं सर्वत्र । विषयवासनां त्वद्भक्तिप्रतियोगिनीं निजं रूपं स्वस्वरूपानुभवम् ॥ ६ ॥

ईश्वरेश्वर । ईश्वरस्य प्रकृतिप्रवर्तकस्य महापुरुषस्यापीश्वर इति स्वयं भगवत्त्वं व्यञ्जितम् ॥ ७ ॥

अन्यैर्योगादिभिः ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ । २ ॥

तव पादाम्बुजं हंसा योगकर्मभिः सुखेन भवेरन् त्वन्मायया न विहताः किन्तु मानिन एव विहताः ॥ ३ ॥

मृगैः सहेति वासमिति शेषः-वृन्दावने हि मृगा अप्याकृष्टा वंशस्वनेन ॥ ४ ॥

सुकृतविस्कृतज्ञः विस्मृतये तद्विस्मरणाय किं स्यात् किञ्चिदपि त्वद्विस्मरणकारणं तव पादरजोजुषां नास्ति किमन्यतो भजेत् न किञ्चिदन्यद्ध्येयमित्यर्थः ॥ ५ ॥

अपचितिम् अवसानम् आचार्यचैत्यवपुषा बहिराचार्यवपुषाऽन्तश्चैत्यवपुषा ध्येयादिव्यविग्रहेण अशुभं विधुन्वन् इत्यर्थः ॥ ६ । ७ ॥

मृत्युं संसारम् ॥ ८—१२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्यं त्वदुपाश्रयस्य योगचर्या नान्तरायैर्विहन्यते इति तथापि दुष्करेयमतः सुलभं स्वप्राप्तिसाधनमुपदिशेत्याह । सुदुस्तरामिति अनात्मनः अजितेन्द्रियस्येमां योगचर्यां सुदुस्तरां मन्येऽतो यथा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अञ्जसानायासेन पुमान् सिध्येन्मुच्येत्तत्साधनमञ्जसा स्फुटं ब्रूहि ॥ १ ॥

सुदुश्चरत्वं स्फुटीकरोति । प्रायश इति । मनो युञ्जन्तः स्ववशीकुर्वाणाः अत एव मनोनिग्रहार्थमुपवासादिभिः कर्शिताः अत एव मनसोऽसमाधानाच्च प्रायशः सीदन्ति ॥ २ ॥

अथातोऽत एव हंसाः केचित्सारासारविवेकिनः आनन्ददुघमानन्दावहं तव पदाम्बुजं सुखं यथा तथा भजेरन् प्रपद्यन्ते हे विश्वेश्वर ! अमी त्वन्मायया विहता वञ्चिता न भवन्ति कुतः अतद्वैर्योगैः कर्मभिश्च न मानितः योगादिप्रयुक्तगर्वरहिताः अन्ये तु मानिनो विहता भवन्तीति भावः ॥ ३ ॥

अहो विचित्रमेतत् मत्संश्रयमात्रेण मन्मायया न विहता इत्यत्र नैवमित्याह । किञ्चित्रमिति । अच्युत ! आश्रितान्न च्यावयतीति तथाभूत ! एतत् त्वदाश्रयणमात्रेण स्वमायायास्तारयसीत्येतत् न अन्यच्छरणं येषां तेषु दासेष्वात्मसात्त्वं तदधीनत्वं च तव चित्रं किं न चित्रमित्यर्थः । तत्र हेतुत्वेन विशिनष्टि । ईश्वराणां ब्रह्मादीनां श्रीमद्भिः किरीटानां तटैः कोटिभिः पीडितं संघृष्टं पादपीठं यस्य तथाभूतोऽपि मृगैः सह साहित्यं साहचर्यमिति यावत् यो भवानरोचयत् वृन्दावने वंशस्वनेनाकृष्टा मृगाः सहावसन्निति भावः यद्वा श्रीरामावतारे वानरैः सह सख्यमरोचयदित्यर्थः अनेनाश्रयणोपयुक्तं सौशील्यमाविष्कृतं स्वयमित्यादिना परत्वमशेषबन्धो इत्यनेन सौलभ्यं वात्सल्यं च ॥ ४ ॥

अथान्यैरप्याश्रयणोपयुक्तैर्गुणैर्विशिंषन् समाश्रयणीयत्वातिशयमाविष्करोति । तमिति । तं परत्ववात्सल्यसौलभ्यसौशील्ययुक्तमखिलानामात्मनामात्मानमत एव दयितं प्रियतममीश्वरं स्वामिनमाश्रितानां सर्वार्थदमभिलषितपुरुषार्थदम् अनेन ज्ञानशक्तिपूर्णत्वागुणाश्रयत्वं सूचितं तेन विना तदसम्भवात् सुकृतवित्त्वदुपकारज्ञः पुमान् को वा विसृजेत्कृतज्ञानां त्वमेव सेव्य इति भावः । उपकारज्ञत्वञ्च स्फुटीभविष्यति को वा कश्च पुमान् किमपि त्वत्तोऽन्यद्दैवं भजेत् किं किमर्थं विस्मृतये विगता स्मृतिर्यस्मात्तस्यै विभूतये ऐश्वर्यायात्मविस्मृत्यापादकायैश्वर्यायेत्यर्थः । नन्वारोग्यभोगादिविषये भास्करहुताशनादिदेवतान्तरं सेव्यमेवेत्यत आह किंवेति तव पादरजोजुषां चरणपरागं सेवमानानां नोऽस्माकं किंवा श्रेयो न भवेदभिलषितं चेत्सर्वमपि सुलभमेवेति भावः । अनेन सर्वार्थदमित्येतद्विवृतम् ॥ ५ ॥

कोऽसावुपकारः सुकृतविदित्यत्राभिप्रेत इत्यत्र तमप्रत्युपकार्यं वदन् विवृणोति । नैवेति । हे ईश ! कवयो ब्रह्मविदः तव कृतं त्वत्कृतमुपकारं स्मरन्तः ऋद्धमुदः उत्कटहर्षाः ऋद्धमुद इति पाठे उपचितपरमानन्दाः अपचितिं प्रत्युपकारं ब्रह्मायुषापि नैवोपयन्ति नैव प्राप्नुवन्ति उपकारं दर्शयति । यो भवान् बहिराचार्यवपुषा अन्तश्चैत्यवपुषा चित्ते भवं चैत्यं हृदि तेन वपुषा हृदि चिन्त्यमानेन रूपेणेत्यर्थः । तनुभृतामशुभमशिवं विधुन्वन् दूरीकुर्वन् स्वगतिं स्वयाथात्म्यं व्यनक्ति व्यक्तं करोतीति ॥ ६ ॥

जगत्क्रीडनकं क्रीडोपकरणं यस्य सः स्वशक्तिभिः स्वाधारिणीभिः सृष्टिस्थितिसंहारसामर्थ्यात्मिकाभिः शक्तिभिर्गृहीतमूर्त्तित्रयं ब्रह्मविष्णुशिवात्मकं येन सः स्वात्मकं ब्रह्मरुद्रमूर्त्तिद्वयं स्वावताररूपं श्रीविष्णुमूर्त्तिश्चेति मूर्त्तित्रयं परिगृहीतवानित्यर्थः अत एवेश्वराणां ब्रह्मादीनामपीश्वरो भगवान् प्रेम्णा सहितं मनोहारि स्मितं यस्य स जगाद ॥ ७ ॥

त्वयोक्तं मत्संश्रयणमेव सिद्धिसाधनमित्यभिप्रायेण समाश्रितानामावश्यकान् धर्मान् वक्तुं प्रतिजानीते । हन्तेति । सहर्षसम्बोधनद्योतकं हन्तेतिपदं ते तुभ्यं कथयिष्यामि मम धर्मान् भागवतधर्मान् सुमङ्गलावहान् मङ्गलत्वमेवाविष्कर्त्तुमाह । यानिति । यान् धर्मानाचरन्ननुतिष्ठन् सुदुर्जयमपि मृत्युं मृत्यूपलक्षितं संसारं जयति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निर्विघ्नयोगाचरणसाधनं हरेर्भक्तानुकम्पितत्वं कथिततत्त्वज्ञानप्रशंसा तन्निरतानां श्रेयस्त्वमुद्धवस्य हरौ भक्त्यतिशयलक्षणां तस्य भगवद्भक्तिप्राप्तिं च कथयत्यस्मिन्नध्याये आदावुद्धव उक्तयोगाचरणस्य अशक्तत्वं मनसि कृत्वा तत्सिद्ध्युपायं पृच्छति । सुदुश्चरामिति । अनात्मनो मनोजयरहितस्याधीरस्य वा पुमान् यथा भवदुक्तोपायेन सिध्येत्पुरुषार्थवान् भवेत्तथा तद्योगसाधनं मे ब्रूहीत्यन्वयः ॥ १

तत्कथने कोऽनर्थ इति तत्राह । प्रायश इति । मौनसंयमाभ्यां कर्षितं विषीदति विषादसहं भवति योगाचरणसाधनेऽशक्तं मनो विषीदति ॥ २ ॥

अथो तस्मात्तज्ज्ञाः परमहंसा एव भवदुक्तयोगाधिकारिण इति भावेनाह । अथो इति । योगकर्मभिः योगाख्यकर्मभिः अत एव मानिनो ज्ञानिनस्त्वन्माययाहङ्कारादिरूपया न विहता इत्यर्थः ॥ ३ ॥

प्रकृतौ स्थित्वापि प्रकृत्याविहतत्वं त्वद्दासेषु चित्रमिति विज्ञापयति । किञ्चित्रमिति । त्वमनन्यशरणेषु आत्मद इति यदतोऽच्युत अशेषबन्धो त्वय्येतच्चित्रं किमेतत्कुत्र दृष्टमिति तत्राह । य इति । ईश्वराणां ब्रह्मादीनां श्रीमत्किरीटमणिसंघट्टितपादपीठः स्वयं यो गोकुले पशुभिः पशुपालैश्च सहात्मदत्वेन रोचयः प्रकाशितवान् तस्य तव दासेष्वेतच्चित्रं किमित्यन्वयः ॥ ४ ॥

भगवद्भक्तमाहात्म्यं तन्माहात्म्याविनाभूतमुक्तं तद्विशदयन् सारासारज्ञानमाह । तन्त्वेति । यो ब्रह्मादिशिरःश्रीमत्किरीटमणिघट्टितपादपीठः तं त्वां सुकृतिवित् सुष्ठु कृतोपकारज्ञः कः विसृजेत् कीदृशं त्वाम् अखिलानामात्मनां जीवानां दयितप्रेष्ठमीश्वराणामाद्यैश्वर्याकारमाश्रितानां सर्वार्थदम् अभीष्टाशेषपुरुषार्थप्रदं किञ्च को वा पुरुषः किमप्यस्वतन्त्रं देवं भजेत् यदि भजेत्तर्हि असौ विस्मृतचित्तवृत्तिरसारज्ञः चित्तवृत्तिविस्मृतिमुपपादयति । किंवेति । तव शिवशिरोमौलिमालाश्रितं पादरजोऽमृताम्भो न वेद किंवा नैव वेदेत्यतोऽसौ पशुरेवेत्यर्थः ॥ ५ ॥

एवमभिमतबन्धुत्वेन सर्वस्मादुपकारस्य भवतः प्रत्युपकारं कर्तुं कवयोऽपि न समर्था इत्याह । नैवेति । नतमूर्द्धत्वेन सदा स्मरन्तः कवयो ब्रह्मादयोऽपि तवापचितिं प्रत्युपकारं नैवोपयान्ति क्रियमाण उपकारः कीदृश इति तं प्रकारमाह । य इति । तनुभृतामन्तर्बहिः स्थित्वाशुभं विधुन्वन् यस्त्वमाचार्यश्च चैत्यः चित्तस्थश्चाचार्यचैत्यः ब्रह्मा तस्यान्तर्यामिवपुषा स्वगतिं स्वयोग्यज्ञानं व्यनक्ति व्यक्तीकरोषि आचार्यस्य चित्तस्थवपुषेति वा ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

त्वां भुक्तिमुक्तिकामो भजेदित्याह। को वेति विस्मृतये त्वद्विस्मृतस्वरूपाय राज्याद्यर्थं तथा अनुभूत्यै केवलानुभवाय मोक्षार्थं वा को भजेन्न कोऽपि किमपीति क्रियाविशेषणं किञ्च नापि भजनं कः कुर्य्यादित्यर्थः। ननु तर्हि निष्कामानामपि प्रह्लादादीनां भुक्तिमुक्ती कथं दृश्येते तत्राह। किम्वेति तथा चोक्तं मोक्षधर्मे नारायणीये–

या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये।
तया विना तदाप्नोति नरो नारायणाश्रय इति।

भोगमोक्षादि कर्मानुषङ्गिकं फलम्। भक्तानभीप्सितमपि त्वया दीयत एवेति भावः ॥ ५ ॥

ननु मां भजद्भ्य एव जनेभ्यो वाञ्छितसमस्तपुरुषार्थप्रदत्वान्मम तत्प्रदानं न निरुपाधिकं किन्तु सोपाधिकमेवेति चेन्मैवं तच्च तैः क्रियमाणं त्वद्भजनमपि त्वद्दत्तमेवेत्यतो निरुपाधिपरमहितकारिणस्तव सहस्रमहाकल्पमभिव्याप्यापि परिचर्य्यया जना नैव निरृणं भवितुं शक्नुवन्तीत्याह। नैवेति। अपचितिं प्रत्युपकारमानृण्यमिति यावत्। नोपयन्ति न प्राप्नुवन्ति। कवयो विवेकिनः ब्रह्मायुषोऽपि ब्रह्मतुल्यमायुः प्राप्य भजन्तोऽपीत्यर्थः। एतत्त्वत्कृतमुपकारं स्मरन्तः ऋद्धमुदः उपचितपरमानन्दाः उपकारमेवाह। यो भवान् बहिराचार्य्यो मन्त्रगुरुः शिक्षागुरुश्च तद्वपुषा स्वमन्त्रस्वभक्त्युपदेशेनानुगृह्णन् अन्तश्चैत्योऽन्तर्यामी तद्वपुषा। ददामि बुद्धियोगं तं येन मामुपयान्ति ते इति त्वदुक्तेः स्वप्रापकबुद्धिवृत्तीः प्रेर्य्य स्वभजनं कारयन् स्वगतिं प्रेमवत्पार्षदत्वलक्षणां गतिं व्यनक्ति ॥ ६ ॥

स्वशक्तिभिरन्तरङ्गातटस्थाबहिरङ्गाभिरन्तर्य्यामिरूपेण जीवरूपेण देहरूपेण जगदेव क्रीडनं क्रीडासाधनं यस्य स तेनान्तर्य्यामिरूपेणोद्धवं तथा प्रेरयामास यथा भाविकलियुगवर्त्तिभक्तजनानन्दहेतुमेवं सप्रश्नकेति भावः। क्रीडनमपि तस्य स्वभक्तिवितरणमयमेवेत्याह॥ गृहीतेति। उद्धवरूपेण प्रश्नकर्त्ता श्रीकृष्णरूपेणोत्तरकर्त्ता स्वाकालान्तरवर्त्तिशुकपरीक्षिदादिभक्तरूपेण प्रश्नोत्तरामृतरसपदानं चेति गृहीतं मूर्त्तित्रयं येन सः ईदृशं कपाचातुर्य्यं नान्यस्य सम्भवेदित्याह। ईश्वराणामपीश्वरः स्वप्रेम प्रेमसहितं मनोहरं स्मितं यस्य सः॥ ७॥

हन्तेति हर्षेऽनुकम्पायां वा. मम धर्मान् भक्तिज्ञानलक्षणान् सुकरत्वेन दृश्यमानत्वात् सुमङ्गलान् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

साधनं सूक्तयोगस्य संक्षेपेण निरूप्यते।
ऊनविंशेऽतिसुगममुद्धवस्य च सद्गतिः॥

सुखं भगवत्प्राप्त्युपायं पृच्छति। सुदुष्करामिति। इमां पूर्वोक्तां सर्वत्यागपूर्वकपरमात्मध्याननिष्ठाम् अनात्मनः अजितमनसः अञ्जसा मनायासेन यथा सिद्ध्येत्तथा अञ्जसा सुबोधं यथा तथा ब्रूहि ॥ १॥

मनो युञ्जन्तो निगृह्णन्तः मनसो निग्रहे क्रियमाणे च तदुपायाचरणश्रमात् कर्शिताः क्रियानर्हतां प्राप्ताः सन्तः मनसमाधानात् ईप्सितस्य सर्वपरित्यागपूर्वकमनः समाधानस्याऽसिद्धेः विषीदन्ति दुःखिताः भवन्ति अजितात्मनः उक्तयोगचर्य्यायां नाधिकार इति भावः २॥

अतो भगवत्संबन्धवर्जितस्य योगादेर्दुःखहेतुत्वात् अथ भगवत्संबन्धियोगस्याधिकारिणः हंसाः सारासारविवेकयुक्ता आनन्ददुघमानन्दावहं तव पदाम्बुजं भजेरन् प्रपद्यन्ते अमी त्वन्मायया विहता न भवन्ति केन हेतुना योगेन तव पादाब्जमनोनियमनलक्षणेन कर्मभिस्त्वदाराधनभूतैश्च उक्तयोगचर्य्या उत्तमाधिकारिविषया इति भावः ॥ ३ ॥

त्वत्पदाब्जाश्रयणेन विवेकिनो मायाविहता न भवन्ति किन्तु परमानन्दं प्राप्नुवन्तीति एतत्किञ्चित्रं भवति नैतदाश्चर्य्यमित्यर्थः। यत् यतः अशेषबन्धोः सर्वेश्वरस्य दासेषु आत्मसात्वं तदधीनत्वमस्ति अहं भक्तपराधीनः इत्युक्तत्वात् किञ्च यो भवान् स्वयमीश्वराणां ब्रह्मादीनां यानि श्रीमन्ति किरीटानि तत्तटैस्तत्कोटिभिः पीडितं पुनः पुनर्नमनेन संमार्जितं पादपीठं यस्य सः तथाविधो हि श्रीरामावतारे मृगैः सुग्रीवादिभिः सह योऽरोचयत्सख्यमिति शेषः ॥ ४ ॥

अथ सर्वेश्वरत्वं सर्वसेव्यत्वं सर्वपुरुषार्थप्रदत्वं च भगवतो दर्शयति। तमिति। अखिलात्मनां ब्रह्मादीनां सर्वेषां जीवानां दयितमिच्छानुरूपं प्रियमीश्वरं त्वा त्वां स्वकृतवित् स्वेन दयितेश्वरेण यत्कृतं तद्विद्वान् को नु विसृजेत न कोऽपीत्यर्थः। भूत्यै ऐश्वर्य्याय विस्मृतये अनैश्वर्य्यविस्मरणाय किमपि देवपित्रादिकं को वा भजेत न कोऽपीत्यर्थः। तत्र हेतुमाह। तव पादरजोजुषां नः किम्वा न भवेत्सर्वमपि सुलभमेवेत्यर्थः ॥ ५ ॥

त्वयि परमोपकारिणि भूरस्थानीये तृणोपमः कः प्रत्युपकारं कर्तुं शक्नुयादित्याह। नैवेति। कृतं त्वत्कृतमुपकारं स्मरन्तः अत एव कृतज्ञत्वाद्दृद्धमुदः अपचितिं प्रत्युपकारम् नैवोपयान्ति प्राप्नुवन्ति यो भवान् अन्तश्चैत्यवपुषा ध्येयरूपेण बहिः आचार्य्यवपुषा अशुभमज्ञानादिकम् ध्वनन् निरस्यन् स्वगतिं ज्ञानभक्त्यादिरूपां व्यनक्ति प्रकटयति ॥ ६ ॥

जगत्क्रीडनकं क्रीडोपकरणं यस्य सः ॥ ७ ॥

अजितात्मापि साधनसंपत्त्या सुखेनैव पूर्वोक्तायां योगाचर्य्यायामधिकृतो भवतीत्युत्तरमाह। हन्त ते इति। हन्तेति वाक्यारम्भे अनुकम्पायां वा ममभधर्मान् मद्योगनिष्ठापादकान् कर्मादीन् सुमङ्गलान् सुरूपान् ॥ ८ ॥

---

भाषा टीका।

श्री उद्धव बोले हे अच्युत! जो आपने यह योगाचरण कहा है उसको मैं अजितेन्द्रिय पुरुषों के करने में बहुत कठिन समझता हूं अब जिसप्रकार से अनायास से पुरुष को संसार त्याग होवै सो उपाय मेरे से आप कहिये ॥ १ ॥

हे पुण्डरीकाक्ष! प्रायः करके योगी लोग मन को लगाते

कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ।
मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥ ९ ॥
देशान् पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् ।
देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥ १० ॥
पृथक् सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् ।
कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥ ११ ॥
मामेव सर्वभूतेषु बहिरन्तरपावृतम् ।
ईक्षेताऽऽत्मनि चाऽऽत्मानं यथा खममलाशयः ॥ १२ ॥
इति सर्वाणि भूतानि मद्भावेन महाद्युते! ।
सभाजयन् मन्यमानो ज्ञानं केवलमाश्रितः ॥ १३ ॥
ब्राह्मणे पुक्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके ।
अक्रूरे क्रूरके चैव समदृक्पण्डितो मतः ॥ १४ ॥
नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ।
[1]स्पर्धाऽसूयातिरस्काराः साहङ्कारा वियन्ति हि ॥ १५ ॥
विसृज्य स्मयमानान् स्वान् दृशं व्रीडां च दैहिकीम् ।
[2]प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् ॥ १६ ॥

भाषा टीका ।

हुये भी मन के न लगने से मन को रोकने के परिश्रम से दुःखित होते हैं ॥ २ ॥

इसी से सब को आनंद देनेवाला जो आप का चरण कमल तिसको परमहंस लोग आश्रयण करते हैं हे कमललोचन ! जो लोग योग कर्मादिकों के अभिमानी हैं वे आप की माया से मोहित हैं हे योगेश्वर ! उनको क्या कुछ सुख है कुछ भी नहीं है ॥ ३ ॥

हे अच्युत ! हे सर्व बन्धु ! आप का यह जो हम सबके दासों के भी अधीन होजाना कुछ आश्चर्य नहीं है जिन आपने वानर आदिकों के संग मित्रता की है और आप ऐसे हैं कि ब्रह्मादिक देवतों के नमस्कार करने में शोभावाली किरीटों से आपके चरणों की पादुका मर्दित होती हैं ॥ ४ ॥

आप सब के आत्मा हैं प्रिय हैं ईश्वर हैं शरणागतों के सब मनोरथ देनेवाले हैं जो आप के इस उपकार को जानता होगा सो आप को कैसे छोड़ेगा और कौन ऐसा है कि जो दूसरे किसी को भजै जिससे कि कुछ संपत्ति मिलने पीछे आप का विस्मरण होजावे और आप के चरण रज के सेवन करने वाले हम लोगों को क्या नहीं होगा जो दूसरे को भजैं ॥ ५ ॥

हे ईश बड़े २ कविजन ब्रह्मा की आयु पाने से भी आप के किये उपकार को स्मरण करते हुए आप के उपकार का बदला नहीं कर सकते हैं जो कि आप सब देहधारियों के भीतर अन्तर्यामी रूप से बाहिर आचार्य गुरु रूप से सब पापों को नाश कर के अपनी मोक्षगति को प्रकाश करते हैं ॥ ६ ॥

श्रीशुकदेव जी बोले उद्धव जी के इस प्रकार पूछने पर उनके चित्त के अनुराग को देखकर अपनी शक्तियों से संसार की क्रीडा करने के लिये तीन मूर्ति के धारण करने वाले ईश्वरों के भी ईश्वर मनोहर से हसते हुए प्रेम के सहित उद्धव जी से बोलते भये ॥ ७ ॥

श्रीभगवान् बोले बड़े हर्ष की बात है मैं अपने सुंदर मंगलकारक भागवत धर्मों को तुम से कहूंगा जिन के श्रद्धा से आचरण करने से मनुष्य बड़े दुस्तर संसार को भी जीत लेता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

धर्मानेवाऽऽह । कुर्यादिति । अयोग्यशक्तिः मां स्मरन् शनकैरसंरम्भतः कुर्यात् तदाह । मय्यर्पिते मनश्चित्ते सङ्कल्पविकल्पानुसन्धानात्मके येन अत एव मद्धर्मेष्वेवात्ममनसो रतिर्यस्य सः ॥ ९ ॥

---

[1] मानादयश्च इति विज० पा०  [2] प्रणमेद्भिरकुलामाश्वेति वीर रा० पाठः

### श्रीधरस्वामिकृतभावार्थदीपिका।

पुण्यदेशलक्षणं मद्भक्तैरिति। देवादिषु ये मद्भक्तास्तेषामाचरितानि कर्माणि चाऽऽश्रयेत ॥ १० ॥

सत्रेण संभूय वा ॥ ११ ॥

अन्तरङ्गां भक्तिमाह। मामिति त्रिभिः सर्वभूतेष्वात्मनि चाऽऽत्मानमीश्वरं स्थितं मामेवेक्षेत ननु कथमेकस्य सर्वेषु वृत्तिस्तत्राऽऽह बहिरन्तः पूर्णमित्यर्थः तत्कुतः अपावृतमनावरणम् तदपि कुतः यथा खमसङ्गत्वादित्यर्थः ॥ १२ ॥

हे महाद्युते! अतिप्राज्ञ इत्यनेन प्रकारेण केवलं ज्ञानरूपां दृष्टिमाश्रितः सन्सर्वाणि भूतानि मद्भावेन मन्यमानः सभाजयन् पण्डितो मत इत्युत्तरेणान्वयः ॥ १३ ॥

ननु उत्तमाधममध्यमेष्वेकरूपेण सभाजनमपाण्डित्यमेव स्यात्पूज्यपूजाव्यतिक्रमादित्याशङ्क्य तामेव ज्ञानदृष्टिं प्रपञ्चयति। ब्राह्मण इति। विषमेष्वपि समदृक् समं मामेव पश्यन् वैषम्यमेव चतुर्धा दर्शयति। ब्राह्मणे पुल्कसे इति। जातितो वैषम्यम् पुल्कसोऽन्त्यजजातिविशेषः स्तेने ब्रह्मस्वहारिणि ब्रह्मण्ये ब्राह्मणेभ्यो दातरि इति कर्मतः अर्के विस्फुलिङ्ग इति गुणतः अक्रूरे शान्ते क्रूरे चेति स्वभावतः ॥ १४ ॥

नरेष्वीश्वरदृष्टिं कुर्वतः सद्यः फलविशेषमाह। नरेष्विति। समोत्कृष्टहीनेषु स्पर्धादयः साहंकारश्च हि निश्चितम् विद्रवन्ति नश्यन्ति ॥ १५ ॥

अतोऽन्तर्यामीश्वरदृष्ट्या सर्वान्प्रणमेदित्याह। विसृज्येति। स्मयमानान् हसतः स्वान् सखीन् तथा दैहिकीं दृशमहमुत्तमः स तु नीच इति दृष्टिम् तथा व्रीडा या व्रीडा लज्जा तां च विसृज्य श्वचाण्डालादीनभिव्याप्य प्रणमेत् ॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपिनीटिप्पणी।

असंरम्भतीक्ष्णत्वानुद्वेगवत्या। तदाह असंरम्भत्वमेवाह। अत एव अर्पितचित्तमनस्त्वादेव। आत्ममनसः स्वमनसः। उपलक्षणमिदं चित्तादेः ॥ ९ ॥

ये मद्भक्ताः नारदप्रह्लादाम्बरीषादयः ॥ १० ॥

पर्वं प्रकाशमानि यात्रा विशिष्टजनसमागमः महोत्सवो दोलिकादिः शक्तिसत्त्वे पृथक्। तदभावे सत्रेणेति ॥ ११ ॥

मामेव श्रीकृष्णरूपमेवान्तरङ्गामिति टीकायामुक्तम् अन्तर्यामित्वेऽपि कृष्णस्य स्वयं भगवत्त्वेन प्राबल्यात् तदुपासकानामन्तर्यामिस्थाने स एव सर्वत्र स्फुरतीति भावः। तत् पूर्णत्वम्। तदपि अपावृतत्वमपि ॥ १२ ॥

मद्भावेनेति मम श्रीकृष्णरूपस्य यो भावस्तत्वास्तित्वं तद्विशिष्टतया मन्यमानः ॥ १३ ॥

पूज्यपूजादीति सर्वपूजायामपूज्यस्य श्वपचादेरपि पूजनं तदभावे विप्रस्याप्यपूजनमिति व्यतिक्रमादपराधादित्यर्थः। एवं च। सर्वभूतेषु यः पश्येद्भगवद्भावमात्मन इत्यादिन्यायेन तस्य बाह्यदृष्ट्यभावान्न व्यतिक्रमः प्रत्युतोत्तमभागवतत्वमित्यर्थः। कर्मतश्चौर्यदानवत्त्वात्। उत्तमाधमस्वभावतः ॥ १४ ॥

समेति समे स्पर्धा नश्यति उत्तमेऽसूया। हीने तिरस्कारः सर्वत्र भगवद्दृष्ट्या नश्यतीत्यर्थः ॥ १५ ॥

अतस्तादृशस्योपासनस्य झटिति स्पर्धादिक्षय फलकत्वात् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

केवलं शुद्धं पुण्यक्षेत्रवासः भगवद्भक्ताचरितं भगवद्यात्राप्रवर्तनादिकं ज्ञानस्य साधकतमामित्युक्तं भवति ॥ १३ ॥

सम्यग्ज्ञानवेद्यं च देहातिरिक्तानामात्मनां तत्त्वं तेषां भगवदात्मकत्वं चेत्याह। ब्राह्मण इत्यादिश्लोकद्वयेन ॥ १४—१५ ॥

प्रणमेदिति। भगवदात्मकत्वभावनातिशयकाष्ठा दर्शिता ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

के पुनस्त इत्यत आह। कुर्यादित्यादिना। मदर्थमिति भावप्रधानो निर्देशः मदाराधनरूपतां स्मरन्नभिसंदधत् कर्माणि वर्णाश्रमोचितानि कुर्यात् मय्यर्पिते मनश्चित्ते येन सः अन्तःकरणावान्तरभेदविवक्षया मनश्चित्तयोरुभयोरुपादानं तत्र संकल्पविकल्पात्मकं मनः स्वच्छत्वाविकारित्वशान्तत्वानि चित्तवृत्तयः तत्र मनसः स्वार्पितत्वं विवृणोति। मद्धर्मेति मनोरतिः मनोवृत्तिः संकल्पविकल्पात्मिका यस्य सः ॥ ९ ॥

पूजयेत बहुमन्येत सेवेतेति यावत् पुण्यदेशलक्षणमाह। मद्भक्तैः साधुभिः श्रितानीति देवादिषु ये मद्भक्तास्तेषामाचरितानि सेवेत ॥ १० ॥

पृथक्सत्रेण संभूय वा महाराजोपचारैः गीतादिभिश्चादिशब्देन वादित्रादिसंग्रहः पर्वयात्रामहोत्सवांश्च कारयेत् यात्रा बहुजनसमागमः ॥ ११ ॥

सर्वभूतेष्वात्मनि चान्तर्बहिश्चापावृतमावरणरहितं व्याप्तमित्यर्थः। आत्मानं प्रशासनेन धारकं मामीक्षेत यथा खमाकाशं तथाऽमलाशयः निर्मलान्तःकरणः ईक्षेतेति संबन्धः ॥ १२ ॥

इति शब्दो हेत्वर्थः अतो मम सर्वान्तरात्मतया व्याप्यवर्तमानत्वात् महाद्युते! सर्वाणि भूतानि मद्भावेन मदपृथक्सिद्धतया मच्छरीरत्वेन मन्यमानोऽत एव सभाजयन् बहुमानयन् केवलं वैषम्यरहितं ज्ञानमाश्रितः स्यात् ॥ १३ ॥

किन्तत् केवलं ज्ञानमित्यतो ज्ञानस्य कैवल्यं विवृण्वन्नित्थंभूतं ज्ञानमाश्रित एव पण्डित इत्याह। ब्राह्मण इति पुल्कसोऽन्त्यजजातिविशेषः स्तेनो ब्रह्मस्वापहर्ता ब्रह्मण्यः ब्रह्मकुले स्वधनदानेन साधुः अक्रूरोऽनृशंसः सर्वभूतहिताचरणकर्मा क्रूरः सर्वभूतद्रोग्धा ब्राह्मणत्वादितरतमभावगोचरबुद्धिः समदृक् सर्वत्र शरीराणां प्रकृतिपरिणामरूपतया आत्मनां ज्ञानैकाकारतयाभेदेषां परमात्मशरीरतया चेत्येवं समा दृग्बुद्धिर्यस्य स एव पण्डितः ॥ १४ ॥

किमतः समदर्शनादित्यत आह। नरेष्विति। अभीक्ष्णमस्मद्भावं मदात्मकत्वं भावयतः पुरुषस्य साहंकाराः स्पर्धादयः प्रियस्याप्रियाः तिरोहिता भवन्ति निवर्तन्त इति यावत् स्पर्धा कलहः असूया परस्यापि गुणेषु दोषाविष्कि-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कीर्षो, तिरस्कारो ऽवमानः अहङ्कारो देहात्माभिमानः एते स्वपरविषया निवर्त्तन्त इत्यर्थः ॥ १५ ॥

ननु दृढायां हि त्वद्भावभावनायां स्पर्द्धाद्यपगमस्तदार्जनमेव तु दुर्लभमित्यतस्तदुपायमुपादिशति । विसृज्येति । ग्राममृगेषु शुनः नृषु चाण्डालान् पशुषु गोबलीवर्दान् खरान्तेभिप्रायेण एवमन्येष्वपि जात्यन्तरेषु तत्र तत्र निहीनानभिप्रायेणेति भावः दण्डवत्प्रणामेत तर्हि वान्धवाः परिहसेयुरित्यत आह । विसृज्यस्मयमानान्स्वानिति ननु नीचोत्तमभावभावनाशीलाः कथमेव प्रणमेयुस्तत्राह । देहमामिति विसृज्येति सम्बन्धः अहमुत्तमः अमी निकृष्टा इत्येवं विधं गर्वं विसृज्येत्यर्थः । तथापि तरतमदेहानुसन्धानेन लज्जिताः कथं प्रणमेयुस्तत्राह । व्रीडां च दैहिकीं संत्यज्य प्रणामतोऽभिसन्धिविशेषं विदधाति । ईश्वर इति । कलाऽवयवः शरीरमिति यावत् शरीरेण जीवरूपेणान्तरात्मतया भगवान् आविष्टः ततः सर्वमीश्वरशरीरमेवेति भावयन्प्रणमेदित्यर्थः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मद्धर्मेषु मदात्मसु मद्रूपेषु च मनोरतिर्यस्य स तथा ॥ ९ ॥

मद्भक्तानामाचरितानि ॥ १० ॥

पृथक् स्वयमेव सत्रेण बहुभिः सह वा मह्यं मत्प्राप्त्यर्थं मम यात्रामहोत्सवमयनादिलक्षणां कुर्यात् ॥ ११ ॥

आत्मानि हृदि आत्मानमन्तर्यामिणं यथा शरीरस्थं सम आकाशं निर्लेपं तथा ॥ १२ ॥

इत्येवं पूर्वोक्तगुणविशिष्टत्वेन सर्वभूतानि प्रविश्य स्थित इति भावना मद्भावः तेन मन्यमानः सर्वभूतेष्वस्ति विष्णुरिति मद्भावेन सर्वाणि भूतानि ममाश्रयत्वेन मन्यमानः इति वा योजनाभेदः सर्वभूतेष्वस्ति विष्णुरिति भावः सतां मतः—

अर्चने सर्वभूतानामादित्ये तद्गतात्मना ।

इति वचनात्सर्वभूतार्चनायां विशेषो ज्ञातव्यः केवलमप्राकृतं ज्ञानमेवाश्रयन् ॥ १३ ॥

केवलज्ञानप्रकारं दर्शयति । ब्राह्मण इति । ब्राह्मणादिषु सर्वत्रावस्थितं ब्रह्म सममेकप्रकारं पश्यन् समदृक् मतः सतामिति शेषः ॥ १४ ॥

एवं भावनाफलमाह । नरेष्विति । नरेषु मामभीक्ष्णं भावयतः पुंसो मद्भावः मयि भक्तिः स्यात्तथा स्यादेव यो मत भक्तो भावो मुक्तिलक्षणा मूर्तिश्च स्यादेव भगवद्बन्धकशक्तिलक्षणप्रतिबन्धके सति कथं मुक्तिः स्यात्तत्राह । आयेति । साहंकारा अहङ्कारसहकारिणी मायापि तिरस्कारं याति हि यतः—

भक्त्या प्रसन्नो भगवान् दद्यान्मुक्तिं तथा ध्रुवाम् ।

इति स्मृतिं सूचयति ॥ १५ ॥

भक्तिमता एवं भाव्यमित्याह । विसृज्येति । भक्तः स्वयं दैहिकीम् आत्मस्थां मनसि स्थितां स्वव्रीडां स्मयमानां लज्जां विसृज्य आश्वचण्डालगोखरं दण्डवद्भूमौ प्रणमेदित्यन्वयः ब्राह्मणादीन्प्रति भूमौ दण्डवन्नमनमन्यांश्चाण्डालादीन् प्रति मानसस्मरणमिति भेदः । अत्रान्तर्यामिणः स्मरणं प्राप्तं इति विशेषः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कथंभूतमीश्वरं बहिरित्यादिदृष्टिकैव अत्र मामेवेति श्रीकृष्णरूपमेवेच्छेत ननु केवलान्तर्यामिरूपमित्यभिप्रायेणैवान्तरङ्गां भक्तिमाहेति व्याख्यातम् ॥ १२ ॥

ततश्च इतीति । केवलं ज्ञानमन्तर्यामिदृष्टिमाश्रितोऽपि इति पूर्वोक्तप्रकारेण सर्वाणि भूतानि मद्भावेन तेषु मम श्रीकृष्णरूपस्य यो भावः अस्तित्वं तद्विशिष्टतया मन्यमानः समाजयन् पण्डितो मतः ॥ १३ ॥

ब्राह्मणादिषु समदृक् समं मामेव पश्यतीति ॥ १४ ॥

ततश्च नरेष्वभीक्ष्णमित्यादिना तादृशस्योपासनाविशेषस्य झटितिरूपर्धिविलक्षणां फलमुक्त्वा विसृज्येत्यादिना तथा दृष्टिसाधनं सर्वनमस्कारमुद्दिश्य यावदित्यादिना तादृशस्योपासनाया अवधिञ्च सर्वत्र स्वतःस्फूर्तिमुक्त्वा सर्वमित्यादिना—

नव्यवत्हृदये यज्ज्ञो ब्रह्मैतद्ब्रह्मवादिभिः ।

न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ॥

इति प्रचेतसः प्रति श्रीभगवद्वाक्ये तट्टीकायां च तस्य भगवतः प्रतिपदनव्यस्फूर्तिरेव ब्रह्मेतीति यदुक्तं तदेव तत्फलमित्युक्त्वा यद्वा कथमस्यावतारस्य ब्रह्मता भवतीति गोपालतापनीश्रुतिप्रसिद्धब्रह्मत्वमभिधानं नराकृतिपरब्रह्मरूपस्फूर्तिस्तत्फलमित्युक्त्वा तेनैव तादृशोपासनां सर्वोत्तमामभिप्रशंसति । अयंहीति । सर्वकल्पानां सर्वोपायानां सध्रीचीनः समीचीनः मद्भावो मम श्रीकृष्णरूपस्य भावना एतच्च श्रीकृष्णभजनस्यान्तर्यामिभजनादप्याधिक्यं श्रीगीतोपसंहारानुसारेणैवोक्तं तथाहि ईश्वरः सर्वभूतानामित्यादि इति ते इत्यादि सर्वगुह्यतममित्यादि मन्मना इत्यादि सर्वधर्मानित्यादि अत्र च गुह्यं पूर्वाध्यायोक्तं ज्ञानं गुह्यतरमन्तर्यामिज्ञानं सर्वं गुह्यतमं मन्मनस्त्वादिलक्षणं तदेकशरणत्वलक्षणं च तदुपासनमिति समानम् अथवा पूर्वोक्तभगवद्धर्माणामेव कैमुत्येन माहात्म्यं दर्शयितुं ज्ञानं ततो निहीनमित्यपनुवदति मामित्यादिना सर्वं ब्रह्मात्वाद्यन्तेन तदेव स्तौति अयंहीति सर्वकल्पानां ज्ञानकर्मयोगानां सध्रीचीनः सहायः सहस्य सध्रिरित्यञ्चतौ सध्र्यादेशात् सहाञ्चतीति निरुक्तेः ॥ १५—१९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्र केवलां प्रधानीभूतां च भक्तिं तन्त्रेणैवोपदिशति कुर्यादिति । तत्र प्रथमे पक्षे सर्वाणि व्यावहारिकाणि कर्माणि दन्तधावनादीनि पारमार्थिकानि अवणकीर्तनादीनि च द्वितीयपक्षे कर्माणि वर्णाश्रमविहितान्यपीति विशेषः मय्येवार्पितं मनो चेतस्तेनैव चित्तं यस्य सः कृतमद्धर्मकात्मिक इत्यर्थः मद्धर्मे भक्तावेव मनसो रतिर्यस्य सः ॥ ९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

केवलामपि वैधीं रागानुगां च तन्त्रेणाह देशान् द्वारकादीन् आश्रयेदावसेत् देवादिषु ये मद्भक्ता नारदप्रह्लादाम्बरीषादयस्तेषामिवाचरितान्याचारान् आश्रयेतानुसरेदिति वैधी भक्तिः देशान् गोकुलवृन्दावनगोवर्द्धनादीन् चन्द्रकान्तावृन्दागोपिकादीनामाचारानुसरेदिति रागानुगा च दर्शिता ॥ १० ॥

उक्तेषु भक्तिभेदेषु साधारणधर्ममाह । पृथगिति ॥ ११ ॥

भक्त्याश्रितानां फलमुक्त्वा ज्ञानाश्रितानां फलमाह । मामेवेत्यष्टभिः । अपावृतमावरणशून्यं पूर्णमीक्षेत ज्ञानमाश्रित इत्युत्तरश्लोकस्थस्य कर्तृपदस्यानुषङ्गः आत्मनि स्वस्मिंश्चात्मानमन्तर्यामिणं यथाऽमलमाकाशमिवाऽलिप्तम् ॥ १२ ॥

मद्भावेन ब्रह्मैवेति भावनया समाजयन् सम्मानयन् मन्यमानः मननं च कुर्वन् ज्ञानमाश्रितो ज्ञानीत्यर्थः । पण्डितो मत इत्युत्तरेणान्वयः अत्र केवलमित्याश्रयणक्रियाविशेषणं नतु ज्ञानस्य भक्तिरहितस्य केवलज्ञानस्य विगीतत्वात् यद्वा केवलं ज्ञानमाश्रितोऽपि ब्रह्म आश्रितः हे महाद्युते ! इति त्वं तु भक्त्यैव केवलया सर्वतोऽप्याधिक्येन द्योतसे इत्यर्थः ॥ १३ ॥

ब्राह्मणे पुल्कसे इति जातितो वैषम्येऽपि स्तेने ब्रह्मस्वहारिणि ब्रह्मण्ये दानादिना ब्राह्मणभक्ते इति कर्मतः अर्के स्फुलिङ्गके इति प्रमाणतः अक्रूरे क्रूरे चेति गुणतो वैषम्येऽपि समदृक् समं मामेव ब्रह्म एकरूपं सर्वत्र पश्यन् पण्डितोऽन्यस्त्वपण्डितः जात्यादितो वैषम्यमपश्यन्नज्ञानीत्यर्थः ॥ १४ ॥

स्पर्द्धादिदोषापगमार्थमपि सर्वत्र मद्दृष्टिः कर्तव्या इत्याह । नरेष्विति । स्वतुल्ये स्पर्द्धा स्वतोऽधिकेऽसूया स्वतो न्यूने तिरस्कारः खलु यदि सर्वत्रैव मां पश्येत्तदा मया सह कथं स्पर्द्धादयः सम्भवेयुरितिभावः साहङ्कारा इति कस्मिन्नपि ब्रह्मदर्शनात् कुत्राहङ्कारः प्रसज्जेदिति भावः वियन्ति नश्यन्ति ॥ १५ ॥

सर्वत्रैव मद्भावः स्वाभाविक एव यो भवेत्तस्य साधनमाह । विसृज्येति । स्मयमानान् अहो महानयमतिनीचं प्रणमतीति हसतः स्वान् सखीन् तथा दैहिकं दृशम् अहमुत्तमः अयं तु नीचः कथं मे नमस्य इति दृष्टिं तथा व्रीडां लज्जां तां विसृज्य श्वचाण्डालादीनभिव्याप्य अन्तर्यामीश्वरदृष्ट्या प्रणमेत् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तानाह । कुर्य्यादित्यादिना एनैः स्मरन् मद्ध्यानं साध्यं शनैः स्वस्थयन् सर्वसङ्गपरित्यागपूर्वकध्याननिष्ठासिद्धये मदर्थे सर्वाणि स्वाधिकारप्राप्तानि कर्माणि कुर्यात् मयि अर्पिते मननचिन्तकहेतुभूते मनश्चित्ते येन सः अत एव मद्धर्मेष्वात्ममनसोः चित्तमनसो रतिर्यस्य स तथा ॥ ९ ॥

भक्ताचरितानि च श्रुणुयादिति शेषः ॥ १० ॥

पृथक् स्वसामर्थ्येन सङ्घेन सम्भूय वा ॥ ११ ॥

सर्वभूतेषु प्रकृत्यात्मकेष्वचेतनेषु आत्मनि चेतनवर्गे च मां परमात्मानम् बहिरन्तश्चेक्षेत तथापि कश्चिद्द्वारकोऽस्ति किं नेत्याह अपावृतमिति । अनावरणं स्वाश्रयं सर्वस्थापकमित्यर्थः इत्यनधिकारी विमलबुद्धेरवस्थाह । यथा खं तथामलाशयः अनेन तत्त्वत्रयविषयकं ज्ञानं दर्शितम् ॥ १२ ॥

द्वैतज्ञानमुक्त्वाऽद्वैतज्ञानमाह । हे महाद्युते ! उत्तमाधिकारिन् ! सर्वाणि भूतानि चेतनाचेतनरूपाणि चेतनत्वेन परस्परं भिन्नानि कार्यत्वांशत्वेन परिच्छिन्नत्वादिना च परमकारणाद्व्यापकात्सर्वशक्तिमत्तश्च भिन्नानि न हि चेतनाचेतनयोरंशांशिनोः परिच्छेत्तृपरिच्छिन्नयोश्च स्वरूपत ऐक्यं सङ्गच्छते तथापि कार्यस्य कारणात् अंशस्यांशिनः प्रकाशात्पृथक् स्वरूपस्थित्याद्यभावान्मद्भावेन मदभेदेन मन्यमानः द्वैतसहिष्णुमद्वैतं च श्रुतिवचनेन जानन् तानि समाजयन् मदात्मकतया पूजयन् इति केवलं द्वैतगर्भमद्वैतं ज्ञानमाश्रितः स्यात् सर्वपरित्यागपूर्वकं मदेकचिन्तकः स्यादित्यर्थः ॥ १३ ॥

एवं स्वाभाविकद्वैताद्वैततत्त्वसम्बन्धान्वितगुणदोषरहितः पण्डितो भवतीत्याह । ब्राह्मणे इति । ब्राह्मणे पुल्कसे जातितः स्तेने ब्रह्मण्ये कर्मतः अर्के विस्फुलिङ्गे गुणतः अक्रूरे क्रूरे स्वभावतश्च विषमेऽपि सर्वकारणं मां पश्यन् सर्वं मदात्मकं पश्यन् पण्डितः स्यात् ॥ १४ ॥

समोत्तमाधमेषु स्पर्द्धादयः स्वस्मिन्नहंकारश्च एते हि निश्चितं वियन्ति विनश्यन्ति ॥ १५ ॥

स्मयमानान् हसतः सतः दैहिकीम् अहमुत्तमः असौ नीच इति दृशं दृष्टिं तथा दशा व्रीडां लज्जाञ्च ॥ १६ ॥

---

भाषा टीका ।

मेरे को स्मरण करता हुआ स्थिर होकर संपूर्ण कर्मों को मेरे सन्तोषार्थ करै मेरे विषै मन चित्त को अर्पण करै मेरे ही धर्मों में सब मन की रति को लगावै ॥ ९ ॥

साधु सज्जन मेरे भक्तों से सेवित जो अति पुण्य देश हैं तिनका आश्रय करै और देवता तथा असुर तथा मनुष्यों मे मेरे भक्तों के किये जो कर्म हैं तिनका आश्रयण करै ॥ १० ॥

किसी स्वतन्त्र से किम्वा सब के साथ मिलकर मेरे मन्दिर में मेरे वास्ते एकादश्यादि पर्वों में यात्रा महोत्सवादिकों को करावै बडे गीतनृत्यादिकों से महाराजों की विभूती से आराधन करै ॥ ११ ॥

बाहिर भीतर कहीं भी आवृत नहीं ऐसे मेरे को सर्वत्र सब भूतों के मध्यमे देखै आत्मा मे भी अन्तर्यामी मेरे को देखै जैसे कि निर्मल आकाश होता है ॥ १२ ॥

हे महाद्युति उद्धवजी ! इस प्रकार से मेरी भावना से सम्पूर्ण भूतों का सत्कार करता हुआ अद्वैत मानता हुआ केवल ज्ञान के आश्रित होकर रहै ॥ १३ ॥

यावत्सर्वेषु भूतेषु मद्भावो नोपजायते।
तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥ १७ ॥
सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया।
¹परिपश्यन्नुपरमेत् सर्वतो मुक्तसंशयः ॥ १८ ॥
अयं हि सर्वकल्पानां सध्रीचीनो मतो मम।
मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥ १९ ॥
नह्यङ्गोपक्रमे ध्वंसो ²मद्धर्मस्योद्धवाण्वपि।
मया व्यवसितः सम्यङ्निर्गुणत्वादनाशिषः ॥ २० ॥
यो यो मयि परे धर्मः कल्प्यते निष्फलाय चेत्।
तदायासो निरर्थः स्याद्³भयादेरिव सत्तम ! ॥ २१ ॥
एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्।
यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम् ॥ २२ ॥
एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः।
समासव्यासविधिना देवानामपि दुर्गमः ॥ २३ ॥
अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत्।
एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ २४ ॥

भाषाटीका।

ब्राह्मण में अन्त्यज में चोर में ब्राह्मणप्रतिपालक में सूर्य में चिनगारी में शान्त में हिंसक में इन सबों में समान दृष्टि करने वाला जो है सो ही पण्डित है ॥ १४ ॥

निरन्तर सब मनुष्यों में मेरी भावना करने वाले पुरुष को थोड़े ही काल में स्पर्धा जीतनेकी इच्छा गुणों की निन्दा तिरस्कार अहङ्कार ए सब दुर्गुण शीघ्रही नष्ट हो जाते हैं ॥ १५ ॥

अपनी हँसी करने वाले कुटुम्बियों को छोड़कर और देह में लज्जा की दृष्टि को छोड़कर कुत्ता चाण्डाल गर्दभ पर्यन्त सब प्राणियों के अर्थ पृथ्वी में दण्ड की नाईं गिरकर प्रणाम करा करे ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

एवं पञ्चभिः श्लोकैरुक्तायाः समदृष्टेरवधिमाह द्वाभ्यां यावदिति ॥ १७ ॥

तस्य एवं कुर्वतः पुंसः सर्वं ब्रह्मात्मकमेव भवति कुतः आत्ममनीषया सर्वत्रेश्वरदृष्ट्या या विद्या तया अतः परितो ब्रह्मैव पश्यन् सर्वतः क्रियामात्रादुपरमेत् ॥ १८ ॥

किमयमेवोपायोऽस्ति वा अन्योऽपीत्यपेक्षायां सन्ति बहवः समीचीनस्त्वयमेवेत्याह। अयं हीति ॥ १९ ॥

भगवद्धर्मलक्षणोपायस्य समीचीनत्वमेवोपपादयति द्वाभ्याम् नहीति। अङ्ग हे उद्धव। अनाशिषो निष्कामस्य मद्धर्मस्योपक्रमे सत्यण्वपीषदपि वैगुण्यादिभिर्नाशो नास्त्येव यतो मयैव निर्गुणत्वादयं धर्मः सम्यग्व्यवसितो निश्चितो न तु मन्वादिमुखेन कथंचित् ॥ २० ॥

किञ्च य इति। अयमर्थः किं वक्तव्यं मद्धर्मस्य न ध्वंस इति यतो लौकिकोऽपि यो यो निरर्थो व्यर्थ आयासः सोऽपि मयि परे निष्फलाय चेत्कल्पते निष्कामतयाऽर्पितश्चेत्तर्हि धर्म एव स्यात् निरर्थायासे दृष्टान्तः यथा भयशोकादिहेतोः पलायनाक्रन्दनादिक्रियास्तद्वत् ॥ २१ ॥

अतो मद्भजनमेव बुद्धेर्विवेकस्य मनीषायाश्चातुर्यस्य च फलमित्याह। एषेति। तामेव दर्शयति। सत्यमनृतं मामनृतेनासत्येन मर्त्येन विनाशिना मनुष्यदेहेन इहास्मिन्नेव जन्मनि प्राप्नोतीति यत्सैव बुद्धिर्मनीषा चेति। बुद्धिर्विवेकः मनीषा चातुर्यम् ॥ २२ ॥

महाप्रकरणार्थमुपसंहरति द्वाभ्याम्। एष इति ॥ २३—२४ ॥

१ प्रपश्यन् परमे व्योम्नीति शुकपक्षीय० पाठः २ नह्युद्धवोद्धवाण्वपि इति वि० पाठः ३ नयादेरिव इति विज० पाठः।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भक्तिर्यदि सर्वथैव निष्कपटा स्यात्तदा सा विनापि प्रयत्नेन प्रतिष्ठां स्वयमेव सम्पद्यते इत्याह । यो य इति । यो यो धर्मः श्रवणकीर्तनादिर्मयि विषये निष्फलाय ऐहिकप्रतिष्ठादिसुखपारलौकिकस्वर्गमोक्षादिसुखकामनाराहित्याय स्यात्तस्य आयासः तत्सिद्ध्यर्थं प्रयत्नो निरर्थः व्यर्थः समर्थः स्वयमेवानायासेनैव भवति किन्तदर्थं प्रयत्नेनेत्यर्थः भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः योऽसौ विश्वंभरो देवः कथं भक्तानुपेक्षत इतिवत् अथवा भवद्भोक्तादेर्हेतोरायासो व्यर्थ एव स स्वविषयं प्राप्य स्वयमेव भवतु यथा तथैव मां स्वविषयं प्राप्य भजनमपि स्वयमेव भवेदित्यर्थः निरर्थोऽपि निष्कपटोऽपि भक्तो मद्भक्त्यर्थं सततं प्रयतते स च प्रयत्नस्तस्य भक्तौ रागातिशयमेव व्यनक्तीति यस्मात् महान् गुण एव श्रेयः ॥ २१ ॥

ननु कथं मदपि त्वदुक्तौ जनाः प्रायः प्रतिष्ठादिसापेक्षा एव भवन्ति तत्र तादृशबुद्धिविवेकाद्यभाव एव हेतुरित्याह । एषेति । बुद्धिमतामेव बुद्धिर्बुद्धिर्न त्वतिकाठिन्यशास्त्रेऽपि संश्लिष्टबुद्धिरिति भावः । मनीषिणां चातुर्यवतामेव । मनीषा न त्वेकेनापि कपर्दकेन स्वर्णमुद्रोपार्जनचातुर्यमिति भावः । सैव का तदित्यत आह । यदिति । इह भारतभूमौ मा माम् अमृतं मृतिरहितं नित्यस्वरूपं मर्त्येन मरणधर्मेण शरीरेणानित्येनाप्नोति भक्तिमात्रादेव वशीकरोति । तथा मर्त्येन मृतककुलत्वादपि बीभत्सेन प्राकृतेन मा माम् अमृतम् अप्राकृतं सुधास्वरूपम् । तथा अनृतेन जीवस्य वस्तुतस्तु सम्बन्धाभावादसत्त्वेन सत्यं सर्वकालसत्ताकं मां प्राप्नोति । अयम् भावः लोकेऽहि कपर्दकं दत्त्वा सहस्रं कपर्दकमूल्यं वस्तु यद्ग्रहीतुं शक्नोति एष एव परमबुद्धिमान् अतिचतुर उच्यते । यस्तु तेन स्वर्णमुद्रामुपार्जयति स ततोऽपि यस्तु हीरकादिरत्नं स ततोऽपि । तत्राप्यभ्रान्ताकृतिचतुरादेव पुरुषात् स ततोऽपि । यस्तु चिन्तामणिकामधेन्वादिकं तच्चातुर्यन्तु वक्तुमशक्यं भारतभूमिवासी मर्त्यः पुनरपि दुर्जातिरपि स्फुटितैककपर्दकमूल्यत्वेनाप्यसम्भावितम् । कौरूप्यजरारोगादिपूर्णमपि स्वशरीरं मह्यं दत्त्वा अप्राकृतमाधुर्यसिन्धुं मामेव गृह्णाति । मया पुनरपि चतुर्शिरोमणिनापि दत्तं सर्वत्र प्राप्य कौस्तुभकिरीटादिकचकाचनधरत्नालङ्कारभूषितमपि स्वं लक्ष्मी हर्षादेव दीयते इत्यहो बुद्धिमत्त्वमहो चातुर्यवत्त्वं भारतभूवासिनां कस्यचित् कस्यचिदिति तत्र श्रवणकीर्तनस्मरणपरिचर्यार्थं श्रोत्रादीनां विनियोग एव भगवते शरीरदानं ज्ञेयं किञ्च । एका रसनैव तत्कीर्तननिरता कर्णौ वा श्रवणनिरतौ करौ वा परिचर्यानिरतौ चेत्तदापि स आत्मानं ददातीति । शरीरैकदेशदानेनापि स लभ्यते इति कः खलु बुद्धिचातुर्यवानेवं न कुर्यादिति ।

सर्वोपदेशसारोऽयं श्लोकश्चिन्तामणिः प्रभोः ।
हृदये यस्य राजेत स राजेद्बुध संसदि ॥ २२ ॥

महाप्रकरणार्थमुपसंहरति । एष इति द्वाभ्याम् ॥ २३ ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यावत्सर्वेषु भूतेषु मद्भावो मदात्मकत्वनिष्ठा न जायते तावदाश्वचाण्डालगोखरं वागादिवृत्तिभिरुपासीत तत्राश्वचाण्डालगोखरमुद्दिश्य श्रीकृष्णाय नमः इतिवाग्वृत्तिर्मनसा प्रणामाद्याचरणं मनोवृत्तिः दण्डवत्प्रणामादि कायवृत्तिः ॥ १७ ॥

तस्याश्वचाण्डालगोखरं मदृष्ट्योपासीनस्य सर्वं ब्रह्मात्मकं स्यात् तदन्तरमात्ममनीषया सर्वं ब्रह्मात्मकमित्येवं भूतया सर्वत्र ब्रह्मदृष्ट्या विद्यया ज्ञानेन मुक्तसंशयः हेयोपादेयविषयकसंशयशून्यः परिपश्यन् उपादेयं मां ध्यायन् सर्वतः हेयादुपरमेत् ॥ १८ ॥

कल्प्यन्ते फलानि यैरिति कल्पा उपायाः तेषां मध्ये सध्रीचीनः समीचीनः ॥ १९ ॥

समीचीनत्वमेव दर्शयति । नहीति । मद्धर्मस्य सर्वत्र मदुपासनस्योपक्रमे सति अण्वपि किञ्चिदपि ध्वंसो नास्ति यतोऽसौ निर्गुणत्वात् प्राकृतगुणसम्बन्धवर्जितं निर्गुणो मद्भावस्तस्याधनत्वाद्धर्मोऽपि निर्गुणस्तस्य भावस्तत्त्वं तस्मादनाशिषः त्रैगुण्यफलवासनाशून्यः यतश्च मया व्यवसितो तत्त्वतः ॥ २० ॥

किंबहुना योऽयमायासः वागादिव्यापारः नितरां फलाय भवति तथा यदि परे परमेश्वरे मयि कल्प्यते अर्पितश्चेत्स धर्मो भवेत्तस्मादनर्पणात्तेन अनिरर्थः सफल एव स्यात् तत्र दृष्टान्तमाह । भयादेरिव भयाद्यथा "कौरवाणां सभायां मां किं न जानासि केशव" इति द्रौपद्याः भगवति सभापर्वप्रसिद्ध आयासोऽर्पितः स च धर्म एव अत्रापि वैराटिगजपत्न्यादिभिः कृताः सुप्रसिद्धाः आदिना कामात् सैरन्ध्र्या कृतो बोध्यः ॥ २१ ॥

अनृतेनानित्येन ॥ २२ ॥

महाप्रकरणार्थमुपसंहरति । एष इत्यादिना । ब्रह्मवादस्य वेदान्तस्य संग्रहः सारः समासव्यासविधिना संक्षेपविस्तारप्रकारेण ॥ २३ ॥

अभीक्ष्णशः पुनः पुनः ॥ २४ ॥

---

भाषा टीका ।

जब पर्यंत सबभूतों में मेरी भावना नहीं होजावै तावत्पर्यंत वाणी से मन जे शरीर की वृत्ति से इसी प्रकारसे उपासना करता रहै ॥ १७ ॥

जिसको सर्वत्र मेरा भाव होगया है उसको सबही ब्रह्मात्मक है इसी से अपनी दिव्य बुद्धि से ज्ञान विद्या से सब को ब्रह्मात्मक देखता हुआ सब स्थानों से संशय को छोड़कर संसार से निवृत्ति होजावै ॥ १८ ॥

सब प्रकार के उपायों में यही सुन्दर उपाय है यह मेरा मत है जोकि सब भूतों मे मन बचन देहकी वृत्तियों से मेरी भावना करना ॥ १९ ॥

हे उद्धवजी ! मेरे इस धर्म के आरम्भ मे थोड़ाभी नाशादिकोंका विघ्न नहीं है मैंने निश्चय कररखा है सो सुन्दर है प्राकृत गुण से रहित होनेसे कामना रहित है ॥ २० ॥

परमात्मा मेरे विषे जो जो धर्म निष्फल रूपसे भी कल्पना

सुविविक्तं तवप्रश्नं मयैतदपि धारयेत् ।
सनातनं ब्रह्म गुह्यं परं ब्रह्माधिगच्छति ॥ २५ ॥
य एतन्मम भक्तेषु संप्रदद्यात्सुपुष्कलम् ।
तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना ॥ २६ ॥
य एतत्समधीयीत पवित्रं परमं शुचि ।
स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥
य एतच्छ्रद्धया नित्यमव्यग्रः शृणुयान्नरः ।
मयि भक्तिं परां कुर्वन् कर्मभिर्न स बध्यते ॥ २८ ॥
अप्युद्धव ! त्वया ब्रह्म सखे ! समवधारितम् ।
अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥ २९ ॥
नैतत्त्वया दाम्भिकाय नास्तिकाय शठाय च ।
अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥ ३० ॥
एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ।
साधवे शुचये ब्रूयाद्भक्तिः स्याच्छूद्रयोषिताम् ॥ ३१ ॥
नैतद्विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ।
पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ ३२ ॥

भाषा टीका ।

किया जाय तौभी जैसे भयादिकों का परिश्रम व्यर्थ है तैसे वह धर्मभी लौकिक फलदायक नहीं होता है ॥ २१ ॥

यही बुद्धिमानों की बुद्धि है यही चतुरों की चतुराई है जोकि इस अनित्य शरीर, से भी सत्य स्वरूप मेरेको प्राप्त हो जावे ॥ २२ ॥

यह मैंने सम्पूर्ण ब्रह्म कथन संग्रह कह दिया है यह जो संक्षेप विस्तार से कह दिया है सो देवताओं को भी दुर्लभ है ॥ २३ ॥

निरन्तर तुम्हारे अर्थ यथार्थ युक्तिवाला ज्ञान मैंने कहा है इसको जानने से मनुष्य सब संशयों से रहित होजाता है तब संसार से मुक्त होता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आस्तां तावज्ज्ञानमेतदनुसन्धानकथनपठनश्रवणापरायणानामप्येतदेव फलं भवतीत्याह चतुर्भिः । सुविविक्तमिति । मया सुविविक्तं दत्तोत्तरमेतदाख्यानमपि यो धारयेदनुसन्दध्यात्स ब्रह्म गुह्यं वेदेऽपि रहस्यम् ॥ २५ ॥

सुपुष्कलं यथा भवति तथा ब्रह्मदायस्य ब्रह्म ददातीति तथा तस्य ज्ञानोपदेष्टुः ॥ २६ ॥

समधीयीत उच्चैः पठेत् परमं शुचि अन्येषामपि शोधकम् पूयेत शुध्येत् ॥ २७—२८ ॥

सम्यक् ज्ञानोत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेन पृच्छति अपीति । अपि किम् ॥ २९ ॥

उपधारितमाकलय्याऽऽह । नैतदिति । शठाय वञ्चकाय ॥ ३० ॥

शूद्राणां योषितां च यदि भक्तिः स्यात्तर्हि ब्रूयात् ॥ ३१ ॥

एतज्ज्ञानेन पुमान्कृतार्थो भवतीत्याह । नैतदिति । अत्र दृष्टान्तमाह । पीत्वेति । पीयूषं स्वादु ॥ ३२ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी

तव प्रश्नो यत्र मया दत्तानि उत्तराणि यस्मिन्निर्वसद्वृत्तमाख्यानस्य विशेषणं धारयेत् अनुसन्धानं कुर्यात् ॥ २५ ॥

सम्प्रदद्यात् कथयेत् । आत्मना स्वयम् आत्मानं ददामि वशीकरोमि ॥ २६ ॥

उच्चैः पठेदिति अर्थमबुद्ध्वापि । पवित्रं स्वयं दोषमात्ररहितम् । अन्येषां श्रोतॄणां तत्तत्पवित्रीकरणमपि । स्वयं

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

त्ववश्यं शुद्ध्येतैव नात्राश्चर्यमिति भावः । न केवलमेतावत् व्युत्पन्नान् प्रति ज्ञानदीपेन मां दर्शयंश्च भवतीति ॥ २७ ॥

श्रद्धापूर्वं नित्यश्रोतृणान्तु फलविशेषमाह । य इति ॥२८॥

पुनरुपदेक्ष्यामीति करुणाव्यग्रताभिव्यञ्जिता । मोहो मायिकलीलादर्शनजो भ्रमः शोकः पुनर्मदप्राप्तिजं दुःखम् ॥ २९ ॥

उपधारितं सम्यग् ज्ञातम् । अशुश्रूषोरशुश्रूषवे ॥ ३० ॥

एतैर्दाम्भिकत्वादिभिः यदि भक्तिः स्यात्तर्हि शूद्रयोषिद्भ्योऽपीत्यर्थः । इति सर्वेषामधिकारित्वं दर्शितम् ॥ ३१ ॥

एतच्च भक्तितात्पर्यकाख्यानस्य । अत्र ज्ञातव्यावशेषाभाव ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ब्रह्मदायस्य ज्ञानप्रदीपकस्य ॥ २६-३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमेवाह । सुविविक्तमिति । तव प्रश्नं पृष्टं मया सुविविक्तं सुष्ठु विविच्योपपादितमेतद्येन विधारितं ध्रुवं स्यात् स सनातनं ब्रह्म गुह्यं वेदान्तरहस्यं परं ब्रह्माधिगच्छति प्राप्नोति ॥ २५ ॥

किञ्च एतन्मया सुविविक्तं यो मद्भक्तेषु प्रदद्यात्तेभ्य उपदिशेदित्यर्थः । भक्तिरिहानुकूल्यं तस्य ब्रह्मदायस्य ब्रह्मोपदेष्टुरात्मनो मां ददामि तद्वशीकरोमीत्यर्थः ॥ २६ ॥

य एतदिति । पवित्रमात्मशुद्धयं वह शुचि शृण्वतामपि शुद्ध्यावहम् एतद्यः समधीयीत पठत् सोऽहरहर्ज्ञानदीपेनाहरहः प्रवृद्धज्ञानमेव दीपः तेन मां दर्शयन् निवृत्तप्रेयस्यात्पुण्यसत्कादृश्यः कर्तरि षष्ठी पश्यन्नित्यर्थः । योगपरिशुद्धेन मनसा साक्षात्कुर्वन्निति भावः । पूयेत मत्प्राप्तिप्रतिबन्धकैर्विरहितः शुद्धो भवेदित्यर्थः २७

य एतदिति । अव्यग्रः समाहितः कुर्वन् जनयन् करोतिरुत्पादनार्थः कर्मभिर्मत्प्राप्तिप्रतिबन्धकैर्न बध्यते ॥ २८ ॥

इत्थं बहूपदेशेन कृतेन सम्यग्ज्ञानानुत्पत्तौ पुनरुपदेक्ष्यामीत्यभिप्रेत्य पृच्छति । अपीति । हे उद्धव ! हे सखे ! ब्रह्मशब्दस्ततत्साधनादीनामप्युपलक्षकः समवधारितं सम्यगवधृतं किम् अपि शठः प्रश्नयान्तकः नावधारितं चेत्पुनरुपदेक्ष्यामीति भावः एवमग्रे मोहः देहात्मभ्रमः स्वतन्त्रात्मभ्रमादिरूपो मनोभवो मानसिभवः शोकस्तापत्रयजन्यः ज्ञानाभावप्रयुक्तश्च ॥ २९ ॥

मद्भक्तेषु सम्प्रदद्यादित्युक्ते दम्भकेभ्यो नोपदिशेदित्यवगम्यते तत्स्पष्टमेवाह । नैतदिति । नास्तिकाय शास्त्रार्थविश्वासरहिताय शठाय मूर्खाय नैतद्दीयतां नोपादिश्यताम् ॥ ३० ॥

किन्त्वेतत्सैर्दाम्भिकतादिभिर्दोषैर्विहीनाय ब्रह्मण्याय भागवतेषु साधवे प्रियाय स्वमित्प्रीतियुक्ताय साधवे परोपकर्त्रे यदि शूद्रस्य योषितश्च भक्तिः श्रद्धा स्यात्तर्हि ताभ्यामपि ब्रूयात् ॥ ३१ ॥

एतज्ज्ञानेन पुमान् कृतार्थो भवतीत्याह । नैतिः । अत्र दृष्टान्तमाह । पीत्वेति । पीयूषं स्वादु । ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुविविक्तं तव प्रश्नमवधार्य मयोक्तं सनातनं ब्रह्म गुह्यं वेदरहस्यं परिहारमपि धारयन् पुरुषः परं ब्रह्म जानाति ज्ञात्वा प्राप्नोति चेत्यन्वयः ॥ २५ ॥

प्रवचनफलमाह । य एतदिति । सुपुष्कलं यावदपेक्षितं तावज्ज्ञानं ब्रह्मैव दायः पितृधनं यस्य स यद्वा ब्रह्मदश्चासौ सम्प्रयोगमो यस्य स तथा तस्य आत्मना प्रसन्नेन मनसा आत्मानं मद्विषयं ज्ञानं दत्त्वा मत्स्वरूपं ददामि ॥ २६ ॥

अध्येतुः फलमाह । य इति । मां दर्शयन् ॥ २७ ॥

श्रोतुः फलमाह । य इति ॥ २८ ॥

अज्ञातांशं सम्यग्वक्तुं श्लोकज्ञाने अवधृतिं पृच्छति । अपीति समुपधारितमपि किं मोहश्च विगतोऽपगतो मनोभवः मनःशल्यत्वेन जातः शोकश्च नष्टः किम् ॥ २९ ॥

एतस्य ज्ञानस्योपकेष्टुमेहाफलसम्भवेऽपि योग्यायैवोपदेष्टव्यं नायोग्यायेत्याह । नैतदिति ॥ ३० ॥

शूद्रायां योषितां च यदि भक्तिः स्यात्तर्हि तेभ्योऽपि ब्रूयादित्यन्वयः ॥ ३१ ॥

इदमेव मुक्तिसाधनं नान्यदित्याशयेनाह । नैतदिति ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

समुदायस्य तु पौर्वापर्यपर्यानुसन्धानेऽपि फलं तु महलक्षणं साधनसिद्धभक्तेन साम्यविशेषं स्यान्मम त्वत्पक्षपातादित्याह । सुविविक्तमिति । ब्रह्म गुह्यं परं ब्रह्मेति मामित्यर्थः । गूढं परं ब्रह्म मनुष्यलिङ्गमिति श्रीनारदोक्तेः ॥ २५ ॥

मद्भक्तसात्करणे तु तावदेवेति किं वक्तव्यं यतः । य एतदिति, ददामि वशीकरोमि ॥ २६ ॥

अर्थमबुद्ध्वाकेवलं पठतः फलमाह । य एतदिति । परमं शुचि दोषमात्ररहितं परमं पवित्रं वक्तृश्रोतृणां सर्वदोषनिवारकं च अतः स स्वयं पूयेतैव नात्राश्चर्यमिति भावः न केवलमेतावत् व्युत्पन्नान् प्रति मां ज्ञानदीपेन दर्शयंश्च भवतीति ॥ २७ ॥

श्रद्धापूर्वकं नित्यश्रोतृणां तु फलविशेषमाह । य इति ॥ २८ ॥

अथ करुणया व्यग्रः सान्त्वयति । अपीति । मोहः मदीयानामेषामन्यथा भावे जातः शोकः पुनर्ममाप्राप्त्यभावेन जातः अयं भावः भगवता सह मम योऽयं सम्बन्धस्तत्तच्छ्रवणादितोऽपि यदि तत्तद्रूपं फलं तदा तव कः सन्देहः कोऽनन्येषां मदपारप्रज्ञानामिति ॥२९॥

तत्र सप्रतीतिकमालोक्य व्यतिरेकान्वयाभ्यामुपदेश्यानुपादेश्याति । नैतदिति द्वाभ्याम् ॥ ३० ॥

किं बहुनेत्याह । भक्तिरिति । शूद्रयोषिद्भ्योऽपीत्यर्थः इति तेषामप्यधिकारो दर्शितः ॥ ३१ ॥

यस्मादेवं भक्तिरेवात्र साधनं फलं तस्मान्नैतदिति । पीयूषाद्यमृतं परमोत्तमामिति गम्यते ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तीकृतसारार्थदर्शिनी ।

तव प्रश्नं मया सुविविक्तं प्रत्युत्तरं यो धारयेत् एतदुपाख्यानमपि यो धारयेत् ब्रह्मगुह्यं वेद रहस्यं परमब्रह्मरूपम् ॥२

ज्ञाने कर्मणि योगे च वार्तायां दण्डधारणे ।
यावानर्थो नृणां तात! तावांस्तेऽहं चतुर्विधः ॥ ३३ ॥
मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ।
तदाऽमृतत्वं प्रतिपद्यमानो मयाऽऽत्मभूयाय च कल्पते वै ॥ ३४ ॥

। श्रीशुक उवाच ।

स एवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचो निशम्य ।
बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो न किञ्चिदूचेऽश्रुपरिप्लुताक्षः ॥ ३५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सुपुष्कलं यथा स्यात्तथा ब्रह्मणि दायो यस्य ब्रह्म ददातीति ब्रह्मदायः तस्येति चतुर्थ्यर्थे षष्ठी ॥ २६—२७—२८ ॥

नित्यसिद्धस्य नित्यैगुणस्यापि उद्धवस्य ज्ञानादिग्राहणार्थं स्वशक्त्यैव मोहमुत्पाद्य ज्ञानाद्युपदेशेन पुनस्तं निराकृत्य लीलया पृच्छति । अपीति ॥ २९ ॥

अशुश्रूषोरभक्तया शृण्वते ॥ ३० ॥

शूद्राणां योषितां च यदि भक्तिः स्यात्तर्हि तेभ्यस्तावदपि ब्रूयात् ॥ ३१ ॥

यद्यपि भक्त्यैव कृतार्थस्य भक्तस्य ज्ञानेन नास्ति प्रयोजनं तदपि ज्ञानं नाम कीदृशमिति कदाचित् कस्यचिद्भक्तस्य यदि जिज्ञासा स्यात्तदा तेन इदमेव द्रष्टव्यमत्र ज्ञानस्यापि सत्त्वादित्याह । नैतदिति । पीयूषं सुधां पीत्वा पातव्यम् अमृतं पेयममृतान्तरं नावशिष्यते ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किंच सनातनत्वे हेतुमाह । ब्रह्म गुह्यं वेदरहस्यं तत्र ब्रह्म प्रश्नजातं मया सुविविक्तं सुष्ठु दत्तोत्तरं च एतद्व्याख्यां यो धारयेत् अनुसन्दध्यात् स परं ब्रह्म मामधिगच्छति ॥ २५ ॥

किञ्च यच्च सुपुष्कलं यथा भवति तथा मम भक्तेषु सम्प्रदद्यादुपदिशेत् तस्य ब्रह्मनामिवोपदेशद्वारा ददातीति ब्रह्मदायस्य आत्मनः स्वस्य आत्मानं देहमपि ददामि ॥ २६ ॥

किञ्च यः परमं पवित्रं निरतिशयं शुद्धं शुचि अन्येषां शोधकमेतद्व्याख्यानं समधीयीत सम्यक् पठेत् स पूयेत शुद्ध्येत मां ज्ञानदीपेन जनतां प्रति दर्शयामित्यनेन जनतामपि पवित्रां कुर्यादिति सूच्यते ॥ २७ ॥

किञ्च यः अश्रद्धालोरतन्द्रितेन यथा शृणुयात्सयैव स्वकर्मभिर्न बध्यते मुक्तो भवतीत्यर्थः ॥ २८ ॥

मोहः देहादावहं ममाभिमानः ॥ २९ ॥ ३० ॥

शूद्रस्य योषितां च यदि भक्तिः स्यात्तदा ब्रूयात् ॥ ३१ ॥

पीयूषं स्वादु ॥ ३२ ॥

---

भाषा टीका ।

तुम्हारे पूछे हुये इन प्रश्नों को मैंने अच्छे प्रकार से कह दिया है इस प्रसंग को जो पुरुष अच्छे प्रकार से धारण करेगा सो वेदों में गुप्त सनातन ब्रह्म को प्राप्त हो जावेगा ॥ २५ ॥

जो पुरुष इस परिपूर्ण ज्ञानोपदेश को मेरे भक्तों के अर्थ प्रदान करेगा उस ब्रह्म ज्ञान देनेवाले पुरुष के अर्थ मैं अपने इच्छा ही से अपने स्वरूप को देदेउंगा ॥ २६ ॥

इस परम पवित्र शुद्ध उपदेश को जो पुरुष अच्छे प्रकार से अध्ययन करेगा वह पुरुष ज्ञान रूपी दीपक से मेरे को प्रकाश करता हुआ आप पवित्र होगा तथा औरों को भी पवित्र करेगा ॥ २७ ॥

जो मनुष्य श्रद्धा से स्थिर होकर नित्य प्रति इस ज्ञान को श्रवण करेगा वह पुरुष मेरे विषे परम भक्ति को प्राप्त होकर संसार के कर्म बंधों से छूट जावेगा ॥ २८ ॥

हे सखे उद्धव! तुमने इस ब्रह्म ज्ञान के अच्छे तरह से ज्ञान लिया कि नहीं और क्या तुमारे मन में होने वाला जो शोक तथा मोह चलागया कि नहीं ॥ २९ ॥

इस ज्ञान को तुम दंभ करने वाले को नास्तिक को धूर्त को सुनने की श्रद्धा न रखने वाले को भक्ति न करने वाले को कभी नहीं देना ॥ ३० ॥

इन दोषों से जो रहित होवे ब्राह्मणों का पूजक होवे अपना प्रिय होवे साधु होवे शुद्ध होवे भक्ति वाला शूद्र या स्त्री भी होवे तो इन सबों को देना चाहिये ॥ ३१ ॥

जिज्ञासु पुरुष को इस के जान लिये पीछे फिर कुछ भी जानने को नहीं बाकी रहाता है जैसे कि पीने ही योग्य अमृत के पीने पर फिर कुछ भी पीने योग्य नहीं रहता है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु सन्ति बहूनि तत्तत्फलसाधनानि सत्यम् तत्तत्कामकानां भक्तस्य तु सर्वमहमेवातो मदेकशरणो भवेत्याह । ज्ञान इति । ज्ञानादौ यावान् धर्मादिलक्षणश्चतुर्विधोऽर्थस्तावान्सर्वोऽपि तेऽहमेव तत्र ज्ञाने मोक्षः कर्मणि विहिते धर्मः कर्मण्येव स्वाभाविके तु कामः योगे स्वाणिमादिसिद्धयः वार्तायां कृष्या-

विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन् ! बहु मन्यमानः ।
कृताञ्जलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ॥ ३६ ॥

उद्धव उवाच ॥

विद्रावितो मोहमहान्धकारो य आश्रितो मे तव सन्निधानात् ।
विभावसोः किं नु समीपगस्य शीतं तमो भीः प्रभवन्त्यजाद्य ! ॥ ३७ ॥
प्रत्यर्पितो मे भवताऽनुकम्पिना भृत्याय विज्ञानमयः प्रदीपः ।
हित्वा कृतज्ञस्तव पादमूलं कोऽन्यत्समीयाच्छरणं त्वदीयम् ॥ ३८ ॥
वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यन्धकसात्वतेषु ।
प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ॥ ३९ ॥
नमोऽस्तु ते महायोगिन् ! प्रपन्नमनुशाधि माम् ।
यथा त्वच्चरणाम्भोजरतिः स्यादनपायिनी ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वार्ता दण्डनीत्यैश्वर्यमिति सिद्ध्यैश्वर्ययोरपि कामान्तर्गतत्वाच्चातुर्विध्यम् ॥ ३३ ॥

कुत इत्यत आह । मर्त्य इति । यदा त्यक्तसमस्तकर्मा सन्मे निवेदितात्मा भवति तदाऽसौ मे चिकीर्षितो विशिष्टः कर्तुमिष्टो भवति ततश्चामृतत्वं मोक्षं प्रतिपद्यमानो मयात्मभूयाय मदैक्याय मत्समानैश्वर्यायेति यावत् कल्पते योग्यो भवति वै ध्रुवम् ॥ ३४ ॥

आदर्शितो योगमार्गो यस्मै सः ॥ ३५ ॥

प्रणयेनावघूर्णं क्षुभितं चित्तं धैर्येण विष्टभ्य बहुमन्यमान आत्मानं कृतार्थं मन्यमानः ॥ ३६ ॥

यो मया च आश्रित आसीत्स तव सन्निधानेनैव विद्रावितः प्रभवन्ति किं नु बाधाय समर्था भवन्ति अजाद्य ! आद्यस्यापि जनक ! ॥ ३७ ॥

किञ्च यद्यपि तव सन्निधानादेव गतस्तथाप्यनुकम्पिना भवता विज्ञानमयः प्रदीपश्च प्रत्यर्पितः स्वमाययाऽपहृतः पुनः समर्पितोऽतस्तव कृतज्ञः यस्त्वया कृतमनुग्रहं जानाति स को नाम त्वदीयं पादमूलं हित्वान्यच्छरणं समीयादाश्रयेत् ॥ ३८ ॥

किञ्च दाशार्हादिषु त्वया यः स्वमायया स्नेहपाशः प्रसारितः स त्वयैवाऽऽत्मतत्त्वज्ञानखड्गेन वृक्णश्छिन्नः ॥ ३९ ॥

एवं यद्यपि त्वया बहूपकृतं तथाप्येतावत्प्रार्थये इत्याह । नमोऽस्त्विति । अनुशाधि अनुशिक्षय अनुशासनीयमाह । यथेति । मुक्तावप्यनपायिनी ॥ ४० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

तत्तत्फलसाधनानि मोक्षधर्मादिफलसाधनानि । ज्ञानकर्मादीनि । ततो भक्तस्य मदेकधनत्वात् । अर्थः फलम् । तत्र ज्ञानादि मध्ये ॥ ३३ ॥

कुत इति कर्माद्येतोः कृतार्थत्वमित्यर्थः । मोक्षं संसारान्मुक्तिम् ॥ ३४ ॥

आ दर्शितः सम्यग् दर्शितः योगमार्गः स्वसंयोगमार्गः ॥ ३५ ॥

प्रणयेन वियोगदुःखात्मकतया परिणतेन गाढविस्रम्भात्मकस्वरूपांशेनातादृशोपदेशप्रसादलाभमयस्वभाग्यमननेन कृतार्थं मन्यमानः ॥ ३६ ॥

मोहः पुनस्त्वदप्राप्त्यसम्भावनादिरूपः मया कथं आश्रितः स्वीकृतः । सन्निधानेनैव कृपावलोकनाद्यमृतवर्षिसान्निध्यस्वभावेनैव । किमुत तादृशोपदेशादिसत्कारार्थः ॥ ३७ ॥

विज्ञानमयः तादृशोपदेशेन नित्यलीलानुभवमयः । स्वमायया प्रकटलीलाया वियोगलीलादर्शनमयच्छायया त्वयापहृतः पुनरुपदेशेनार्पित इति प्रतिशब्दबलाद्व्याख्यातम् । अतोऽपहृतस्यापि पुनः समर्पणात् ॥ ३८ ॥

स्नेहपाशः भवत्सम्बन्धमन्तरा केवलं स्वसम्बन्धमयः किन्तु भवत्सम्बन्धेन तु स्वीकृत एव तदीयनित्यपरिकरे स्नेहाभावे मद्भक्तपूजाऽभ्यधिकेति अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु य इत्यादि वचनव्याकोपापत्तेः ३९ ॥

मुक्तावप्यनपायिनीत्युक्त्या तादृश्यैक्यमुक्तिर्न स्यादस्याम् विवेकाभावाद्रतिर्न स्यात् किन्तु प्रेमसेवोपयोगिनी स्यात् । विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः इत्युक्तेरित्यभिप्रेतम् ॥ ४० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ज्ञानकर्मादीनां यावानर्थः तावानर्थो नाम चतुर्विधः पुरुषार्थचतुष्टयादन्यत्प्रयोजनान्तरं नास्तीत्यर्थः ॥ ३३ ॥

आत्मभूयाय आत्मभावाय भावश्च स्वभावः मत्साम्यायेत्यर्थः । यद्वा । आत्मशब्दः स्वभाववाची भूयाय शरीरसम्बन्धविरहेणावस्थानाय मोक्षायेत्यर्थः ॥ ३४–३५ ॥

अन्धकारः किमागमिष्यतीति भावः ॥ ३६–३८ ॥

अयं प्रसारितः स्नेहपाशः आत्मसुबोधहेतिना आत्मज्ञानखड्गेन वृष्णयः छिन्नः ॥ ३९–४१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वमोक्षशास्त्रार्थसारसंग्रहोऽयमेवेत्याह । ज्ञान इति । वार्तायां कृष्यादौ दण्डधारणाख्येन सामाद्युपायाः लक्ष्यन्ते ज्ञानमात्मोपासनं नृणां ज्ञानादिषु क्रियमाणेषु यावान् पुरुषार्थः क्रियाचतुर्विधः धर्मार्थकाममोक्षरूपः तावान् सर्वोऽपि ते त्वादृशस्य भक्तस्याहमेव तत्र ज्ञाने मोक्षः कर्मणि धर्मः योगेऽणिमादयः वार्तायां दण्डधारणे चार्थः ततः कामः अणिमादयोऽपि कामान्तर्भूताः एवं चतुर्विधः पुरुषार्थोऽहमेव मामृते कञ्चन वाञ्छतीति भावः ॥ ३३ ॥

इत्थमनन्यप्रयोजनो मत्प्रपन्नो मत्साधर्म्यमुपैतीत्याह मर्त्य इति चिकीर्षितः विलक्षणं कर्तुमिष्टः अनुजिघृक्षोरिति यावत् मे मह्यं यदा निवेदितः ओमित्यात्मानं युञ्जीतेत्युक्तरीत्या समर्पितः आत्मा येन सः न्यस्तात्मरक्षाभर इत्यर्थः । त्यक्तानि समस्तान्यमहदाराधनात्मकानि कर्माणि येन तथाभूतो भवति तदा मया हेतुभूतेनामृतत्वं मुक्तिं प्रतिपद्यमानः आत्मभूयायात्मभावाय कल्पते भावश्च स्वस्वभावः स्वाभाविकापहतपाप्मत्वाविर्भावाय कल्पत इत्यर्थः । यद्वात्मनो मम भावाय प्रकाराय मत्साधर्म्यायेत्यर्थः ॥ ३४ ॥

स इति । स उद्धवः मादर्शितो योगमार्गो न्यासोपासनात्मकज्ञानयोगमार्गो यस्य सः उत्तमश्लोकस्य भगवतो वचो मर्त्यो यदेत्यादिसमनन्तरवचो निशम्य प्रीत्यावरुद्धः कण्ठो यस्य स आनन्दाश्रुनिरुद्धकण्ठ इत्यर्थः । अत एवाश्रुभिः परिप्लुते अक्षिणी यस्य सः तावत्किञ्चिदपि नोचे ॥ ३५ ॥

ततः प्रणयेनाघूर्णं क्षुभितं चित्तं शनैर्धैर्येण विष्टभ्य स्ववशीकृत्य हे राजन् ! बहुमन्यमानः आत्मानं कृतकृत्यं मन्यमानः यदुप्रवीरं श्रीकृष्णं प्राह कथम्भूतः सन् शीर्ष्णा शिरसा तस्य यदुप्रवीरस्य चरणाम्बुजं स्पृशन् ॥ ३६ ॥

उक्तिमेवाह । विद्रावित इत्यादिना । तावदन्युक्तवत्तया अज्ञोति प्रतनस्योत्तरमाह । विद्रावित इति । यो मे मया आश्रितः मोह एव महानन्धकारस्त्व तव संनिधानादेव विद्रावितः हे अजाद्य ! अजस्य ब्रह्मणोऽपि जनक विभावसोः सूर्यस्य समीपं प्राप्तस्य पुंसः शीतं तमोऽन्धकारः भीस्तत्प्रयुक्तं भयमन्धकारे किमागमिष्यतीति भयं चेत्यर्थः । किं प्रभवन्ति स्वकार्यकरा भवन्ति किमित्यर्थः ॥ ३७ ॥

यद्यपि सन्निधानादेव विद्रावितस्तथाप्यनुकम्पिना हेतुगर्भमिदम् भवता विज्ञानरूपः प्रदीपो भृत्याय मे मह्यं प्रत्यर्पितः । स्वमाययापहृतः पुनः समर्पितः । अनेन जीवानां स्वभावतः सूक्ष्मार्थदर्शित्वं भगवन्मायया तत्तिरोधानं च सूच्यते अत इत्थमुपकुर्वन्तं त्वां जानन् को वा पुमांस्त्वदीयं पादमूलं हित्वाऽन्यच्छरणं प्राप्नुयात् ॥ ३८ ॥

किञ्च वृष्णय इति । दाशार्हादिषु सृष्टिविवृद्धये संसृतिवृद्धये यस्त्वया कृतो स्वमायया मे सुदृढः । स्नेहपाशः प्रसारितः स भवतैवात्मसुबोधहेतिना आत्मज्ञानहेतिना वृष्ण्यादिषु छिन्नश्च ॥ ३९ ॥

इदं तु ममाभिलषितमिति नमस्कुर्वन्नाह । नम इति । त्वच्चरणाम्भोजे रतिर्भक्तिरनुरागात्मिका यथा स्यात्तथा मां प्रपन्नमनुशाधि शिक्षयानुगृहाणेत्यर्थः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि लोका एतत्किमिति न विविदिषन्तीति तत्राह । यावानिति । नृणां यावान् ज्ञातव्यार्थो भवेत्तावांश्चतुर्विधो मोह इत्येतदुपलक्षणं पञ्चपर्वाविद्याप्रतिरुद्धत्वान्न ज्ञातुमिच्छन्तीत्यर्थः ॥ ३३ ॥

नन्वेवं चेद्विविदिषाभावेन कदाप्यनुदयो मुक्तेरत्राह । मर्त्य इति । अयं मोक्षं प्राप्नोत्विति मोक्षोपायं प्रति मे मया चिकीर्षितो भवेत् यदा मदुद्देशेन मर्त्यस्त्यक्तसमस्तकर्मा हरिरेव मयि स्थित्वा सर्वं कर्म करोति अहं तदधीन एव कर्म करोमि न स्वतन्त्र इति हरावेव निवेशितात्मा च भवति तदाऽमृतत्वं प्रतिपद्यमानः प्राप्तुं योग्यो भवन्नसौ मयात्मभूयाय नित्यानन्दानुभवरूपमोक्षायैव कल्पत इत्यन्वयः "यमेवैष वृणुते तेन लभ्य" इति श्रुतेः ॥ ३४ ॥

उद्धवस्य भक्त्यतिशयलक्षणमाह । स एवमिति ॥ ३५ ॥ ३६ ॥

अप्युक्तवेत्याद्युक्तं परिहरति । विद्रावित इति । यो मोहमयान्धकारो मे मन आश्रितः स एव तव सन्निधानान्मोहान्धकारागमः कथमत्राह । विभावसोरिति । हे ऽजाद्य ! तमश्चाभिप्रभवति किन्तु नैव ॥ ३७ ॥

हरेः स्वात्मन्यनुकम्पातिशयं हेतुं करोति । प्रत्यर्पितेति । हिशब्दो हेतौ अनुकम्पिता मयि प्रवर्धितेति मन्ये विज्ञानमयः प्रदीपो दत्तो हि यस्मात्तस्मादिति शेषः । अतः सर्वस्मादुपकारकत्वात्त्वामेव निषेव्य इति भावेनाह । हित्वेति ॥ ३८ ॥

कीदृशो मोहान्धकरो योऽसौ ज्ञानासिना छिन्न इति तत्राह । वृष्णयश्चेति यः सृष्टिविवृद्धये त्वया प्रसारितो विस्तारितः स एष स्वमायया एवं संसारं यामीत्युद्भूतनिजेच्छया प्रादुर्भूतात्मविबोधाख्यहेत्या वृष्ण्यादिष्वस्यान्वयः ॥ ३९ ॥

स्वात्मनो भगवदेकशिष्यत्वं प्रकटयन्नाह । नम इति ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेतत्परोपदेशार्थमेव त्वां प्रत्युपदिष्टं तव तु साधनं साध्यं च सर्वमहमेवेत्याह । ज्ञान इति । तत्र ज्ञाने मोक्षः कर्मणि धर्मः

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कामश्च योगे नानाविधसिद्धिलक्षणोऽलौकिकः वार्तायां दण्डधारयो च नानाविधलौकिकश्चार्थ इति चतुर्विधत्वं ज्ञेयम् ॥ ३३ ॥

आस्तां तव वार्ता मल्लमात्रायापि स्वैतो विलक्षणां गतिं ददामीत्याह। मर्त्य इति ॥ ३४ ॥

एवमासन्नदर्शितो योगस्य येन मार्गो यस्मै सः ॥ ३५ ॥

बहु मन्यमान इति। मुहुरुच्छलद्वियोगदुःखावरणाय ताहश। तदुपदेशप्रसादात्ममयस्वभावभावनयात्मानमुल्लासयितुमिच्छन्निर्थः ॥ ३६ ॥

मोहः पुनस्तत्प्राप्त्यसम्भावनादिमयः तद्रूपो योऽन्धकारो मयाश्रितः स तव सन्निधानात् कृपावलोकादिवर्षिसाक्षित्स्वभावादेव स्वयं विद्रावितोऽभूत् किमुत तादृशोपदेशादित्यर्थः ॥ ३७ । ३८ ॥

किञ्च सृष्टिविवृद्धये स्वमायया यः स्नेहपाशस्त्वया प्रसारितः स मया त्वदुक्तेनात्मसुबोधहेतिना वृकणः किन्तु भवत्सम्बन्धेनैव तेषु स मया स्वीकृत इत्यर्थः। यद्वा मे मया दाशार्हादिषु त्वन्निमित्तपूर्वं स्नेहपाशो वृकणाच्छिन्नोऽपि कंसवधादनन्तरं स्वयमेव स्वमायया भक्तविषयकृपया सृष्टिविवृद्धये जगतः स्वस्मिंस्तादृशस्नेहविवृद्धये प्रसारितः कीदृश्या स्वमायया आत्मसुबोधस्य ब्रह्मानुभवस्यापि हेतिना छेदकरूपयेत्यर्थः। ततः स कथं मया त्यज्यतामिति भावः ॥ ३९ ॥

तथापि परमाभीष्टं तव कृपयैव सम्पत्स्यत इति पुनः सकाकु प्रणमन् प्रार्थयते। नमोऽस्त्विति। मां प्रपन्नमनुशाधि संपादयेत्यर्थः। तस्याश्च प्रपत्तेर्वैशिष्ट्याय स्पृहयन्नाह। यथेति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु यदि कस्यचिद्भक्तस्य ज्ञानकर्मादिफलेऽपि लिप्सा स्यात्तदा तेन ज्ञानादिकमभ्यसनीयमेवेति तत्रोत्तरं वक्ष्यंस्तन्नैवेत्याह। ज्ञाने इति। ज्ञानादौ यावान् अर्थः फलं मोक्षादिश्चतुर्विधः तावान् सर्वोऽपि तव भक्तस्याहमेव भवामि तं तमर्थं सर्वमेव ददामीत्यर्थः। ततश्च किं ज्ञानाद्यभ्यासेनेति भावः तत्र ज्ञाने मोक्षः कर्मणि विहिते धर्मः योगेऽणिमादिसिद्धिलक्षणः कामः वार्तायां कृष्यादौ दण्डधारणे चार्थः यदुक्तं—

या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये।

तया विना तदाप्नोति नरो नारायणाश्रयः ॥

इति ॥ ३३ ॥

ननु मया सर्वमतान्यवगतानि किन्तु त्वद्भक्तानां किं मतं तत् त्वं ब्रूहीत्यपेक्षायां मो प्रणयिन्नुद्धव। चतुर्विंशोऽध्याये सत्कार्यवादिनां मतमष्टाविंशे तथैवासत्कार्यवादिनां च मतमुक्तं भद्रकालत्वविवादिनः सत्यवादिनः सन्तो वस्तुतस्तु तदुभयमसमस्यवर्तिनो नैव भवन्तीत्याह। मर्त्य इति। मनुष्यो यदा यादृच्छिकमद्भक्तकृपाप्रसादाय त्यक्तानि समस्तानि नित्यनैमित्तिककाम्यानि कर्माणि येन सः निवेदितात्मा मत्सम्बन्धभूताय मन्मन्त्रोपदेशकाय गुरवे "योऽहं ममास्ति यत् किञ्चिदिह लोके परत्र च। तत् सर्वं भवतो नाथ। चरणेषु समर्पितमिति" वचसा मनसा च समर्पिताहंतास्पदममतास्पदो भवति तदा तत्क्षणमारभ्यैव स मर्त्यो मे मया विचिकीर्षितः विशिष्टः कर्तुमिष्टः मत्प्रतिपाद्यमानेन भक्त्याभासेन योगिज्ञानिप्रभृतिभ्योऽपि विलक्षण एव कर्तुमीप्सितः स्यादिति तेन गद्धको न मायाकार्यः सत्यभूत एव नाप्यविद्याकार्यो मिथ्याभूतः एव किन्तु मत्कार्यो गुणातीत एव सन्नमृतत्वं मृतं नाशरहितभाववत्त्वं प्रतिपद्यमानः मया सहैव आत्मभूयाय सम्भूय कल्पते योग्यो भवति चकारेणैतत् फलमनुद्दिष्टं फलं तु प्रेमवत्पार्षदत्वमिति ॥ ३४ ॥ ३५ ॥

प्रणयेन अवघूर्णमवगतघूर्णात्मकं महाव्यग्रं चित्तं धैर्येण विष्टभ्य तद्रसाक्तत्वैव भक्त्यैवमभूत्तदेव बहुमन्यमानः ॥ ३६ ॥

यो मे मया मोहमहान्धकारः आश्रितः सर्वयादवविराजितमत्प्रभुसहिता द्वारकैव परिच्छन्नैव सम्प्राप्तिनश्वरेति विचारमयः स त्वया विद्रावित इति। तृतीयस्कन्धवर्णितोद्धवप्रश्नानन्तरमनन्यश्रेयस्त्वीयसिद्धान्तरक्तस्य प्रदीपम् आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिमिति वचनव्यञ्जितमुद्धवाय्यादात्तत्कथा एतदुक्त्याप्यत्रैवोक्ता ज्ञेया अतः कालद्वयोद्भूतं श्रीवराहस्य चेष्टितमेकत्रैवाह मैत्रेय इतिवत् ॥ ३७ ॥

प्रत्यर्पित इति। मया तुभ्यमात्मबुद्धीन्द्रियादिसहितं शरीरं समर्पितं त्वया तु विज्ञानमयः स्वानुभवमयः प्रदीपः प्रत्यर्पितः अतोऽहं प्रतिक्षणमेव सर्वदेशकालवर्तिनः स्वपरिकरविशिष्टस्य तव माधुर्यानुभवेन त्वया पूर्णीकृत एव सम्प्रतिवर्ते मच्छरीरेणानेन यत्त्वं चिकीर्षसि तत्कुरु यत्र क्वापि प्रस्थापयितुमिच्छसि तत्र प्रस्थापय अत्रैवावस्थापयेति भावः यतः कृतज्ञस्त्वद्भक्तस्तव पादमूलं हित्वा अन्यत् त्वदीयमपि स्थलं शरणं स्वगृहमपि को नाम समीयात् गच्छेत् यदि च तत्रापि वर्तमानस्य तव साक्षादनुभवः स्यात्तदा गच्छेदपि न काप्यस्य हानिः प्रत्युत त्वन्निदेशपालनं चेति भावः ॥ ३८ ॥

ननु तर्हि यादवादिषु स्नेहं हित्वा कथं गन्तुं प्रभविष्यसि तत्राह। वृकणाच्छिन्नः अयमर्थः दाशार्हादिषु मे त्रिविधः स्नेहपाशः तत्र यः स्वमायया त्वया सृष्टिविवृद्धये प्रसारितः दाशार्हादिविषयः सुपुत्रपौत्रादिरूपेण पुनरुद्भविष्यन् वर्तन्तां तत्प्राणिनः स्नेहसूत्रैः सदैवाक्लृप्तं सर्वदिग्देशव्यापिनी मायाविद्याभिमानिकः स्नेहपाशः स मया आत्मसुबोधहेतिना वृकण एव यस्तु त्वद्रूपगुणकथापरिचर्यामाधुर्यास्वादनिबन्धनस्तेषु स्नेहपाशः स तु मे भूषणभूतो वर्तत एव त्वया ज्ञानदीपार्पणात् यत्रैव यास्यामि तत्रैव वृष्णियादवसहितत्वद्विशिष्टामेव द्वारकां साक्षाद्द्रक्ष्यामि तत्र कृतकार्यस्त्वया आनेष्यमाणो यथाक्रमपीति ॥ ३९ ॥

हे महायोगिन्। महायोगबलेन सर्वत्रैव मां स्वानुभावनमानन्दयितुं प्रभुस्त्व। ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

किञ्च ज्ञानादौ यावान् चतुर्विधार्थः पुरुषार्थः नृणामधिकारिणामस्ति स चतुर्विधोऽपि ते भक्तस्याहमेवास्मि तत्र ज्ञाने मोक्षः कर्मणि धर्मः वार्तायां कृष्यादौ दण्डधारणयोश्च अर्थः अर्थेन कामः योगेऽणिमाद्याः सिद्धयस्तासां

श्रीभगवानुवाच ।

गच्छोद्धव ! मया दिष्टो बदर्याख्यं ममाश्रमम् ।
तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ॥ ४१ ॥
ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः ।
वसानो वल्कलान्यङ्ग वन्यभुक्सुखनिस्पृहः ॥ ४२ ॥
तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः
शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः ॥ ४३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कामेऽन्तमोद्य: त्वद्विधानां भागवतानामहमेव सर्वपुरुषार्थनिवाहक इति फलितोऽर्थः ॥ ३३ ॥

यतः यदा मर्त्यः निवेदितात्मा निवेदितः मय्यर्पितः आत्मा येन सः अत एव त्यक्तानि मत्सम्बन्धवर्जितानि समस्तानि कर्माणि येन सः तदा स मे विचिकीर्षितो विशिष्टं कर्तुमिष्टो भवति ततश्च मया अमृतत्वं मोक्षं प्रतिपद्यमानः आत्मभूयाय मद्भावाय कल्पते योग्यो भवति वै निश्चितम् ॥ ३४ ॥

आ सर्वमुक्तितः दर्शितः योगमार्गः स्वज्ञानध्यानमार्गो यस्मै सः ॥ ३५ ॥

बद्ध मन्यमानः आत्मानं श्रीकृष्णकृपापात्रं मन्यमानः प्रणयेन प्रवघूर्णितं व्याकुलं चित्तं धैर्येण निगृह्य प्राह ॥ ३६ ॥

हे अज हे आद्य ! सर्वकारणकारण ! यो मे मया आश्रितः मोहः देहादावहङ्कारादिरूपः आत्मन्यप्रज्ञात्मकत्वरूपश्च स एष महान्धकारः मदज्ञानम् स तव सन्निधानाद्विद्रावितो गतः किन्तु प्रभवन्ति प्रभावं कुर्वन्ति नैव प्रभवन्ति ॥ ३७ ॥

यद्यपि तव सन्निधानाद्विद्रावितस्तथापि प्रदीपः प्रत्यर्पितः कृतज्ञः भवदनुग्रहवित् ॥ ३८ ॥

आत्मसुबोधहेतिना । वृष्णयः स्वविषयकस्तु ज्ञानखड्गेण छिन्नः ॥ ३९ ॥

अनुशाधि अनुशिक्षय ॥ ४० ॥

---

भाषा टीका ।

ज्ञान में कर्म में योग में कृष्यादि वृत्ति में नीति शास्त्र में इन सबों में मनुष्यों को जितना प्रयोजन है वह सब धर्म अर्थ काम रूप पुरुषार्थ तो तुमारे वास्ते हमहीं हैं ॥ ३३ ॥

जिस समय मनुष्य संसार के सब कर्मों को छोड़ देता है और मेरेको आत्मनिवेद न करदेता है तब मैं उस को कृतार्थ करने चाहता हूं तब वह मोक्ष को प्राप्त होने योग्य होता है तब मेरे सदृश ज्ञानादि ऐश्वर्य को प्राप्त हो जाता है ॥ ३४ ॥

श्री शुकदेवजी बोले इस प्रकार से योग मार्ग के उपदेश करने से वे उद्धव जी भगवान् उत्तम श्लोक के वचनको श्रवण करने से प्रीति के मारे कण्ठ रुकगया तब हाथ जोड़ कर आंसुओं को भरलाये और फिर कुछभी नहीं बोल सके ॥ ३५ ॥

फिर प्रेमके मारे चञ्चल चित्त को बड़े धैर्य से रोककर हे राजन् ! श्री कृष्णकी कृपा तथा अपने आपका बहुत सन्मान करके फिर हाथ जोड़कर मस्तक से श्रीकृष्ण चरण कमलको स्पर्श करके यदुप्रवीर भगवान् से यह वचन बोले ॥ ३६ ॥

उद्धवजी बोले हे प्रभो ! जो मेरे हृदय मे अन्धकार रहाथा सो आप के समीप में बैठते ही सब भागगया हे अज हे आद्य जो पुरुष अग्नि के समीप जाता है उस को क्या ठण्ड अंधेरा भय कुछ फिर रह सकते हैं नहीं रहते हैं ॥ ३७ ॥

तौ भी आप कृपालु ने मेरे भृत्य के अर्थ विज्ञानमय दीपक देदिया है अब ऐसे आप की कृपाको जाननेवाला जो पुरुष सो आप के चरण कमल के मूल को छोड़कर और किस के शरण जायगा किसी के नहींजायगा ॥ ३८ ॥

अभीतक दाशार्ह वृष्णि अंधक सात्वतों मे जो मेरा लौकिक देह संबंधी स्नेहरूपी पाश सो तो कटगया जिसको कि आपने सृष्टि के बढाने के वास्ते फैलाया था अपनी माया से उसको आत्मज्ञानरूपी खड्ग से छेदन करदिया है ॥ ३९ ॥

हे महायोगिन् मेरा आप को नमस्कार है मैं आप के शरणागत हूं अब आप मेरे को ऐसा शिक्षा और कृपा करो कि जिस से मुक्ति आदि समय मैंभी नष्ट नहीं होनेवाली आप के चरणारविंद में परम भक्ति होवे ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदुक्तमोमित्यङ्गीकृत्य तथाऽपि मयाऽऽदिष्टो लोकसंग्रहार्थमेताचरकुर्वित्याह । गच्छेति । आदिष्टो नियुक्तः ॥ ४१ ॥

स्नानादेः पूर्वमेव मत्पादतीर्थोदकभूताया अलकनन्दाया गङ्गाया ईक्षया वसानः परिदधानः ॥ ४२ ॥

---

मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन् ।
मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ।
अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४४ ॥

श्रीशुक उवाच ।

स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः ।
शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिञ्चदद्वन्द्वपरोऽप्यपक्रमे [1] ॥ ४५ ॥
सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः ।
कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः ॥ ४६ ॥
ततस्तमन्तर्हृदि संनिवेश्य गतो महाभागवतो विशालाम् ।
यथोपदिष्टां जगदेकबन्धुना ततः समास्थाय हरेरगाद्गतिम् ॥ ४७ ॥
य एतदानन्दसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितम् ।
कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयासेव्य जगद्विमुच्यते ॥ ४८ ॥
[2] भवभयमपहन्तुं ज्ञानविज्ञानसारं [3] निगमकृदुपजह्रे भृङ्गवद्वेदसारम् ।
[4] अमृतमुदधितश्चापाययद्भृत्यवर्गान् पुरुषमृषभमाद्यं [5] कृष्णसंज्ञं नतोऽस्मि ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे उद्धवनिर्याणं नाम
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वन्द्वमात्राणां शीतोष्णादिविषयाणाम् सुशील आर्जवादिस्वभावः ॥ ४३ ॥

ते त्वया विविक्तं सुविचारितम् तिस्रस्त्रिगुणात्मिका गतीरतिक्रम्य ॥ ४४ ॥

हरिमेधसा संसारं हरति मेधा यस्य तेन श्रीकृष्णेन अद्वन्द्वपरोऽपि सुखदुःखविनिर्मुक्तोऽपि अपक्रमे निर्गमनसमये ॥ ४५ ॥

किञ्च सुदुस्त्यजः स्नेहो यस्मिंस्तस्य तेन वियोगात्कातरो भीतोऽत एव तं परिहातुमशक्नुवन्नातुरोऽतिविह्वलः सन् कृच्छ्रं कष्टं ययौ प्राप ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रदिति निर्बन्धरूपया तदाज्ञया स पुनः पुनर्नमस्कृत्य ययौ अत्र च 'पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षम' इत्यादिस्मृतीनवकल्पोपक्रमोक्तानुसारेण बदरिकाश्रमं गच्छन् भगवतः प्रसादनायानुपश्रुत्य शनैः पृष्ठतो गतः प्रभुपरित्यक्तनिजकुलं भगवन्तमेकान्ते दृष्ट्वा तत्कालप्राप्तेन मैत्रेयेण सह पुनः कृपया भगवतोपदिष्टं तत्त्वमाकर्ण्य तदाज्ञातो यथाविधि द्रष्टव्यम् ॥ ४६ ॥

विशालां बदरिकाश्रमं गतः सन् हरेर्गतिमगात् कथं भूतां तेनैव जगदेकबन्धुना यथोपदिष्टाम् "ब्रह्माऽमृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम्" इत्येवमुक्तप्रकाराम् ॥ ४७ ॥

आनन्दसमुद्रो भगवद्भक्तिमार्गस्तस्मिन्सम्भृतमेकीकृतमेतच्च सच्छ्रद्धया आसेव्य यस्तत्र संविष्टो वर्तते स विमुच्यते इति किं वक्तव्यं तत्सङ्गाज्जगदपि विमुच्यत इत्यर्थः ॥ ४८ ॥

एवं कृतावधेयं जगद्गुरुं प्रणमति । भवभयमिति । भवः संसारो भयं च जरारोगादिनिमित्तं तदुभयं निवृत्तानां प्रवृत्तानां च भृत्यवर्गाणां यथायोग्यमपहन्तुं योऽमृतद्वयमुपजह्रे उद्धृतवान् तदेवाऽऽह । वेदसारमेकम् किंतत् ज्ञानविज्ञानरूपं च तत्सारं श्रेष्ठश्च भृङ्गवत् भृङ्गो यथा पुष्पमकोपयन्नेवामृतमुपहरति तथा स्वयं स्वकृतवेदानुसारेणोदधितश्चैकं तच्चोभयं यथायथं भृत्यवर्गानपाययत्तं नतोऽस्मीति ॥ ४९ ॥

येनानुकम्पितं विश्वमुद्धवप्रश्नलीलया ।
तं वन्दे परमानन्दं नन्दनन्दनरूपिणम् ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
एकोनत्रिंशोऽध्यायः २९

[1] तस्यान्तमयाद्भुचक्रमे इति वि० पाठ [2] भवहन्तुं [3] निगमकृदुपदधे भृङ्गवद्वेदसारम् [4] अमृतमुदधितश्चं [5] निजसंज्ञं इति वि० पाठः

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

यद्यपि सिद्धस्य तव न साधनतापेक्षा तथापि ॥ ४१—४३ ॥

त्रिगुणात्मिका इति । प्रकटलीलायाः प्रपञ्चाप्रपञ्चाभिन्नत्वात् । तत्र प्रसिद्धा गतीः स्थानानि तुच्छतया परित्यज्येति लौकिकोक्तिः । पञ्चमपुरुषार्थतुरीयातीतगतिकत्वात् ॥ ४४ । ४५ ॥

अत्र च अत्रैवाकथाने । इत्थं विरोधाभावाय समुच्चयेन व्याख्येयम् ॥ ४६ ॥

हरेर्गति तदीयानित्याप्रकटप्रकाशद्वारकाख्यं धाम ॥ ४७ ॥

भक्तिमार्गे ज्ञानामृतस्यैकीकृतत्वं सर्वत्र कृष्णैकस्फूर्त्या तद्भावभावित्वम् ॥ ४८ ॥

अथमयाभिव्यर्द्धेन कृष्णावतारचरितमुद्दिश्यते अमृतमित्यर्द्धेन तु अजितावतारचरितम् एवं यद्यप्युभयमपि नमनीयं तथापि कृष्णसंबं नतोऽस्मीत्युक्त्या तस्यैव स्वयं भगवत्त्वेन स्वोपास्यत्वमभिव्यञ्जितम् । तदेव अमृतद्वयमेव । आद्यं सर्वावतारावतारि मूलरूपम् । श्रीस्वामिपादा अपि तस्यैव स्वोपास्यत्वं दर्शयितुं तथैव मङ्गलमासञ्जयन्ति । येनेति । नन्दनन्दनरूपिणमित्येव सार्वत्रिकः पाठः । श्रीकृष्णं नररूपिणमिति तु मत्सङ्कल्पितः

येनाऽनुकम्पितं विश्वं कीर्तनामृतसंप्लवैः ।
तं वन्दे कृष्णचैतन्यं पामरोद्धारतत्परमिति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अलकनन्दात्र गङ्गा ॥ ४२—४३ ॥

तिस्रो गतीः सात्त्विकराजसतामसीः ऊर्ध्वं गच्छन्ति सत्त्वस्था इत्युक्ताः ॥ ४४—४६ ॥

विशालां वदरीम् अनात्मकामिति पाठे अगात् अबुध्यादित्यर्थः ॥ ४७ ॥

य एताविति । यः कश्चिदित्यर्थः यद्वा यः श्रद्दते स आसेव्य मुच्यते इत्यन्वयः ॥ ४८—४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथानुज्ञप्तः यावदारब्धं कृत्यमुपदिशति । गच्छेति । आदिष्टोऽनुज्ञातः तत्र बदर्याश्रमे मत्पादतीर्थे मत्पादप्रभवगङ्गाख्यतीर्थविशेषजले स्नानैरुपस्पर्शनैराचमनैश्च शुचिः ॥ ४१ ॥

अलकनन्दाया गङ्गायाः ईक्षया दर्शनेन विधूतमशेषं कल्मषं यस्य सः वल्कलानि वसानः परिदधानः अङ्ग हे उद्धव ! वन्यानि वनप्रभवाणि कन्दमूलादीनि भुङ्क्ते इति तथा सुखेऽस्मात् दुःखेऽस्य निस्पृहः विषयाभिलाषरहितः ॥ ४२ ॥

द्वन्द्वमात्राणां शीतोष्णादिविषयाणां तितिक्षुस्तान्सहमान इत्यर्थः सुशीलः आर्जवादिस्वभावयुक्तः संयतेन्द्रियः जितबाह्येन्द्रियः शान्तः जितान्तरिन्द्रियः ज्ञानं तत्त्वत्रययाथात्म्यविवेचनात्मकं विज्ञानं ब्रह्मोपासनात्मकं ताभ्यां संयुतः ॥ ४३ ॥

तुभ्यं यन्मत्तो मत्सकाशादनुशिक्षितं विविक्तं विविच्य ज्ञापितं च तदनुभावयन् चित्ते दृढीकुर्वन् मय्यावेशिता वाक् चित्तं च येन सः तत्र स्वाविष्टो नाम स्वगुणानु कीर्तनं मद्दर्शननिरतः कायेन मदाराधनं कुर्वन्नित्यर्थः एवं मनो वाक्काय वृत्तयोऽभिहिताः एवं भूतो भवान् प्रारब्धान्ते तिस्रः ऊर्ध्वं गच्छन्ति सत्त्वस्था इत्यादिनोक्ताः सात्त्विकराजसतामसगतीरतिक्रम्य ततः परं प्रकृतिमण्डलात्परास्थितं नित्यमुक्तोपभोग्यं मामेष्यसि प्राप्स्यसि ॥ ४४ ॥

स इति । हरिमेधसा हरति यद्विषया मेधा बुद्धिः संसारमिति तथा तेन भगवतेत्थमुक्तः स उद्धवः तं भगवन्तं प्रदक्षिणं तथा परिवृत्य परिक्रम्य पादयोः शिरो निधायाद्वन्द्वपरः प्रियसंयोगवियोगप्रयुक्तहर्षशोकरहितोऽप्युपक्रमे निर्गमसमयेऽश्रुकलाभिरश्रुबिन्दुभिर्न्यषिञ्चत् तत्र हेतुरार्द्रधीर्भगवदनुरागातिशयस्थयहृदयः ॥ ४५ ॥

सुदुस्त्यजः स्नेहो यस्मिंस्तस्य भगवतो वियोगेन समनन्तरभाविना कातरो भीतः अत एवातुरो दीनः अत एव तं भगवन्तं परिहातुं त्यक्तुं तावदशक्नुवन्नसमर्थः कृच्छ्रं सङ्कटं भर्तुः पादुके पुनः पुनर्मूर्द्धनि शिरसि बिभ्रत्पूर्ववन्नमस्कृत्य कृच्छ्रं सङ्कटं यथा तथा ययौ ॥ ४६ ॥

कथं ययौ गत्वा च किं तत्राकरोदित्यत आह । तत इति तं भगवन्तं हृदि सन्निवेश्य ध्यानेन हृदिस्थं कृत्वा विशालां बदर्याश्रमं गतः तत्र जगदेकबन्धुना यथोपदिष्टं तथा तपः समास्थाय हरेर्गतिमगात् अतिक्रम्य गतीस्तिस्रो मामेष्यसि ततः परमिति भगवत्सङ्कल्पस्य दृढतरत्वज्ञापनाय गतवानिति भूतनिर्देशः अन्यथा नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु इति तृतीयेन सह विरोधापत्तेः ॥ ४७ ॥

भगवदुद्धवसंवादश्रवणफलमाह । य एताविति । योगीश्वरैः संसेवितावङ्घ्री यस्य तेन भगवता आनन्दसमुद्रात्संभृतं निरतिशयानन्दपरब्रह्मस्वरूपावेदकनिगमान्तसमुद्रात्समुद्धृतं ज्ञानामृतं ज्ञानामृतवर्धकं भागवतायोद्धवाय भाषितमेतद्यः पुमानासेव्य यस्मिंस्तत्सम्बन्धाज्जगदपि मुच्यते किं पुनः स विमुच्यते इत्यर्थः ॥ ४८ ॥

इत्थमुपदेशेन महोपकर्तारं भगवन्तं प्रणमति मुनिः भवभयमिति । यो निगमकृद्वेदकृत् "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद" इति श्रुत्युक्तरीत्या निःश्वसितमुखेन निखिलनिगमाविष्कर्ता भगवान् ज्ञानविज्ञाने एव सारः प्रधानप्रतिपाद्यो यस्मिंस्तममृततुल्यं वेदसारमुद्धृतः वेदान्तोदधेरुद्धृतवान् भृत्यवर्गमपाययच्च तमाद्यं जगत्कारणं श्रीकृष्णाख्यं परमपुरुषं नतोऽस्मि ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवानुशार्थीत्युक्तं विवृणोति गच्छतीति । ईश्वरा ध्यानेन मत्पादतीर्थैः मिश्रितत्वेन प्रवृत्ताशेषपापध्वंसशक्तियुक्ताया अलकनन्दायाः जलस्नानोपस्पर्शनैः शुद्धः ॥ ४१-४२-४३ ॥

तिस्रः गतीः जाग्रत्स्वप्नसुषुप्तिलक्षणाः ॥ ४४ ॥

हरिमेधसा विष्णुना आत्मनो हरित्वं मेधयतीति वा हरिमेधाः तेन ॥ ४५ ॥

अनुचक्रम इत्युक्तं स्वाभिप्रायं विवृणोति सुदुस्त्यजेति ॥ ४६ ॥

विशालां बदरीं ॥ ४७ ॥

न केवलमेतज्ज्ञानमुद्धवस्यैव फलप्रदं निषेवमाणानामितरेषामपीत्याह । य एतदिति । आसेव्य ॥ ४८ ॥

भगवतो भक्तानुकम्पितां विस्मयमानः शुकः उत्तरग्रन्थानुवर्तनार्थं भगवत्प्रसादमाकाङ्क्षमाणो भगवन्तं नमति । भवभयमिति । अहं तमाद्यं सर्वज्ञं पुरुषर्षभं पुरुषोत्तमं नतोऽस्मीत्यन्वयः यो भवमयमपहर्तुमुन्मूलयितुं निजयशोमृतं भृत्यवर्गान् पाययत्यात्ते कीदृशं ज्ञानविज्ञाने एव सारं वरं वरणीयं स्वादु यस्मिंस्तत्तथा निगमकृन्मधुकरद्भ्रं वेदलक्षणकुसुमैकदेशासिञ्चनेन वेदानामनन्तत्वेऽपि तच्छीर्घ्यानुसारेणोद्धृतमिति ज्ञायते अत एव वेदसारं वेदेषु ज्ञातव्येषु सारं श्रेष्ठं ननु वेदैकदेशासिद्धं विस्तारापेक्षितत्वाद्भन्यमावाक्सुसमाख्यमिति तत्राह । उदधिकल्पामिति । योग्यताविशेषाद्धिकारिणां पूर्णत्वेन समुद्धरमाणं भृङ्गवत् यथा भृङ्गो भृङ्गीं मधु पाययति तथेति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यद्यपि तव प्रार्थिता मच्चरणरतिः सिद्धैव सा च मद्विरहेण स्वत एव वृद्धिमप्युपैष्यति ततो न तदर्थं साधनान्तरमपेक्ष्यते तथापि मद्विरहेण यस्त्वमवश्यं कष्टं करिष्यसि तल्लोकशिक्षार्थं साधनानुरूपेणैव कुरु ननु हठादुपवासादिना ततश्च लोकाग्रहोल्लङ्घनमदभीष्टसम्पादने कृते त्वदभीष्टमपि सेत्स्यतीत्याशयेनाह । गच्छेति । पादचतुष्केण अत्र गच्छेत्येवाभिवचनम् इत्यत्र तत्र गतत्वेन स्नानेन च स्वतः सेत्स्यतीत्यनुवादमात्रं तत्र मत्पादस्यादिचतुष्टयं गतत्वेन सुखनिस्पृहत्वादिकं स्वभावेनैवेति ज्ञेयं वदर्यां वसेति दूरेः यस्थापनमत्र मम सुदुर्लीलामयमूर्तावस्य वियोगास्तस्य स्थितौ कृच्छ्रातिशय एव स्यादित्यभिप्रायात् ईक्षया हेतुना अलकनन्दाया विधूतमशेषकल्मषं कुष्टस्पर्शनादिजं दुःखं येनेति तु पादस्पर्शः विविक्तं सुविचारितं यथा स्यच्चरणाम्भोज इत्येतत्पर्यवसानं वक्ष्यत्यर्थः तिस्रः कनिष्ठमध्यमोत्तमत्वेन प्रसिद्धास्तास्ता गतीरतिक्रम्य तदन्ताश्च प्रसिद्धाश्चोऽपि परामुत्कृष्टामेष्यसि तां कामिति वाञ्छिष्यतेऽत्राविति कृपया स्वयमेवाह । मामिति । यथोक्तं श्रीमदर्जुनं प्रति सर्वगुह्यतममित्यादौ मामेवैष्यसि सत्यं त इति ॥ ४१—४८ ॥

एकोऽवतारस्तावदुद्धवभवमित्यादिलक्षणः अन्यस्तमसूताढिकलक्षणः यद्यप्येवमेवं गुरुत्वेन द्वयमपि नमनीयं तथाप्यार्यं प्रथमकृष्णांशं नतोऽस्मीति तदा तत्सदृशो दर्शितः शुकमेव च

तस्य तादिति तां विशिनष्टि । पुरुषं सर्वादिमित्यर्थे पूर्वमेवाहमिहास तत्पुरुषस्यमिति पुरुषत्वमिति श्रुतेः ऋषभं श्रेष्ठं चेति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भो उद्धव ! सर्वयादवेषु मत्परिकरेषु मध्ये मतुल्यत्वात्त्वमेव मत्प्रतिमूर्तिरसि—

नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः ।
अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ॥

इति मदुक्तेरतो यत्क्षममहं स्वेन साधयामि तत्त्वमपि साधयितुं शक्तोऽस्यत एव पूर्वं व्रजभूमिं प्रति त्वमेव प्रस्थापितो यथा तथैव सम्प्रति त्वां बदरिकाश्रमं प्रस्थापयितुमिच्छामि तत्र हि मदंशनरनारायणादिमहामुनीन्द्रा मां दिदृक्षन्ते मिथिलादिभूतलप्रदेशसुतलवैकुण्ठादीन् पूर्वं गतवता मया तत्र तत्रत्या भूतदेवबहुलाश्वबलिवैकुण्ठनाथाद्या मां दिदृक्षवः स्वदर्शनदानेन स्वीयज्ञानाद्युपदेशेन च ते कृतार्थीकृतास्तथाधुना बदरिकाश्रमो गन्तुं न शक्यते सपादशतवर्षरूपस्वावतारमर्यादासमवस्य सम्प्रति समाप्तीभूतत्वादतोऽधुना प्रपन्नमनुग्राह्य मामिति यदि मां प्रार्थयसे तर्हीयमेव सम्प्रति ममाज्ञेति मनसा मनसैव सङ्कल्प्य प्रकटमाह । गच्छेति । हे उद्धवेति त्वमन्वर्थसंज्ञत्वात् सदैव सर्वजनोत्सवप्रदो भवस्येवाधुना तु स्वनिष्ठज्ञानवैराग्यादिस्वर्गाक्तप्रदानेनापि त्वं तत्रत्यजनोत्सवविशेषप्रदोऽपि भवेति भावः ॥ ४१ ॥

ईक्षया स्वकर्तृकावलोकनेनैव अलकनन्दायाः विधूतं स्नानेन तमशेषकल्मषं येन सः तेषां स्त्रीसङ्गिमद्भिरिति नमस्कुर्वन् सर्वेषामग्रगण्यत्वाद्भगवत्स्वरूपमिति पदमुपन्यस्तम् ॥ ४२ ॥ ४३ ॥

मत्तः सकाशात् यत् भक्तिज्ञानवैराग्यादिकमनुशिक्षितं तत् एव विविक्तं विवेकयोग्यम् अनुभावयन् तत्रत्यश्रीनरनारायणादीन् स्वयं पृच्छत इति शेषः मद्वाधिक्षितवाक्सिद्धत्वादेव मद्धर्मा मन्निष्ठाः इति प्रतिभासवैशिष्ट्यसत्त्वकित्वाद्यस्तान्निरस्य तत्तदुक्तो भवेति तत्समाधानयोग्यतार्थमाशीर्वादः कृतः ततश्च तिस्रः त्रिगुणात्मिका गतीरतिक्रम्य तत्रत्यान् मुनीन् गुणत्रयगतीरतिक्रान्तान् कुर्वित्यर्थः निष्पादितमदादेशो मा मेष्यसि योगबलेन मद्दिव्यधामास्त्यमथैव मत्समीपमागमिष्यसीत्यर्थः ॥ ४४ ॥

हरिमेधसा हरिणा मनो हरन्ती मेधा यस्य तेन अपक्रमे ततोऽपसृतिसमये अनन्यपरोऽपि प्रेममूलकशोकमोहादिलक्षणविशिष्टोऽभूदित्यर्थः ॥ ४५ ॥

ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रत् भक्तिनिबन्धरूपया तदाज्ञया तं पुनः पुनर्नमस्कृत्य ययौ अत्र गच्छन्नपि तृतीयस्कन्धोपक्रमोक्तकथानुसारेण पुनरपि वराज्ञया भगवन्तमेकान्ते दृष्ट्वा सन्दिग्धमर्थान् पृष्ट्वा तदुत्तराधिगतसमस्तभगवल्लीलातत्त्वसिद्धान्तो विदुराविलो मोहमहान्धकार इत्यादुक्त्वा पुनरपि तदाज्ञया ययाविति द्रष्टव्यम् ॥ ४६ ॥

विशालां बदरिकाश्रमं इत्येतौरेव गतिमगात् प्रारब्धं प्रति गमनमाप ॥ ४७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आनन्दसमुद्रो भगवद्भक्तियोगस्तेन सम्भृतं सम्यक् धृतमेतत् यः सच्छ्रद्धया आसेव्य ईषदपि सेवितवा वर्तते स विमुच्यत इति किंवक्तव्यं तत्संगेन जगदपि विमुच्यते इत्यर्थः ॥ ४८ ॥

सर्वान्ते जगद्गुरुं प्रणमति । भवभयमिति । वेदेभ्यः सारं उपजह्रे उद्धृतवान् नन्वन्ये मुनयो दर्शनकर्तारो वेदसारमुपजह्रुरेवसन्ते दुर्गमस्य वेदस्य तात्पर्यं न सम्यगभिजानन्तीति न तद्वाक्यं विश्वस्यते अतं भगवांस्तु न तथेत्याह । निगममकृदिति । योहि यच्छास्त्रस्य कर्ता स एव तस्यातिदुर्गमस्यापि तदर्थं जानात्येवेति भावः । भृङ्गवदिति वेदपुष्पोद्यानस्य मकरन्दमित्यर्थः भृत्यवर्गान् अपाययत् अभक्तानसुरांस्तु वञ्चयामासेति दृष्टान्ताभिप्रायेणाह । अमृतमुदधितश्च तदपि सारमित्यर्थः । मोहिनीरूपेण भृत्यवर्गान् देवानेव अपाययत् असुरांस्तु अवञ्चयामासेव तं नतोऽस्मि ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशस्यैकोनत्रिंशः सङ्गतः सङ्गतः सताम् ॥ २९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आदिष्टो नियुक्तः ॥ ४१ ॥

वसानः परिदधानः ॥ ४२ ॥

द्वन्द्वमात्राणां शीतोष्णादिविषयाणाम् ॥ ४३ ॥

तिस्रस्त्रिगुणात्मिकाः गच्छन्ते इति गतयः प्राकृताः भूमवस्ता अर्चिरादिमार्गेणातिक्रम्य प्रतिक्रम्य मां मुक्तोपसृप्यमेष्यसि प्राप्स्यसि ॥ ४४ ॥

संसारं हरति मेधा यस्य चरणारविन्दानुचरः तेन श्रीकृष्णेन अपक्रमे निर्गमनसमये ॥ ४५ ॥

सुदुस्त्यजः स्नेहो यस्मिन् तेन श्रीकृष्णेन यो वियोगस्तस्मात्कातरो भीतः कृच्छ्रमतिसङ्कटं यथा तथा ययौ ॥ ४६ ॥

विशालां बदरिकाश्रमं गतः सन् अतिव्रज्य गतीस्तिस्रो आमेष्यसीत्युपदिष्टां गतिमगात् ॥ ४७ ॥

आनन्दसमुद्रो वेदस्ततः सारांशेन सम्भृतम् एतच्छ्रद्धयासेव्य जगत् यः कश्चित् जङ्गममात्रोऽपि विमुच्यते किम्पुनर्विशिष्टो जन इत्यर्थः ॥ ४८ ॥

सर्वमुमुक्षूपादेयं भगवत्प्रोक्तं तत्त्वं राजर्षि प्रत्युपदिश्याथ सर्ववेदैकवेद्यं सर्वोपास्यं सर्वोपकारिणं श्रीकृष्णं श्रीशुकः प्रणमति । भवभयमिति । अहं पुरुषं नतोऽस्मि न तु बहवः पुरुषाः सन्ति तत्र कस्तवाभिप्रेत इत्यत आह । ऋषभं सर्वश्रेष्ठं सर्वेश्वरमित्यर्थः । सर्वेश्वरत्वमाह । आद्यमिति । परमकारणमित्यर्थः कारणं तु ध्येयमिति श्रुतेः तमेव प्रकटमाह कृष्णसंज्ञमिति कृष्ण एव परो देवस्तं ध्यायेदिति श्रुते मत्तः परतरं नान्यदस्तीति श्रीमुखोक्तेश्च तस्यैव सर्वकारणत्वमुपपादयन् मुमुक्षुमुमुक्षुहितकारित्वं दर्शयति । निगमकृदिति । यः सूक्ष्मादिनिर्माणकं निगममपि स एव कृतवान् "अस्य महतो भूतस्य निश्वसितमेतदृग्वेद" इत्यादिश्रुतेः एतावता निगमकर्तृत्वं नित्यत्वं न गतम् प्रत्युतोत्थितन्यायेन तन्नित्यतासिद्धेः सर्वकारणादन्यत् जिज्ञास्यं नास्तीति बोध्यं "जन्माद्यस्य यत" इति जिज्ञास्यलक्षणोक्तेः भवभयमित्यत्र इत्थंकथम् यः मुमुक्षूणां भवं जन्ममरणलक्षणसंसारभयं हन्तुं ज्ञानविज्ञानसारं ज्ञानं सर्वकारणसर्वशक्तिपरमात्मविषयकं विज्ञानं तदन्तर्गतचिदचित्पदार्थविषयकं विविधं ज्ञानं तयोर्विस्तरतो निगमप्रोक्तयोः सारम् आधुनिकशङ्का वारयति । निगमसारमुपजह्रे उद्धृतवान् बुभुक्षूणां भवमपहन्तुमुदधितश्चामृतमुपजह्रे तदुभयं भृत्यवर्गानुभयविधान् यथायथमपाययत् तमिति सम्बन्धः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे ।
एकोनत्रिंशाध्यायार्थप्रकाशः ॥ २९ ॥

---

भाषाटीका ।

श्री भगवान् बोले हे उद्धव ! मैं तुमको आज्ञा देता हूं सो तुम मेरे निवास बदरी का आश्रम को जाओ वहां पर मेरे चरण के जल श्री गङ्गाजी के स्नान आचमनादिकों से पवित्र हो जाओगे ॥ ४१ ॥

वहां अलक नन्दा नामक गङ्गा के दर्शन के होने मात्र से सब पापों के नष्ट हो जाने से निर्मल हो जाओगे फिर वहां पर वृक्ष के वकला को वस्त्र बनाकर पहरना जङ्गली कन्द मूलादिकों का भोजन करना सब संसारी देह सुखों की इच्छा को छोड देना ॥ ४२ ॥

शीत उष्ण आदिक इन्द्रियों के द्वन्द्व विषयों का सहन करना सुन्दर शील स्वभाव को धारण करना बाहर भीतर की दोनों प्रकार की इन्द्रियों को निग्रहन करके रखना शान्त चित्त होकर रहना चित्त को सावधान रखना बुद्धि से शास्त्र ज्ञान तथा अनुभव ज्ञान योग शक्ति से जो ज्ञान तिससे संयुक्त रहना ॥ ४३ ॥

मेरे से जो कुछ ज्ञान तुमने सीखा है तिस ज्ञान को एकान्त मे शुद्ध भाव से विचार करते रहना फिर मेरे मे वाणी तथा चित्त इनके सहित सब इन्द्रियों की वृत्तियों को अर्पण कर देना इस प्रकार से मेरे ही धर्म मे निरत होजाना इस प्रकार के अनुष्ठान करके रहने से फिर तुम सत्व गुण रजो गुण तमो गुण तीन गुणों के फल से जो लोक मिलते हैं तिनको न जाकर निर्गुण मेरे धाम को प्राप्त हो जाओगे ॥ ४४ ॥

श्रीशुकदेव जी बोले सब संसार के सब दुःखों के हरण करने की जो बुद्धि तिस के समर्थ श्री कृष्ण भगवान् के ऐसे कहने से उद्धवजी ने श्री कृष्ण चन्द्र की प्रदक्षिणा किया फिर चरणमें सिर धर के चरणो में शिर रख कर आंसुओं के समूह से चरणों का अभिषेक करा दिया और अत्यन्त अधीरज हो गये यद्यपि रागद्वेषादि के द्वन्द्वो से रहित थे तथापि श्रीकृष्ण चरण को छोड़ कर जाने मे दुःखित हो गये ॥ ४५ ॥

भाषा टीका ।

कभी भी नहीं छोड सकने योग स्नेह से वियोग होना जान कर दुखित हो गये श्रीकृष्ण के संग को छोड कर रहने को असमर्थ होने से कातर हो गये तब कृपा कर के भगवान् ने अपने चरण कमल की जो पादुका दीनी उनको मस्तक मे धारण कर के वारंवार लोट लोट कर नमस्कार कर कर के किसी तरह से बड़े कष्ट से गये ॥ ४६ ॥

तिस के अनन्तर उन श्रीकृष्ण जी को अपने हृदय मे ध्यान से स्थापन कर के वे महाभाग वत उद्धव जी बदरी विशालापुरी को गये वहां जा कर जगत् के निर्हेतुक एक बन्धु श्रीकृष्णजी ने जो कहा था तिस अनुष्ठान को कर के निवास कर के अन्त मे भगवान की परमगती को प्राप्त हो गये ॥ ४७ ॥

जो कोई पुरुष आनन्द समुद्र को मन्थन कर के श्री हरि कृष्णचन्द्र के लाये हुये ज्ञान रूप अमृत जिस को कि श्री उद्धव भागवत के अर्थ जो श्रीकृष्ण सब योगीं वो द्वारा चरण मे से वित हैं तिनने कहा है इस को जो अल्पोस भक्षण करे तो सब ही संसारि मुक्त हो जावे ॥ ४८ ॥

सब संसार के भय के दूर करने के वास्ते सारा वेदों के बनाने वाले भगवान ने भ्रमर की नांई ज्ञान विज्ञान रूपी इस वेदसार का उद्धार किया है और मोहिनी रूप से समुद्र में से अमृत को निकाल कर भूलों को पिलाया है आद्य पुरुष श्रेष्ठ उन श्री कृष्णचन्द्र को मैं नमस्कार करता हूं ॥ ४९ ॥

इति श्री भागवत एकादश स्कन्ध उन्तीस में अध्याय की भाषा टीका समाप्त ॥२९॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## अथ त्रिंशोऽध्यायः ।

राजोवाच ।

ततो महाभागवत उद्धवे निर्गते वनम् ।
द्वारवत्यां किमकरोद्भगवान् भूतभावनः ॥ १ ॥
ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ।
प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ २ ॥

प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः कर्णाविष्टं न सरति ततो यत् सतामात्मलग्नम् ।
यच्छ्रीर्वाचां जनयति रतिं किं नु मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥

। ऋषिरुवाच ।

दिवि भुव्यन्तरिक्षे च महोत्पातान् समुत्थितान् ।
दृष्ट्वाऽऽसीनान् सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिंशे तु प्रागुपाचितमौसलच्छलतो हरिः ।
स्वधाम गन्तुमिच्छन् सञ्जहार निजं कुलम् ॥
विरागाय पुराघोरमुपाचितं हि मौसलम् ।
कथावसाने तत्रैव विशेषं परिपृच्छति ॥

तत इति त्रिभिः ॥ १ ॥

ब्रह्मशापोपसंसृष्टे कुले सति अयं भावः भगवति नहि शापः प्रभवति यादवत्वानुकरणाच्च सोऽपि कथञ्चिन्माभूत् अतः किमकरोदिति । तदेतदुक्तं कथमत्यजदिति । सर्वनेत्राणामिति । सर्वेन्द्रियोपलक्षणम् ॥ २ ॥

तत्प्रपञ्चयति । प्रत्याक्रष्टुमिति । यस्मिन् रूपे लग्नं नयनं प्रत्याक्रष्टुं परावर्तयितुमबला न शेकुः यच्च कर्णाविष्टं कर्णरन्ध्रेण प्रविष्टं सत् सतामात्मनि लग्नं खचितमिव तिष्ठति । ततो न निर्गच्छति । यस्य श्रीः शोभा वर्ण्यमाना कवीनां वाचां रतिमुल्लासविशेषं जनयति । तेषां मानं जगत्पूज्यतां जनयतीति किन्तु वक्तव्यम् यच्च विष्णो रूपं जिष्णोरर्जुनस्य रथे स्थितं दृष्ट्वा युधि मृतास्तत्साम्यं सारूप्यमीयुः प्रापुः तादृशेन रूपेणात्यजदित्यन्वयः ॥ ३ ॥

दिवि सूर्यपरिवेषादीन् भुवि भूकम्पादीनन्तरिक्षे निर्घातादीन् महोत्पातान् स्वयमेवोत्पादितत्वादन्यैरप्रतीकारान् ॥ ४ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी

संजहार संहारमुद्रामारोपितवान् । उपाचितमुपक्रान्तम् । तत्रैव मौसलकृत एव ॥ १ ॥

श्लोकद्वयोक्तप्रश्नस्य तात्पर्यमाह । अयं भाव इति । कथमत्यजत् । वस्तुतस्तु नात्यजदेव किन्तु लौकिकदृष्ट्या मायिकचरित्रं किमप्यकरोदेव तद्ब्रूहीत्यर्थः ॥ २ ॥

तस्याः सर्वेन्द्रियप्रेष्ठत्वं प्रपञ्चयति त्यागासम्भवे हेत्वभिधानेन विस्तारयति अबला अत्र गोप्यः । गोपीनां परमानन्द आसीद्गोविन्ददर्शने । क्षणं युगशतमिव यासां येन विना भवेदित्यादिभिस्तासामेव तथा प्रसिद्धेः । तद्रूपं कथमन्यथा स्यात् प्रणयरसनया धृताङ्घ्रिपद्म इत्यादि विरोधादित्येको हेतुः । सतामात्मारामगुरूणां भवदादीनामात्मनि ब्रह्मानन्दनिमग्नेऽपि मनसि इति तत्त्यागे सम्भवति चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचिदिति न्यायेन तत उत्थायात्र चित्तं न लग्नं स्यादिति द्वितीयो हेतुः कीर्त्यमाना इत्यर्थाद्व्याहृतं किन्तु मानमित्येव पाठः अग्रे तथा व्याख्यानात् । कवीनां व्यासादीनामित्यन्यथा तेषां नश्वरकीर्त्तनेऽकवित्वं प्रसज्येत इति तृतीयो हेतुः । सर्वतोऽपि गरिष्ठं तुरीयं हेतुमाह । यच्च विष्णो रूपमित्यादिना तत्साम्यस्य भक्तेच्छया प्रतीतं ते सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतमित्यादिनाऽकालविप्लुतत्वाभिधानात् तद्रूपस्य

श्रीभगवानुवाच !

एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः ।
मुहूर्तमपि न स्थेयमत्र नो यदुपुङ्गवाः ! ॥ ५ ॥
स्त्रियो बालाश्च वृद्धाश्च शंखोद्धारं व्रजन्त्वितः ।
वयं प्रभासे यास्यामात्र प्रत्यक्सरस्वती ॥ ६ ॥
तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ।
देवताः पूजयिष्यामः स्नपनालपनार्हणैः ॥ ७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

धर्षात् । प्रेयसीमिति विशेषणपदे एवाज्ञितस्त्वागोऽयं श्रेयः स्वजन कनककलशं पाथस्त्वजतीत्युक्ते भारवहनश्रमासिर्जवीकृतस्य कलशस्य महत्वं यथा प्रतीयते इति ॥ १ ॥ २ ॥

ततोऽस्यागेऽनुपपत्तिं दर्शयति । प्रत्याकृष्टुमिति । यत्र वपुषि लग्नं नयनं प्रत्याकृष्टुं परावर्त्तयितुम् अथवाऽन्तःस्थितप्रेयस्यो रुक्मिण्याद्या न शेकुः यच्च कर्णाविष्टं श्रवणद्वारा कर्णरन्ध्रे प्रविष्टं सतां भवाद्विधानामात्मारामाणामात्मनि लग्नं स्थितमिव तिष्ठति ततो न सरति यस्य श्रीः शोभा वर्ण्यमाना कवीनां व्यासादीनां वाचां रतिमुल्लासविशेषं सञ्जनयति यच्च जिष्णोरर्जुनस्य रथगतं युधि दृष्ट्वा सारूप्यमीयुः सायुज्यं प्राप्ताः अत एव गुणातीतं साक्षाद्ब्रह्मैव भवेत् न हि गुणमयवस्तुदर्शनेन सायुज्यं भवेत् अत एव श्रुतिभिरुक्तम् —

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय
उपासते तदरयोऽपि ययुः स्मरणात् ॥

इति नापि गुणमयं सतामात्मारामाणामात्मलग्नं तिष्ठेत् नापि नित्यप्रेयस्यो लक्ष्म्याद्याह्लादिनीशक्तयः प्राकृते स्वत्वासक्तिं तस्मात्पुरुषाणां वर्णयन्तो मुनयस्तन्मायामोहिता एवेति ॥ ३-४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निरोधाख्ये यादवानां परलोकगमनं निरूप्यते उद्धवगमनानन्तरं भगवान् किमकृतवानिति पृच्छति । तत इति द्वाभ्याम् । उद्धवे निर्गते सति द्वारवत्यां सकुलस्यार्थे भगवान्स्वयं कर्त्तुं समर्थः किमकरोत् ॥ १ ॥

अथवा स्वकुलस्यापि ब्राह्मणमुनिजनशापेन स्वरथ्योपसंसृष्टे स्वकुले सति ततु शरीरं प्रियतरं सर्वनेत्राणां सर्वकर्णानां प्रेयसी यस्य पृथिवी शरीरमिति श्रुतेः भूलोकम् द्वार-[illegible] धार्यअविद्यर्थः तत्परित्यागप्रकारं पृच्छति । कथमिति । केन प्रकारेणात्यजत् ॥ २ ॥

अनिवारणाभीद्धयमङ्गलवचार्थे [illegible] श्रीकृष्णरूपं त्रैकालिकानां भक्तानां दर्शनध्यानश्रवणादिविषयं परममङ्गलं नित्यं वास्तविकं कान्त्यादिगुणगणालङ्कृतं स्तौति । प्रत्याकृष्टुमिति । भक्ताः श्रीकृष्णप्रियाः यत्र यस्मिन् श्रीकृष्णरूपे अत्यन्तं शास्त्रश्रवणद्वारा कर्णाविष्टं भवति सतां सूरीणामात्मलग्नं सत् ततः न सरति सदा पश्यन्ति सूरय इति श्रुतेः आत्मनः ध्यातुः ध्येयस्य श्रीकृष्णरूपस्य च नित्यत्वात् कवीनां क्रान्तदर्शिनां सत्पुण्डरीकनयनमित्यादीनां मन्त्राणामृषीणां च तन्मनाप्वाद्यमलङ्घ्यं भवतीति शेषः ॥ ३ ॥

उत्तरमाह । दिवि सूर्यपरिवेषादीन् भुवि भूकम्पादीन् अन्तरिक्षे दिग्दाहादीन् महोत्पातान् दृष्ट्वा इदं वक्ष्यमाणं द्वारकापरिखागाहिकम् ॥ ४ ॥

भाषा टीका ।

महाराज परीक्षित जी बोले तदनन्तर महा भागवत उद्धवजी जब बनको चले गये तब सब भूतों के पावन करनेवाले भगवान्ने क्या किया ॥ १ ॥

जब अपने कुल ब्राह्मणों के शाप से युक्त हो गया तब यादवों के पति भगवान् ने सब संसारियों के नेत्रों की प्रिय अपनी मूर्ति को कैसे त्याग किया ॥ २ ॥

जिस मूर्ति में लगे हुवे नयनों को सब संसार की स्त्री खैंच नहीं सकती रहीं जिस जो मूर्तिके गुणोंको कान के द्वारा प्रवेश होने से सत् पुरुषों के मनमें लगजाने से वहां से निकलती नहीं है जिस मूर्ति की शोभा के वर्णन करने से कविजनों की वाणी सब को आनन्दित कर देती है और उन कवियों के मान प्रतिष्ठा का तो कहना ही क्या है भारत के युद्ध में अर्जुन के रथ पर जिस मूर्ति का दर्शन कर के मरनेवाले उन्हीं कृष्णचन्द्र के ऐश्वर्य को प्राप्त होगये उस मूर्ति को कैसे अन्तर्धान किया ॥ ३ ॥

श्री शुकदेव जी बोले द्वारका के मध्य में आकाश में सूर्य का मण्डल होना पृथ्वी में भूकम्पादि होना अन्तरिक्ष में दिशाओं का दाह होना आदिक असकुनों को देखकर सुधर्मा सभा में बैठे हुवे यादवों को देखकर श्री कृष्णचन्द्र इस वचन को बोले ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यमस्य केतवो ध्वजा इव मृत्युसूचका इत्यर्थः नोऽस्माभिः ॥ ५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सर्वपरिकरसहितमेद्दृत्यागरुक्मयया विमहिषी वन्हिप्रवेशादिदुरवस्थामयीं प्राकृतीमेव द्रक्ष्यन्ति निश्चेष्यन्ति च न केवलं प्राकृताः किन्तु मदिच्छावशादर्जुनादयोऽपि तथैव वैशंपायनपराशरादयो मुनयोऽपि स्वसंहितासु वर्णयेयुरपि कलिप्रावल्यपरमपरासिद्ध्यर्थं कलौ जनिष्यमाणेन शङ्करेण मद्भक्तेनापि वेदान्तभाष्यं तथा प्रपञ्चयिष्यते यथा तच्छास्त्रमधीत्याधीत्य सूक्ष्मो यः कारणोपाधिर्मायाख्योऽनेकशक्तिमान् स एव भगवद्देह इति भाष्यकर्तां मतमिति कुबुद्धयो व्याख्यास्यन्ते इति विभाव्य महोत्पातानुरागः सशङ्कसंभ्रममाह । एते घोरा इति । नचात्र भगवतो नैर्घृण्यमाशङ्कनीयं मद्भक्तेतराणां लोकानां प्राचीनदुरदृष्टविपाकसमय एव स तत्तत्कुमतपथप्रादुर्भावको भवेद्भगवदिच्छा तु सदसत्कर्माद्यधीनेऽपि निमित्तमस्त्येवान्यथा दुष्टदुष्टतारस्यापि नैर्घृण्यं प्रसज्जेत भगवता तु स्वभक्तजनसंशयदूरीकरणार्थं स्वलीलातत्त्वसिद्धान्तमुख्यं प्रत्युक्तमेव यदुक्तमुद्धवेनैव

इत्यावेदितहार्दाय मह्यं स भगवान् परः ।

आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिम् ॥

इति आत्मनः स्वस्य स्थितिं स्थावरमितं लीलापरिपाटीं च द्वारकादिधामनित्यत्वादिं चेति तत्रार्थः अत एवान्तर्धानलीलातत्त्वं चोक्तम्—

प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।

आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनमिति ॥

लोकानां लोचनानि निमग्नानि यत्र तादृशं विम्बं स्वदेहमादायैवान्तर्धानं कृतवानिति तत्रार्थः नच बिम्बपदस्यार्थान्तरं कल्प्यं यत-स्तदुत्तरश्लोकेषु जन्मस्वलीलौपयिकमिति यदुम्सनोधृतराजसूये इत्यादिषु वपुर्विशेषार्थो दृष्टः अत एव कृष्णचुमणिनिम्लोच इति कृष्णान्तर्धानस्य सूर्यास्तमयेनोपमा मायादोषापहृत चक्षुषः कुमतमालवडिवरे इत्यपि तेनैवोक्तम्—

देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः ।

भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ ॥

इति ये मायादोषोपहतचक्षुषः ये च वहिर्मुखाः, अन्यद्सत्कर्मवाक्कुमतमाश्रितास्तेषां वाक्यैः कृष्णो देहं त्यजेति कृष्णः स्वकृतकर्मफलं प्राप्नोति भाष्यैश्चान्यैः प्रतिपादितैः कस्य आत्मनि हरौ भगवति उप्तात्मनो निश्चितचित्तस्य भक्तजनस्येति तत्रार्थः अथ भगवतो विग्रहनामधामगुणलीलापरिकराणां नित्यत्वे प्रमाणानि गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या तोषयामीति गोपालतापनी श्रुतिः तथा वासुदेवः संकर्षणः प्रद्युम्नो ऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नरसिंहो वामनो रामो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाहं सहस्रधाहममितोऽहमनन्तोऽहं नैवैते जायन्ते नैवैते म्रियन्ते नैषामज्ञानबन्धो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परमानन्दाः इति माध्वभाष्यप्रमाणिता श्रुतिः निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीन आनन्दमात्रमुखपादसरोरुहादिरिति ध्यानबिन्दूपनिषत् सद्रूपमद्वयं ब्रह्म मध्याद्यन्तविवर्जितं स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययमिति वासुदेवोपनिषत् बल्ल-

व्रजजनानन्दी सच्चिदानन्दविग्रह इति ब्रह्माण्डपुराणे सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः हानोपादानरहिता नैव प्रकृतिजाः क्वचिदिति महावाराहे युगे युगे विष्णुरनादिमूर्तिमास्थाय विश्वं परिपाति दुष्टहेति नारसिंहे यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः । स सर्वस्माद्बहिष्कार्यः श्रौतस्मार्तविधानतः । मुखं तस्य विलोक्यापि सचैलः स्नानमाचरेदिति बृहद्वैष्णववचनं न भूतसंघसंस्थानो देहोऽस्य परमात्मन इति अमृतांशोऽमृतवपुरिति महाभारतम् अमृतं मरणवर्जितं वपुर्यस्येति तत्र श्रीशङ्कराचार्यव्याख्या च प्रसिद्धा शाब्दं ब्रह्म दधद्वपुरिति यत्तद्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्विभुरिति यस्यैव प्राकृतं यथेति सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तय इति स्वेच्छामयस्य नतु भूतमयस्येति त्वय्येव नित्यसुखबोधतनाविति श्रीभागवतं चेति नाम्नां नित्यत्वे आस्य जानन्तो नाम चिद्विविक्तनेति श्रौतमन्त्रः बहूनि सन्ति नामानि रूपाणि च सुतस्य ते इति वर्तमाननिर्देशश्च यद्वा अनामरूपपर्यायं भगवान् हरिरीश्वरः अर्केति च यो वेदैः स्मृतिभिश्चाभिधीयत इति पाद्मादिवचनं तत्र वासुदेवाध्यात्मवाक्यमेव समाधायकं यथा अप्रसिद्धेस्तद्गुणानामनामासौ प्रकीर्तितः अप्राकृतत्वाद्रूपस्याप्यरूपोऽसावुदीर्यते । सम्बन्धेन प्रधानस्य हरेर्नास्त्येव कर्तृता । अकर्तारमतः प्राहुः पुराणं तं पुराविद इति एवमुपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पनेति अत्र रूपं मूर्तिः शैली दारुमयी लोहमयी वा तस्य कल्पना रामकृष्णाद्याकारत्वेन निर्माणमिति तत्रार्थो ज्ञेय इति धाम्नां नित्यत्वे तासां मध्ये साक्षाद्ब्रह्मगोपालपुरी हीति गोपालतापनी श्रुतिः नित्यां मे मथुरां विद्धि पुरीं द्वारवतीं तथेति पाद्मे वनं वृन्दावनं तथेत्यपि क्वचित्पाठः गुणानां नित्यत्वे इमे चान्ये च भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचिदिति लीलानां नित्यत्वे एको देवो नित्यलीलानुरक्तो भक्तव्यापी भक्तहृद्यन्तरात्मेति पिप्पलादशाखा पुरुषबोधिनी श्रुतिः जयति जननिवास इत्यत्र दोर्भिरस्यन्नधर्ममिति व्रजपुरवनितानां वर्द्धयन् कामदेवमिति च वर्त्तमानप्रयोगश्च कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते इति च लीलापरिकराणां नित्यत्वे यथा सौमित्रिभरतौ यथा सङ्कर्षणादयः । तथा तेनैव जायन्ते निजलोकाद्यदृच्छया पुनस्तेनैव गच्छन्ति तत्पदं शाश्वतं परम् । न कर्मबन्धनं जन्म वैष्णवानां च विद्यते इति पाद्मोत्तरखण्डे अत्र दिव्याद्याः सर्वे मनुष्या एव आमिनि सर्वथा मत्प्रिया देवि । मत्तुल्यगुणशालिन इति पाद्मम् अत एव नित्यावनाशो भगवान् नित्यमूर्तिर्जगत्पतिः । नित्यरूपो नित्यगन्धो नित्यैश्वर्यसुखानुभूरिति सत्त्वमनवद्यम् यस्य केशवो ऽब्जः दृष मृत्युसूचकाः इत्यर्थः नोऽस्माभिः ॥ ५ ॥

प्रत्यक् पश्चिमवाहिनी ॥ ६ ॥

आसिषिच्य स्नात्वा ॥ ७ ॥ ८ ॥

विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम् ।
देवद्विजगवां पूजा भूतेषु परमो भवः[1] ॥ ९ ॥
इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ।
तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥ १० ॥
तस्मिन् भगवतादिष्टं यदुदेवेन यादवाः ।
चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥ ११ ॥
ततस्तस्मिन् महापानं पपुर्मैरेयकं मधु ।
दिष्टविभ्रंशितधियो यद्द्रवैर्भ्रश्यते मतिः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यमस्य केतवः ध्वजा इव मृत्युसूचका इत्यर्थः ॥ ५ ॥
प्रत्यक् पश्चिमवाहिनी ॥ ६—७ ॥
ब्राह्मणांश्च पूजयिष्यामः ॥ ८ ॥

भाषा टीका ।

श्रीभगवान् बोले द्वारिका में ए बड़े भारी घोर उत्पात होने पड़ते हैं आकाश में यमके ध्वजा दीखते हैं सो हे वृद्ध श्रेष्ठो हो हम लोगों को इहां पर मुहूर्त भर भी नहीं रहना चाहिये ॥ ५ ॥

स्त्री बालक वृद्ध ए सब इहां से शंखोद्धार पर चले जावें हम सब लोक प्रभास को जावेंगे जहां की पश्चिम-वाहिनी सरस्वती नदी का संगम समुद्र में है ॥ ६ ॥

वहां हम सब लोग स्नान करके पवित्र होकर सावधानता से उपवास करेंगे फिर अभिषेक चंदन लपन भेट भोग धाम आदि से देवतों की पूजा करेंगे ॥ ७ ॥

महाविद्वान् ब्राह्मणों पूजित होने पर हमारा स्वस्ति वाचन करेंगे फिर हम उनको गउ सुवर्ण वस्त्र हाथि घोडा रथ घर ग्रामादि देकर संतुष्ट करेंगे ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विधिः प्रकारः मङ्गलायनं च किञ्च देवद्विजगवां पूजा भवः उद्भवहेतुः देवलोक परम उद्भवो भविष्यतीति भावः ॥ ९ ॥

मधुद्विषो वाक्यमाकर्ण्य तथेत्यभिनन्द्य उत्तीर्य समुद्रम् ॥ १० ॥

सर्वश्रेयोपबृंहितमित्यत्र सन्धिरार्षः भगवतानुक्तैरपि सर्वैः श्रेयोभिः सहितं चक्रुः ॥ ११ ॥

पीयत इति पानम् मैरेयकं मदिराविशेषम् मधु सुरसम् दिष्टेन दैवेन विभ्रंशितधियः नह्यन्यथा तस्मिन् स्थाने तद्युक्तमिति भावः । यद्द्रवैर्यस्य द्रवैः रसैः ॥ १२ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिकादीपनीटिप्पणी ।

देवलोके देवस्य मम लोकेऽप्रकटप्रकाशे इति वास्तवोऽर्थः परोक्षवादत्वात् ॥ ९ ॥ १० ॥

आदिष्टमुपदिष्टमभिषेकादि । अनुक्तैः पूर्वादिभिः ॥ ११ ॥

तत आदेशानुष्ठानानन्तरम् । तस्मिन् प्रभासे । दैवेन भगवदिच्छारूपेण कृष्णमायावृतात्मनामित्यग्रोक्तेः । अन्यथा भगवदिच्छाविरुद्धं तन्मदिरापानं । वस्तुतस्तु मा [illegible] सम्पत्तिः तत्प्रतिपादिका इरा सरस्वती एको देवो नित्यलीलानुरक्तो भक्तव्यापीति यद्भूतं भवत् भविष्यच्चेत्यादि श्रुतिरूपा मेरा तस्याः सकाशाज्जातं निष्पादितं यल्लीलायां नित्यत्वं तन्मैरेयं स्वार्थे कप्रत्ययः मधु नित्यलीलानुभावकत्वेन प्रपञ्चविस्मारकत्वात् तत् पपुरास्वादितवन्तः कीदृशास्ते दिष्टेन प्रकटलीलावशेन काश्चन विभ्रंशिताः नित्यलीलानुभवतद्यथार्थता धियो येषां ते तथा । दिष्टं दैवे च काले इत्यादीति विश्वः । किमर्थं पपुरित्यपेक्षायां मैरेयकं विशिनष्टि । यस्य नित्यत्वस्य द्रवैरास्वादनैर्मतिर्वियोगात्मिका भ्रश्यते नित्यसंयोगः प्रकाशत इत्यर्थः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एषः तत्राभिषेकदेवतादिनोक्तः विधिः उत्तमं मङ्गलायनं मङ्गलावहः तथाहि देवादीनां पूजा भूतेषु आराधकेषु परमो दया अतिशयिताभ्युदयो हीत्यर्थः ॥ ९ ॥

इतीति । मधुद्विषो भगवतो वचः इति शेषः तथेत्यभिनन्द्य रथैः प्रभासं प्रययुः ॥ १० ॥

१ भूतेषु परमोदया इति वीरराघव विजय पाठः ।

ता वज्रकल्पा ह्यभवन् परिघा मुष्टिना भृताः ।
जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते ॥ २१ ॥
प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ।
हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥
अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन ! ।
एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि ॥ २३ ॥
ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ।
स्पर्धा क्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ २४ ॥
एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः ।
अवतारितो भुवो भार इति मेनेऽवशेषितः ॥ २५ ॥
रामः समुद्रवेलायां योगमास्थाय पौरुषम् ।
तत्याज लोकं मानुष्यं संयोज्याऽऽत्मानमात्मनि ॥ २६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ये चान्ये निशठादयः तेऽपि मुकुन्देनस्वमायया विमोहिता अतएवमदेन अन्धेन तमसा अन्धीकृताः अन्योऽन्यमासाद्य जघ्नु हतवन्तः ॥ १७ ॥

तदा दाशार्हादयोऽपि सुवीरादयश्च सौहृदं परित्यज्य मिथो जघ्नुः ॥ १८ ॥

सौहृदं परिहृत्यैतदेव विशदयति । पुत्रा इति । आत्रादिभिः सह युध्यन्त इत्यध्याहारः तथा ज्ञातयो ज्ञातीन् जघ्नुः सौहृदं सौहार्दं परस्परहितैषित्वं मित्रत्वं तदभावे तत्त्वं सुहृत्त्वमिति भेदः ॥ १९ ॥

शरेष्वक्षीयमाणेषु धनुःषु भज्यमानेषु सत्सु मुष्टिभिरेरका विप्रशापप्रभवात् मुसलशेषात् जातान् जगृहुः ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथवर्बुदा इति केचित्पाठविशेषः ॥ १८ । १९
एरकाः समुद्रतीरस्थः सूचीमुखतृणानि जम्बुरुद्धपाठयम् ॥ २० ॥ २१—२२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मदेन मदमनसा अन्धेन कारिताः यद्वा अन्धकारमिता अन्धकारं सञ्जातो येषां ते तारकादि ॥ १७—१८ ॥
जगृहुः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मदान्धेन मदमनसा वशीकारिताः ॥ १७ ॥

अर्बुदा माथुराः शूरसेनाश्च सर्वेऽपीत्यर्थः ॥ १८ ॥
आत्रादिभिश्च भ्रातरः इत्याधिक्षेपः ॥ १९ ॥
धनुःषु भग्नेषु जघ्नुः जगृहुः ॥ २० ॥

भाषा टीका ।

और भी जो निशठ उल्मुकादिक सहस्रजित् शतजित् भानु आदिक सब मद से अन्धे होकर मुकुंद की इच्छा से मोहित होने से एक को एक मारते भये ॥ १७ ॥

दाशार्ह वृष्णि अंधक भोज सात्वत मधु अर्बुद माथुर शूरसेन विसर्जन कुकुर कुंति ए सब आपस में मित्रता छोडकर युद्ध करते भये ॥ १८ ॥

पुत्रों पिता के साथ भ्राता भ्राता के साथ बहनोई भगिना काका मामा इनके साथ सब लडे मित्र मित्रों के साथ सुहृद सुहृदों के साथ ज्ञाती ज्ञातियों के साथ सब मोहित होकर सबको सब मारते भये ॥ १९ ॥

अब बाण चुक गये तथा धनुष टूट गये और भी सब शस्त्रहीन होगये तब उन सबों ने मुठियों से पटेरा का घांस उखाडा ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिघा लोहदण्डाः भृताः धृताः तैश्च श्रीकृष्णमपि ॥ २१ ॥
प्रत्यनीकं प्रतिपक्षम् एरकामुष्टिरूपौ परिघावुद्यम्य ॥ २२—२३ ॥
स्पर्धानिमित्तः क्रोधः कुलं क्षयं निन्ये ॥ २४—२५ ॥
पौरुषं योगं परमपुरुषध्यानलक्षणम् आस्थाय । संयोज्येति । मानुष्यं लोकं भूर्लोकं मनुष्यरूपतां वा ॥ २६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एरकायुक्तमुष्टयात्मपरिघैः ॥ २३—२५ ॥

पौरुषं पूर्णषड्गुणभगवद्विषयं योगं ध्यानं समास्थाय सम्यगेकाग्रचित्तत्वेन कृत्वा योगं योगनामानं विष्णुमाविश्यात्मानं स्वान्तर्यामिण्यात्मनि ध्याते भगवद्रूपे संयोज्यैकीभवतीति संश्रित्य देहं तत्यजे इत्यन्वयः । आत्मने पदप्रयोगेण सुखेन देहत्यागं सूचयति ॥ २६—२७ ॥

भगवता देहं त्यक्त्वा दिवं न गतं तत्प्रदर्शनमसुरजनमोहनार्थं कृतमिति ज्ञापयन् शुको हरेस्तदानीतनस्वरूपप्रकारं ब्रूते बिभ्रदिति ॥ २८—३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मशापेति स्वयं नित्यं धामेति वास्तवोऽर्थः दृष्टान्ते च मथनं तदुद्भवातिरिक्तमागन्तुकं मनुष्यादिकं विद्याऽस्य तन्निवासमेव प्रापयति तथा ॥ २३ ॥ २४ ॥

भुवो भार इति रूपकात्तमेवाचित तांस्त्यक्त्वा स्वयमन्तर्धानि कुशिनान्ते पृथिव्या दुर्धरा एव स्थुरिति ॥ २५ ॥

पुरुषस्य श्रीकृष्णस्य योगं नित्ययोगमास्थाय निश्चित्य आत्मानं प्रकटलीलायां प्रकाशमानमात्मनि अप्रकटलीलायां प्रकाशमाने स्वधाम्नि अभिन्नत्वेन विभाव्य भूर्लोकं तत्याज ॥ २६ ॥

रामनिर्याणमिति वाङ्गमिः ॥ २७ ॥ ३१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परिघा इव भूताः भूनाः तं कृष्णमपि ॥ २१ ॥ २२ ॥

उद्यम्य उद्यतौ भूत्वा एरकामुष्टय एव परिघा ययोस्तौ ॥ २३—२५ ॥

मानुष्यं भूर्लोकं मनुष्यशरीरं वा ॥ २६ ॥

रामनिर्याणमित्यादिकं स्वमतमेव रामस्य निर्याणं स्वरूपेण महावैकुण्ठं प्रति गमनं स्वांशरूपेण पातालतलगमनं च २७॥२८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूनाः भूताः ॥ २१—२२ ॥

एरकामुष्टिरूपौ परिघौ दोर्दण्डौ ययोस्तौ ॥ २३ ॥

स्वधिया यः क्रोधः स स्वयं निन्ये कुलमिति शेषः २४ २५

रामः स्वयं सङ्कर्षणस्तदंशः शेषस्तद्द्विमूर्तेव भगवल्लीलादर्शनार्थं प्रविष्टः यदेकांशेन विधृता जगती जगतः पतेरित्युक्तत्वात् लीलासमाप्तौ शेषः समुद्रं प्रविश्य स्वस्थानङ्गत इति च शेषावयवांश प्रविष्टः सङ्कर्षणस्यांशिनः नित्यशरीरिणः भगवति स्वयंरूपे वासुदेवे श्रीकृष्णे लोकपरित्यागपूर्वकं प्रवेशमाह । राम इति । पौरुषं योगं परमभूतश्रीकृष्णध्यानलक्षणमास्थाय तदेव विष्णोरिति । आत्मनि । स्वांशिनि वासुदेवे श्रीकृष्णे वासुदेवकलानन्त इत्युक्तत्वात् आत्मानमंशभूतं संयोज्य लोके नरलोके तत्याज परेषां लोकदृष्टौ अग्निप्रवेशलक्षणमेव विशोषितरूपे वस्तुमर्यादिकमुपशरीरं ध्यानविशेषे निधापीत यान्त्यं



एवं प्रद्युम्नांशभूतः कामः स्वस्थानं गतः प्रद्युम्नः श्रीकृष्णे प्रविवेश तथानिरुद्धोऽपि श्रीकृष्णावेशेन स्वस्थानं प्राप्त इति ज्ञेयम् ॥ २६ ॥

अरोपस्थे भूतले ॥ २७ ॥

बिभ्रच्चतुर्भुजं रूपमिति । स्वानन्दवासानां तृतीयस्कन्धोक्तरीत्योपदेशं प्राप्यापि भगवति स्नेहातिशयेन मैत्रेयसमीपे पुनर्वाङ्माधुर्यरसास्वादनकामनया पुनः प्राप्तस्योद्धवस्य मैत्रेयादीनां च विनादविशेषजननाय द्विभुजेनैव रूपेण भ्राजिष्णु परमज्योतिर्भूतं चतुर्भुजं रूपं बिभ्रत्सन् निषसाद कश्चित्तु चतुर्भुजं रूपं विहाय नैमित्तिकं द्विभुजरूपस्वीकरणं प्रादुर्भावः द्विभुजं नराकारं रूपं विहाय स्वाभाविकचतुर्भुजरूपस्वीकरणमन्तर्धानमिति वदन्ति तदनेनैव प्रत्युक्ताः किञ्च तत्र हि । चतुर्भुज इत्यादौ श्रीमाविप्रतिबोधनाय द्विभुजरूपेण चतुर्भुजरूपप्रदर्शनेऽपि कुरुक्षेत्रेऽपि चतुर्भुजरूपस्यापि द्विजरूपकार्यत्वं च पुनः पुनः आविर्भावान्तरोपलक्षणार्थत तस्मात् उपेक्षणीयाः ॥२८॥

भाषा टीका ।

वे घास वज्र सरी के होगये भगवन्माया से मुठि में लेते मात्र परिघ आयुध होगये उनहीं से शत्रु होकर मारने लगे श्रीकृष्णजी ने मना किया तो उनको भी वे उन्मत्त मारने लगे ॥ २१ ॥

वे लोग बड़े मोहित होकर रामकृष्ण दोनों को विरोधी समझने लगे और शस्त्र लेकर मारने की बुद्धि करने लगे ॥ २२ ॥

इसके अनन्तर हे कुरु नंदन परीक्षित जी वे भी रामकृष्ण दोनों पटेरा घास की मुठी को परिघ आयुध बनाकर उन सबों को मारते हुये उस युद्ध में विचरने लगे ॥ २३ ॥

ब्राह्मणों के शाप से युक्त हुये विशेष करके श्रीकृष्ण की माया से मोहित उन यादवों का स्पर्धा क्रोधने क्षय कर दिया जैसे कि बांसों का अग्नि सब बनको नाश कर देता है ॥ २४ ॥

इस प्रकार से अपने सब कुलों के नष्ट होजाने से केशव भगवान् भी समझा की जो पृथिवी का भार भारत पीछे बाकी था सो भी उतर गया है ॥ २५ ॥

श्रीबलरामजी ने तो समुद्र के किनारे जाकर परमात्मा का ध्यान रूप योग को धारण करके परमात्मामें मन लगाकर मनुष्य लोक को त्याग दिया ॥ २६ ॥

श्रीबलरामजी का जाना देखकर देवकी सुत श्रीकृष्ण भगवान् भी एक पीपल के पेड़ का आश्रय लेकर मौन होकर पृथिवी पर ही बैठ गये ॥ २७ ॥

उस समय चतुर्भुज रूप को धारण किया और अपनी प्रकाशमान प्रभा के द्वारा सब दिशाओं के अंधकार को रात्रि में भी दूर करते हुये ऐसे प्रकाशित भये जैसे बिना धुआं का दीप्त अग्नि होवे ॥ २८ ॥

श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ।
कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥ २९ ॥
सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम् ।
पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ ३० ॥
कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः ।
हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ ३१ ॥
वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः
कृत्वोरौ दक्षिणे पादमासीनं पङ्कजारुणम् ॥ ३२ ॥
मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरा ।
मृगास्याकारं तच्चरणं विव्याध मृगशङ्कया ॥ ३३ ॥
चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ।
भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥
अजानता कृतमिदं पापेन मधुसूदन! ।
क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ! ॥ ३५ ॥
यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ।
वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो! ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवानुवर्णयति । श्रीवत्साङ्कमिति चतुर्भिः ॥ २९ ॥

सुन्दरस्मितं वक्त्राब्जं यस्मिंस्तत् पुण्डरीकवदभिरामे सुन्दरे अक्षिणी यस्मिंस्तत् ॥ ३०—३१ ॥

वनमालापरीतान्यङ्गानि यस्मिंस्तत् निजायुधैश्च परीताङ्गम् पङ्कजारुणं वामं पादं दक्षिणे ऊरौ कृत्वा आसीनं रूपं बिभ्रदिति पूर्वेणान्वयः ॥ ३२ ॥

जरा नाम कश्चिल्लुब्धको मृगयुः मृगास्यमिवाकारो यस्य तं चरणम् ॥ ३३—३७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रूपं विशिनष्टि । श्रीवत्साङ्कमिति । श्रीवत्सः अङ्कश्चिह्नं उरसि यस्य तत् घनो नीलमेघस्तद्वत् श्यामं तप्तसुवर्णस्येव वर्चो यस्य तेन कौशेयाम्बरयुग्मेन परिवीतं परितः कटिप्रदेशे उपरि चावृतं सुमङ्गलं निरतिशयसुन्दरम् ॥ २९ ॥

सुन्दरस्मितवक्त्राब्जं यस्मिन् पुण्डरीकवदभिरामे सुन्दरे अक्षिणी यस्मिंस्तत् ॥ ३० ॥

कटिसूत्रादिभिर्विराजितं तत्र मुद्रा अङ्गुलीयकं योगमुद्रा वा ॥ ३१ ॥

वनमालया परीतान्यङ्गानि यस्मिंस्तत् मूर्तिमद्भिः स्वासाधारणरूपधरैर्निजायुधैश्च शङ्खादिभिर्विराजितं दक्षिणे ऊरौ पङ्कजवदरुणं पादं वामं कृत्वा निधायासीनं रूपं बिभ्रदिति पूर्वेण सम्बन्धः ॥ ३२ ॥

तत्र जरा नाम लुब्धकः मृगास्यस्येवाकारो यस्य तं तस्य भगवतश्चरणं मृगोऽयमिति शङ्कया विव्याध मुसलावशेषायःखण्डकृतेषुणा ताडितवानित्यर्थः ॥ ३३ ॥

ततश्च चतुर्भुजं तं कृष्णं परमपुरुषं ज्ञात्वा कृतकिल्बिषः कृतापराधः हेतुगर्भमिदम् अतो भीतःअसुरद्विषः भगवतः पादयोः शिरसा स्पृशन्निति शेषः ॥ ३४ ॥

उक्तिमेवाह । अजानतेति । हे मधुसूदन ! अजानता तत्र हेतुः पापेन पापात्मना इदमागः कृतं हे उत्तमश्लोक ! हे अनघ पापस्य मे मया कृतं क्षन्तुमर्हसि ॥ ३५ ॥

यस्य तवानुस्मरणमात्रमेवाज्ञानमेवान्धकारस्तस्य नाशकं वदन्ति वृद्धाःतस्य तवहे विष्णो मयाऽसाधु कृतं हे प्रभो ! ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ श्रीकृष्णोऽसुरजनमोहकरीं मायां प्रकटयति । जराख्यव्याधेनस्याह । मुसलेति । मुसलावशेषायःखण्डेन कृत इषुः शरो यस्य स मुसलावशेषायःखण्डकृतेषुः चूर्णितमुसलावशिष्टायःखण्डेन कृतशरवानित्यर्थः । मृगाकारं मृगत्वबुद्धिजनकम् ॥ ३३—३४ ॥

अजानता मया ॥ ३५ ॥

असाध्वनुचितम् ॥ ३६ ॥

तन्माऽऽशु जहि वैकुण्ठ ! पाप्मानं मृगलुब्धकम् ।
यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ ३७ ॥
यस्याऽऽत्मयोगरचितं न विदुर्विरिञ्चो रुद्रादयोऽस्य तनयाः पतयो गिरां ये ।
त्वन्मायया पिहितदृष्टय एतदञ्जः किं तस्य ते वयमसद्गतयो गृणीमः ॥ ३८ ॥

श्रीभगवानुवाच ।

मा भैर्जरे त्वमुत्तिष्ठ काम एष कृतो हि मे ।
याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ ३९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तप्तहाटकमयानां भूषणानां वर्णो यस्मिंस्तत् ॥ २९—३२ ॥

जरा जरासंधः विध्याधोऽति मृगो मया विद्ध इति लुब्धकस्याभिमानहृष्टयैवं प्रयुक्तं वस्तुतस्तु तदायः शरश्चरणं पस्पर्श मात्रं नतु विव्याध तदङ्गस्य सच्चिदानन्दस्वरूपत्वात् अन्यथा भीतः पपात शिरसा पदयोरित्यत्र पादाच्छरं निष्कासयामास चेत्युक्तं स्यात् ॥ ३३ ॥

कृतकिल्बिष इति तं प्रति शरनिक्षेपात् ॥ ३४ ॥

ममाघ हन्तुमर्हसि अनघेति तव चरणे अघं कथं तु नैवाभूदिति मम क्षमापणं योग्यमेति भावः ॥ ३५-३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तदेव रूपं वर्णयति । श्रीवत्साङ्कमिति चतुर्भिः ॥ २९ ॥

सुन्दरं मनोहरं स्मितं मन्दं हसितं यस्मिन् तद्वक्त्राब्जं मुखं यस्मिन् रूपे तत् नीलैः कुन्तलैर्मण्डितमलंकृतं पुण्डरीकवदभिरामे सुन्दरतरे अक्षिणी यस्मिन् तत् स्फुरती देदीप्यमाने मकराकारे कुण्डले यस्मिन् तत् ॥ ३० ॥

कटिसूत्रादिभिर्विराजितम् ॥ ३१ ॥

वनमालया च निवीतान्यङ्गानि यस्मिन् तत् पङ्कजवत् अरुणं वामं पादं दक्षिणे ऊरौ कृत्वा आसीनम् एवं भूतं रूपं बिभ्रत् सन् अश्वत्थोपस्थे निषसादेत्यन्वयः ॥ ३२ ॥

जरासंज्ञकः कश्चिल्लुब्धको मृगयुः मृगास्यमिवाकारो यस्य तं चरणं मृगशङ्कया विव्याध अयमर्थः एवं भूतायां महारथपरिरक्षितायां तदीयैः छत्रचामरमुकुटकुण्डलाद्यैः भूषितायां रणभूमौ सामान्यस्य जीवस्य मृगवधे प्रवृत्त्यसम्भवात् श्रीकृष्णदर्शनाऽसम्भवाच्च सम्यग्दर्शनाद्यसम्भवाच्च कश्चित् श्रीकृष्णपार्षद एव मुनिशापं स्वविषयेऽपि स्वपादाग्रे मुसलावशेषबाणस्पर्शमात्रेणासत्यं कर्तुं ब्रह्मण्यदेवेन भगवता नियुक्तस्तत्र तत्लीलां जराकारेण पश्यन् शृण्वन् रममाणो भगवदिच्छयैव तत्रागतः ॥ ३१—३६ ॥

भाषा टीका ।

जिस रूप में श्रीवत्स चिह्न की शोभा है तपाये सुवर्ण सरीका जिसका तेज है जो श्याम वर्ण है पीताम्बर दो वस्त्रों से जो रूप शोभित है सुन्दर मंगल दायक है ॥ २९ ॥

सुंदर मंद हास युक्त जिस रूप का मुख कमल है नील केशों से मंडित जिसमें मस्तक है पुंडरीक कमल सरीके जिसके मनोहर नेत्र हैं प्रकाशमान जिसके मकर कुंडल हैं ॥ ३० ॥

तथा कटि सूत्र और यज्ञोपवीत किरीट कड़ा बाजूबंद हार नूपुर कौंधनी मुद्रिका कौस्तुभ से जो रूप विराजित है ॥ ३१ ॥

वनमाला से जिस रूप के सब अंग व्याप्त हैं और मूर्ति धारि अपने शंख चक्रादि सब आयुधों से जो रूप सेवित है ऐसे रूप को धारण करके श्रीकृष्णचन्द्रजी कमलसरीके अपने चरण को दहिने जंघा पर रखकर बैठ गये ॥ ३२ ॥

द्वारका मे मुसल के रेत मे पीछे जो टुकड़ा समुद्र में फेंका था उसको किसी मछली ने लीला था उसी मछली को मारकर उस लोहा के बाण बनाकर जरा नामा एक व्याध उहां गया सो वन के ओट से चरण को मृग का मुख समुझ कर उसने उस बाण को मृग जानकर चलाया ॥ ३३ ॥

फिर पास मे आकर चतुर्भुज पुरुष का दर्शन करके अपने किये अपराध से डरकर मस्तक नमाकर असुर संहारक भगवान के चरणो मे गिर पड़ा ॥ ३४ ॥

फिर बोला कि हे मधुसूदन मैंने नहीं जानकर ऐसा अपराध किया है सो हे उत्तम श्लोके मेरे अपराध को आप क्षमा कीजिये ॥ ३५ ॥

जिन आप का स्मरण सब मनुष्यों के अज्ञान अंधकार को नाश करनेवाला है ऐसा सब शास्त्र तथा महात्मा कहते हैं हे प्रभो ! तिन का मैंने अपराध किया है ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्मशापकृतमेतत्तव नापराध इतिचेत्तत्राह । यस्य तवाऽऽत्मयोगरचितं स्वाधीनमायया रचितं विरिञ्चः अस्य तनया

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

राजेन्द्र सम्यक्कायमुत्पपात कुर्वन्नगाद्विरथ: तद्रीश्वर: दारुकः द्वयोर्व पश्यतः सतः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तं मृगलुब्धकं मृगलोभिनमिति ॥ ३७ ॥

तत्र कृतब्रह्महत्यादिदोषपरिहारसद्भावेऽप्यत्र कृतदोषपरिहारो नास्त्येव तेनाधःपात एवातो भद्र एव भेयानिति भावेनाह । यस्येति । विरिञ्चरुद्रादयोऽस्य विरिञ्चस्य तनया मरीच्यादयो गिरां पतयः बृहस्पत्यादयः ते एते यस्य तवात्मयोगरचितं स्वरूपसामर्थ्यो पायेन कृतं सृष्ट्यादिकं न विदुः तत्र निमित्तमाह । त्वन्माययेति । त्वन्मायया वञ्चकयाऽन्धया विहृतहृदयः प्रलुप्तज्ञानाः यस्मात्तस्मा- दिति शेषः असत्कृतयोऽप्राप्तरूपाधयो निर्गताः अत एव ज्ञान- शून्याः वयं तस्य ते तवपरचरितमञ्जोगृणीमः किं नैव वक्तुं शक्ता इत्यतः एतत्स्तुत्यादिकमप्यन्येतरपापपरिहारोपायाज्ञानादघः पातात्पूर्वमेव मार्जनीयः सुमतय इति केचित्पठन्ति अनेन कैमुत्यन्यायो दर्शित इति भावः ॥ ३८ ॥

भगवान् भक्तवत्सलत्वाभ्मयि भक्तिरेवाखिलपापध्वंसिनीति भावं कृत्वा वक्ति । माभैरिति । मामैभयं माकार्षीः एष कृतः त्वद्वधो मे कामः कामितः काङ्क्षित इत्यर्थः । हिशब्देन दुष्ट- जनमोहनं प्रयोजनं सूचयति । अतः किमस्मै फलं ददासीति तत्राह । याहीति । सुकृतिनां पदमित्यनेन इदमपि सुकृतमेवा- स्तीति व्यनक्ति ॥ ३९ ॥

नेदं प्राकृतपुरुषोक्तवाक्यान्तरेऽपि सन्देहकरमिति भावेनाह । इतीति ॥ ४० ॥

प्रासङ्गिकं समाप्य कथाशेषं प्रस्तौति । दारुक इति । अन्वे- षणमन्वेषणं कुर्वन् तं कृष्णं नाधिगच्छन्विहाय पुनस्तुलसि- कामोदं यस्य स तथा तं वायुमाघ्राय ज्ञात्वा तुलसिकामो- दमाघ्रायाभिमुखम् ॥ ४१ ॥

तत्राश्वत्थमूले कृतकेतनं तं कृष्णं दृष्ट्वा ॥ ४२ ॥

प्रभो ! ते तव चरणाम्बुजमपश्यतो मम दृष्टिः प्रनष्टा अस्तं गता दृश्यमानायाः कथं नाश इत्यतउक्तं तमसीति । कथमाह । शान्ति मङ्गलं शान्तिः प्रशममङ्गल इतियावत् उडुपे चन्द्रे प्रनष्टे सत्युडुपे अयोऽङ्गिभिः चन्द्रस्यावर्तनं विवक्षितम् अन्यथा मध्यमप्रसूयानामपि दिगादिविवेकोपपत्तेरित्यत उडुपपदप्रयोग इति प्राहुरिति इतिपाठे पादपूरणः श्रुतः कृष्णमाह । योऽहन्ते चरणाम्बुजमाश्रितः तस्य मे दृष्टिः प्रणष्टेति योजना ॥ ४३ ॥

इदमदर्शनमाहात्म्यं हरेरिति भावेनाह । इतीति । उदीक्षितः इरिणा ऊर्ध्वं गतो रथः अत्र चेतनानियतरथाद्यचेतनवस्तू- नितराां लौकिकानां भगवन्माहात्म्यस्य सुविदितरूपेषां यामिनी प्रेम- लक्षणसंज्ञया गतिं पश्यतां चेतस्यात्मकानि भवयुतरथादीनि इत्यहो विश्वमूर्तेर्माहात्म्यमिति ज्ञातव्यम् ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इच्छाशरीरिणोऽपि । इच्छाधीनं शरीरं यस्य तेन तदिच्छ- यैव तथाविभाति भजत इति तत्र नाम्यत्कारणं भाव्यमिति भावः ॥ ४० । ४३ ॥

इति ब्रुवतीति । यद्यपि इदानीं रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदावित्येतत् दारुकस्यापि रथादिवदेवागमनमुक्तं तथाप्यत्र तस्य कल्पान्तं तदेकाभिधात्रौत्सरकर्मसंपादनाभिप्रायेणैवेति गम्यते ॥ ४४ ॥ ४५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दैवादेव वरयो व्यथा नाभूत् त्वया तु हिंसनबुद्ध्यैव शरः निक्षिप्त एवेति वेपन्नाह । तत्तस्मान्मा मां माशु जहि अत्र निर्वाचनि त्वयासीद्धेतुनामिव भवनम्—

भगवान् स्वात्ममायाया गतिं तामवलोक्य सः ॥
सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ॥

इति तृतीयोक्तेः सूर्यास्तमय समयेऽपि देवयदूनां पारस्पारिकसां- ग्रामिकवधोऽभूत्तदैव भगवांस्तत्रैव सरस्वतीतीरे उपविवेश तदैव- लुब्धको मृगवधार्थमागत इति वक्ष्यते एतच्च नोपपद्यते षट्पञ्चा- शत्कोट्यधिकानां यदूनां सद्य एव महासांग्रामिके वधे सति तत्प्रबन्धे ठाधरनदीप्लावितं महाकोलाहलव्याप्ते च सति तदैव लुब्धकस्य मृगमारणार्थकागमनं कथं सम्भवेत् कथं वा भीरु जातीनां मृगाणां तत्र स्थिति सम्भावेस्यतो वहूनां तात्कालिको वधो मिथ्या भूतोऽपि भगवता अर्जुनादीन् प्रति प्रत्यायितो युधिष्ठिरादीनां स्वभक्तानां करुणारसमयः प्रेमविमर्शनार्थं वैरा- ग्यार्थं च तद्भ्रान् प्रति धर्मसंकोचककुमतोत्थापनार्थं वस्तुतस्तु कतिपयदिनानि पीत्वा देवेष्वन्तर्हितेषु तत्र निःशब्दे निर्जने प्रदेशे लुब्धक आगत इति तत्त्वम् ॥ ३७ ॥

गिरां पतयो वेदद्रष्टारोऽपि न विदुस्तस्य तव एतत् आत्म योगरचितमञ्जःचाञ्जसा असङ्कृतया दुर्जातयो वयं किं गृणीमः ॥ ३८ एष मे काम एव ब्रह्मशापो मया त्वङ्गीकर्तव्य इति भावः कृत्यर्थः स्वर्गमप्राकृतं सुकृतिनां प्रधस्तसुकृतवतां भक्तवत्कानां पदं वैकुण्ठं याहि सुकृतिनामासितमर्यादाणां भवधीय: ॥ ३९ ॥

इच्छाशरीरिणा इच्छयैव प्रधस्तशरीरधारी भवेतत्तेन ॥ ४०—४५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्तस्मात् माम्माम माशु जहि यद्वा माशु मा जहि किन्त्वनेन देहेनैव दुर्गतो नियोऽप्यपुनर्नरके घोरे निपातय इति भावः ॥ ३७ ॥

नन्वेवं सान्त्वनं न त्वां पीडयामि किन्तु तव वाक्यं ममाति प्रीतिकरमतोऽन्यदपि मदीप्सितं किञ्चिद्रूहीयत आह । यस्येति । यस्य तव आत्मयोगरचितम् स्वसङ्कल्परचितम् एतच्चरितम् विरिञ्च्यः यस्य तनयाः रुद्रादयश्च ये चान्ये गिरां पतयो वेदार्थ- द्रष्टारः तेऽपि न विदुः एतत्त्वन्मायया पिहितहृदयः तस्य ते असत्तयः पापयोनयो वयम अञ्जसा किं गृणीमः कथं वर्ण- याम: ॥ ३८ ॥ ३९ ॥

इच्छयैव दृश्यमदृश्यं च भवति द्विभुजं चतुर्भुजमनन्तं भवति बालतरुणादिरूपं भवति विश्वरूपं भवति एकधा भवति शतधा सहस्रधा च भवतीत्येवमिच्छानुरूपशरीरित्वमित्यर्थः ॥ ४० ॥

तमन्वगच्छन् दिव्यानि विष्णुप्रहरणानि च ।
तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥
गच्छ द्वारवतीं सूत ! ज्ञातीनां निधनं मिथः ।
सङ्कर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥
द्वारकायां च न स्थेयं भवद्भिश्च स्वबन्धुभिः ।
मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥
स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ।
अर्जुनेनाविताः सर्वे इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥
त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ।
मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥
इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ।
तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीं ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे यादवान्तर्धानं नाम
त्रिंशोऽध्यायः ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दारुकः श्रीकृष्णसारथिः अन्विच्छन् अन्वेषयन् ॥ ४१ ॥
तं श्रीकृष्णं पतिं तत्र दृष्ट्वा पादयोर्निपपात ॥ ४२—४३ ॥
दृशोचतः पश्यतः सतः ॥ ४४—४५ ॥

भाषा टीका ।

हे वैकुण्ठ ! तिससे ऐसे पापी हिंसक लुब्धक मेरे को आप जल्दी से मार दीजिये जिससे की मैं फिर इस प्रकार का महापुरुषों का अति क्रमण नहीं करूँ ॥ ३७ ॥

जिन आपके आत्म योग से रचित कार्य को ब्रह्मा-रुद्र आदि के जो जो इस जगत् के पति हैं जो वेदों के जानने वाले हैं वे नहीं जानते हैं उन सभों की दृष्टि आपकी माया से लुप्त हो गई है तब इस आपकी लीला को सहज से खोटे मार्ग वाले हम लोग कैसे जान सकते हैं ॥ ३८ ॥

श्रीभगवान् बोले हे जरा ! तु मत डर यह कार्य सब मैंने किया है अब तु मेरी आज्ञा से धर्मात्मा लोगों के जाने लायक स्वर्ग स्थान को चला जा ॥ ३९ ॥

इच्छा से शरीर धारि भगवान् की ऐसी आज्ञा होते मात्र उस जरा ने भगवान् के चरण पकड़कर प्रणाम किया उसी वखत आकाश से विमान आया तब उसपर बैठकर वह स्वर्ग को चलागया ॥ ४० ॥

इधर दारुक सारथि भी कृष्ण भगवान् को ढूँढता हुआ नहीं मिलने पर तुलसी की सुगंधी के वायु को सूँघकर भगवान् के सन्मुख चला आया ॥ ४१ ॥

उहाँ पर उस दारुक सारथी ने देखा कि बड़े तेज वाले आयुधों से भगवान् आवृत हो रहे हैं औ पीपल के पेड़ के नीचे उनने निवास किया है तैसे ही अपने पति को देखकर रथ से उतर कर स्नेह से अत्यन्त व्याप्त होकर आखों में आंसुओं को भरकर चरणों में गिरपड़ा ॥ ४२ ॥

फिर बोला कि हे प्रभो ! आपके चरण कमल के न देखने से मेरी दृष्टि नष्ट होगई सब अंधेरा हो गया मेरे को कोई दिशा नहीं मालूम पड़ी कहीं शान्ति नहीं मिली जैसे रात्र में चन्द्रमा के डूबने से होता है ॥ ४३ ॥

उस सारथि के ऐसे कहते ही सारथी के अधीन जो गरुड के ध्वजा का रथ था सो शीघ्र ही आकाश को चला गया हे राजेन्द्र ! उसके देखते देखते घोड़ा ध्वजा आदि के सब साथ ही चले गये ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निर्याणं योगमार्गेण मद्दशामिति स्वेच्छाशरीरामिप्रायेण ॥ ४६-४७ ॥
अविता रक्ष्यमाणा इन्द्रप्रस्थं गमिष्यथेति ब्रूहीति पूर्वेणान्वयः ॥ ४८ ॥
मन्मायारचनामेतां विज्ञायेति निजमूर्तेरन्तर्हितत्वात् शोकं माकुर्वित्यर्थः ॥ ४९ ॥
कुलस्य विनष्टत्वाद्दुर्मनाः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रिंशोऽध्यायः ॥ ३० ॥

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी ।

तं रथमनु । तेन रथादीनामाकाशगमनेन ॥ ४५ ॥
वस्तुतस्तु निधनं नितरां धनम् अप्रकटधामगमनम् ॥ ४६ ॥
प्लावयिष्यति प्रभितः प्लावनेनाऽवरिष्यति ॥ ४७—५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणी ।
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः विष्णुप्रहरणानि भगवदायुधानि चक्रादीन्यपि तं रथमन्वगच्छन् तेनायुधानामूर्ध्वगमनेनातीव विस्मित आत्मा मनो यस्य तं सूतम् ॥ ४५ ॥

तत्किमेवाह । गच्छेति चतुर्भिः । हे सूत ! मिथो युद्धेन ज्ञातीनां निधनं सङ्कर्षणस्य रामस्य निर्याणं मद्दशामेवमवस्थिति च बन्धुभ्यो ब्रूहि ॥ ४६ ॥

द्वारकायां चेति चतस्रश्च ॥ ४७ ॥

तर्हि किं विधेयं क गन्तव्यमत आह । सं चमिति । परिग्रहं देहानुबन्धि नोऽस्माकं पितरौ देवकीवसुदेवौ चादाय सर्वे यूयमर्जुनेनाविता रक्षिताः सन्त इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥

तर्हि मम का गतिरित्यत्राह । त्व मिति । त्वन्तु मद्धर्मं भागवतधर्ममास्थायानुष्ठाय ज्ञाननिष्ठः मद्भक्तियोगनिष्ठः उपेक्षकः उपेक्षित शब्दादिविषय एतां जगतीं मन्मायया रचितां विज्ञाय उपशमं रागाद्यकलुषतां व्रज प्राप्नुहि ॥ ४९ ॥

तं श्रीकृष्णं परिक्रम्य तस्य पादौ शिरस्युपाधाय दुर्मनाः दुःखितमनाः भगवद्वियोगादिति भावः । पुरीं द्वारकां ययौ ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेन रथादिगमनेन ॥ ४५—४८ ॥

पुत्रादावुपेक्षकः एतां संसारभूमिमन्मायया मदिच्छया रचना प्रकारो यस्याः सा मन्मायारचना ताम् ॥ ४९ ॥

दुर्मनाः दुःखितान्तःकरणः पुरीं द्वारवतीसंज्ञाम् ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निधनमिति वास्तवार्थे नितरां धनम् अप्रकटलीलासंपत्प्राप्ति रूपान्तर्धानगतिरूपाम् ॥ ४६ ॥

समुद्रः प्लावयिष्यतीति परितः प्लावनमपि तेषां त्याजनार्थमेव प्लावनमात्रमुक्तम् ॥ ४७ ॥ ४८ ॥

अथ दारुकसान्त्वनाय मौसलाद्यर्जुनपराभवपर्यन्तायाः लीलाया मायेन्द्रजालवद्भिन्नत्वमुपदिशति । त्वमिति । त्वन्तु दारुको ज्ञाननिष्ठो मदीयलीलातत्त्वज्ञः मद्धर्मं मम स्वरूपप्राप्तिपालयितृत्वरूपं स्वतुल्यपरिकरभोगित्वरूपं च स्वभावम् अस्थाय विलक्ष्य एताम् अधुना प्रकाशितां सर्वामेव मौसलादिलीलां मम मायैव इन्द्रजालवद्रचितां विज्ञाय उपेक्षको बहिर्दृष्ट्या जातशोकमुपलमायाः उपशमं चित्तचाञ्चल्यनिवृत्तिं व्रज प्राप्नुहि दुःखेनान्ये तावन्मुह्यन्तु नाम तव तथा मोहो न युक्त एवेति ध्वनितम् अत्र श्रीकृष्णस्य स्वयं वैकुण्ठावतीर्णत्वेन सिद्धत्वाद्देतासिद्धत्वात्सन्निहितार्थत्वात् अन्यथा व्याख्यानमेव प्रत्यक्षप्रतीतिविषय इति विवेकव्यं दृश्यते चेयं परिपाटी स्वर्गपर्वणि प्रतीतिः श्रीभीमादिनरकं श्रीयुधिष्ठिरं प्रति धर्मराजवचनम्—
नच ते भ्रातरः पार्थ ! नरकस्था विशां पते ! ।
मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ इति ॥ ४९ ॥

तथापि बहिर्दृष्ट्या दुर्मनाः ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गच्छेति रथस्य वैकुण्ठप्रस्थापनेऽपि सारथेस्तस्य वैकुण्ठेऽप्रस्थापनं सर्वत्र तात्कालिक वृत्तज्ञापनार्थं तथा वैकुण्ठादागतस्य तस्येह नित्यपार्षदानामुद्धवादीनां संगतः प्रेम्णोलिपूर्त्तिं दृष्ट्वा द्वारकाया अप्रकटप्रकाशगतलीलायामेव प्रवेशनार्थं चेतिगम्यते मद्वचामिति ब्रुवन् मायिमीमवस्तुभूतां लीलां सूचयति ॥ ४६—४९ ॥

ननु सच्चिदानन्दात्मकस्य स्वविग्रहस्य रामादिविग्रहस्य चैतादृशः प्रकारोऽयं क इति कृपयामामाचक्ष्वेत्यत आह । मन्मायेति एतां मन्मायामयीं लीलाम् ॥ ४९—५० ॥
इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रिंश एकादशेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निर्याणमुक्तप्रकारम् ॥ ४६—४७ ॥

अविताः रक्ष्यमाणाः इन्द्रप्रस्थं गमिष्यथेति ब्रूहीति पूर्वेण सम्बन्धः ॥ ४८ ॥

एतां प्राकृतविभूतिं मन्मायारचितां विज्ञाय शमं शान्तिं । व्रज प्राप्नुहि ॥ ४९ ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रिंशाध्यायार्थप्रकाशः ॥ ३० ॥

भाषा टीका ।

उस रथ के पीछे विष्णु भगवान् के सब दिव्य चक्रादिक आयुध भी चले गये इस चरित्र को देखकर अत्यन्त विस्मित भये अपने सारथि को देखकर जनार्दन भगवान् बोलते भये ॥ ४५ ॥

हे सात्यकी सारथि ! तुम अभी द्वारका को जाओ वहां जाकर सब से इन बन्धुओं के आपस से अन्तर्धान न होने का समाचार कहो और सब बन्धुओं से बलदेवजी के जाने का हाल और हमारी भी इस स्थिति को कहो ॥ ४६ ॥

और तुम लोगों को बन्धुओं के सहित किसी को द्वारका में नहीं रहना चाहिये जिस वखत मैं पृथिवी में अन्तर्धान होऊंगा उसी वखत द्वारका को समुद्र डुबादेवैगा ॥ ४७ ॥

तुम सब लोग अपने कुटुम्बों को साथ में लेकर निकला रस्ता में अर्जुन तुमारी रक्षा करते रहैंगे तब दिल्ली को चलेजाना ॥ ४८ ॥

हे सारथि तुम तो हमारे भागवत धर्मों को आश्रय कर के ज्ञान में निष्ठा रखो संसार की उपेक्षा करो यह सब युद्धादिक होना हमारी इच्छा मात्र जानो इसका कोई शोच मत करो और शांति को प्राप्त होजाओ ॥ ४९ ॥

भगवान् के ऐसे कहने से सारथी ने श्रीकृष्ण भगवान् की प्रदक्षिणा करके वारंवार नमस्कार किये फिर उन के चरणारविन्द को मस्तक में लगाकर वियोग से दुःखित होकर द्वारका को चले गये ॥ ५० ॥

इति श्री भागवत एकादश स्कन्ध तीस में अध्याय की

भाषा टीका समाप्त ॥ ३० ॥

---

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥

## अथैकत्रिंशोऽध्यायः ॥

। श्रीशुक उवाच ।

अथ तत्रागमद्ब्रह्मा भवान्या च समं भवः ।
महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १ ॥
पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ।
चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ २ ॥
द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ।
गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ ३ ॥
ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ।
कुर्वन्तः सङ्कुलं राजन् ! भक्त्या परमया युताः ॥ ४ ॥
भगवान् पितामहं वीक्ष्य विभूतीरात्मनो विभुः ।
संयोज्याऽऽत्मनि चाऽऽत्मानं पद्मनेत्रे न्यमीलयत् ॥ ५ ॥
लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम् ।
योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत्स्वकम् ॥ ६ ॥
दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ।
सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु तं ययुः ॥ ७ ॥
देवादयो ब्रह्ममुख्या न विशन्तं स्वधामनि ।
अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकत्रिंशे स्वकं धाम जगाम भगवानितः ।
तमेवानु ययुः श्रीर्या वसुदेवादयस्ततः ॥
देवान् यदूनिवाऽऽवादी भूपो देवान्विधाय च ।
श्रीकृष्णः स्वेच्छया धाम स्वतन्वैव समाविशत् ॥

मुनयः सनकादयः प्रजेश्वरा मरीच्यादयः ॥ १ ॥ द्विजा गरुडलोकनिवासिनः पक्षिणः मैत्रेयादयो वा ॥ २ ॥ भगवतो निर्याणं द्रष्टुकामाः सन्तः परमोत्सुकास्तद्गमनात् [illegible]औत्सुक्यकृतं महोत्सवमाह सार्धेन । गायन्तश्चेति ॥ ३-४ ॥

विभूतीरिन्द्रादींश्च पद्मनेत्रे न्यमीलयदित्यस्यायं भावः पूर्वं ब्रह्मादिभिः 'स्वलोकान् लोकपालान्नः पाहि वैकुण्ठ ! किङ्करान्' इति प्रार्थितस्तदिदानीं च स्वं स्वं लोकं प्रति नेतुमागतांस्तान्द्रष्टुं च तेषु तान्नियमयितुं समाधिमिव कुर्वन्नेत्रे न्यमीलयदिति ॥ ५ ॥

योगिनामिव स्वतनुदग्धृत्वभ्रमं वारयति । लोकाभिरामामिति । अयमर्थः योगिनो हि स्वकलेवरमुत्सृज्य स्वां तनुमाग्नेय्या योगधारणया दग्ध्वा लोकान्तरं प्रविशन्ति भगवांस्तु न तथा किन्त्वदग्ध्वैव स्वतनुसहित एव स्वकं धाम वैकुण्ठमविशत् तत्र हेतुः लोकाभिरामाम् लोकानामभिरामो॰

**सौदामन्या यथाऽऽकाशे यान्त्या हित्वाऽभ्रमण्डलम् ।**
**गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ ९ ॥**
**ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ।**
**विस्मितास्तां प्रशंसन्तः स्वं स्वं लोकं ययुस्तदा ॥ १० ॥**
**राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य ।**
**सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चाऽऽत्ममहिम्नोपरतः स आस्ते ॥ ११ ॥**

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

सविहायामात् धारिनस्तु वह्निना स्वतनोर्दाहासामर्थ्यं दर्शयामा-सेति तत्पक्षे वह्निमध्य एवं रूपं ममैतद्ध्यानमङ्गलमिति तदु-क्तेरिति इत्यवश्य ॥ ५ ॥ ६ ॥

सम्प्रवर्षादयो ययुरिति तत्परिमाणकतानाङ्कुमतानां वहवो-द्यानादिति भावः ॥ ७ ॥

तदा श्रीभगवत्यन्तर्हिते सति सर्वेषा अपि कृष्णगतं हृति वितर्कयन्तोऽपि ब्रह्मादयो देवाः स्वधाम गच्छन्तं तं कृष्णमवि-ज्ञातगति दद्युः तस्य गतिं न ददृशुरिति कश्चितोऽर्थः कश्चित् कश्चित्किंचिद्ददृशुश्चेत्यतोऽति विस्मिता बभूवुरित्यर्थः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एकत्रिंशाध्याये श्रीमद्भगवतः परमधामगमनोत्सवो निरूप्यते मुनयः श्रीसनत्कुमारनारदादयः प्रजेश्वराः मरीच्या-दिसहिताः ॥ १ ॥

द्विजाः मैत्रेयादयः ॥ २ ॥

भगवतो निर्याणं परमधामगमनं द्रष्टुकामाः सन्तः परमो-त्सुकास्तत्रागमन् तत्कृतं महोत्सवमाह । गायन्त इति सार्धेन ॥ ३—४ ।

विभूतीः इन्द्रादीन् ॥ ५ ॥

ननु पितामहादिसमीपे मीलितपद्मनेत्रो हरिः किं कृतवान् इत्यत आह । लोकाभिरामामिति । पुरुषार्थसाधनध्यानतया अना-भिरामां स्वस्यापि विहारध्यानतया तनुमवेद्य विष्णुधारणा-ध्यानादिना गच्छन्तीं भूमिं स्वावियोगाधिना दग्ध्वा सन्तापविशिष्टा स्वकं धाम आविशत् ननु केन प्रकारेणाविशदित्याह । योगधा-रणेति । आग्नेय्या अग्नि क्षेपनया यया स्वः निर्गुणरूपः स्वरूपेण रूपेण स्वकीयया दृष्टा भवति एवं भूतया योगधारणया स्वसंकल्प क्रियया दृश्यमैव प्राग्वर्तिनेन रूपेणाऽऽदृष्टो ऽभवदि-त्यर्थः ॥ ६ ॥

एवं भूते परमाद्भुते भगवद्गमने महोत्सवमाह । दिवीति । इत्यथे-ऽथ विचरयां सत्यमित्याह ॥ ७ ॥

योगधारणयाऽऽत्मनो ऽनन्तमासिवान्तगतित्वं दर्शितं तदेव स्पष्टयति । देवा इति ब्रह्मचान् । अविज्ञाततगतिं कृष्णं स्वधामनि विशन्तं दद्युः अतो विस्मिता आसन् ॥ ८—१० ॥

भाषा टीका।

श्रीशुकदेवजी बोले इसके अनन्तर वहाँ पर ब्रह्मा तथा पार्वती के सहित महादेवजी इन्द्रादिक सब देवता प्रजा पतियों के सहित मुनिगण ॥ १ ॥

पितर सिद्ध गन्धर्व विद्या धर महोरग चारण यक्ष राक्षस किन्नर अप्सरा गरुडलोक के पक्षि ॥ २ ॥

वे सब लोग भगवान् के गमन के दर्शन में बड़े आनंदित होकर आये और भगवान् के जन्म कर्म के चरित्रों को गाते कीर्तन करते हुए ॥ ३ ॥

अपने विमानों के समूहों से आकाश को व्याप्त करते हुवे हे राजन् परम भक्ति से युक्त होकर फूलों की वर्षा करने लगे ॥ ४ ॥

सर्व व्यापक भगवान् ने भी ब्रह्मा तथा अपनी इन्द्रादि-विभूतियों को देखकर अपने स्वरूप में मन लगाकर दोनों नेत्र कमलों को बंद करलिये ॥ ५ ॥

सब लोगों के मन को हरने वाली मूर्ति जोकि धारणा तथा ध्यान में मङ्गल दायक है उस मूर्ति को अग्नि सम्बन्धि योगियों की धारणा से भी नहीं जलाकर उसी स्वरूप से अपने धाम को चले गये ॥ ६ ॥

स्वर्ग में देवताओं के नगारे बजे आकाश में से फूलों की वर्षा होने लगी उसी वखत धर्म सत्य धृति कीर्ति श्री ए सब भूमी में से उनके पीछे चले गये ॥ ७ ॥

ब्रह्मादिक देवता जिनकी गति को कोई नहीं जानता है उनको अपने धाम को जाते समय में नहीं जानसके तो बड़े विस्मय युक्त हो गये ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अविज्ञातगतित्वं दृष्टान्तेन स्पष्टयति । सौदामन्या गतिर्यथा मर्त्यैर्न लक्ष्यते दैवैस्तु लक्ष्यते तथा अभ्रमण्डलं हित्वा गच्छतः श्रीकृष्णस्य गतिर्दैवैरपि न लक्ष्यते किन्तु तत्रापि दैवैरेवमर्थः ॥ ९—१० ॥

मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम् ।
जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहम् ॥ १२ ॥
तथाप्यशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ।
नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं [1] स्वस्थगतिं प्रदर्शयन् ॥ १३ ॥
य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम् ।
प्रयतः कीर्तयेद्भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥ १४ ॥
दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ।
पतित्वा चरणावस्रैर्न्यषिञ्चत्कृष्णविच्युतः ॥ १५ ॥
कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ।
तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्छिताः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभिप्रायापरिज्ञानात्प्रथमं परिक्लिष्टं ततश्च दृष्टान्तेन स्पष्टमुक्ते हृष्टं दृष्ट्वा पुनस्तमेवार्थं प्रपञ्चयति त्रिभिः । परस्य सर्वकारणस्य तनुभृत्सु यादवादिषु जननाप्ययेहाः आविर्भावतिरोभावरूपाश्चेष्टा मायया मनुष्यकरणमात्रमसौ हि नटो यथाऽविकृत एव नानारूपैरात्मानं विडम्बयति तद्वत् मा स्तां तावद्यादवादिषु जन्मादिशङ्का यावद्विश्वसर्गनिरोधादिष्वप्यसावविकृत एवास्त इत्याह । सृष्ट्वेति । आत्मना स्वयमेवेदं जगत्सृष्ट्वाऽन्तर्यामित्वेनानुविश्य आत्ममहिम्ना स्वमहिम्नि उपरत आस्ते ॥ ११ ॥

न पुनरन्यथा मन्तव्यं यतोऽस्मिन्नेवावतारे तत्प्रभावो निरतिशयो दृष्ट इत्याह । मर्त्येनेति । यमेन स्वलोकं प्रति नीतं गुरुसुतं मर्त्येन तेनैव शरीरेण य आनयदानीतवान् शरणदः शरणागतरक्षकस्त्वां च ब्रह्मास्त्रदग्धं यो रक्षितवान् यश्चान्तकानामन्तकमपि ईशं श्रीरुद्रं बाणसंग्रामे जितवान् मृगयुं लुब्धकं सदेहं स्वः स्वर्गमनयत् स्वे असौ स्वावने स्वरक्षणे अनीशोऽसमर्थः किम् ॥ १२ ॥

ननु यदि समर्थस्तर्हि किञ्चित्कालमत्रैव तेनैव वपुषा किं नातिष्ठत्तत्राह । तथापीति । यद्यप्युक्तप्रकारेणाशेषस्य जगतः स्थित्यादिष्वनन्यहेतुर्निरपेक्ष एव कारणं स्वयं यद्यस्मादशेषशक्तिधृक् तथापि यादवान् संहृत्य निजं वपुरत्रावशिष्टमवशेषितं प्रणेतुं कर्तुं नैच्छत् किन्तु स्वमेव लोकमनयत् तत्र हेतुः मर्त्येन देहेन किं न किञ्चित्कार्यमिति स्वस्थानामात्मनिष्ठानां दिव्यां गतिमेव प्रकटां दर्शयन् अन्यथा तेऽपि दिव्यां गतिमनादृत्य योगबलेन देहसिद्धिं विधायात्रैव स्थातुं यतेरन् तन्मा भूदित्येतदर्थमिति भावः ॥ १३ ॥

य एतामुक्तप्रकाराम् पदवीं गतिम् ॥ १४ ॥

तदैव भगवता स्वलोकं गच्छता वसुदेवादीनामपि तत्तापे उपायश्चिन्तित आसीत्तमाह । दारुक इत्यादिना ॥ १५—१७ ॥

श्रीराधारमणदासगोस्वामिविरचिता—
दीपिकादीपिनी टिप्पणी ।

मर्त्यैरिति विशेषणस्य व्यावर्त्तकत्वात् देवैस्तु सहपत इति व्याख्यातम् एवं परत्रापि अत एवार्थैकार्थत्वादित्यर्थः इत्युक्तम् ॥ ९ ॥ १० ॥

तमेवार्थं ताद्दृशतल्लीलाया मायिकत्वरूपार्थं यावता यतो हेतोः स्वमहिम्ना परमानन्दस्वरूपावस्थानेन ॥ ११ ॥

अन्यथा जीववज्जन्मादिप्रकारत्वया यतो हेतोः । स्वस्य स्वानां यदूनां चावने रक्षणे असमर्थः किम् अपि तु परमसमर्थः तस्मात्त्वदन्यथाशङ्केन बहिर्मुखानां प्रतारणमात्रार्थं किन्तु सशरीरं तेषां स्वस्य च स्वलोकगमनमेवात्रैव युक्तमित्यर्थः ॥ १२ ॥

अत्रैव भूर्लोक एव । यादवाश्च विहारोपयुक्तत्वेन त्यक्तुमशक्यान् संहृत्य अप्रकटधाम्नि संगमय्य । अत्र भूर्लोकेऽवशक्यान् कथानुमिच्छाविरहे अन्यथा मर्यादामतिक्रम्य बहुकालावस्थाने तेऽपि योगिनोऽपि अत्रैव मर्त्यलोक एव । तत् मर्त्यलोकविषयावेशेन रमणामिति वैराग्यवर्त्मनं वाञ्छं प्रयोजनमान्तरीयान्तु नित्यपरिकरवियोगासहनमेवेति ज्ञेयम् ॥ १३ ॥

उक्तप्रकारां शरीरपरिकरसहिताम् गतिमप्रकटप्रकाशगमनम् ॥ १४ ॥

दारुक इति सार्द्धकम् । तत्प्राप्त्यै स्वलोकप्राप्त्यै । निधनं वस्तुतस्तु नितरां धनं निजलोकगमनम् ॥ १५ ॥

तच्छ्रुत्वेति सार्द्धकम् । अत्र वियोगस्य यथोनाम्रायोन्तदापेक्षणामिति ज्ञेयम् ॥ १६–१७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

जगन्मोहनमेव विवृणोति । राजन् ! परस्येत्यादिना तनुभृज्जननाप्ययेहा इतरभूततुल्यजननाप्ययेहा जन्मनो गर्भसम्बन्धः सापेक्षत्वं देहप्रहाणं च मोहनमित्यर्थः ॥ ११–१२ ॥

[1] स्वच्छगतिमिति विज० पाठः ।

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अपि जन्ममरणे स्वपरेषां दर्शयामि तथा तत्र मरणं कश्चिद्दर्शयामास । तत्कथोच्यते कस्य चिदिन्द्रजालिकस्य महाराजाग्रत एव तद्वस्त्र वस्त्रालङ्कारमुद्रादिषु मध्ये रत्नमालामहं गृह्णामि त्वं न स्वर्णमुद्रा अहमेव गृह्णामि न त्वं सास्सा हस्तिकोऽयमश्वो मयैव अग्राह्यो न त्वयेत्येवं तत् पुत्रपौत्रभ्रात्रादीनां कलहे पारस्परिकास्त्राघातेन प्रायः सर्वेषामेव मरणमभूत् तद्दृष्ट्वा महासभोपविष्टं नृपतिं प्रत्यैन्द्रजालिक ऊच भो राजन्नतः परं मे जीवितेन इन्द्रजालविद्या यथा शिक्षिता तथैव श्रीगुरुचरणप्रसादात् योगविद्यापि साधु शिक्षिता अतस्ते तयैव देहत्यागकौतुकं कर्तव्योऽपि सांप्रतं पुत्रकौतिकीर्यस्य तवैषाप्रतः क्रियते इत्युक्त्वा स्वस्तिकासने उपविश्य प्राणायामप्रत्याहारधारणाध्यानसमाधिनिरतस्तूष्णीमभूत् मुहूर्तानन्तरं तु नह्याहतः समाधिजोऽग्निरतिप्रचण्डउद्भूय तद्देहं भस्मीचकार ततस्तत्पत्न्यः सर्वाः शोकातिरेकमग्निमेव विविशुरथ त्रिचतुरदिवसानन्तरं तेनैवेन्द्रजालिकेन स्वदेशं गत्वा राजानं प्रति कश्चिन्नू पुत्रो प्राहितः भो राजन् स्वाहितमानेनसकलत्रपुत्रपौत्रभ्रातृकान्त्वद्दत्तानि बहुधनान्यादाय त्वद्विशस्थैजनैरलक्षित एव स्वभवनमागत इमम्त्र वर्तै तत्मात्रत्वप्रकाशितायाः इन्द्रजालविद्यायाः पारितोषिकं यदुचितं तन्मह्यं दातव्यमिति दृष्टान्तविवृतिः दार्ष्टान्तिकं विवृणोति आत्मना स्वेनैव इव मुनिशापतिरूपधनमहोत्पातपारस्परिककलहशस्त्रास्त्रप्रहारादिकं वैफल्यं सृष्ट्वा अनुविश्य तन्मध्ये स्वयमपि प्रविश्य विहृत्य तैस्सैः सहस्रयमपरकाग्रहणेन यथा खेलित्वा अन्ते संहृत्य च आत्ममहिम्ना मायातः उपरतः सन्नास्ते इति ॥ ११ ॥

किञ्च तस्यालौकिकं कर्मानुस्मृत्य दुर्भावनामिमां सर्वथा सन्त्यजेत्याह । मर्त्येनेति । यः श्रीकृष्णः यमलोकं गतमपि गुरुपुत्रं गुरोर्जातेन पञ्चजनभक्षितेन मर्त्येनैव देहेनोपलक्षितम् आनयत् नच ब्रह्मतेजसा वेत्रवत्तं सन्तानं त्वां च ब्रह्मास्त्रदग्धं जन्मकाले अन्तकाले च ब्रह्मशापास्त्रदग्धं शरणाद: स्वचरणमेव शरणं ददानः समानयत् तस्मादुचिततयानित्यर्थः । किमन्यद्वक्तव्य यस्यान्तकानामन्तककमीशं महारुद्रमपि बाणसंग्रामे जितवान् अहं पश्य मृगयुं जराख्यं स्ववैकुण्ठविशेषं सशरीरमेव प्रापयामास स कथं स्वस्य स्वानां यदूनाञ्च अवने ईशो न भवति । अपि तु भवत्येवातः स स्वपार्षदैः सह सदापि प्रपञ्चगोचरीभूतोऽपि विराजितुं शक्नोत्येवेति भावः ॥ १२ ॥

तथापि यद्यप्येवं निरङ्कुशैश्वर्यं तस्येत्यर्थः तत्र निरङ्कुशैश्वर्यमाह । अशेषाणामेव लोकानां स्थितिसम्भवाप्ययेष्वनन्यहेतुः निरपेक्षः स एवैकः कारणं यतोऽन्याः शक्तयो इति सः । तथापि देवान् स्वर्गं प्रस्थाप्य वपुः सपार्षदस्य स्वस्य शरीरं शोषितम् मवशोषितं प्रयोतुं मर्त्यलोके प्रकटीभूतं कर्तुं नैच्छत् अपि त्वन्तर्धापयितुमैच्छत् कुतः मर्त्येन मर्त्यलोकेन किं भगवता मर्त्यलोकापेक्षा न कृतेति भावः । किन्तु स्वर्गलोकापेक्षा कृतैव । स्वर्गस्थानां ब्रह्मादीनां प्रार्थनयैव मर्त्यलोके प्रादुर्भावात् तेषामेव प्रार्थनया वैकुण्ठञ्च जगामेति व्यञ्जयन् विविनक्ति । स्वस्थगतिं प्रदर्शयन् स्वर्गस्थान् ब्रह्मादीन् प्रति गतिं वैकुण्ठगमनं प्रदर्शयन् ज्ञापयन् रूपान्तरन्तु प्रादायान्तरधाद्यदन्तु स्वाविर्भावं लोकलोचनमित्याद्युक्तवाक्यविरोधाद्वस्तुत्वसम्मतत्वाच्च सकैरग्राह्यम् । तथाह्युक्तमेतत्वं भक्ताग्राह्यत्वञ्चोद्धवेनोक्तं यथा । देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः । भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ इति ॥ १३ ॥

पदवीं निर्याणमार्गम् अत्र परामिति अनुत्तमामिति वाङ्मां भगवतो निर्याणलीलेयं सच्चिदानन्दात्मिकैव सर्वथा छलनाकपट— मायिकत्वप्रतीतिस्त्वकाश्चित्करी सुक्ष्यामिति द्योतितम् ॥ १४ ॥ १५ ॥

तच्छ्रुत्वेति । पूर्वं यथा भगवन्नित्यपरिकरप्रद्युम्नानिरुद्धादयश्च एव द्वारकातः प्रभासमाजग्मुस्तथैव देवकीरोहिण्यादयश्च प्रभासमागमनं मूर्च्छितास्तु देवक्यादयः द्वारकायां प्रापञ्चिकलोकदृष्ट्या उपरा न तु वस्तुत इति भावः ॥ १६-१८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु सर्वात्मनः सर्वदा सर्वत्र सर्वं कर्तुं समर्थस्य सर्वगतस्य वसुदेवगृहे प्रादुर्भावः प्रभासे पुनरन्तर्भावः किमर्थः इत्यत आह । राजन्निति । ननुभृत्सु लीलायोग्येषु सत्सु जन्माप्ययेहाः प्रादुर्भावतिरोभावचेष्टाः मायया वयुनेन स्वसङ्कल्पेन विडम्बनं लीलामात्रमेव हि यथा नटस्य अविकृतरूपस्य नानावेषाविर्भावाश्च विश्वसृष्ट्यादिकमपि लीलामात्रमित्याह । सृष्ट्वेति । आत्मना स्वयमेवेदं सृष्ट्वा अन्तर्यामित्वेनानुविश्य तत्र नानावतारैर्विहृत्य अन्ते द्विपरार्धावसाने कृत्स्नं संहृत्य आत्ममहिम्ना स्वमहिम्ना उपरत आस्ते "लोकवत्तु लीलाकैवल्यम्" इति सूत्रमत्रानुसंधेयम् ॥ ११ ॥

ननु रथादीनां तादृशसंग्रामे ऽखण्डितत्वं लोकान्तरगमनं चायुक्तमिव प्रतीयते इत्यत आह । मर्त्येनेति । मर्त्येन गुरुतो जातेनैव शरीरेण इदं बाणयुद्धे अखण्डितोपकरणो एवं जिष्णुं जितवान् सावने स्वकीयरथाद्युपकरणोपेतस्य स्वर्गे स्वलोकं प्रति सत् प्रेषणे च किमनीशः ॥ १२ ॥

ननु भगवत्प्रयाणे सति सत्यसमाधीनामिहोच्छेदो जातोऽतस्तदर्थं पूर्णकामस्य परमलोकेऽपि कार्याभावात् भूलोकवासेनैव च सार्वत्रिककार्यसम्भवाच्च तेन वपुषा भूर्लोके कुतो नावात्सीदित्यत आह । तथेति । यद्यप्यशेषशङ्काधृक् यत्र क्व चन वासनापि स्वांशिककार्यनिर्वाहकः यतः अशेषस्य विश्वस्य स्थित्यादिषु अनन्यहेतुः तथापि अस्मिन् लोके वपुः शोषितं चिरकालमत्र वासं कर्तुं नैच्छदित्यर्थः । अपितु भगवत्स्वकं लोकं प्रकर्षेण नेतुमैच्छत् किं कुर्वन् स्वस्मिन् वासुदेवे तिष्ठन्तीति स्वस्थास्तद्भक्ताः तेषां गतिं मर्त्येन लोकेन वासार्थं वाञ्छितेन किं न किमपि यतः श्रीकृष्णेनास्मत्स्वामिनापि परित्यक्तोऽयमित्येव सूनां प्रदर्शयन् प्रस्थापयामित्यर्थः ॥ १३ ॥

एतां पूर्वोक्तां पदवीं गतिम् ॥ १४ ॥

वसुदेवोग्रसेनयो रथे इति शेषः ॥ १५—१७ ॥

---

तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ।
असवः शेरते यत्र ज्ञातयो घ्नन्त आननम् ॥ १७ ॥
देवकीरोहिणी चैव वसुदेवस्तथा सुतौ ।
कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥ १८ ॥
प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ।
उपगुह्य पतींस्तात ! चितामारुरुहुः स्त्रियः ॥ १९ ॥
रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् ।
वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः ।
कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥ २० ॥
अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ।
आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ २१ ॥
बन्धूनां नष्टगोत्राणामर्जुनः सांपरायिकम् ।
हतानां कारयामास यथावदनुपूर्वशः ॥ २२ ॥
द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् ।
वर्जयित्वा महाराज ! श्रीमद्भगवदालयम् ॥ २३ ॥
नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः ।
स्मृत्याऽशेषाशुभहरं सर्वमङ्गलमङ्गलम् ॥ २४ ॥

भाषा टीका ।

जैसे कि आकाश में मेघ को छोड़ कर के जाती हुई बिजुली की गति को मनुष्य नहीं जान सकते हैं तैसे श्रीकृष्ण जी की गति को किसी देवतों ने नहीं जाना ॥ ९ ॥

वे ब्रह्म रुद्रादिक श्रीहरि की उस योग गति को देख कर विस्मित हो कर उस बात की प्रशंसा करते हुये अपने अपने लोकों को चले गये ॥ १० ॥

हे राजन् ! इन परम पुरुष भगवान् के जन्म की तथा अंतर्धान की चेष्टा है सो केवल जैसे नट का चरित्र तैसे मनुष्यों के वास्ते एक आश्चर्य शक्ति से है जोकि आदि में इस जगत्को आत्मा से सृज कर के फिर विहार कर के अंत में संहार कर के अपने महिमा से निवृत हो कर रहते हैं ॥ ११ ॥

जो भगवान् यम लोक को ले गये मनुष्य शरीर वाले गुरु पुत्र को ले आये जो शरण्य रक्षक तुमारी माता के गर्भ में ब्रह्मास्त्र से तुमारी रक्षा करते भये जिन ने बाणासुर के युद्ध में काल के भी जीतने वाले महादेव जी को जीत लिया और जिनने मृगलुब्धक को भी देह सहित स्वर्ग में भेज दिये वे क्या अपने शरीर के रक्षा करने में समर्थ नहीं रहे ॥ १२ ॥

तौ भी सब संसार के उत्पत्ति स्थिति प्रलय के सब कामों के करने में किसी की अपेक्षा नहीं करनेवाले भगवान् हैं क्यों की वे सर्व शक्ति धारी हैं ऐसे होने पर संसार में मर्त्य शरीर जो सब मनुष्यों के हैं उन में कुछ सार नहीं हैं इस बात के दिखाने के लिये अपनी स्वस्वरूप गति को जनाने के लिये यहां पर प्रगट से अपने विग्रह को नहीं दिखाना चाहा ॥ १३ ॥

जो पुरुष प्रातःकाल में उठ कर इस लीला को श्रीकृष्ण का प्रयाण को नियम से कीर्तनकरैगा सो उत्तम गति को प्राप्त होगा ॥ १४ ॥

दारुक ने द्वारका में आ कर वसुदेव तथा उग्रसेन के आगे जो हाल प्रभास का सब चरणों में गिर कर कहा श्रीकृष्ण के वियोग से आंसुओं से उन के चरणों को भिगा दिया ॥ १५ ॥

हे राजन् ! सब वृष्णियों का अंतर्धान होना कह दिया इस बात को सुन कर द्वार के सब मनुष्य शोक से मूर्छित हो कर गिर पड़े ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णरामौ सुतावपश्यन्तः ॥ १८—२० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सदुक्तिभिः सत्योऽवितथा उक्तयो येषु तैः—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।

मूढोऽयं नाभिजानाति लोको मामजमव्ययम्

इत्यादिभिः ॥ २१ ॥

नष्टगोत्राणां नष्टसन्ततीनाम् साम्परायिकं पिण्डोदकादि ॥ २२—२८ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनी टिप्पणी ।

देवकीति सार्द्धकम् । प्राणांश्च विजहुरिति तत्त्यागे यत्नं चक्रुरित्यर्थः । दशमीदशाया उपस्थितत्वात् । अशिवत्वाच्च घटते भक्ते कृष्णप्रेयसी स्मृतिरिति रसामृतोक्तेः ॥ १८ ॥

उपगुह्येति सार्द्धकम् । स्त्रियो यदुस्त्रियः पतीन् श्रीकृष्ण-नित्यगणानन्तर्हितान्मनसालिङ्ग्य चितां सहार्श्च नित्यसिद्धानां समुद्रावस्थानं तन्नित्यधाम आरुरुहुः प्रापुः रामपत्न्यश्च तद्देहं स राम एव देहो यस्य तं रामं देहदेहिभेदशून्यमित्यर्थः । देहदेहिभिदा चात्र नेश्वरे विद्यते क्वचिदिति ब्रह्मतर्कोक्तेः । उपगुह्य ध्यानेन मनसालिङ्ग्याग्निं प्रकाशान्तरेण मुक्तं तद्धाम अविशन् । निम्नु चिता चित्यायां संहतौ स्त्रियामिति अग्नि-वैश्वानरेऽपि चित्रकाख्योषधौ पुमान् । अनम्के च भुक्ते स्यादिति च मेदिनी । एवं वसुदेवपत्न्योऽपि तद्गात्रं स एव गात्रं कलेवरं यस्य तं वसुदेवमित्यर्थः । सत्त्वं सत्त्वं विशुद्धं वसुदेवशब्दितमित्यत्र सन्दर्भे ह्लादिनी संवित्स्वरूपशक्ति-सारत्वेन निर्णीतत्वेन जीवत्वासम्भवेन देहदेहिभेदशून्यत्वात् बोध्यं पूर्ववत् ॥ १९ ॥

कृष्णपत्न्य इत्यर्द्धकम् । तदात्मिकाः स एव कृष्ण आत्मा स्वरूपं यासां ताः स्वरूपशक्तयः अग्निमुक्तं निर्भया-नुभूतं नित्यधामाविशन् ॥ २० ॥

अवितथा यथार्थाः ॥ २१ ॥

बन्धुतन्तु मृतवंशानां इतानां श्रीकृष्णनित्यपरिकरत्वेना-गतानां योऽनुपूर्वशः क्रमतो यथावत् सत्यतया सम्परायो नित्यधामप्राप्त्युत्तरकालकृतश्रोषितं नामसङ्कीर्तनादिकं वैष्णवैः कारयामास । सम्परायः समीपे स्यादापदुत्तरकालयोरिति मेदिनी ॥ २२ ॥

परीक्षितेऽस्य पुरञ्जनादिकथानुकूले शुकः व्याख्यात-स्वाद्वारकालीलाया अनित्यत्वमाशङ्क्य दुःखितं राजानं तन्नि-त्यत्वेन सान्त्वयति । द्वारकामिति युग्मकेन । हरिणा त्यक्ता-मिति लोकदृष्ट्यैव वस्तुतस्तु अत्यक्तामिति पदच्छेदः । प्लाव-यत् परितो जलेन परिस्त्रावयामास जलप्लावनं तु समु-द्रेण स्वदत्तस्य भूमिखण्डस्य हस्तिनापुरप्रस्थापितेतरजनगृहाद्य-धिष्ठानबहिरावरणस्यैव तस्यैव विश्वकर्मणा निर्मितत्वात् । द्वार-कायाः त्रिपादविभूतिरूपसंस्थानत्वतया नित्यसिद्धत्वात् अतएव वर्जयित्वेत्युक्तम् । श्रीमान् यादवादिगृहवृन्दशोभाशोभावान् यो भगवदालयस्तं वर्जयित्वा । तथोक्तं हरिवंशे । वासवान् प्रति श्रीनारदेन कृष्णो भोगवतीं रम्यामृषिकान्तां महायशाः । द्वारकामात्मसात्कृत्य समुद्रं गमयिष्यतीति तत्र भगवदालये भगवानित्यं संनिहित इति अर्थात् तत्रत्यानामिति शेषः । स्मृत्येति स्वयं वर्जने हेतुरूपमालयविशेषणम् ॥ २३ ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्व वर्त्म ह्रातप मानने स्तम्भ इतस्ततस्ताड्यमानः ध्वस्तः गतप्रायाः शेरते ॥ १७ ॥

देवकीति । कृष्णरामावपश्यन्त्यौ स्मृतिं चेतनां जहतुः तत्यजतुः देवकीरोहिण्योरेककोटित्वाभिप्रायेण जहतुरिति द्विवचनम् ॥ १८ ॥

पृथग्विलपत्य प्राणांश्च विजहुरिति बहुवचनं हे तात । ताडताः स्त्रियः देवकीरोहिणीव्यतिरिक्ताः स्त्रियः पतिं वसुदेवमुपगुह्या-लिङ्ग्य चितामारुरुहुः पतीनिति पाठे वसुदेवादन्येषां स्त्रियस्तानु-पगुह्येत्यर्थः ॥ १९ ॥

रामपत्न्य इति । रामपत्न्यस्तद्देहं तस्य रामस्य देहं स्नुषाः पुत्र-भार्याः प्रद्युम्नादीनुपगुह्याग्निमाविशन्निति सम्बन्धः रुक्मिण्याद्याः कृष्णस्य पत्न्यः तस्मिन्कृष्णे आत्मा चित्तं यासां ताः अग्नि-माविशन् तत्र रुक्मिण्या अग्निसम्बन्धेन तिरोधानमात्रं न त्वितर-तुल्यदेहदाहाय ॥ २० ॥

अर्जुनः इति प्रेयसः प्रियतमस्य विरहेणातुरः तापाद्दुःखितः ततः कृष्णस्य गीतैर्भगवद्गीताभिः सत्सूक्तिभिरात्मानं मनसा सान्त्व-यामास समाहितवान् ॥ २१ ॥

बन्धूनां नष्टगोत्राणां नष्टसन्ततीनां सांपरायिकं पिण्डो-दकदानादि कर्म ॥ २२ ॥

द्वारकामिति समुद्रः आप्लावयत् ॥ २३ ॥

भगवदालयं वर्जयित्वेत्यत्र हेतुत्वेन तद्विशिनष्टि । नित्यमिति । यत्रालये संनिहितः अतस्तस्मादालयाद्वर्जयित्वेति भावः । किञ्च यदालयं स्मृतिमात्रेणाशेषमशुभं हन्तीति तथा सर्वमङ्गल-मङ्गलं स्वयं सर्वमङ्गलावहं मङ्गलरूपं निरतिशयमङ्गलावहं च ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवद्विरहां स्मृतिं विजहुः प्राणानिति शेषः ॥ १८—१९ ॥
तदात्मिकास्तदेकचित्ताः—

अष्टावन्तर्हिते भैष्मी सत्यभामा वने तथा ।

ननु देहवियोगोऽस्ति तयोः शुद्धचिदात्मनोः ॥

इति प्रमाणाद्रुक्मिणीसत्यभामयोरन्तर्धानमवगन्तव्यं अन्याः सप्त महिष्योऽग्नौ देहं त्यक्तवत्य इति भावः ॥ २० ॥

आत्मानं स्वम् ॥ २१ ॥

साम्परायिकं परेतविषयं कर्म ॥ २२—२७ ॥

स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः।
इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥ २५ ॥
श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः।
त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥
य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च।
कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥ २७ ॥
इत्थं हरेर्भगवतो रुचिरावतारवीर्याणि बालचरितानि च शन्तमानि।
अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
एकादशस्कन्धे यादवान्तर्धानं नाम
एकत्रिंशोऽध्यायः ॥ ३१ ॥

समाप्तोऽयमेकादशस्कन्धः ॥ ११ ॥

भाषा टीका।

द्वार का को जब हरिने त्याग किया तब क्षण मात्र में समुद्र ने सब द्वारिका को डुबा दिया है महाराज श्रीमान् भगवान् के मंदिर को छोड़ दिया ॥ २३ ॥

क्योंकि स्मरण करने से सब के पापों के हरने वाले सब मंगल करने वाले भगवान् वहां संनिहित रहते हैं तिस से उन के स्थान को समुद्र ने छोड़ दिया है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

आदित आरभ्य श्रीकृष्णचरितकीर्तनस्य फलमाह। य एतदिति द्वाभ्याम् ॥ २७ ॥

शंतमानि परममङ्गलानि परमहंसगतौ श्रीकृष्णे ॥ २८ ॥

एकादशस्कन्धभावार्थस्य प्रदीपिका।
स्वाज्ञानध्वान्तभीतेन श्रीधरेण प्रकाशिता ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीराधारमणदासगोस्वामिविरचिता
दीपिकादीपिनीटिप्पणी।

वस्तुतस्तु [illegible]शेषान् ज्ञातविज्ञान्। तत्र स्त्रीबालवृद्धेषु ॥ २५ ॥ सुहृदां [illegible]नाश्रवणं वधादीति सुहृद्वधं निर्याणाख्यानं श्रुत्वा तत्रैव गमनाय त्वरा: सन्तो महापथं तद्ध्यानोपयुक्तं ध्यानं जग्मुरिति पाठ्यतोऽर्थः स्व: स्वात्मवत् च वाते स्तोति महिम्नी ॥ २६ ॥

वाक्यार्थबोधकं फलमाह। य एतदिति द्वाभ्याम् ॥ २७ ॥
अन्यत्र परलोके इह च लोके परममङ्गलानीति योज्यम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे
श्रीराधारमणदासगोस्वामिकृतदीपिकादीपने टिप्पणे
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

परमहंसगतौ परमहंसानामाचारे स्थित इति शेषः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धव्याख्याने
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स्त्रीबालेति। स्त्रीरूपान् बालान् वृद्धांश्च जनान् हतशेषानपि प्रविष्टकृपोऽवशिष्टानादायेत्यर्थः। ननु स्त्रीबालान् वृद्धांश्च पुरुषानित्यर्थः। जनयिष्यति वो मन्दा। मुसलं कुलनाशनमिति कृत्स्नकुलनाशकत्वाभिधानात् पुमांस्त्वशेषा नष्टगते: तत्र द्वारकायां वज्रं नाम यादवमभ्यषेचयत् तत्तु भगवत्संकल्पेनावशिष्ट इति भावः ॥ २५ ॥

श्रुत्वेति। त इति राजानं प्रति शुकोक्तिः पितामहा युधिष्ठिरः त्वां वंशप्रवर्तकं कृत्वा महापथं जग्मुः ॥ २६ ॥

एवमेकादशस्कन्धवाक्यार्थकीर्तनादिफलमाह। य इति द्वाभ्याम्। सर्वपापैर्भक्तियोगोत्पत्तिप्रतिबन्धकैः ॥ २७ ॥

इत्थमिति। इत्थं भगवतो यो रुचिरोऽवतारः तस्य वीर्याणि वीर्यप्रकाशकानि बालचरितानि शोभनानि चेति चराचरप्राणिपरंपरा केऽपि

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दर्शनमचरितानि चतमानि परममङ्गलावहान्यन्यत्र पुराणान्तरेषु इह चादिमन्त्रपि श्रीभागवतपुराणे श्रुतानि गृणन् कीर्तयन् परमहंसानां गतौ स्वप्राप्त्युपायभूते भगवति परां भक्तिं लभेत प्राप्नुयादित्यर्थः ॥ २८ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोस्तनयेन तच्चरणपरिचर्याप्रसक्ततत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवेष्णवदासेन श्रीवीरराघवविदुषा विलिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकायामेकादशस्कन्धव्याख्यायामेकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्यत्र ग्रन्थान्तरे इहास्मिन्ग्रन्थे परमहंसगतौ परमहंसानामाश्रये हरौ शरणे वा ॥ २८ ॥

यत्तत्त्वं निगमोऽपि वक्तुमनलं शास्त्रं तु वल्लीकृतं
ब्रह्माद्याः किमुतावलम्बविधुरा निर्दोषचित्ता अपि ।
अल्पेयं लघुवेगवन्मतिगतिरेषां तदेकं पदं
तद्भक्त्याधममत्यपुष्टबुद्धिहृदयावा समवन्दे परम् ॥
एकादशस्कन्धगता पदरत्नावलिर्विमला ।
अधिश्रीवं मुकुन्दस्य वनमालेव राजताम् ॥

इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थभट्टारकस्य कृतौ श्रीमद्भागवतटीकायां पदरत्नावल्यामेकादशस्कन्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वस्य श्रीकृष्णचरितस्य फलं परमभक्तिपूर्विका तद्गतिप्राप्तिरेवेत्याह । इत्थमिति । परमहंसगताविति तेषामपि तद्गुणाकृष्टानां स एव गतिः किमुत मूल एव तद्भक्तानामिति भावः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आदित आरभ्य श्रीकृष्णचरितकीर्तनस्य फलमाह । य इति । द्वाभ्याम् ॥ २७ ॥

बालचरितानि आपोगण्डाच बाल्यः स्यादिति प्रसिद्धेः पौगण्डाघनीयचरितानि स्वतिसुखवतमामीत्यर्थः । अन्यत्र पुराणादिषु इह श्रीभागवते च श्रुतानि परां परमश्रेष्ठाम् ॥ २८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशैकत्रिंशोऽयं सङ्गतः सङ्गतः सताम् ॥ ३१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीकृष्णचरितकीर्तनस्य फलमाह । य इति द्वाभ्याम् ॥ २७ ॥

मङ्गलानि मङ्गलावहानि बालचरितानि चकारात्पौगण्डादिचरितानि गृणन् कीर्तयन् परमहंसानां हेयोपादेयविवेकवतां संसारतो विरक्तानां श्रीकृष्णेऽनुरक्तानामित्यर्थः । गम्यत इति गतिः प्राप्यरूपः मुक्तौ प्राप्यरूपः श्रीकृष्णः तस्मिन् भक्तिं लभेत प्राप्नुयादित्यर्थः ॥ २८ ॥

श्रीकृष्णं राधिकां सत्यां रुक्मिणीं श्रीहरेः प्रियाम् ।
वन्दे तद्दास्यलाभाय गुरुं गुरुपरम्पराम् ॥
शुकेन विदुषा स्वल्पः कृतः श्रीकृष्णप्रीतये ।
एकादशे प्रदीपोऽयं पूर्वाचार्यमतानुगः ॥

इति श्रीमद्भागवतसिद्धान्तप्रदीपे श्रीमद्भगवदाद्याचार्यनिम्बार्कचरणचिन्तकशुकसुधीप्रणीते एकादशस्कन्धस्यैकत्रिंशाध्यायार्थप्रकाशः ॥ ३१ ॥

---

भाषा टीका ।

अंतर्धान होने में से बाकी जो बालक वृद्ध स्त्री रहे तिन को लेकर अर्जुन जी इंद्रप्रस्थ हस्तिनापुरको चलेगये उहां पर वज्रनाभ का राज्याभिषेक करदिया ॥ २५ ॥

हेराजन् परीक्षित जी तुम्हारे पितामह युधिष्ठिरादिकों ने जब अर्जुन से सब बंधुओं का अंतर्धान होना सुना तब तुम को यहांका राजा बनाकर उत्तराखण्ड बदरीनारायण से महापथ को चले गये ॥ २६ ॥

देवों के देव भगवान् श्रीकृष्ण के दशमस्कंध में इहां तक जन्म कर्म रूप चरित्रों को जो मनुष्य भक्ति से कीर्तन करेगा वह सब पापों से छूटजावेगा ॥ २७ ॥

इस प्रकार से कृष्ण भगवान् के जो मङ्गलकारक बालचरित्र तथा अवतार के पराक्रम युक्त सब चरित्र जोकि इहां भागवत में कहेगये वा अन्यत्र कहेगये सुने गये इन को जो मनुष्य पठन करेगा वह पुरुष परमहंसों की गतिदायक जो श्रीकृष्णचन्द्र तिन के चरण में परमभक्ति को प्राप्त होजावेगा ॥ २८ ॥

इति श्री भागवत एकादश स्कन्ध एकतीस में अध्याय की भाषा टीका समाप्त ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

इत्यष्टटीका समलङ्कृते श्रीमद्भागवते एकादशस्कन्धः समाप्तिमगात् ।

॥श्री॥

# विज्ञापनम् ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः ! अद्यातिप्रहर्षसमयो वर्त्तते यदहं तत्रभवद्भ्यो भवद्भ्योऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणं सहस्राणि विद्वांसोऽकाङ्क्षुः चातकास्स्वातिबिन्दूनिव, तथाऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थमत्यायत्नेन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकहार्दसंचयनात्मकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम् अध्यासगिरिवज्राख्यमपि ब्रुवन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्य्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरो रसमयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति, तथापीदृशः कोऽपि ग्रन्थोऽद्यावधि न मुद्रितोऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव सर्वशास्त्रसिद्धान्तज्ञानपूर्वकसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकताऽपि न भवति, सर्वेषां विपश्चितामेतद्ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयोऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितॄणां अज्ञानन्धाखादस्समुद्धस्तराङ्कित इव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदाऽपि न भवति, एष च ग्रन्थो निम्नलिखितप्रकरणैर्विभूषितोऽस्ति, एतस्मिन् ग्रन्थे चत्वारोऽध्यायास्सन्ति, तत्र प्रथमेऽध्याये विषयसम्बन्धगिरिनिपात-प्रयोजनाधिकारिगिरिनिपात-अध्यासगिर्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये चाध्याये जिज्ञास्योपपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्तिगिरिनिपातोऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितोऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरिति शम् ॥ मूल्यम् रौप्यकत्रयम् ३)

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचन्द्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुञ्जस्थ किङ्करीशुकशारिकादीनां परस्परसेवानिरूपणपर सुरूपपद्यात्मकं महाकाव्यम् तदनुगुणमिताक्षरसंस्कृतटीकया समलङ्कृतम्, मूल्यम् रौप्यकत्रयम् ३)

श्रीमद्भागवत सम्बन्धीय नियमावली ।

इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ५०) रुपया अग्रिम रखा गया है राजा महाराजा और सामान्य मनुष्यों के सन्मान रक्षाके लिये उनसे केवल १००) रु० मात्र लिया जायगा डाकमहसूल २४) रु० अलग पड़ेगा यह भागवत दशटीकोपेत है ।

असमर्थ ग्राहकों से चार किस्तों में रुपया लिया जायगा—प्रथम किस्त १२) रु० पञ्चमस्कन्ध तक, द्वितीय किस्त १२) षष्ठस्कन्ध तक, तृतीय किस्त १२) सप्तमस्कन्ध तक, चतुर्थ किस्त १४) दशमस्कन्ध तक और डाक महसूल २४) द्वादशस्कन्ध तक लियाजायगा।

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रान्तराणां सहिष्णुत्वेन सूक्ष्ममतिवेद्यत्वेन च तेष्वल्पजनादरणीयेषु जातेषु इदानीं स्थूलमतिवेद्यत्वेन सुकुमारवेद्यत्वेन च काव्यनाटकादीन्येव मनुष्याणां समययापनयोग्यानि तानि च भगवद्विषयकाणि चेद्भुक्तिमुक्तिप्रदानीति विचार्येदानीं जगन्नाथवल्लभनाटकं सर्वजनसौकर्यायप्रकाशितम् इदं च नाटकं श्रीराधाकृष्णरहस्यक्रीडा विषये प्रतापरुद्र नृपतितोषार्थं रामानन्दराय कविना निर्मितम्. अत्र च पञ्चाङ्काः सन्ति तत्र प्रथमेऽङ्के नटनटीसूत्रधाराणां संवादपूर्वकप्रस्तावनानन्तरं श्रीराधाकृष्णमदनिका विदूषकाणां वृत्तान्तैः पूर्वरागनिरूपणम्१द्वितीये च भावपरीक्षादिनिरूपणम्२तृतीये भावप्रकाशादिनिरूपणम्३चतुर्थे श्रीराधिकाया अभिसरणक्रियानिरूपणम् ४ पञ्चमे श्रीराधाकृष्णयोः सङ्गमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविन्दवद्रागपद्यान्यपि विद्यन्ते मूल्यम् द्वादश आणकाः ॥।)

## वेदान्तसारः ।

भो भो वेदवेदान्तसकलशास्त्रपारावारपारङ्गताः !

विदितमेव भवतां श्रीमद्वैयासिकसूत्रार्थयाथात्म्यप्रतिपादको बालानामपि वेदान्तार्थसंशयनिवारणाकरो वेदान्तसारो नाम ग्रन्थरत्नम्. स चेदानीं सुललितैर्नागराक्षरैरपूर्वतया मुद्रितस्सन् ज्ञाज्वलीति. अतस्सर्वेऽप्येतद्ग्रन्थरत्नं केवलेन सार्द्धरूपकमूल्येन गृहीत्वा मनोनयनानन्दं प्राप्नुवन्तु भवन्तः । मस्य मू० १॥)

**श्रीश्रीनिम्बार्कदर्शनम्**—भो भोः परिविद्वत्तविद्वांसः ! अस्मन्मुद्रणालये मयाद्यावधि काव्यमुद्रितम् भाष्यत्रयोपेतम् 'श्रीमन्निम्बार्कदर्शनम्' समग्रं सम्मुद्रितं तत्स्वयंतां भवद्भिरुत्सुकैः पञ्चमुद्रा-मूल्येन, पत्रावलिकेन लभ्येत इति विदन्तु मू० ५)

श्रीमद्भागवत कार्यालय—श्रीदेवकीनन्दन प्रेस
श्रीवृन्दावन—जिला मथुरा ।

} विद्वज्जन कृपाकाङ्क्षी—श्रीनित्यस्वरूप ब्रह्मचारी ।